आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ५३

महादेवकृतवैजयन्तीव्याख्यासमेतम्

आद्यप्रश्नषट्कात्मकं

# सत्याषाढविरचितं श्रौतसूत्रम् ।

तत्राऽऽद्यप्रश्नत्रयात्मकः प्रथमो भागः ।

एतत्पुस्तकं

वे. शा. सं. रा. " काशीनाथशास्त्री आगाशे

इत्येतैः संशोधितम् ।

तच्च

हरि नारायण आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८२८

खिस्ताब्दाः १९०७






मूल्यं रूपकचतुष्टयम् (४)

## आदर्शपुस्तकोल्लेखपत्रिका ।

अथास्य प्रयोगवैजयन्त्याख्यव्याख्यासहितस्य सत्याषाढविरचितहिरण्यकेशिश्रौतसूत्रस्य पुस्तकानि यैः परहितैकपरतया संस्करणार्थं प्रदत्तानि तेषां नामादीनि पुस्तकानां संज्ञाश्च कृतज्ञतया प्रकाश्यन्ते—

(क.) इति संज्ञितम्—पञ्चमप्रश्नरहितं पुण्यपत्तनस्थानां वे० रा० रा० रामभट्ट आखवे इत्येतेषाम् । अस्य लेखनकालः शकाब्दाः १७०९

(ख.) इति संज्ञितम्—पुण्यपत्तनस्थानां कै० वे० रा० रा० रामभट्ट खरे इत्येतेषाम् ।

(ग.) इति संज्ञितम्—इन्दूरपत्तनस्थानां रा० रा० किबेसाहेब इत्येतेषाम् । अस्य लेखनकालः शकाब्दाः १७०६

(घ.) इति संज्ञितम्—मूलम् । पुण्यपत्तनस्थानां कै० वे० रा० रा० रामभट्ट खरे इत्येतेषाम् ।

(ङ.) इति संज्ञितम्—मूलम् । पुण्यपत्तनस्थानां रा० रा० भाऊसाहेब नगरकर इत्येतेषाम् ।

(च.) इति संज्ञितम्—वैराजक्षेत्रनिवासिनां वे० रा० रा० अण्णंभट्ट अभ्यंकर इत्येतेषाम् ।

(छ.) इति संज्ञितम्—वैराजक्षेत्रनिवासिनां वे० रा रा० अण्णंभट्ट अभ्यंकर इत्येतेषाम् । अस्य लेखनकालः शकाब्दाः १७२३

(ज.) इति संज्ञितम्—मूलम् । पुण्यपत्तनस्थानां रा० रा० गंगाधर कृष्ण आपटे इत्येतेषाम् । प्रश्नाः १—५।७—१८

(झ.) इति संज्ञितम्—मूलम् । पुण्यपत्तननिवासिनां कै० रा० रा० नीलकण्ठशास्त्री साठे इत्येतेषाम् ।

(ञ.) इति संज्ञितम्—मूलम् । पुण्यपत्तनस्थानां रा० रा० तात्यासाहेब खाजगीवाले इत्येतेषाम् ।

(ट.) इति संज्ञितम्—वैराजक्षेत्रनिवासिनां वे० रा० रा० अण्णंभट्ट अभ्यंकर इत्येतेषाम् ।

(ठ.) इति संज्ञितम्—राचवडग्रामनिवासिनां वे० रा० रा० बापुभट्टबापट दीक्षित इत्येतेषाम् ।

(ड.) इति संज्ञितम्—वैराजक्षेत्रनिवासिनां वे० रा० रा० अण्णंभट्ट अभ्यंकर इत्येतेषाम् । प्रश्नौ १ । ५ ।

(ढ.) इति संज्ञितम्—मूलम् । पुण्यपत्तनस्थानां वे० रा० रामभ
आखवे इत्येतेषाम् । अस्य लेखनकालः शकाब्दा
१८२५

(ण.) इति संज्ञितम्—गोळपग्रामनिवासिनां वे० रा० रा० गोविन्द
दीक्षित बापट इत्येतेषाम् । अस्य लेखनकालः
शकाब्दाः १७१९

समाप्तेयमादर्शपुस्तकोल्लेखपत्रिका ।



ॐ तत्सद्ब्रह्मणे नमः ।

# सत्याषाढविरचितं श्रौतसूत्रं

## महादेवकृतवैजयन्तीव्याख्यासमेतम् ।

यदर्पितं कर्म फलाय कल्पते यदर्पितं बन्धविमुक्तयेऽपि च ।
सच्चित्सुखानन्तमनन्यमीश्वरं वन्दे नृसिंहं दुरितेभदारणम् ॥ १ ॥
वेदत्रयात्मन्ननलत्रयात्मन्नीशत्रयात्मन्प्रकृतेर्गुणात्मन् ।
जन्तोरवस्थात्रितयानुबिम्ब बिम्बत्रयात्मन्नव मामनर्थात् ॥ २ ॥
ॐकारप्रतिपादितं सुरनुतं भक्तानुकम्पायुतं
दोःपद्मे दधतं दतं हरसुतं श्वैत्यं भजन्तं तनौ ॥
ज्ञानाच्छादितमोपहं कविमहं सोऽहंधिया गां (गं)मनौ
ध्येयं देहभृतां भयाच्छिदमजं भक्त्या भजामीश्वरम् ॥ ३ ॥
गङ्गाधरो दारशरीरभाग्यया
यया हरिः श्रीपतिसंज्ञितः कृतः ।
यया महालक्ष्म्यभिधानया जग-
त्पितामहोऽजश्च सरस्वतीपतिः ॥ ४ ॥
तस्यै नमस्तेऽम्ब पुनर्नमोऽस्तु ते
भूयो नमस्तेऽस्तु कृपाकटाक्षतः ।
मां पाहि जाड्यात्कृपणं कृपानिधे
मद्वंशमातर्जगतां च साक्षिणि ॥ ५ ॥
व्यासाद्गुरोरधिगतार्थयजुःसमाख्य-
वेदप्रवर्तकमुनेरधिगत्य शाखाम् ।
देहेन तित्तिरिखगाकृतिना मुनीन्द्रा-
नध्यापयन्मुनिवरो व्यभजत्स्वशाखाम् ॥ ६ ॥
यत्राकरोत्सूत्रमतीव गौरवा-
द्बोधायनाचार्यवरोऽर्थगुप्तये ।
तथा भरद्वाजमुनीश्वरस्तथाऽऽ-
पस्तम्ब आचार्य इदं परं स्फुटम् ॥ ७ ॥
अतीवगूढार्थमनन्यदर्शितं
न्यायैश्च युक्तं रचयन्नसौ पुनः ।

हिरण्यकेशीति यथार्थनामभा-
गभूद्वरात्तुष्टमुनीन्द्रसंमतात् ॥ ८ ॥
वाधूल आचार्यवरोऽकरोत्परं
सूत्रं तु यत्केरलदेशसंस्थितम् ।
वैखानसाचार्यकृतं त्वथापरं
पूर्वेण युक्तं त्विति सूत्रषड्विधाः ॥ ९ ॥
व्यासादिकान्मुनिवरान्प्रणमामि भक्त्या
यैर्वेदकल्पतरुरेष जगत्प्रसिद्धिम् ।
संप्रापितो विविधशास्त्रपथैर्हिताय
लोकस्य मन्दमनसः करुणार्द्रचित्तैः ॥ १० ॥
विनेययुक्ताखिलसिद्धवर्य-
लसच्चिदानन्दसुखं मुनीन्द्रम् ।
नमामि सूत्रार्थविदे मुदाऽहं
हिरण्यकेश्याख्यगुरुं कृपाब्धिम् ॥ ११ ॥
यो ब्रह्मदत्त इति विश्रुत आद्यकल्पे
यद्ब्रह्मणाऽऽत्मजनिना जनकेन दत्तः ।
मात्रे सुतो मुनिवरः पितृदत्तयोग-
विद्यातपोभिरगमत्परमं स्वरूपम् ॥ १२ ॥
पित्रा नियुक्त इह कर्मभुवि प्रकीर्ण-
शाखाविभागकरणाय च वेदगुप्त्यै[1] ।
सोऽयं मदीयमनघं कुशिकस्य वंश-
मात्मावतारजनुषाऽलमलंकरिष्णुः ॥ १३
सत्यावलम्बनतया विदिताद्यसत्या-
षाढाभिधामभजदात्मपितुः[2] सकाशात् ।
सूत्रप्रणीतिकृतविस्मयसूत्रकार-
मुख्यैर्महर्षिभिरवाप हिरण्यकेशान् ॥ १४ ॥
गुरुं गणपतिं नौमि जन्मज्ञानप्रदौ[3] तथा ।
सह गौर्या[4] महेशानं नौमि विष्णुं च पद्मया ॥ १५ ॥
श्रीमद्भगवतो विष्णोरवतारेण सूत्रितम् ।
सत्याषाढेन तद्व्याख्या महादेवेन रच्यते ॥ १६ ॥

---

१ क. ग. °दसिध्यै। सो° । २ ख. °त्मभुवा प्रदत्ताम्। सू° । ३ क. ग. °प्रदो भव। स° ।
४ ख. °र्या सोमनाथं सह वि° ।

लुप्तप्रायमिदं सूत्रं दैवादासीत्क्वचित्क्वचित्।
दक्षिणस्यां ताम्रपर्ण्यास्तीरेष्वेवेदमाहृतम् ॥ १७ ॥
प्रयोगरत्नैरिह सूत्रसंगतै-
र्मालां कृतां यज्ञतनौ निवेशिताम्।
विष्णौ निरीक्ष्याऽऽत्मनि भाति चाऽऽत्मना
त्रैविद्यवृद्धैश्च मतः समागतः ॥ १८ ॥
धर्मो ज्ञानं च वेदैश्च मीमांसाभ्यां प्रजायते।
क्रियेशाभ्यां तयोस्तद्वत्संगताभ्यां फलागमः ॥ १९ ॥
याज्ञवल्क्यादयो यस्माच्चतुर्दशभिरेव ते।
प्राप्ये विद्याभिरित्याहुर्धर्मज्ञाने च सेश्वराः ॥ २० ॥
सूत्रैः संसूचितं किंचिदन्यतोऽपि समाहृतम्।
स्वस्य बुद्धिं परिच्छेत्तुं तन्यते जाड्यरोगनुत् ॥ २१ ॥

यथाऽध्ययनविधिर्वेदस्य सार्थस्य ग्रहणे प्रमाणमेवं कल्पसूत्रस्यापि। कुतः, सार्थस्य ग्रहणं सार्थैरङ्गैरेव भवेन्नान्यतः। तस्मात्कल्पसूत्रमारम्भणीयं सार्थमध्येतव्यम्। वक्ष्यति धर्मेष्वाचार्यः स्वयमेव वेदग्रहणे साङ्गवेदग्रहणम्। गोमधुपर्कार्हेषु वेदाध्याय्युपदिष्टः। सूत्रोक्तं षडङ्गो वेद इति। तथा तत्रैवाङ्गान्यपि वक्ष्यति—'कल्पो व्याकरणं शिक्षा ज्योतिषं निरुक्तं छन्दोविचितिः' इति। तेषामङ्गसंस्तवादङ्गत्वमुपकारकत्वात्तद्धीनवेदस्यासामर्थ्याच्च ॥

तदाहुः[1]—मुखं व्याकरणं तस्य ज्योतिषं नेत्रमुच्यते।
निरुक्तं श्रोत्रमुद्दिष्टं छन्दसां विचितिः पदे ॥
शिक्षा घ्राणं तु वेदस्य हस्तौ कल्पान्प्रचक्षते। इति।

व्याकरणनिरुक्तयोः शब्दसाधुत्वार्थानुशासनात्। ज्योतिषस्य कर्माङ्गकालनिर्णयात्। आदिवृध्द्यभावश्छान्दसः। छन्दोविचितिर्गायत्र्यादिच्छन्दोविवेचनात्। शिक्षाया वर्णोच्चारणादिनियमनात्। कल्पान्कल्पसूत्राणि। वेदस्यार्थमभिहितं न्यायैश्च सूचितं शाखान्तरीयैर्ब्राह्मणमन्त्रन्यायैः फलकरणेतिकर्तव्यतांशत्रयवद्भावनां प्रयोगरूपेण कल्पयति समर्थं प्रयोगयोग्यं प्रतिशाखं करोति स कल्पः। छन्दःकल्प इत्यापस्तम्बः स्पष्टमाह, छन्दो वेदस्तं कल्पयतीत्यर्थः। सार्थाध्ययनं स्पष्टमाह श्रुत्यन्तरम्—'ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति। निष्कारणं फलोद्देशं विनैव नित्यमिति यावत्। ननु कल्पसूत्रं वेद एवान्तर्भवेद्वैदिकप्रयोगदर्शनात्। न, पौरुषेयत्वस्मरणात्। सूत्रकृदपि वक्ष्यति पूर्वोत्तरपक्षावत्र। तत्र पूर्वः पक्षः शब्दार्थारम्भणा-

---

१ ग. यदाहुः।

नां तु कर्मणां समाम्नायसमाप्तौ वेदशब्दस्तत्र संख्या विप्रतिषिद्धा । शब्दार्थतय यान्यन्वारभ्यन्ते न प्रत्यक्षादिप्रमाणगोचरतया तानि शब्दार्थारम्भणानि कर्माणि वैदिकान्यग्निहोत्रादीनि तेषां समाम्नाय उपदेशस्तस्य समाप्तौ स यावता ग्रन्थजातेन समाप्तोऽनुष्ठानपर्यन्तो भवति तत्र वेदशब्दो वर्तते वेदयति धर्मं विदन्त्यनेन वा धर्ममिति। न च मन्त्रब्राह्मणमात्रेणानुष्ठानपर्यन्तमुपदेशो भवति किं तु कल्पसूत्रैरपि सह ततश्च तेषामपि वेदस्वरूप एवानुप्रवेशात्षडेवाङ्गानि । अत्र षट्संख्या विप्रतिषिद्धेति परिहरति–अङ्गानां च प्रधानैरव्यपदेश इति न्यायवित्समयः । अङ्गान्येव कल्पसूत्राणि न वेदरूपाणि पौरुषेयत्वस्मरणात् । कतिपयान्येव हि तेषु ब्राह्मणवाक्यानि भूरीणि[1] स्ववाक्यानि । अङ्गानां च तेषां प्रधानवाचिभिः शब्दैश्छन्दो वेदो ब्राह्मणमित्यादिभिर्व्यपदेशो न न्याय्य इति न्यायवित्सिद्धान्तः । ताविमौ पूर्वपक्षसिद्धान्तौ कल्पसूत्राधिकरणे स्पष्टतरं द्रष्टव्यौ । यत्तूक्तं न मन्त्रब्राह्मणमात्रेण पूर्ण उपदेश इति, नैष स्थाणोरपराधो यदेनमन्धो न पश्यति पुरुषापराधः स भवति न वेदापराधः। ऋषयो हि वेदं वेदान्तरेण तत्सूचितन्यायैश्च स्वबुद्ध्या संकल्प्य समर्थमेव प्रतिशाखं पश्यन्ति न तु तत्र किंचिदपि लौकिकप्रमाणमात्रसिद्धं संक्रामयन्ति । भवानसमर्थोऽङ्गानि शास्त्रान्तराण्यधीत्य प्रयोगं कर्तुं समर्थो भवत्वितीदानींतनानां कल्पाद्येव शरणमिति तदध्ययनमावश्यकम् । तत्र कल्पसूत्रं प्रतिशाखं भिन्नमभिन्नमपि क्वचित् । शाखाभेदोऽध्ययनभेदाद्वा सूत्रभेदाद्वा । आश्वलायनीयं कात्यायनीयं च सूत्रं हि भिन्नाध्ययनयोर्द्वयोर्द्वयोः शाखयोरेकैकमेव । तैत्तिरीयके समाम्नाये समानाध्ययने नानासूत्राणि तद्भेदादपि शाखाभेदश्चरणव्यूहशास्त्रे दृश्यते । न च सूत्रभेदे शाखाभेदः शाखाभेदे च सूत्रभेद इति परस्पराश्रय इति वाच्यम् । यथाऽध्ययनभेदाच्छाखाभेदोऽनादिरेवं सूत्रभेदादपि । न हि सूत्राणां कर्तृसंबन्धि संज्ञाऽद्यतनी किं तु नानाकल्पगतासु तत्तन्नामकर्षिव्यक्तिषु नित्या । तत्प्रणीतसूत्रेषु च नित्या जातिमवलम्ब्य तिष्ठति । यथा पुरुषनामाङ्कितशाखासु संज्ञा । न च तत्रानाद्यानुपूर्व्या समाधिरिति वाच्यम् । अत्राप्यर्थानुपूर्व्या अनादित्वात्समः समाधिः । शब्दानुपूर्वी यद्यप्यन्यथाऽपि संभाव्यते तथाऽऽपि[2] न व्यक्तिभेदेन जातिर्भिद्यते । अनुष्ठानक्रमस्त्वपौरुषेय एव । अध्ययनेऽपि नाऽऽनुपूर्वं नित्या प्रतिपूरुषं तस्या जन्यत्वेनानित्यत्वात् । आम्नाये पूर्वानुपूर्व्यनुसंधानेनाध्ययनं सूत्रे तु दैवात्कयाऽप्यानुपूर्व्या शब्दगतयाऽप्यानुपूर्व्यनादिरभिव्यज्यत इति सूत्रेषु स्मृतित्वं स्मृत्यधिकरणे स्थितं तत्सूत्रकारेणैवोक्तं न्यायवित्समय इति मीमांसासिद्धान्तस्वीकारदर्शनेन । तथा स्मृतिप्रामाण्यमपि न्यायतन्त्रादेवेत्यपि दर्शितम् । श्रुतिरपि स्मृतीनां वेदमूलत्वमाह—'यद्वै किंच मनुरवदत्तद्भेषजम्' इति । भेषजं यथा हितमेवं मनुवचनमपि प्रमाणत्वेन हितमित्यर्थः ।

---

१ ख. भूयिष्ठानि । २ ग. °णापि ।

मनुरपि—'श्रुतिं पश्यन्ति मुनयः स्मरन्ति च तथा स्मृतिम्' इति ॥

अत एव मरीचिः—

दुर्बोधा वैदिकाः शब्दाः प्रकीर्णत्वाच्च येऽखिलाः ।
तज्ज्ञैस्त एव स्पष्टार्थाः स्मृतितन्त्रे व्यवस्थिताः ॥ इति ।

स्मृतितन्त्रे स्मृतिलक्षणे शास्त्रे व्यवस्थिता अर्थकथनेन । तथा चैकस्यां तैत्तिरीयकशाखायां समानपाठायां सूत्रभेदादवान्तरशाखाभेदश्चरणव्यूहशास्त्रे दर्शितः । चरणाः शाखाः सूत्राणि च व्यूहो विविच्य भेदः । न चात्राध्ययनभेदोऽस्ति । तस्मात्सूत्रभेदादेव शाखाभेदः । ननु स्वाध्यायैकदेशो मन्त्रब्राह्मणात्मकः शाखेत्युच्यते, तयोर्मन्त्रब्राह्मणयोरन्यतरभेदेन वेदेऽवान्तरशाखाभेदः स्यादिति चेत् । सत्यम् । यथा साङ्गः स्वाध्यायो वेदशब्दवाच्य एवं शाखाऽपि साङ्गैव वेदैकदेशत्वेन शाखान्तरत्वं लभते । तत्राङ्गस्य सूत्रस्य भेदाद्भिद्यत एव स्वाध्यायाध्ययनमिति । भवतु चरणभेद एव शाखाभेदव्यवहारे हेतुः । तथा च यथा शाखाध्ययनं नियतमेवं सूत्राध्ययनमपि न व्यत्ययेन कर्तुं शक्यं कर्मानुष्ठानं च व्यत्यये प्रायश्चित्तश्रवणात् । स्वयमपि वक्ष्यति चरणहते प्रायश्चित्तं त्रिवृदग्निष्टुतम् । चरणहतत्वं तु शाखासूत्रयोः प्रत्येकं व्यत्ययात् । ननु समाने स्वाध्यायाध्ययने कथं कर्मभेदः कथं च सूत्रभेदस्तद्भेदे वा कथं फलैक्यमिति चेत् । उच्यते—नास्ति कर्मभेदः । यथा नानाशाखाप्रत्ययमेकं कर्मेति न्यायशास्त्रनिर्णयेऽपि स्वशाखापेक्षितानेव विधीन्न्यायांश्चोपसंहृत्य तत्तच्छाखिनः कर्माभेदेऽपि प्रयोगभेदं रचयन्ति न हि शब्दान्तरादिभिः प्रमाणैः कर्मभेदोऽस्ति किं तु यथैकस्यामेव शाखायां नित्यकाम्यभेदेन प्रयोगभेदमात्रं तद्वत्प्रयोगभेदमात्रमेव तत्क्रमगुणभेदेनेति वक्ष्यति—'तौ समानविधानौ' इत्यादिना । तथा समानेऽध्ययनेऽपि क्वचिदनेकार्थस्य शब्दस्यैकार्थविवक्षयाऽनुष्ठानभेदः । क्वचित्स्वविध्यपेक्षितशाखान्तरीयमन्त्रब्राह्मणनानात्वेन प्राप्ते वैकल्पिकप्रयोगे नियतैकैककोट्याश्रयणेनानुष्ठानभेदः । ततो न फलस्यापि प्रयोगभेदे तारतम्यमस्ति । यथैकस्यां शाखायां व्रीहिभिरिष्टे यत्फलं तदेव यवैरपि । यथोदितहोमे तदेवानुदितहोमेऽपि । तच्च तच्छाखिनामेव नान्येषां,व्यत्यये चानिष्टमपि । तस्मान्नानार्थानेकशाखोपसंहारेणाग्निहोत्रादिकर्मणां वैकल्पिकानुष्ठानप्राप्तौ व्यवस्थापकानि कल्पसूत्राणि भवन्तीति सिद्धम् । अवश्यं च शाखान्तरोपसंहारोऽपेक्षितः । नह्येकस्यां शाखायां श्रौतस्मार्तकर्मानुष्ठानं साकल्येन विहितं तन्मन्त्रा वा पठिताः । किं तु किंचित्क्वचिदाध्वर्यवहोत्रादिसापेक्षमेवेति[१] वेदान्तरापेक्षं प्रसिद्धमेव । एवमाध्वर्यवादेः साकल्यसिद्धय आध्वर्यवादिशाखान्तरापेक्षा । न च स्वशाखाविहितमात्रेण शास्त्रसिद्धिः, उपनयनादिसंस्काराणामस्मच्छाखायामविहितानां लोपप्रसङ्गात् । दृश्यते च शाखान्तरी-

१ क. ग. च. 'होत्रक' । २ ख. छ. 'र्यवं हो' ।

याणामैन्द्राग्नादिविधीनामपेक्षाऽस्मच्छाखायां तन्मन्त्रनिगदाम्नानात्। किंचिदस्मच्छाखाया मप्राप्तमेवानूद्य निषेधति। क्वचिन्निन्दित्वाऽन्यद्विधत्ते। यथा नोत्तरवेदिमुपवपति, यद्ब्रूयादगन्नग्निरित्यादि। तेन ज्ञायते सर्वशाखोपसंहारादेव प्राप्तस्य निषेधनिन्देति सर्वशाखोपसंहारेण कर्मसिद्धिरिति। एवं चेदानींतनैरनधीतसर्वशाखैरधीतसर्वशाखैरपि प्रतिशाखं व्यवस्थितधर्मस्वरूपं न शक्यत उपसंहर्तुमिति सूत्राध्ययनादेवावगन्तव्यो व्यवस्थितो धर्मः। न चान्येऽप्यृषयो भिन्ननामानोऽमुं व्यवस्थितं धर्मं वक्तुमीशते तादृक्शक्त्यभिव्यञ्जकतत्तन्नामाभावात्। यत एकः सर्वज्ञः सर्वशक्तिरपीश्वरोऽपि न प्रभवत्येकेनावतारेण सकलं प्रयोजनं साधयितुमिति नानाऽवतरति। मुनयोऽप्यवतारा एवेति दृश्यते पुराणेतिहासेषु। तथाऽप्यनादिशक्त्यतिक्रमणे न समर्था इति पूर्वपूर्वानुपूर्व्यनुसंधानाभिव्यञ्जकनामदामबद्धाः प्रवर्तमाना योगज्ञानचक्षुषा परिहृत्यान्यविषयमत्यक्त्वा स्वविषयं सूत्राणि प्रणयन्ति प्रातिशाख्यधर्मज्ञानायेति युक्तम्।

भागवते हि—द्वापरे समनुप्राप्ते तृतीये युगपर्यये।

जातः पराशराद्योगी वासव्यां कलया हरेः॥
स कदाचित्सरस्वत्या उपस्पृश्य जलं शुचिः।
विविक्त एक आसीन उदिते रविमण्डले॥
परावरज्ञः स ऋषिः कालेनाव्यक्तरंहसा।
युगधर्मव्यतिकरं प्राप्तं भुवि युगे युगे॥
भौतिकानां च भावानां शक्तिह्रासं च तत्कृतम्।
अश्रद्दधानान्निःसत्त्वान्दुर्मेधान्ह्रसितायुषः॥
दुर्भगांश्च जनान्वीक्ष्य मुनिर्दिव्येन चक्षुषा।
सर्ववर्णाश्रमाणां यद्दध्यौ हितममोघदृक्॥
चातुर्होत्रं कर्म शुद्धं प्रजानां वीक्ष्य वैदिकम्।
व्यदधाद्यज्ञसंतत्यै वेदमेकं चतुर्विधम्॥
ऋग्यजुःसामाथर्वाख्या वेदाश्चत्वार उद्धृताः।
इतिहासपुराणं च पञ्चमो वेद उच्यते॥
तत्रर्ग्वेदधरः पैलः सामगो जैमिनिः कविः।
वैशंपायन एवैको निष्णातो यजुषां मतः॥
अथर्वाङ्गिरसामासीत्सुमन्तुर्दारुणो मुनिः।
इतिहासपुराणानां पिता मे रोमहर्षणः॥
त एव ऋषयो वेदं स्वं स्वं व्यस्यन्ननेकधा।
शिष्यैः प्रशिष्यैस्तच्छिष्यैर्वेदास्ते शाखिनोऽभवन्॥

---

१ छ. °स्थितं ध°। २ ग. च. छ. °रापर°।

त एव वेदा दुर्मेधैर्धार्यन्ते पुरुषैर्यथा ।
एवं चकार भगवान्व्यासः कृपणवत्सलः ॥ इति ।

व्यासो हरिरेव स्वशिष्यादिषु शक्तिं निवेशयंस्तद्द्वारा सर्वं कृतवानित्यर्थः ।

तेन संप्रयोजनत्वे स्थिते भगवान्सत्याषाढः प्रणेष्यमाणस्य सूत्रस्यार्थं पिण्डीकृत्य शिष्यबुद्धिसमाधानाय प्रतिजानीते—

यज्ञं व्याख्यास्यामः ।

यज्ञो हि मन्त्रैर्देवतामुद्दिश्य द्रव्यस्य दानम् । तस्य रूपं देवताद्रव्याभ्यामेव निरूपणीयम् । तदाहुः—'द्रव्यदेवते कर्मणो रूपम्' इति मीमांसकाः । अतोऽस्य व्याख्यानं नामास्यै देवताया इदं द्रव्यमेतैर्मन्त्रैरेवंप्रकारेण दद्यादेतस्मै फलायेति ख्यापनम् । तथा चेयं प्रकृतिरियं विकृतिरिति च यज्ञव्याख्यानम् । ततोऽतिरिक्तं तदुपलक्षितं दर्विहोमादिकमुपनयनादिकं सामयाचारिकं चानेन प्रकारेण कार्यमेतस्मै फलायेति ख्यापनं तस्यापि प्रतिज्ञेयं यज्ञशब्दस्य प्रातिशाख्यकर्मोपलक्षकत्वात् । कर्माणि व्याख्यास्याम इति वक्तव्येऽपि यज्ञभूयस्त्वस्य ख्यापनाय यज्ञग्रहणम् । इदं हि सप्तविंशतिप्रश्नात्मकं सत्याषाढहिरण्यकेशिसूत्रम् । तत्राऽऽद्यप्रश्नद्वये परिभाषापूर्वकं दर्शपूर्णमासावनुनिर्वाप्येन्द्रवैमृधकाम्यदर्शपूर्णमासप्रयोगविकारपिण्डपितृयज्ञब्रह्मत्वानि व्याख्यातानि । तृतीयप्रश्ने चाधिकारः सर्वकर्मसु प्रतिनिधिनिरूपणमाधानं तदङ्गेष्टयः पुनराधेयमग्निहोत्रं सगृहस्य प्रयाणं दर्विहोमधर्मा अतिदेशप्रकारो विकृतिषु विशेषविधिश्च सोमाग्रयणेष्टिपशुबन्धानामनुष्ठानेऽमावास्यापौर्णमासीकालावाग्रयणेष्टिश्च । चतुर्थे प्रश्ने निरूढपशुबन्धस्तद्विकृतिविशेषविधिश्च । पञ्चमे प्रश्ने चातुर्मास्यानि । षष्ठे प्रश्ने याजमानसामान्यविधिपूर्वकं दर्शपूर्णमासयोर्याजमानं प्रवसतो याजमानं चाऽऽध्वर्यवविशेषइष्टिपशुबन्धेषु याजमानातिदेशश्चेन्द्रवैमृधसरस्वतीपूषादितिद्यावापृथिव्यर्यमविश्वदेवेन्द्रेन्द्रियावदिन्द्रत्रातृ(तृ)णां प्रत्यक्षानुमन्त्रणाश्चाऽऽधानयाजमानमाधानप्रभृत्याहिताग्निधर्माः पुनराधेये दक्षिणाविशेषोऽग्निहोत्रयाजमानं होमोपस्थानं प्रवासोपस्थानं पुनः प्रवासादागतस्योपस्थानविधिराग्रयणेष्टिनिरूढपशुचातुर्मास्येषु याजमानं च चातुर्मास्येष्वान्तरालिकानि व्रतानि च । ततः सप्तमाष्टमनवमेषु ज्योतिष्टोमस्तद्विकार उक्थ्यषोडश्यतिरात्राप्तोर्यामाश्च पश्वै (श्चै) कादशिनी तत्पशुषु तन्त्रावृत्त्याद्यनुष्ठेया धर्मविशेषाश्च । दशमेऽग्निष्टोमयाजमानहोतृविनियोगश्च ज्योतिष्टोमब्रह्मत्वं च । एकादशद्वादशाभ्यामग्निचयनम् । त्रयोदशे वाजपेयराजसूयौ चरकसौत्रामणी च । चतुर्दशेऽश्वमेधपुरुषमेधौ सर्वमेधश्च । पञ्चदशे विध्यपराधे प्रायश्चित्तानि । षोडशे द्वादशाहोऽहीनसत्ररूपो महाव्रतं गवामयनं च । सप्तदश एकाहाहीनाः । अष्टादशे सत्राणि सहस्रसंवत्सरान्तानि । एकोनविंशविंशयोरुपनयनादीनि स्मार्तकर्माणि । एक-

---

१ ख. °तिशे° । २ ख. °नं महोप° ।

विंशे याजुषहौत्रप्रवरानिर्णयौ । द्वाविंशे काम्येष्टिपशुबन्धाः । त्रयोविंशे कौकिली सौत्रामणीसवाः काठकचयनानि च । चतुर्विंशे प्रवर्ग्यः । पञ्चविंशे शुल्बे विहारयोगा व्याख्याताः । षड्विंशसप्तविंशयोर्धर्मा इति । पितृमेधस्तु भारद्वाजीयो मुनिना परिगृ-[1]हीतो द्वौ प्रश्नौ । एतत्सूत्रप्रतिपाद्यं यज्ञशब्दो लक्षयति नाभिधत्ते । यतो यज्ञमिति यज्ञशब्दो यागमात्रे वषट्कारप्रदाने रूढस्तत्रैव प्रसिद्धेः । ' यो वै सप्तदशं प्रजापतिं यज्ञमन्वायत्तं वेद' इति प्रजापतेर्यज्ञशरीरस्य परमात्मन आश्रावयेत्यादि शरीरं निरूपितं दर्शपूर्णमासयागाङ्गत्वेन विधानार्थम् । तेनाऽऽश्रावणादिसंपाद्यौ दर्शपूर्णमासौ यागौ तथा तदङ्गं प्रयाजादयोऽपि यजतिचोदनाविहिता दर्शपूर्णमासप्रकरणगता आश्रावणादिकाङ्क्षा एव यागास्तथा ' प्रजापतिर्देवासुरानसृजत ' इति यज्ञशब्दवाच्ये सोमेऽपि च्छन्दसां वीर्यरूपत्वेनाऽऽश्रावणादीन्यङ्गान्याह । तथा च ज्योतिष्टोमोऽपि यागोऽन्ये च दर्शपूर्णमासविकृतिरूपा इष्टिपशुबन्धास्तथा ज्योतिष्टोमगुणविकारास्तद्विकृतिरूपा एकाहाहीनसत्राणि च यागा नान्ये यजतिधात्वर्थानुशासने शिष्टा देवपूजासंगतिकरणरूपा अर्था यज्ञयागशब्दवाच्याः । यज्ञशब्दो वषट्कारप्रदान एव कर्मणि रूढोऽन्यत्र प्रयुक्तो लक्षणया योगेन वा । अत एव कात्यायनः ' वषट्कारप्रदाना यजतयः स्वाहाकारप्रदाना जुहोतयः ' इति । जैमिनिरपि 'शब्दान्तरे कर्मभेदः कृतानुबन्धित्वात् ' इत्याह ।

वार्तिककृदपि ' धात्वर्थभेदे सर्वत्र विज्ञेयं भावनान्तरम् ' इति ।

तस्माद्यज्ञशब्दोऽत्रापि यज्ञरूपत्र्यंशभावनावाचकोऽपि पिण्डपितृयज्ञाग्निहोत्रादिनाककर्माणि भूम्ना प्रतिपादयति धर्मप्रश्नपितृमेधप्रश्नोक्तान्तान्यभ्युदयनिःश्रेयसफलानि । पितृमेधोऽपि पुरुषसंस्कार इति वक्ष्यति फलं चाऽऽनन्त्यं सुखं स्वर्ग इति । तथाऽऽत्माऽपि धर्मेषु व्याचिख्यासितो व्याख्येयत्वेन प्रतिज्ञातः । कथं त्र्यंशा भावना हि यज्ञशब्दाभिधेया व्याख्येयत्वेन प्रतिज्ञाता स विधीयत इत्युच्यतेऽनन्तरमेव विधिस्तु भावनाविषयो भावयेदिति भावनां गोचरयेत्किमित्याकाङ्क्षावर्ती च कुर्यात् । तत्र लिङाऽभिहितमिष्टसाधनत्वमाक्षिप्तं वा भावनागतं प्रतीयेत, इष्टसाधनं च स्वभाव्यत्वेनेष्टं प्रथमतो निरवधिकं सुखमेव गृह्णाति । ततो यदि स्वर्गादिपदेन सुखमवच्छिद्यते तदा तथैव गृह्यते काम्येषु । अन्यदा निरतिशयमेव सुखं साध्यं फलत्वेन गृह्यते नियतेषु तदवच्छेदकाप्रतीतेरात्मैव परमप्रेमास्पदत्वेन साक्षात्कारेण प्राप्यतया फलत्वेन गृह्यते । वक्ष्यत्याचार्यो धर्मेषु ज्ञानद्वारा कर्मफलमात्मलाभात्परं नास्तीति । लब्धस्य लाभोऽज्ञाननिवर्तकतत्साक्षात्कारेण । तदप्याधानप्रश्ने वदिष्यति ' कर्माभिर्निःश्रेयसम् ' इति । साक्षात्कारः साक्षात्कृतं चाऽऽत्मस्वरूपं निःश्रेयसशब्दार्थः । तस्मादात्माऽपि फलत्वेन प्रतिज्ञात एव । केन भावयेदिति फलसंबन्धोत्तरकालमपेक्षायां फलकरणत्वेन यागादि-

१ क. ग. च. छ. 'हीतौ द्वौ ।

क्रियाः संबध्यन्ते । तदुत्तरकालं च कथमित्यपेक्षित इतिकर्तव्यत्वेनाङ्गानि संबध्यन्त इति त्र्यंशा भावना प्रतिज्ञाता । सैव विधेयत्वादिरूपेण व्याख्यायते । ननु यजतिजुहोतिददातीनां समानं दानलक्षणमर्थमुपादाय यागहोमदानशब्दाः प्रवृत्तास्तेषां कथं भिन्नार्थत्वम् । सत्यं, त्रिषु दानं यद्यपि समानं तथाऽपि यजत्यादिचोदनाभेदाद्भेदोऽर्थेऽप्यस्तीति हि प्रतिपादितमेवं शब्दान्तराधिकरणे । स्वरूपे क्रियाविशेषः कथम् ।

उच्यते सूत्रकारादियाज्ञिकानां प्रसिद्धितः ।
तज्जैमिनिमतापेतमिति मे दूषणं न हि ॥
याज्ञिकाः सूत्रकाराणां मतं बुद्ध्वा स्वयं तथा ।
न्यायैस्तत्सूचितैरेव द्रढयन्त्यकुतोभयाः ॥
प्रसिद्धिमनुगृह्णन्तस्ते मान्याः श्रौतकर्मणि ।
तन्मतस्थापनायैव चापलं मे न गण्यताम् ॥

यजतिशब्दोऽप्रक्षेपदानमात्रे, तत्रैव सप्रक्षेपे जुहोतिशब्दः, पात्रस्वत्वापादनापवर्गे ददातिशब्दः । होमदानयोः प्रक्षेपपरस्वत्वापादनयोरपवर्गो यागस्य दानमात्र इति न संकरः । नन्वस्ति यागेऽपि प्रक्षेप इति चेत् । न, तस्य यजत्यर्थत्वाभावात्प्रक्षेपस्य चतुरवत्तं जुहोतीति जुहोत्यर्थभक्तित्वात् । 'तान्पर्यग्निकृतानुत्सृजति' इत्यादौ विना प्रक्षेपं यागसिद्धेः । तस्मात्तुभ्यं निवेदयामीति देवतायै वषट्कारेण दानमात्रं मानसवाचिकक्रियामात्रं यज्ञः । अत एव वक्ष्यति तदङ्गमितरे होमा इति । प्रतिपत्तिलक्षणा इति सूत्रकृतां मतम् । ननु यजत्यादित्रिषु स्वत्वत्यागमात्रं प्रधानमर्थः । तदेव यागरूपं होमदानयोः क्रमेण तदेव प्रक्षेपान्तं पात्रस्वत्वापादनान्तं चार्थो गम्यते । तत्र देवताया उद्देश्यत्वमात्रं स्वत्वत्यागस्तु त्रितयानुगतो न वषट्कारस्वाहाकारप्रतिपाद्य इति स्वत्वनिवृत्त्या परस्वत्वापादने पात्रसात्करणापवर्गरूपलक्षणे दान इव त्यागहोमयोरपि यजमान एव कर्ता क्रियते चेदं न ममेति यस्य स्वं तेन यजमानेनैव । कात्यायनेनाप्युक्तम्—'यज्ञं व्याख्यास्यामो द्रव्यं देवता त्यागः' इति । तथा 'प्रधानं स्वामी फलभोगात्' इति च । न्यायविज्जैमिनिनाऽपि 'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्' इति, 'उत्सर्गे वा प्रधानं स्यात्' इति च । निर्णीतं च भाष्यवार्तिककारादिभिः । न च + वाच्यं यजेतेर्दानार्थस्य शासनाद्देवतायास्तद्धितोक्ताया हविर्भागित्वेनैव चतुर्थ्युक्ताया अपि संप्रदानकारकत्वेनैव देवतात्वप्रतीतेः कथं मुख्यमर्थं धातुप्रत्ययोरुभयोरपि परित्यज्य त्यागमात्रमुद्देश्यत्वमात्रं वाऽमुख्यमुभयोरप्यङ्गी क्रियत

\+ वाच्यमित्यधिकम् ।

१ ख 'मेतच्छब्दा'। २ क. ख. ग. च. 'तेऽन्तर्दा°।

इति वाच्यम् । देवताया यागसंबन्धो यदि विग्रहेण स्यात्तदैव मुख्यार्थपरिग्रहो घटेत । किंच नार्थत्यागोऽपि तु तस्मिन्सत्येवाधिकस्य प्रवेशाङ्गीकारात् । तथैव देवताधिकरणे प्रतिपादितं नवमे च देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वा-दित्यादिभिर्देवताविग्रहत्वेन पूर्वपक्षस्यापि वा शब्दपूर्वत्वाद्यज्ञकर्मविधानं स्याद्गु-णत्वे देवताश्रुतिरिति विग्रहनिराकरणेन देवतासंस्कारो न याग इति स्थापितं, तत्कथं वषट्कारेण दानं यागः स च होतारि वषट्कर्तरीति चेत् । न । दानार्थेन धातुना तद्धित-चतुर्थीभ्यां च स्वार्थसिद्धये हविष्प्रतिग्रहीतृत्वभोक्तृत्वनिर्वाहार्थमवश्यं विग्रहवत्त्वेन विधानं पर्यवस्यति । न चैतावता देवतासंस्कारो यागः स्यात् । किं च, इन्द्राद्यर्था न लौकिका येनेन्द्रादिपदानां लोकतः शक्तिग्रहो भवेत्किंतु तेऽपिशास्त्रादेव ज्ञेयाः । शास्त्रं च विग्रहवत एव ब्रूते तत्रैव शक्तिग्रहो न तु विग्रहविधुरे व्यवहारोऽस्ति । न च शब्द एव तावद्देवतास्वरूपं पदार्थत्वेन प्रमाणाभावात्, तादृगप्रतीतेश्च । तस्माद्यादृशेऽर्थे शक्तिग्रहस्तादृगेव तत्तद्देवताशब्देन वाच्यं तत्रैव देवतात्वेन विधिः । किं च ' तदु-पर्यपि बादरायणः संभवात् ' इत्यनेन सूत्रेण भगवता बादरायणेन क्रममुक्तिनि-र्वाहाय देवतानां विग्रहवत्त्वस्थापनेन ब्रह्मविद्याधिकारस्तासामुक्तोऽन्यथोपासनादिकर्म-भिस्तत्तद्देवतास्वरूपप्राप्त्या मुक्तिफलोपपादिकानां श्रुतिस्मृतीनामप्रामाण्यमेव प्रसज्ये-तेति शारीरकमीमांसायां देवताधिकरणे स्थापितम् । भगवता बादरायणेनैव ' विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ' इति च विग्रहवत्त्वमुक्तम् । तदुक्तमेव मनसि कृत्वा तत्र तत्र सूत्रकारैर्देवतासारूप्यादि कर्मफलमुपदिश्यत इति वक्तव्यम् । न च रात्र्यादिकानामचेतनानां देवतात्वाद्देवतास्वरूपप्राप्तिरप्यनुपपन्नेति वक्तव्यम् । तत्रापि चेतनस्य तत्तच्छरीर[स्थ]स्यैव देवतात्वस्वीकारात् । दृश्यते हि देवताः प्रति मध्यमपुरुष-युष्मत्प्रयोगोऽतो नाचेतना देवता । प्रतिपादितमेतन्निरुक्तादौ प्रपञ्चेन । न च शाखा-दि प्रति युष्मच्छब्दप्रयोगाद्व्यभिचार इति वाच्यं, तत्रापि चेतनस्याधिष्ठातुः स्वीकारा-दित्यपि तत्रैव प्रतिपादितम् । किं च सर्वेऽपि न्यायाः प्रयोगपर्यवसानफलाः । न च कर्मप्रयोगरचना विना सूत्रैरन्यतोऽवगम्यते । प्रयोगे च कर्तृविशेषनियमो मन्त्रादितिकर्तव्यतानियमश्च सूत्रकारैरेव कर्तव्यः । तत्र व्यवहारदर्शनेन शब्दशक्ति-ग्रहो न तु न्यायसिद्धशक्तिग्रहमपेक्ष्य व्यवहारो लोकव्यवहारे तथात्वाभावादनादि-व्यवहारशक्तिपर्यालोचने मानमिति च स्थितिः । सूत्रकारास्तु चोदनासु फलभोक्तृ-कर्तॄंश्च परिभाष्य व्यवस्थापयन्ति लाघवेन व्यवहारसिद्धये । ऋग्वेदयजुर्वेदसामवेद-विहितेषु कर्मस्वनादेशे होताऽध्वर्युरुद्गाता च क्रमेण कर्तारः । आदिष्टा एवान्ये भवन्ति । ततस्तु न यजमानस्यौत्सर्गिकं कर्तृत्वं वेदोपाधौ । तत आदिष्ट एव कर्म-

---

१ ख. छ. °रूपप° ।

विशेषे कर्ता यजमानो भवति । ऋग्वेदं प्रकृत्य प्रवृत्ते होतृसूत्रे तदेव मनसि निधायाहाऽऽश्वलायनः प्रतीयादित्यनुवृत्तौ 'यजतीति कर्मचोदनायां होतारं, ददातीति यजमानं, जुहोति जपतीति प्रायश्चित्ते ब्रह्माणम्' इति । ऋग्वेदेन होता करोतीति संज्ञया विनियोगादित्यर्थः । ततस्तु यजतिचोदनास्वन्यास्वपि चोदनास्वनादिष्टकर्तृकासु होतैव कर्ता योग्यत्वाच्च । कुतः, यतोऽध्वर्युस्तं प्रत्येवाऽऽह यजेति । तथा मैत्रावरुणोऽपि । ये यजामह इत्यपि स एव पठति । ततो याज्यया वषट्कारान्तया स एव यजति' ह्वयति वा अनुवाक्यया प्रयच्छति याज्ययेति श्रुतेः । प्रदानं च वषट्कारान्तया 'वषट्कारेण स्वाहाकारेण वा देवेभ्यो दीयते' इति श्रुतेः । तथा ददातीति चोदिते यजमानं कर्तारं प्रतीयात् । तत्रायमभिप्रायः—दानं नाम ब्राह्मणाद्युद्देशेन दत्तस्य द्रव्यस्य पात्रस्वत्वापादनं, तच्च स्वत्वत्यागान्तमेव ददात्यर्थस्तत्रैव रूढेः । स्वत्वत्यागो यस्य स्वं तेनैव कार्यो नान्येन । स्वं च यजमानस्येति सर्वतःप्रसिद्धमतो यजमानो दान एव कर्ता तुभ्यमहं संप्रदद इत्याचारात् । श्रौते तु ददामीत्यादिप्रयोगवन्तो मन्त्रा एवाध्वर्युसूत्रे याजमाने पठ्यन्ते नैवं यागार्थे मन्त्राम्नानं क्वचिदस्ति । हविरनुमन्त्रणं तु कर्मान्तरं प्रतिपत्तिरूपः संस्कारोऽप्यदृष्टार्थः । याजुषे हौत्रेऽपि हृदयदेशेऽञ्जलिं कृत्वाऽनुब्रूयाद्यजेच्चेति होतुरेव कर्तृत्वं, तथा समिधो अग्न आज्यस्य व्यन्त्विति यजतीति, न कुत्रापि यजत्यर्थे यजमानकर्तृत्ववार्ताऽपि । तथाऽध्वर्युसूत्रेऽपि वषट्कारे वषट्कृते वा जुहोति याज्यापुरोनुवाक्यावतीषु चतुरवत्तमिति जुहोतीतिचोद्यमान इत्युपक्रम्याध्वर्युः स्वाहाकारेण जुहोतीति दर्विहोमेष्वध्वर्योरेव कर्तृत्वनियमात्समस्तयाजुर्वैदिकक्रियास्वनादेशे च । तथा याजमानं व्याख्यास्याम इत्युपक्रम्य यान्यनुशिष्टानि कर्माणि यजमानकर्तृकाणि न तेषु यजतिजुहोत्योर्यजमानकर्तृकत्वमुपदिष्टमतो दक्षिणादानमेकमेव यजमानकर्तृकम् । यागहोमावृत्विक्कृतावेवेति यागहोमयोरिदं न ममेति यजमानेन यागहोमांशौ क्रियेते इति यजमानकर्तृ[क]त्वमिति न्यायमतस्य न किंचिन्मूलं पश्यामोऽनुष्ठानविरोधश्च नापि प्रायश्चित्तविधिरिदं न ममेति लोपेऽस्य च प्राधान्ये पुनर्वा करणम् । किंच, उत्सर्गमात्रं त्यागापरपर्यायं तत्प्रधानं तदा यागहोमयोरभेदे शब्दान्तराधिकरणविरोधः । अथास्ति विशेष इति चेत् । न, इदं न ममेत्येवोभयत्र संकल्पदर्शनाद्बाह्यानुष्ठानविशेषस्याभावाच्चात्र यजमानस्य । अथ होत्रध्वर्युभ्यां विशेषसिद्धिर्वषट्कारस्वाहाकाराभ्यामिति चेत् । न, वषट्कारस्वाहाकारकृतयोः किं प्रधानांशत्वमङ्गत्वं वा । नाऽऽद्यः । प्रधानकर्मणोऽशानुष्ठानमृत्विजा परांशानुष्ठानं यजमानेनेति न प्रधानं यजमानकृतं स्यात् । क्रियासमुदायवाचिनौ यजतिजुहोती । समुदायावेव प्रधाने तयोरंशानामप्राधान्यादनङ्गत्वाच्चर्त्विग्यजमा-

---

१ छ. °ति आह' ।

नाभ्यां नाङ्गं न प्रधानं चानुष्ठितं स्यात् । किंच, फलसंबन्धिकरणं याजमानं, तच्चेदं न ममेति द्रव्यस्वत्वत्यागरूपः संकल्पः । स च गार्हपत्याद्याधानेषु महारुद्रजपादौ द्रव्यत्यागासंभवादृत्विग्भिः कृतस्याऽऽधानस्य जपस्य फलं यजमानगामि न स्यात् । किंचाङ्गेषु प्रयाजादिषु त्यागोऽपि होत्रादिभिरेव कर्तव्यः स्यात्फलाय करणत्वाद्धात्वर्थस्य त्यागपर्यवसायित्वं धात्वर्थपर्यवसानाय गृह्यतेऽतोऽङ्गं वाच्यं प्रधानं लक्षितं त्याग इति भवतां मतपर्यवसानम् । तन्न । उभावंशावुभाभ्यां सहानुष्ठेयौ किंवा क्रमेण । नाऽऽद्यः । वषट्कारान्तेन दानं देवतोद्देशेन भवति तदा दानसंस्कृतस्य त्यागः कार्यः । न ह्यदत्तस्य त्यागः स्यात् । अथ दीयमानस्यैव त्यागस्तर्हि स्वयमग्निहोत्रहोमो न स्यात् । स्वाहान्तेन होमे सति पश्चात्त्यागस्यावकाशो न मध्ये । सोमे च गृहपते यजेत्युक्ते यजमान एव यजति तदाऽपि नावकाशः । अथानन्तरं त्यागस्तर्हि वषट्कारेण सह यदा प्रक्षेपस्तदा प्रक्षेपस्य यागे प्रतिपत्तिरूपत्वाप्रतिपादितस्य पश्चाद्यागायोगान्न प्रधानयागसिद्धिः । अथाऽऽदावेव त्यागस्तर्हि शिष्टाचारविरोधः । यागहोमयोर्वषट्कारस्वाहाकाराभ्यां कृतयोः प्रतिपत्तिकर्मताऽऽपद्येत । अस्माभिस्तु त्यागस्य प्रतिपत्तिरूपत्वमङ्गी क्रियते । द्वितीया प्रतिपत्तिस्त्यागरूपा भस्मसात्करणमिवाऽऽक्षिप्तस्य हविषो याज्ञिका आदरेण तथा कुर्वन्तोऽत्याचारादनुमीयते न कश्चित्साक्षादुपदेशोऽस्ति त्यागस्य वा भस्मीभावकरणस्य वा । तदकरणे सर्वप्रायश्चित्तमात्रमेव याज्ञिकैरुपदिश्यते । भवत्पक्षे प्रवसतो यजमानस्य त्याग एवं न सिध्येत् । त्यागमात्रस्य प्रधानत्वे वषट्कारस्वाहाकारान्तमन्त्रसाध्यं देवतामुद्दिश्य हविर्दानं त्यज्यमानस्य द्रव्यस्य संस्कार एव वाच्यो न दानं द्रव्यं प्रति प्रधानं दानत्यागयोरेकं द्रव्यं प्रति प्राधान्यायोगात्प्राधान्ये चोभयोर्यजमानत्वापत्तेरवश्यं दानं भूतभाव्युपयोगे हि द्रव्यं संस्कारमर्हतीति न्यायेन भाव्युपयोगस्य द्रव्यस्य संस्कारो भूतोपयोगस्य प्रतिपत्तिरित्यङ्गीकार्यं, तदा तस्य प्रवसतो यजमानस्य द्रव्यत्यागात्पूर्वभावपश्चाद्भावाज्ञानान्न कर्मसिद्धिः । पूर्वं यजमानेनात्यक्तस्य कथं यागे प्रक्षेपेण प्रतिपत्तिः स्याद्दानं पूर्वं यर्हि तर्हि त्यक्तस्य कथं संस्कारः स्यादिति । मत्पक्षे यजमानसंस्कारव्यतिरिक्तस्य संस्कारस्य प्रवसतो नास्त्येवानुष्ठानमकर्मकरणानां मन्त्राणां जपमात्रं यजमानस्य, कर्मकरणैर्मन्त्रैरध्वर्युणा याजमानं क्रियते, स्वत्वत्यागं पत्नी कुर्यात् । यजमानेन कृतेऽपि न दोषः प्रतिपत्त्या हि संनिपत्योपकारिण्या न निर्वृत्ते यागे स्वरूपेण कश्चिदुपकारो जन्यत इति तस्याः संस्कारकर्मत्वनिर्वाहार्थं यागस्वरूपमपूर्वरूपेण स्थितं प्रतिबध्यते नोत्पद्यते वा प्रतिपत्त्यभावेनेति कल्पनीयम् ।

---

१ ग. °ङ्गं प्र° । २ ख. °मिव । क्षि° । ३ ख. छ. °णे च स° । ४ ख. छ. होम । ५ क. ग. °व क्षि° । ६ क. ग. °धान्यद्वयायो° । ७ ख. च. °न्न तत्कर्म° ।

तत्र वैगुण्ये प्रायश्चित्तेन परिहारः प्रतिबन्धकस्य दुरितापूर्वस्य भवेत् । त्वत्पक्षे प्रधाना-नुत्पत्तौ चापूर्वस्यैवानुत्पत्तेः प्रायश्चित्तशतेनापि समाधानं न भवति । नहि भस्मसाद्भूतस्य द्रव्यस्यानुत्पन्नस्य वा त्यागो यागो द्रव्यनिरपेक्षोऽपूर्वं साधयेदसाधयंश्च द्रव्यो-त्पत्तेरदृष्टार्थत्वमापादयेच्चवाग्वाः पाकस्येव पूर्वपक्षे । प्रवसति यजमाने निमित्तवशात्प्राप्ते-ष्टिदर्विहोमानामननुष्ठानेऽग्निनाशः प्रसज्येत । तथाऽऽधाने तु त्यागायोगादध्वर्युणा कृते तज्जनितसंस्कारोऽपि तत्रैव प्रसज्येतेत्यलमतिप्रसङ्गेन । न्यायमतमिव कात्यायनीयमपि मतं सूत्रान्तरोपदेशविरुद्धमिव तत्र तत्र दृश्यते । तथा ह्यवदानदोषे पुनरुत्पत्तिर्द्रव्यस्यो-च्यते जैमिनिकात्यायनाभ्यामन्यैस्त्वाशयादेवावदानं पुनरपीष्यते । व्याख्यातारोऽप्यत एव न्यायमतमुपदेशमतं च तत्र तत्र विविच्य दर्शयन्ति । न ह्युपदेशशब्दो न्याया-पेतेऽर्थे प्रयुज्यत इति वाच्यं, सामान्यन्यायप्रधानं शास्त्रं न्यायशब्देनोच्यते । प्राति-शाख्योपदेशविचारात्मकं चोपदेश इत्युक्तम् । तथोपदेशप्रधानं कल्पसूत्रमपि सोपदि-ष्टन्यायगर्भमेवोपदेश इति । वेदो ह्युपदेशो न लौकिकं वाक्यम् । तस्मात्परिक्रयलब्धैर्ऋ-त्विग्भिरनुष्ठितस्य प्रधानस्यापि फलं यजमानगाम्येवेति यदि श्रुतिरावेदयेत्का नामानु-पपत्तिः । याजमाने फलोद्देशेन संकल्पो वक्ष्य इति सर्वकर्मसु श्रौत एव फलमात्मसात्करो-तीति वक्ष्यते । तथा च साङ्गयागसंकल्पमात्रेण सर्वो यागो यजमानकर्तृक एव । तत्सि-द्ध्यर्थमेवर्त्विजः कुर्वन्तीति शास्त्रफलं प्रयोक्तरीति न न्यायविरोधः संकल्पेनैव प्रयो-क्तृत्वात् । तस्माद्यज्ञशब्दोऽपि यागापरपर्यायो यजतिचोदिते वषट्कारप्रदानरूप एव कर्मणि वर्तते नान्यत्र । अन्यत्राग्निहोत्रादौ प्रयोगो न मुख्योऽनेकार्थत्वस्यान्याय्यत्वात्सं-भवन्त्यां गतौ । सूत्रकारोऽपि वक्ष्यति पञ्चयज्ञान्प्रकृत्य 'महायज्ञा महासत्राणीति स्तुतिः' इति । तेनतेऽपि प्रयोगे व्याख्याता ये पिण्डपितृयज्ञः पाकयज्ञा हविर्यज्ञा अग्निहो-त्रस्य यज्ञक्रतोरित्याद्या नामरूपास्तथाऽऽख्याता अपि पिण्डपितृयज्ञेन यजेताऽऽग्नेयेन स्थालीपाकेन याजयतीत्याद्याः । 'देवान्देवयजो यान्ति' इत्यादयोऽपि दानैकदेशेन लक्षणया यजेर्दानार्थस्य व्युत्पत्त्या वा क्वचिद्धोमार्थस्य ज्ञेया उक्तप्रवृत्तिनिमित्तस्य च दर्विहोमेष्वभावात् । तस्मात्प्रकृतिविकृत्यात्मना बाहुल्याद्यज्ञस्य यज्ञशब्देन सर्वसूत्रप्रति-पाद्योऽर्थः संगृहीतः । अस्ति च श्रुतिस्मृतिषु यज्ञशब्देनोपादानं सर्वेषां वर्णाश्रमधर्मा-णाम् । तथाहि 'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः' इति 'त्रिभिर्ऋणवा जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः' इति 'विविदिषन्ति यज्ञेन' इत्येवमादिषु यज्ञशब्देनाऽऽवश्यकानि गृह्यन्ते । अत एव भगवान्बादरायणः 'सर्वापेक्षा यज्ञादि-श्रुतेरश्ववत्' इति । श्रुतौ 'यज्ञेन देवेभ्यः' इति 'यज्ञेन विविदिषन्ति' इति चैकव-चनं य(नवद्य)ज्ञमिति [न] विवक्षितम् । किं बहुना सकलवेदार्थज्ञानस्यैव सकामनिष्काम-

---

१ ख. 'वेत्प्राध' । २ ख. छ. वेदो । ३क. ग. छ. 'योगव्या' । ४ ख. च. 'यज्ञाः पा' ।

साधारण्येन नित्यत्वाद्याजमानार्थत्वेनाऽऽवश्यकत्वाच्च। ततः परमविरक्तश्चेत्कर्माणि कुर्य त्करोतु नाम न तं निवारयति वेदो दर्शयति परं साध्यसाधनभावमात्रम् । तज्ज्ञा त्वाऽऽवश्यकता। काम्यकर्माकरणे त्वप्रत्यवायेऽपि तद्व्याख्याने तज्जन्यज्ञानस्य निय त्वात् । व्याख्यास्याम इति फलकरणेतिकर्तव्यतालक्षणांशत्रयविशिष्टं भाव विविच्य कथयिष्यामः। यज्ञस्यार्थरूपस्य न व्याख्यानं संभवति, वाक्यपदप्रकृतिप्रत्य यविभागेन शब्दार्थकथनं व्याख्यानं न चार्थस्य तत्संभवति। तस्मादेवमवगम्यते वेदैर्वि वदिष्यति तदिदं वेदव्याख्यानमेव न्यायैः क्रियमाणं फलतः प्रयोगरूपेण व्यवस्थि भवति । वेदपाठक्रममपहाय यज्ञप्रयोगक्रमानुसरणं दर्शयितुमर्थप्राधान्येन निर्देशं न्यायैर्मीमांसायां वाक्यप्राधान्येन सूत्रे तु प्रयोगप्राधान्येनेति भावः। अर्थनिर्देशेन चैत त्सूचितं द्रव्यदेवतादिकानेकार्थप्रयोगप्राधान्यतया यजुर्वेदविहितत्वादाध्वर्यवमिति ज्ञापितं कानिचित्कर्माणि मन्त्रमात्रजन्यानीति हौत्रोद्गातृत्वयोर्मन्त्रप्राधान्यम्। अ एवाऽऽश्वलायनाचार्यः—'अथैतस्य समाम्नायस्य विताने योगापत्तिं वक्ष्यामः' इति शब्दप्राधान्येन प्रतिज्ञां कृतवान्। ब्रह्मत्वव्याख्यानं तु प्रतिवेदं सद्भावप्रदर्शनार्थम् आग्नीध्रमंशतो व्याख्यातं यावद्यजुर्वेदविहितमवशिष्टं याजमानं च। सर्वेषामध्वर्युवेदान्त र्भावात्कथनम्। हौत्रस्य दर्शपूर्णमासिकस्य व्याख्याने तदपि यदृग्वेदे विहितं हौ तत्रैव याजुर्वेदिकगुणोपसंहारमात्रप्रदर्शनेन विकल्पप्रदर्शनपरम्। तत्र प्रसङ्गादनारभ्य विधिसामान्यन्यायव्याख्यानं सर्ववेदसाधारणं च कृतं तथाऽपि यजुर्वेदविहितेऽध्व र्युकर्मणि यज्ञरूपोत्पत्तिरूप एव प्राधान्यमत्र सूत्र इत्याशयः। द्रव्यदेवते हि कर्मणो रूपम्। तथोक्तं कात्यायनेन—'यज्ञं व्याख्यास्यामो द्रव्यं देवता त्यागः' इति देवता या यत्र विहिता सा तत्र न जात्या काचित्। द्रव्यं तु नियतम्।

तत्र श्लोकाः—द्रव्यं पशुसमुद्भूतं नवधा चोदितं भवेत्।
पयो दध्याज्यमामिक्षा वपा मांसं च वाजिनम् ॥
त्वग्लोहिते अश्वमेधे वपास्विष्टकृतोः कृते।
पुरोडाशो यवागूश्च चरुर्धानाः करम्भकः ॥
परिवापः सुरा मन्थ इत्यष्टौषधिजान्यथ।
सोमो लताभवश्चान्ये पूतीकाद्या अभावतः ॥
आपः संसृष्टहविषि कृष्णला मध्वमूनि तु।
वषट्कारप्रधानानि हवींषि यजिकर्मणि ॥
स्वाहाकारप्रदानानि होमार्थानि पयो दधि।
आज्यं मांसं वसैतानि पशुजान्यथ चौषधम् ॥
ओदनोऽथ यवागूश्च तण्डुला लाजसक्तवः।
मसूस्या(स्य) पृथुकादीनि बर्हिरादीन्यनेकधा ॥

खर्जूराणि करीराणि समिधः शकलानि च ।
सोमो मध्वाप इत्येवंप्रकाराण्यथ लौकिके ॥
अपूपाः किंशुकतिलकङ्गा अन्यानि कानिचित् ।
श्रौते द्रव्यप्रधानं तदध्वर्योः कर्म चोदितम् ॥

अतस्तेषां व्याख्यानं विशेषेण शाखान्तरप्रयोगव्यावृत्ततया प्रातिशाख्यधर्मस्य प्रयोगरूपेणोपदेशातिदेशाभ्यामङ्गाङ्गिभावेनानुष्ठानक्रमस्य व्याख्यानं प्रदर्शनम् । बहुवचनं च सूत्रान्तरशाखान्तरवक्तृसमुच्चयार्थम् ।

यदाहुः–' किंचित्स्वयं नाम विचारयन्ति कात्यायनाद्याः खलु सूत्रकाराः ।
मीमांसयैवेति त आहुरेनमन्योन्यविद्धा हि भवन्ति विद्याः '॥ इति ।

न्यायो मीमांसा नाना विद्यास्तु परस्परसापेक्षाः परिगणिताः कर्मज्ञानयोः कारणत्वेन भगवता योगीश्वरेण याज्ञवल्क्येन—

' पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ ' इति ।

पुराणग्रहणमितिहासरामायणादिकाव्यादीनामप्युपलक्षणम् । पुराणैरुपाख्यानैः सार्थवादस्य समन्त्रस्य वेदस्यार्थविबोधो देवतास्वरूपज्ञानं स्वर्गापवर्गफलस्वरूपज्ञानादिकं प्रयोजनं, न्यायो नैयायिकवैशेषिकशास्त्रं, तत्र प्रत्यक्षादिप्रमाणद्रव्यगुणकर्मजातिव्यक्त्यादिज्ञानम् । मीमांसाद्वयेन ज्ञानं तु स्पष्टमेव कर्मब्रह्मविषये । देवताकाण्डमपि ब्रह्ममीमांसैव । धर्मशास्त्रेणाऽऽचमनशौचाद्याचारस्य सकलश्रौतस्मार्तकर्माङ्गभूतस्य विधानात् (नम्) । अङ्गोपयोग उक्त एव । वेदैः प्रयोगः साक्षादेव । एतानि चतुर्दश वेदान्तानि कर्मब्रह्मविद्यानां स्थानान्यसाधारणकारणानि धर्मस्य चोत्पादकानि च । तत्र सूत्रैः प्रयोगे रचनीये मीमांसाऽन्तरङ्गमङ्गम् ।

तथाहि–धर्मो द्वादशलक्षण्या व्युत्पाद्यस्तत्र लक्षणैः ।
प्रमाणभेदशेषत्वप्रयुक्तिक्रमसंज्ञकाः ॥
अधिकारोऽतिदेशश्च सामान्येन विशेषतः ।
ऊहो बाधश्च तन्त्रं च प्रसङ्गश्चोदिताः क्रमात् ॥

लक्षणानि अध्याया द्वादशानां लक्षणानां समाहारो द्वादशलक्षणी तादृशस्य द्वादशाध्यायोपेतस्य शास्त्रस्य धर्मो विषयः । प्रमाणादयः प्रसङ्गान्ता द्वादश पदार्थाः क्रमाद्द्वादशानामध्यायानां विषया इति । मीमांसया तु साक्षात्सूत्रैरर्थज्ञाने जन्येऽवान्तरव्यापाररूपया मीमांसया विना प्रयोगविज्ञानं न भवतीति व्याख्याङ्गत्वेन न्याया अपि प्रतिज्ञातास्ते केचित्स्वेन व्याख्यास्यन्ते केचित्प्रयोगेणैव सूचिता अन्यतो ग्राह्याः । केचित्स्वाभिमता एव निर्णेष्यन्त इति व्याख्यास्याम इति बहुवचनेन सूचितम् ।

तथा च यज्ञो व्याख्येयत्वेन विषयस्तज्ज्ञानं सूत्रस्य शास्त्रस्य प्रयोजनम्। तच्चानुष्ठानाङ्गम्। एवं च प्रतिज्ञाते व्याख्येयत्वेन कर्ममात्रे तस्य यावत्फलस्वरूपलक्षणप्रमाणानि न ज्ञायन्ते तावन्न प्रयोगानुष्ठाने प्रवर्तते किंफलकं किंस्वरूपं किंलक्षणकं किंप्रमाणकमित्याकाङ्क्षायां प्राथम्यात्तत्राऽऽह—

**स त्रिभिर्वेदैर्विधीयते।**

यज्ञो व्याख्येयः सफलत्वात्। सफलता च ज्ञायते। कुतः। यतो वेदैः श्रेयःसाधनतया विधीयते। एतदपि सामर्थ्यं वेदानाम्। कुतः। अध्ययनविधिरूपाद्वेदादेव। नहि श्रेयःसाधनं विनाऽन्यद्विधेयमिति संभवति। तस्मादयं व्याख्येयो न त्वव्याख्यातोऽनुष्ठातुं शक्य इत्यभिप्रायः। स विधात्रयेण प्रसिद्धो यज्ञपदोपलक्षितो धर्मस्त्रिविधैर्वेदैरपौरुषेयत्वेन निरस्तसमस्तदोषाशङ्कैर्वेदत्वेन च स्वतःप्रमाणैः कर्तव्यतयोपदिश्यते। सर्वस्य मन्त्रब्राह्मणात्मकस्य सार्थवादस्य विध्येकवाक्यतापर्यवसानार्थं विधीयत इत्युक्तम्। अन्यथा ज्ञाप्यत इत्येवावक्ष्यत्। यदि लौकिकप्रमाणवत्प्रमाकरणत्वमात्रेणैवाविवक्षिप्यत्। न ह्यश्रेयःसाधनं कर्तव्यत्वेन वेदेनोपदेष्टुं शक्यते। अतः श्रेयःसाधनमिति भावः। स्वाध्यायोऽध्येतव्य इति दृष्टार्थेनाध्ययनविधिना यद्यदृष्टप्रयोजनं येन यथा कर्तुं शक्यते तथा तेन तत्कर्तव्यमित्यनुज्ञायते। स्वाध्यायस्य शब्दरूपस्य ज्ञानोत्पादनमात्रे शक्तिः। एवं च सति तत्र विधेः प्रवर्तनावाचकस्यान्येषां प्रवृत्तिरूपप्रयत्नापरपर्यायभावनादिप्रतिपादकपदानां विधिव्यापारविषयतदपेक्षितकारकार्थज्ञापनेनैकवाक्यतया प्रामाण्यम्। नामधेयस्यापि करणावच्छेदकत्वेनैकवाक्यत्वम्। अर्थवादानां विध्यपेक्षितेतिकर्तव्यतालक्षणप्राशस्त्यलक्षणत्वेन प्रामाण्यं, तेषामनन्यप्रयोजनानां शब्दानां यज्ञे प्रामाण्यम्। यज्ञतत्साधनस्मृत्या वा साक्षात्स्वार्थस्तुत्याऽऽरादुपकारकया वा मन्त्राणां यज्ञोपयोगे सति स्वार्थप्रकाशनद्वारैव नोच्चारणमात्रेण यज्ञतत्साधनाङ्गतेत्येवमर्थस्य नियमविध्युन्नायकत्वेन पदार्थविधयाऽङ्गतां गतानामपि प्रामाण्यम्। पदार्थानामपि स्रुवेणावद्यति हस्तेनावद्यति स्वधितिनाऽवद्यतीत्यत्र पदार्थसामर्थ्येनैव नियमप्रमाकरणता तथा मन्त्राणामपि। एवं च स्वाध्यायपदापरपर्यायवेदपदेन स्वाध्यायाध्ययनविधिनोक्तं प्रामाण्यं वेदे दर्शितम्। अन्यथा विधिलक्षणानि कर्माणीत्यनेनैव सेत्स्यतीत्यनर्थकमेवैतत्सूत्रं स्यात्। स्वरूपलक्षणप्रमाणानां तत्रैव सिद्धेः। अतः सर्ववेदप्रामाण्यार्थमेवेदं सूत्रम्। तथा च वेदैर्बोध्यत इत्यपि स्वाध्यायाध्ययनविधिनैव वेदेन ज्ञापितमित्यप्यावेदितम्। अध्ययनविधेरेकशाखामात्राध्ययनेन पर्यवसानम्। अन्यथाऽशक्यार्थविधायकत्वादप्रामाण्यमध्ययनविधेः। स्वशाखानध्ययन एव दौर्ब्राह्मण्यम्। एवं च सति वेदचतुष्टयस्य प्रामाण्यं स्थितम्।

१ ख. च. छ. °क्षिताका°। २ ख. च छ. ध्यायोऽध्य°।

ननु त्रिभिर्यदा वेदैर्ज्ञापितं कर्म तद्भवेत् ।
तदेकस्य भवेन्नूनमप्रामाण्येन दूषणम् ॥ १ ॥
नह्यप्रमाणमपि यो वेदोऽध्येयो विधानतः ।
चतुर्थस्यापि वेदस्याथर्वणोऽस्ति प्रमाणता ॥ २ ॥
वैतानिके ब्रह्मकर्मण्यभिचारेऽप्यलौकिके ।
लौकिकेऽपि च सूत्रेणाऽऽवेदयिष्यत्यसौ स्वयम् ॥ ३ ॥
ततो न परिसंख्याऽस्य कर्तुं युक्ता प्रमाणतः ।
न किंचिल्लौकिके मानं मन्त्रब्राह्मणरूपतः ॥ ४ ॥
तत्र वेदत्वधर्मेण प्रामाण्यमपि दुर्घटम् ।
अत्रोच्यते द्वंद्ववृत्तौ पदत्रयविवक्षणम् ॥ ५ ॥
मुख्यत्वेन चतुर्णामप्येकवेदपदाद्ग्रहः ।
लौकिकेष्वपि मानत्वसिद्ध्यै चामुख्ययोर्द्वयोः ॥ ६ ॥
यद्यप्यमुख्यवेदत्वेनैकेनैकोऽपि संभवेत् ।
तथाऽप्यवान्तरोपाधिद्वयेनामुख्यता द्वयोः ॥ ७ ॥
अध्येतुं शक्यते शाखा सैव स्वाधाय उच्यते ।
तामधीयान एवासौ वेदाध्याय्यन्यथाऽव्रकृत् ॥ ८ ॥
वेदशब्दश्चतुष्के वा प्रत्येकं वा चतुष्टये ।
एकत्वेन प्रयुक्तोऽपि नैकव्यक्त्यभिधानकृत् ॥ ९ ॥
वेदानधीत्य वेदौ वा वेदं[1] वेति स्मृतिस्तथा ।
काठकेऽपि ह्यनन्ता वै वेदा इत्युच्यते यतः ॥ १० ॥
वेदत्वजात्यैकशाखा व्यक्तिरित्येव निर्णयः ।
तदेकदेशे शाखात्वं वेदत्वमपि [2]चष्यते ॥ ११ ॥
यच्च शाखैकदेशेन विहितं कर्म वैदिकम् ।
प्रोच्यते गौणमेवैतद्वेदवाक्यविवक्षया ॥ १२ ॥
ननु चैवं वैदिकं तु कर्म न स्यात्किमप्यथ ।
स्याद्वा सर्वं वेदमूलैस्मृत्याचारोपवर्णितम् ॥ १३ ॥
सत्यं तथाऽपि कश्चिद्धि विशेषोऽस्ति विभेदकृत् ।
स्वशाखान्तर्गतैर्वाक्यैः शाखान्तरगतैरपि ॥ १४ ॥
एकप्रकरणापन्नैर्ज्ञापितं ब्राह्मणैस्तु यत् ।
तदेके कर्म वा ब्राह्मज्ञानं वैदिकमुच्यते ॥ १५ ॥

---

१ क. घ. छ. चेति । २ क. छ. नेष्यते । ३ क. ग. छ. 'लभ्रुत्या' ।

यद्वा वेदेन मानेन ज्ञापिता कर्मसंततिः ।
सा वैदिकी तद्गतैकं कर्म वैदिकमुच्यते ॥ १६ ॥
यस्य नास्ति स्वशाखायां साकल्यं नान्यशाखया ।
एकप्रकरणत्वेन पूरितं यत्प्रकीर्णकैः ॥ १७ ॥
नानाप्रकरणाधीतमन्त्रब्राह्मणभागगैः ।
वाक्यैरेकत्र पुरुषैरानीतैर्विहितं तु यत् ॥ १८ ॥
कर्म प्रोक्तं लौकिकं तन्मन्वादिभ्योऽवगम्यते ।
यत्प्रत्यक्षानुपूर्व्या स्वपाठो नास्ति तु वेदगः ॥ १९ ॥
प्रत्यक्षोऽपि ऋषीणां स वेदोऽप्रत्यक्ष इष्यते ।
एक[1]प्रघट्टकेनान्यैः प्रत्यक्षं नोपलभ्यते ॥ २० ॥
तस्मात्तत्रापि वेदत्वमुपचारादिति स्थितिः ।
न हि प्रकीर्णको वेदो गृह्यते विधिना तु सः ॥ २१ ॥
तस्मात्तस्य त्ववेदत्वं तेन प्रोक्तोऽप्यवैदिकः ।
लौकिकः स्मार्त इत्युक्तो मन्वादिस्मृतिशासनात् ॥ २२ ॥
स एव क्वचिदन्यार्थमन्त्रैर्वाऽन्यार्थवादकैः ।
प्रसङ्गेनानूद्यमानः प्राप्तो नासौ विधिं विना ॥ २३ ॥
तस्यापि प्राप्तये तेभ्यो विधिरेव प्रक[2]ल्प्यते ।
सोऽपि लौकिक इत्युक्तः स्मार्तो वा न तु वैदिकः ॥ २४ ॥
ननु चैकाग्निकाण्डं तु प्रत्यक्षो वेद ईर्यते ।
पाठेन गृह्यते कैश्चिदतोऽप्रत्यक्षताऽस्य न ॥ २५ ॥
तेन यद्विहितं कर्म स्मार्तं वा लौकिकं कथम् ॥
सत्यं तत्प्रातिशाख्यत्वाच्छ्रौततुल्यं तथाऽपि तु ॥ २६ ॥
तत्पूरणाय मन्त्रा हि श्रौतकाण्डेऽप्यवस्थिताः ।
श्रौतेन कर्मणा नैव संबद्धा निर्गतास्ततः २७ ॥
लिङ्गैरेकाग्निकर्मैर्वा ( वाऽऽ )लिङ्ग्याङ्गत्वमुपागताः ।
मन्त्रा एवात्र ये केचिद्विधिहीनास्तदर्थगाः ॥ २८ ॥
विधयोऽप्यागता ये चाबद्धाः प्रकरणेन हि ।
मन्त्रार्थवादावयवैः कल्पिता अपि पूर्ववत् ॥ २९ ॥
वैतानिकाग्नितोऽन्यत्वाद्गृह्यः स्मार्तोऽप्यलौकिकः ।
अग्निः कर्माङ्गतां प्राप्त एकाग्निरिति चोदितः ॥ ३० ॥

---

१ क. ग. च. छ. 'कमन्त्रदके' । २ क. ग. च. छ. 'कल्पते ।

तं प्रकृत्यैव काण्डं यदेकाग्नेः काण्डमुच्यते ।
तत्रोपनयनं श्रौतं शाखान्तरगतं यतः ॥ ११ ॥
धर्मप्रश्नेरिताः पञ्च यज्ञाः श्रौता इति स्थितिः ।
अतः प्रकीर्णकाण्डेन तुल्यमेकाग्निकाण्डकम् ॥ १२ ॥
श्रौतेन सदृशं चैतदेकप्रकरणोदितम् ।
अतस्तु लौकिकं स्मार्तकाण्डद्वयममुख्यकम् ॥ १३ ॥
गृह्यमग्निं प्रकृत्योक्तं गृह्यकर्म विशेषतः ।
समयः स्मृतिशास्त्रं त्वाचारः शिष्टानुवर्तनम् ॥ १४ ॥
पुंसो लिप्सापेतमाभ्यां सामयाचारिकाः स्मृताः ।
तदेव गृह्यकाण्डं स्याद्यच्चोपनयनादिकम् ॥ १५ ॥
स्मृतिशास्त्रं तथा धर्मप्रश्नौ काव्यमृषीरितम् ।
इतिहासपुराणानि सामयाचारशासनम् ॥ १६ ॥

स्मृतिरपि—'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामिष्टसंतुष्टिरेव च ' ॥ इति ।

शीलमात्मगुणा अहिंसादयः । संतुष्टिर्वैकल्पिके कर्मण्युत्साहोऽन्यतरस्मिन् । तदुक्तं बौधायननेन—' सुसंस्कारा व्रीहय एवातो विकृतिषु त एवानादेशे ' इति । यत्र कर्तव्यत्वेनाऽऽवेदनं नास्ति क्वापि वेदे परार्थार्थवादमन्त्रेषु स्तुत्या सिद्ध एवानूद्यते, न च दृष्टं प्रयोजनमस्ति स एवाऽऽचारः शिष्टैरनुष्ठीयते 'तस्माच्छ्रेयाꣳसं पापीयान्पश्चादन्वेति' 'यथाऽतिथिं ज्योतिष्कृत्वा परिवेवेष्टि' 'धन्वन्निव प्रपा असि' ' कुमारा विशिखा इव ' इति, गुर्वनुगमनमतिथयेऽन्नदानमनूदके देशे प्रपाप्रवर्तनं गोदाने संस्कारे सशिखं मुण्डनमिति । यत्र निन्दयाऽनुवादो यथाऽतिथये प्रद्रुतायेति तत्र निषेधोऽपि ज्ञेयः । तथा पुराणदर्शितमेव ।

तथा भागवते—'इतिहासपुराणानि पञ्चमो वेद इष्यते' । इति ।

मानान्तरागृहीतार्थप्रमाणत्वात्त्रयोऽपि हि ।
समाना उक्तविधयो नानार्था एकशेषतः ॥
गृहीतानां त्रित्वसंख्या प्रकारावेदनान्मता ।
अन्यप्रकारतायास्तु परिसंख्यां करोति च ॥
अतोऽपि च प्रमाणानां त्रित्व आवेदिते सति ।
अथर्वणोऽपि वेदस्य परिसंख्या न वेदतः ॥
तन्मुख्यामुख्यवृत्त्याऽप्यत्रैकशेषोऽपि युज्यते ।

---

१ क ग. 'पाव' ।

मन्त्रब्राह्मणरूपो यो मुख्य इत्यभिधीयते ॥
एकाग्निकाण्डमपरस्तृतीयस्तु प्रकीर्णकः ।
तैः प्रत्येकं मितो धर्मस्त्रिविधः परिकीर्तितः ॥ ४१ ॥

अनेनैवाभिप्रायेणाऽऽह बौधायनः—' उपदिष्टो धर्मः प्रतिवेदं तस्यानुव्याख्यास्यामः स्मार्तो द्वितीयः शिष्टाचारस्तृतीयः ' इति । उपदेशो वेदस्तेन कर्तव्यतया विहितो वैतानिक इति यावत् । प्रतिवेदं प्रतिशाखम् । न हि वेदे समुदायरूपेणैक एव प्रयोगो विधीयते किं तु नाना प्रयोगाः । प्रतिपूरुषमेकैक एव । तत एकशाखया स्वेन व्याख्यातः । तं प्रातिशाख्यधर्ममनु तच्छाखीयं स्मार्तं तच्छाखीयशिष्टाचारलक्षणं च धर्मं व्याख्यास्यामः । तावपि नियतौ प्रतिशाखमित्यर्थः । उभयोः स्मार्तत्वेऽपि प्रथमे स्वाचारानुमितस्याल्पत्वाद्द्वितीये भूयस्त्वात्स्मार्त इत्युक्तः प्रथमो द्वितीयः शिष्टाचार इति । तस्मात्साधूक्तं स त्रैविध्येन प्रसिद्धो यज्ञोपलक्षितो धर्मस्त्रिभिर्वेदादिप्रमाणैर्विधानत्रययुक्तैर्ज्ञाप्यते । कर्तव्यतयाऽबाधितं तद्विषयज्ञानं जन्यते । अतोऽसंदिग्धाविपर्यस्तस्वेष्टसाधनताज्ञानजनकत्वात्प्रमाणैरित्यर्थः । एवमत्र विधीयते कर्तव्यत्वेनोपदिश्यते वेदेन कर्त्रा कर्तुरन्यस्यापौरुषेयेऽसंभवात् । तेषामेव कर्तव्यार्थोपदेशरूपत्वेन प्रमाकरणत्वात्प्रामाण्यं विधिलक्षणव्यापाराश्रयत्वात्तु कर्तृत्वं न विरुध्यते । अस्ति चाऽऽरोपेऽपि प्रयोजनं यथा गामानयेति वाक्येन प्रवृत्ते शिष्य उपाध्यायेन प्रेरित इति प्रयोगदर्शनाल्लोडभिधेयो व्यापार उपाध्यायनिष्ठ इत्यवगम्यते । यतो वचनरचनाकर्ता चोपाध्यायो वेदे कर्तुः प्रयोक्तुरभावेन तस्यैव प्रयोक्तृत्वेन व्यापारं प्रत्याश्रयत्वमिति अपौरुषेयवेदानां निरस्तसमस्तदोषाशङ्कानां स्वतो बोधकानां निरङ्कुशं प्रामाण्यमिति प्रयोजनम् । ननु कथं लिङ्गा(ङा)दिप्रत्ययविधुराणां प्रतिबद्धविधिशक्तिलिङ्गा(ङा)दिमतां च मन्त्राणां विधायकत्वं कर्मविधानं ब्राह्मणमिति वक्ष्यमाणविरोधाच्च । उच्यते—विधिर्हि कर्तव्यतयाऽर्थस्योपदेशस्तस्य ज्ञानमुपदेशो व्यतिरेकश्चेति मीमांसासूत्रे प्रयोगात् । कर्तृव्युत्पत्त्या शब्दे भावव्युत्पत्त्या शब्दव्यापारे च दृश्यते तद्ग्रन्थेषु । अतो यज्ञो विधीयते कर्तव्यत्वेनोपदिश्यते । तत्र विधिप्रत्ययवतो ब्राह्मणस्य स्पष्टं तादृक्त्व मन्त्राणां तु प्रयोगाङ्गभूतानामपि पदार्थविधया प्रामाण्यं वक्ष्यते विधिसहकारित्वेन विधायकत्वं न हि मन्त्रैर्विना केवलो विधिः सद्वारकमन्त्रविशिष्टां भावनां विधातुं समर्थः । एवं श्रौतस्मार्ताचारकर्मणां प्रत्येकं स्वरूपाद्युक्तम् ।

एवं प्रतिज्ञाते त्रिविधे कर्मणि सामान्यतः फलं स्वरूपप्रमाणावान्तरभेदं व्याख्याय श्रौतत्वेन बाहुल्यात्प्रकृतिविकृत्यात्मना च बहुव्याख्येयत्वाच्च श्रौतेषु कर्तृविशेषधर्मविशेषान्वक्तुं मुख्यवेदपदोपात्तेन वेदचतुष्टयेन प्रमाणविशेषेणावान्तरभेदमाह—

---

१ ख. छ. 'ख्यमर्थम'। २ क. ग. स्मातेत'। ३ क. ग. च छ. 'धुराणा'। ४ ग. 'ष्टेनाव्यु'।

ऋग्वेदेन यजुर्वेदेन सामवेदेन सर्वैर्ज्योतिष्टोमः ।

अत्र वेदपदं सोपपदमे(म)वान्तरजातिवा(बो)धकं तथाऽप्येकैकैव व्यक्तिर्गृह्यते पुरुषभेदेन प्रतिपुरुषं प्रयोगभेदात् । न ह्यृग्वेदेन शाखासमुदायेनैकं प्रति प्रयोगभेदो विधीयते किं तु प्रतिशाखं प्रतिपुरुषं तस्माद्योग्यतया तं तं शाखिनं प्रति स स प्रयोगभेदस्तयैव तयैव शाखया विधीयते । अन्यथा शाखान्तरवैयर्थ्यं स्यात् । ज्योतिष्टोम इत्यग्निष्टोमादिषट्संस्था गृह्यन्ते । विधीयत इत्यनुवर्तनीयम् । तत्रैकस्य कर्मणोऽनेकैर्वेदैर्विधानमयुक्तमन्यतराप्रामाण्यप्रसङ्गात्कर्तृसांकर्यधर्मसांकर्यापत्तेरनियमापादकविध्यानर्थक्याच्च । तत्परिहाराय *चकारैर्व्यवस्थितविकल्पो दर्शितः । ज्योतिष्टोमशब्देन साङ्गस्य कर्मण एकदेशभूतानि प्रधानाङ्गकर्माण्युच्यन्ते । अतस्त्रयोंऽशास्त्रिभिर्वेदैः प्रत्येकं सर्वैश्चतुर्भिर्विकल्पेनैकोंऽशो विधीयत इति चत्वारोंऽशा हौत्रमाध्वर्यवमौद्गात्रं ब्रह्मत्वं चैकमेवैकोंऽशश्चतुर्भ्यश्चतुराननमुखेभ्यः प्रागादिमुखक्रमेणोत्पेन्ना इति भागवतादौ प्रसिद्धमुक्तम् । यद्यप्यधिकारिविषयोऽनेकत्र चतुर्ष्वपि वेदेषु श्रूयन्त इति सांकर्यं तथाऽपि उत्पत्तिविनियोगविधी तु प्रतिनियतावेव शस्त्रादिमन्त्राणामुत्पत्तिविनियोगावृग्वेद एव ग्रहग्रहणादिमन्त्राणां यजुर्वेद एव स्तोत्रादिमन्त्राणां सामवेद एव । यदपि व्यत्ययेन श्रूयते न तु तत्तद्वेदविहितेषु कर्मसु प्रतिनियतेषु तदनुवादेन गुणमात्रविधानेऽपि गुणिविधायकवेदविहितत्वमेवेति न सांकर्यम् । मन्त्रोत्पत्तौ वेदान्तरस्थायां येन वेदेन विनियोगस्तद्वेदविहितत्वेन प्राधान्यमिति च न्यायशास्त्रनिर्णयोऽतो न सांकर्यम् । ब्रह्मत्वं तु समानमेव चतुर्भिर्वेदैर्विहितमिति न ज्ञायते क्व गुणविधिः क्व प्रधानविधिरिति विकल्प एव व्यवस्थितः । एवं विकृतिष्वपि ज्ञेयम् ।

ऋग्वेदयजुर्वेदाभ्यां दर्शपूर्णमासौ ।

सर्वैर्वेदैरित्यप्यनुवर्तते । ऋग्वेदेन सामिधेन्यादि यजुर्वेदेनान्वाधानादि सर्वैर्ब्रह्मत्वम् । यथा चतुर्भिर्ब्रह्मत्वं ज्योतिष्टोमे विधीयत एवं चतुर्भिर्दर्शपूर्णमासयोरपि । ब्रह्मत्वप्रायश्चित्तविधानार्थमेवाऽऽथर्वणिकैः सूत्रं प्रणीयते । यथेतरैस्त्रिभिरपि सूत्रकारैः प्रत्येकं ब्रह्म[३]त्वं दर्शपूर्णमासयोर्ज्योतिष्टोमे चैत्रमाथर्वणिकैरपि प्रणीयत इत्युपलभ्यत एव । ज्योतिष्टोमे त्वृग्वेदादिभिः प्रत्येकं बहुतरं विविक्तं विधीयते हौत्रादिकं ततोऽसमस्तनिर्देशः । दर्शपूर्णमासयोस्तु निगदा याजुर्वेदिका एव तयोर्विकृतिष्वपीति यजुर्वेदस्य भूयस्त्वेनाभिधानात्स्वतन्त्रहौत्रविधानसापेक्षयोः समासेन ग्रहणमृग्वेदयजुर्वेदाभ्यामिति ।

---

* एतट्टीकानुरोधेन सूत्रे चकाराः स्युरिति भाति ।

---

१ ख. च. छ. 'न्ते । तत'। २ क. ग. [illegible] ३ [illegible] चैवं चाऽऽथ° ।

यजुर्वेदेनाग्निहोत्रम् ।

अन्यत्र गुणं विधातुमनुवादः प्रधानस्य । बहूनामङ्गानां यजुर्वेद एव विधानात्तदाधानपिण्डपितृयज्ञदर्विहोमहोतृविनियोगानामुपलक्षणम् । यद्यप्यत्र ब्रह्मत्वमाधानेऽस्ति तथाऽपि तस्य याजुर्वेदिकत्वमेव । यद्यप्यन्यैरुक्तं ब्रह्मत्वमाधाने तदपि यजुर्वेदविहिताधानब्रह्मत्वे गुणविधिमात्रं नेतरब्रह्मत्ववत्समविकल्पेन । अन्ये केचित्कर्मविशेषा इतरवेदविहितास्तत्र तत्र श्रूयमाणाः प्रतिनियता एव सन्तीति तदर्थमेवाऽऽचार्येण प्रयत्नो न कृतः । अग्निहोत्रं गुणविध्यर्थमन्यत्रापि श्रूयते तदेवर्ग्वेदगुणकं विशेषेणऽर्ग्वेदसूत्रेऽपि दर्शितं याजुषमेवैतदर्थं यजुर्वेदेनाग्निहोत्रमिति नियमितं दर्विहोमानामुपलक्षणम् । यज्ञं व्याख्यास्याम इति प्रतिज्ञायाग्निहोत्रं यजुर्वेदेनेत्ययज्ञरूपस्याग्निहोत्रस्य प्रदर्शनं यज्ञशब्दस्योपलक्षणार्थत्वप्रदर्शनार्थम् । वेदैर्विहितं श्रौतं प्रकीर्णकशब्दैर्विहितं लौकिकमिति मुख्यामुख्यवेदविभागस्तद्विहितकर्मविभागश्चार्थादुक्तः । न हि यज्ञशब्देन श्रौतं स्मार्तं कर्म प्रतिज्ञाय तत्र वेदैर्विधीयत इत्युक्त्वा ज्योतिष्टोमदर्शपूर्णमासाग्निहोत्राण्येव वेदैर्विधीयन्त इति वक्तुं शक्यम् ।

ननु चतुर्णामपि वेदानां ज्योतिष्टोमदर्शपूर्णमासाग्निहोत्रेष्वेव प्रमाणत्वेनोपक्षीणत्वात्कोऽशोऽवशिष्यते, यौ चामुख्यौ वेदौ प्रमाणं लौकिकेषु न हि तदन्यो वेदोऽस्ति, योऽन्ययोरमुख्ययोर्मूलं स्यादित्याशङ्क्य मुख्यवेदत्वोपाधिना ज्योतिष्टोमादिष्वेव प्रामाण्यं तदेकदेशेन प्रत्यक्षेण तदनुमितेन वा विधिवाक्येनाप्रवृत्तप्रवर्तनात्मकत्वेन विधित्वोपाधिना सर्वकर्मसाधारण्येन प्रामाण्यमिति वक्तुं स त्रिभिर्वेदैर्विधीयत इत्येतद्व्याचष्टे—

विधिलक्षणानि कर्माणि ।

विधिर्लक्षणमसाधारणं प्रमाणं येषां तानि यज्ञोपलक्षितानि कर्माणि तथा विधिशब्दो यद्यपि प्रवर्तनासामान्यवाची तथाऽपि वेदैर्विधीयत इत्युक्त्वा विधिलक्षणानीति वदति । ततो ज्ञायते वेदैकदेश एव विधिरिति । स चैकदेशो यद्यपि विधितत्प्रत्यययोरभेदविवक्षया प्रत्ययमात्रमागच्छेत्तथाऽपि न तावता साध्यसाधनेतिकर्तव्यतारूपे कर्मणि प्रामाण्यम् । यद्यपि प्रत्ययेऽन्वितानेकार्थाभिधायकत्वेन संसृष्टभावनाबोधकत्वमस्ति तथाऽपि वैशेषिकपदैर्विना न पुरुषं प्रवर्तयितुमीष्टे । अतो वाक्यमेवात्र विधिप्रत्ययान्तपदयुक्तं गृह्यते ।

उक्तं च वार्तिकाचार्यैः—'किमाद्यपेक्षितैः पूर्णसमर्थः प्रत्ययो विधौ ।
तेन प्रवर्तकं वाक्यं शास्त्रेऽस्मिन्नोदनोच्यते ' इति,
'नोदना चोपदेशश्च विधिश्चैकार्थवाचकाः ' इति ,
'भावनैव च वाक्यार्थः स्वकारकविशेषिता ' इति च ।

---

१ क. ग. छ. 'होमम्' ।

तस्मात्प्रवर्तकं वाक्यमेव विधिरित्युक्तम्। ततस्तु विदधातीति कर्तृव्युत्पत्त्या वाक्यस्यैव प्रवर्तनाव्यापारवत्तया तथा प्रवर्तकत्वेन प्रमाणतोक्ताऽपौरुषेयत्वेन। अनेन च निरस्तसमस्तपुरुषदोषाशङ्कस्यात एव स्वतो बोधकस्य प्रवर्तकतया यत इष्टसाधनताबोधकस्यापूर्वद्वारा स्वेष्टजनकतोक्ता। लक्षणशब्देन चासाधारणं प्रमाणमित्युक्तम्। तेन न प्रत्यक्षादिप्रमाणग्राह्यत्वमित्युक्तम्। न हि कर्तव्यत्वेनोपदिष्टस्य साध्यैकस्वभावस्य कर्मणो रूपं प्रमाणान्तरगम्यं भवेत्। उपपादितमेतत्सत्संप्रयोगे पुरुषस्येन्द्रियाणामित्यादिना तर्कपादे। अत एव यद्गृह्यते प्रत्यक्षादिना रूपं न तद्विधेयस्य धर्मस्यापि तु श्रेयःसाधनत्वेन धर्मत्वमित्युक्तं भवति।

उक्तं च-'श्रेयःसाधनता ह्येषां नित्यं वेदात्प्रतीयते।
तादृशे तत्र धर्मत्वं तस्मान्नेन्द्रियगोचरः' इति।
तथा 'द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते' इति।

अत्र पालनस्यापि विधिलक्षणत्वं वक्तुं धर्मशब्दो न प्रयुक्तः। मीमांसका हि प्रवृत्तिलक्षणस्यैव धर्मत्वमाहुः। स्वमते तु पालनस्य च धर्मत्वमेव पालनप्रचुरेषु कर्मसु सामयाचारिकान्धर्मान्व्याख्यास्याम इति प्रयोगदर्शनात्। तथाचापूर्वस्यापि धर्मत्वं प्रसिद्धम्। तस्य विधिलक्षणत्वं मा भूदिति यश्चार्थो[1] न स चोदनार्थ इति न्यायात्तदर्थं कर्मग्रहणम्। एवं पालनस्यापि श्रेयःसाधनताऽस्त्येव विधिबलेन। अनिष्टप्रागभावपरिपालकत्वं च निषिद्धक्रियाप्रतिबन्धादिति। तथा च विधिलक्षणान्येव कर्माणि न प्रत्यक्षादिविषयाणि साध्यैकस्वभावतया श्रेयःसाधनत्वेन कर्मत्वापरपर्यायधर्मत्वात्। तथा चाऽऽयतौ श्रेयःसाधनता। कर्माण्येव विधिलक्षणानि न ब्रह्म सिद्धत्वेन प्राप्यतया फलत्वात्। न च फलं विधेयं, तदुक्तम्—

'फलांशे भावनायास्तु प्रत्ययो न विधायकः' इति।

विधेस्त्रिविधस्यापि कल्पिताकल्पितसाधारण्येनैकाकारत्वेन तद्गोचरस्य कर्मणोऽपि श्रेयःसाधनत्वेनैकरूप्येऽपि[2] कर्माणीतिबहुवचनं श्रौतस्मार्तसामयाचारिकाणामवान्तरभेदप्रदर्शनाय। तत्र श्रौते काण्डे 'अग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्' इत्यादिषु कल्पितविधीनां श्रौतकाण्ड एवान्तर्भावः। तत्रानुमितेनैव श्रेयःसाधनता विधेयेति नियमोऽध्ययनविधिनैव ज्ञापितः। एतादृशेषु स्थलेषु नित्यानुमितविधिस्वीकारेऽपि न दोषः। अथवा शाखान्तरीयाणामेव विधायकानामनुमानम्। आलभेत निर्वपतीत्यादिषु प्रत्यक्षविधीनां शाखान्तरीयाणां दुर्लभत्वादनुमितविधित्वमेव न वयं नित्यं मन्त्रब्राह्मणात्मकं वेदमनुमीमहे। एवं च प्रकीर्णककाण्डद्वयेऽपि तत्तच्छब्दबलात्कल्पितस्य विधेस्तत्रैवान्तर्भावो ज्ञेयः।

वेदत्रयविभागार्थं मुख्यवेदत्वं व्याचष्टे—

१ ख. छ. र्शे न चध। २ छ. नाप्येक°।

मन्त्रब्राह्मणयोर्वेदनामधेयम् ।

यद्यपीदमुक्त्वा पश्चाद्विधिलक्षणानीति वक्तव्यं सामान्यपरं तथाऽपि ब्राह्मणस्य विधित्वेन वक्ष्यमाणत्वाद्विधिलक्षणानीत्येवाऽऽदावुक्तम् । मन्त्रश्च ब्राह्मणं चेतीतरेतरयोगद्वंद्वेनेतरेतरयुक्तत्वेन पठिते ते एवैको वेदो न तु यः कश्चन मन्त्रो यत्किंचिद्ब्राह्मणमेको वेदो भवति । अत्रोद्देश्यगतं द्वित्वमविवक्षितम् । नैह्येको मन्त्र एकं ब्राह्मणवाक्यमेको वेदो ज्योतिष्टोमादीनां हौत्राद्येकैकांशविधायकं भवति किं त्वनेकानि, प्रत्येकमेकैकस्मिन्द्वयोर्द्वयोरध्ययने वेदोऽधीत इत्यप्रसिद्धेः । नापि यत्र ब्राह्मणग्रन्थत्वेन प्रसिद्धिस्तद्ब्राह्मणं तदन्यो विभागः संहिता मन्त्र इति द्विवचनोपपत्तिरिति वाच्यम् । कर्मविधानं ब्राह्मणानीति संहितागतानामपि विधायकवाक्यानां ब्राह्मणत्वेन लक्षितत्वात् । संहिताव्यतिरिक्ते ब्राह्मणग्रन्थे मन्त्राणां ब्राह्मणव्यतिरिक्तत्वेन मन्त्रत्वस्येष्टत्वात् । तस्माज्जात्यभिप्रायेण द्विवचनम् । ब्राह्मणग्रन्थे या प्रसिद्धिर्ब्राह्मणमिति [सा] बहुतरब्राह्मणाभिप्रायेण ।

अत एवोक्तं 'मन्त्रब्राह्मणयोर्वेदस्त्रिगुणं यत्र पठ्यते । यजुर्वेदः स विज्ञेयः, इति ।

संहितागतानामपि त्रिगुणपठितानां ब्राह्मणत्वप्रसिद्धेः । तस्मान्मन्त्रब्राह्मणसमुदायकग्रन्थत्वेन पठितो वैदिकैः स एको वेद एकं पुरुषं प्रति । तथाऽन्यं प्रत्यपि सामान्येन लक्षितः सर्वोऽपि वेदराशिर्वेदलक्षणशाखासमुदाय एव । उपपादितमेतत्प्रथमसूत्रे कारिकाभिः । ततोऽन्यस्य तस्य एव शाखाभ्य उद्धृतस्य ब्राह्मणस्य मन्त्रस्य वा ज्योतिष्टोमादिषु हौत्राद्यविधायकस्य होत्रादिभिरप्रयुज्यमानस्य न वेदत्वम् । यत्राध्ययनं तत्रासंबद्धानामपि मुख्यवेदान्तर्गतिः । अन्यत्रामुख्यवेदान्तर्गतिः । अत एव वक्ष्यति वैदिकानां शब्दानां स्मृतिग्रहणानि लौकिकानीति । पूर्वं वेदावयवत्वेन पठितानां शब्दानामुद्धृतानां न वेदावयवत्वं किंतु वैदिकशब्दत्वमेव । तेषाममुख्यवेदत्वेन लौकिककर्मणि विधायकत्वमिति स्मार्तकर्म वेदाविहितत्वेनाश्रौतं लौकिकं वोच्यते । उक्तमेव स्मारितम् । यावतार्थोपरमत इति प्रत्येकं वाक्ये मन्त्रत्वमुक्तं तेषां जात्येकवचनम् । ब्राह्मणत्वमपि वाक्य एव । अतोऽसौ विधायकत्वेन च वेद इति भावः । अत्र मन्त्रब्राह्मणयोर्लक्षणे अनुक्त्वैव तन्निरूपितवेदशब्दार्थं वदति तत्प्रसिद्ध्यैव वैदिकानां लक्षणे ज्ञातव्ये प्रकारान्तरेण दुर्निरूपत्वादिति सूचितवान् । यान्यपि लक्षणानि वक्ष्यन्ते तान्यव्यापकान्यतिव्यापकानीत्यभिप्रायः ।

एवं च प्रथमसूत्रद्वयेन त्रिविधकर्मसाधारण्येन प्रतिज्ञाविधायके दर्शिते । ततो वैतानिकश्रौनकर्मविभागेन मुख्यवेदविहितत्वं दर्शितमर्थात्तदितरत् । ततः सर्वकर्मप्रमाणमुदाहृतम् । इदानीं वेदैकदेशस्य लक्षणमाह—

---

१ छ. नाप्येको ।

## कर्मविधानं ब्राह्मणानि ।

कर्म विधीयते येन तत्तथा, विधिर्वाक्यमित्यर्थः । विधिलक्षणानीत्यत्र कर्तृत्वं विवक्षितमकल्पितकल्पितप्रत्ययवद्वाक्यविवक्षयेह कल्पितस्य न ब्राह्मणत्वप्रसिद्धिः । तस्मात्कल्पिताकल्पितसाधारण्येन विधिप्रत्ययद्वारा यद्विधानं तद्ब्राह्मणं, तेन विधिप्रत्ययहीनस्यापि विधिकल्पकत्वेन विधायकत्वादस्ति ब्राह्मणत्वमिति भावः । तस्मात्कल्पिताकल्पितविधिमत्तया प्रवर्तकत्वमविशिष्टमेवेति दर्शयितुमेकवचनम् । ब्राह्मणानीति बहुवचनं विधिप्रत्ययवद्वाक्यानां कल्पितविधिप्रत्ययवाक्यानां तथाऽर्थवादकल्पितविधिप्रत्ययवत्तयाऽर्थवादानामपि ब्राह्मणत्वमेवेति दर्शयितुं, बहुवचनं नानाप्रकारत्वख्यापनार्थं । शब्दनिष्ठे व्यापारे शब्दप्रतिपाद्ये शब्दभावनापरपर्याये ज्ञानरूपे वा विधित्वं नान्यत्र । तच्चापौरुषेये वेद एव भवति । अनधिगतार्थत्वेन च प्रामाण्यमपि पैङ्ग्योपनिषदि ब्राह्मणेऽब्राह्मणत्वप्रसिद्धेर्यद्ब्राह्मणं तत्कर्मविधानमिति तत्राव्याप्तेः । अथ सामान्यलक्षणं प्रमाणं ब्राह्मणं तद्द्वेधा सिद्धार्थं कर्मविधानमिति । तथा श्वेताश्वतरोपनिषन्मन्त्रे ब्राह्मणत्वं स्यात् । अतोऽन्ये मन्त्रा इत्यनेन मन्त्रत्वं न संगच्छते तस्य ब्राह्मणादन्यत्वाभावात् । तस्माद्यत्र ब्राह्मणत्वप्रसिद्धिस्तद्ब्राह्मणम् । तस्मान्नानर्थो ब्राह्मणशब्दः[1] । तत्र कर्मकाण्डोपयुक्तस्येदं लक्षणम् । मन्त्रेष्वप्येवम् । तत्र कर्मकाण्डोपयोगिनि मन्त्रेऽतोऽन्ये मन्त्रा इति स्वरूपं, तेषां यज्ञकर्मार्था मन्त्रा इति लक्षणम् । उपनिषत्सु मन्त्रत्वब्राह्मणत्वे तु प्रकारान्तरेण लक्ष्ये, तयोः सांकर्यमप्यङ्गीकार्यमिति । अथवा श्रोतव्यइत्यादिविधीनामेकवाक्यतां गतानि ब्राह्मणलक्षणलक्षितान्येवोपनिषद्वाक्यानि, ब्रह्म संस्कार्यं[1] फलं च, संस्कार्यफलं[2] हि विधावुद्देश्यं त्र्यंशभावनाया विधेयत्वात् । न ब्रह्मणो विधेयत्वं, संस्कार्यफलांशे प्रत्ययस्याविधायकत्वात् ।

तदुक्तं—'फलांशे भावनायास्तु प्रत्ययो न विधायकः' इति ।

तथा संस्कार्यमप्युद्देश्यत्वेनानुपादेयत्वादविधेयम् ।

तथोक्तं—'देशः कालो निमित्तं च फलं संस्कार्यमेव च ।
मीमांसाकुशलाः प्राहुरनुपादेयपञ्चकम्' ॥ इति ।

ननु तर्हि कथंकारं[3] वेदान्तानां विधित्वं निराकृतम् । विधेयज्ञानविषयत्वाभावेनेति ब्रूमः । नाङ्गी क्रियते च ज्ञाने विधिः । तथा वक्ष्यत्याचार्यः 'आत्मलाभात्परं नास्ति' इति । लब्धस्य लाभो ज्ञानेन प्रमाणजन्येनैवेति न विधिरिति तत्रैव स्फुटयिष्यते । तस्मात्फलत्वेनोपात्तस्य स्वरूपकथनपरा वेदान्ता अपि विध्यपेक्षितसंस्कार्यफलसमर्पकत्वाद्ब्राह्मणवाक्यमिति संक्षेपतो निरूपितं ज्ञेयम् । अत्र वेदान्तजन्यं ज्ञानमेवोद्दिश्यैवा[4]भावनासंभावितभावनाविपरीतभावना निवर्तयति[5] । श्रवणादीनि कर्माणि विधेयानि ।

---

१ छ. °य ब्राह्मणश° । २ क ग. स्कार्यं फ° । ३ क. ग. च. छ. °कारणं वे° । ४ क. ग. श्यैव भा° । ५ ख. निवर्तयन्ति । छ. निर्वर्तयति ।

ननु श्रवणादिविधिशेषत्वे कथं वेदान्तानां सिद्धार्थत्वमिति चेत्। उच्यते—न वयं विधिशेषत्वेनैकवाक्यत्वं ब्रूमः किं तु विध्यपेक्षितशेषित्वेन। तथा च शेषिणः फलस्य ब्रह्मणो बोधकं महावाक्यं सिद्धार्थपरमेव। ननु तर्हि स्वर्गादिफलसमर्पकमप्यवान्तर-वाक्यं सिद्धार्थमेव भवेत्। भवतु का हानिः। नन्वेवं सत्यसाधारण्येन व्यपदेशः कथ-मिति चेत्। उच्यते—यत्र सिद्धार्थप्रतिपादकवाक्यजनिता प्रमा न कर्माङ्गं तत्र तज्ज्ञानमेव सुखसाक्षात्काररूपत्वेन पुरुषार्थस्तद्वाक्यं सिद्धार्थं कर्माङ्गज्ञानाजनकत्वात्। सिद्धमर्थमेव प्रतिपादयदेव परमपुरुषार्थे पर्यवस्यतीति प्रधानभूतं सुतरां सिद्धार्थम्। श्रवणादिविधायकं तु स्वोद्देश्यप्रतिपादकेनैकवाक्यतां गतं, तस्य च कर्मविधानं ब्राह्म-णमितिलक्षणलक्षितत्वेऽपि न दोषः। तेषु कुत्रचिन्मन्त्रत्वप्रसिद्धावपि तदितरमन्त्राणां मन्त्रत्वं सिद्धं, तस्यापि मन्त्रत्वं प्रकारान्तरेणोपपादनीयमित्यलमतिविस्तरेण।

'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति वाक्ये यद्यप्युद्देश्यस्वर्गपदार्थप्राधान्ये सिद्धा-र्थता तथाऽपि सिद्धार्थप्रतिपादनमात्रेणापुरुषार्थपरत्वाज्जायमानमपि ज्ञानं कर्मानुष्ठानस्यो-त्तरमाविनोऽङ्गमेवातोऽनुष्ठेयज्ञानजननप्राधान्यान्न तत्सिद्धार्थम्। अत एवार्थवादेषु सिद्धार्थत्वमाशङ्क्य पुरुषार्थापर्यवसानेनाप्रामाण्यं स्यादिति पुरुषार्थपर्यवसायिविधि-वाक्यैकवाक्यतया प्रामाण्यमाह—

तच्छेषोऽर्थवादः।

तस्य विधायकस्य शेषो विधिनैकवाक्यत्वं गच्छंस्तद्द्वारा विधिविषयभावनाप्रवर्तकब्रा-ह्मणवाक्यशेष इति भावः। तदुक्तं—विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः। विधीनां विधेयभावनानां यदाऽध्ययनविधिर्विधायकवाक्यानि पुरुषं प्रवर्तयेयुरिति प्रेरयेत्तदा विधायकवाक्यगतशब्दभावनापेक्षितविधेयार्थभावनागतप्राशस्त्यलक्षणकरणे-तिकर्तव्यतासमर्पकत्वेन विधायकवाक्यैरर्थवादा एकवाक्यत्वं गच्छन्तीत्यर्थः। अर्थवाद इत्येकवचनमेकाकारतयैवैकवाक्यत्वं सर्वेषामप्यर्थवादानामस्तीति ज्ञापनार्थम्। द्वारं तु तेषां शब्दादेवावगम्यते। ये तु न स्वार्थविवक्षयाऽर्थं वदन्ति किंतु परप्रशंसार्थं तेऽर्थ-वादा इति प्रसिद्धम्।

ननु विधेयस्तुतिद्वारेण प्रशंसार्थानां भवत्वेकवाक्यता येऽन्यनिन्दां कुर्वन्ति ते कथमेकवा-क्यतां विधिना गच्छन्ति 'ब्रह्महत्यायै ह्येषा वर्णं प्रतिमुच्याऽऽस्ते' इत्येवमादयः। न च तेषां निषेधेन सहैकवाक्यतेति वाच्यम्। 'कर्मविधानं ब्राह्मणानि' इति निषेधस्य पृथग-स्वीकारात्। अत एवाऽऽचार्यः सर्वत्र कर्मशब्दं प्रयुङ्क्ते। निषेधेष्वपि निवृत्तिभावना-पर्यायस्य कर्मण एव विषयत्वेनाभिप्रेतत्वात्। अन्यथा विधिलक्षणो धर्मोऽर्थात्प्रतिषे-धलक्षणो ऽधर्मः स्यात्। तथा च धर्माधर्मयोः प्रमाणं ब्राह्मणमिति सूत्रयेत्। न च

---

१ क. ग. छ. 'कर्तव्येति।

तथा । तस्मात्सर्वत्र भावनाया एव विधायकमेव ब्राह्मणं न च ते नापेक्ष्यते । किं च नहि सर्वत्र निन्दार्थवादाविषयेष्वनिष्टत्वावेदकः प्रतिषेधोऽस्ति । न च निन्दया कल्प्यः । विहितेषु निषेधस्यानिष्टसाधनतावेदकस्यासंभवात् । नहि 'यदुदिते सूर्ये प्रातर्जुहुयात् । यथाऽतिथये प्रद्रुताय शून्यायाऽऽवसथायाऽऽहार्यं हरन्ति । तादृगेव तत्' इत्यादीनां निन्दार्थवादानां कल्पिता अनिष्टसाधनत्वावेदकाः प्रतिषेधाः सन्ति, विहितेषु विद्यमाना वा कथमनिष्टसाधनतामावेदयन्ति, येन निन्दार्थवादानामेकवाक्यता स्यात् ।

तदुक्तं भट्टाचार्यैः—'यद्यपि स्याद्विधिस्पृष्टे निषेधो नैव तादृशः ।

विज्ञायते ह्यनर्थत्वं षोडशिग्रहणादिवत्' ॥ इति ।

तादृशान्नैवानर्थत्वं विज्ञायत इत्यन्वयः । तस्मान्निन्दार्थवादा नान्तर्भवन्ति विध्येकवाक्यत्वाभावादित्याशङ्क्याऽऽह—

## निन्दा प्रशंसा ।

या निन्दा निन्दकं वाक्यं सा प्रशंसैव प्राशस्त्यसमर्पणपरैव । विधिषु प्रतिषेधेषु वा यत्किंचिन्निन्दया प्रवर्तते वाक्यं तत्सर्वं विधेये धर्मे प्रवृत्ते निवृत्ते वा प्राशस्त्यपरमेव । तथोक्तं शबरस्वामिभिः 'नहि निन्दा निन्द्यान्निन्दितुं प्रवर्ततेऽपि तर्हि विधेयं स्तोतुम्' इति । तस्मात् 'न पृथिव्यां नान्तरिक्षे' इत्याद्यर्थवादानां सिद्धं 'हिरण्यं निधाय चेतव्यः' इत्यादिब्राह्मणैकवाक्यत्वम् ।

इदानीं केषांचिद्वाक्यानामर्थवादत्वेन व्यवहृतानां स्वार्थैकनिष्ठतया विधेयकर्तृविशेषसमर्पकत्वेन व्यापकं तच्छेषत्वमित्याशङ्क्याऽऽह—

## परकृतिः पुराकल्पश्च ।

प्रशंसेत्यनुवर्तते । परकृतिपुराकल्पौ प्रशंसैव न विधायकौ कर्तृविशेषस्य । तद्यथा 'अग्निरददादौर्वाय' 'जमदग्निः पुष्टिकामः' एवमादयः । एकेन परेणान्येन तद्गोत्रोद्भवेन कर्त्रा कृतं कर्म परकृतिस्तत्प्रतिपादकानां विशिष्टानां वाक्यानां परकृतीनां, तथा 'अङ्गिरसो वै सत्रमासत' इतिप्रभृतीनामनेककर्तृकाणां पुराकल्पानां न तत्तद्गोत्रजकर्तृत्वविधायकत्वं किं तु एतौ प्रशंसैव प्रशंसापरावेव । अत्र केचित्सकर्तृकमात्रं परकृतिम् 'आपो वा इदमग्रे सलिलमासीत्' इति, पुराकल्पं च कथनमात्रमाहुः । तत्र ये पुराकल्पा एव सन्ति न तत्र विधिः श्रूयते । तेषु ब्राह्मणैकवाक्यत्वं न संभवतीत्याशङ्क्य पुराकल्पोऽपि प्रशंसा । तस्मात्तदेकवाक्यत्वाय विधिः कल्पनीयस्तेनैवैकवाक्यतेति परिहारः । चकारेण 'त्वष्टा हतपुत्रो वीन्द्रम्' इत्यादीनां यदग्नीषोमीयादिविधिकल्पकत्वं तच्छेषत्वं प्रदर्शयति । अस्मिन्पक्षे परकृतेः प्रकारान्तरत्वेन पृथग्ग्रहणं युक्तम् । पुराकल्पग्रहणमप्रयोजकं विधिकल्पकानां नानारूपाणामर्थवादानां चैतेनैव चकारेण ग्रहणं स्यादिति । तथाऽपि नानानामभिर्व्यवह्रियमाणानां पृथक्त्वाशङ्कानिवृत्त्यर्थत्वेन सप्रयोजनतेति व्याख्येयम् । केचित्तच्छेषोऽर्थवादो निन्दा प्रशंसा परकृतिः

पुराकल्पश्चेत्येव सूत्रं व्याचक्षते । शेषस्य विभागोऽर्थवादादिः । तत्त्वर्थवादादीनां परस्पराव्यावृत्तत्वेन विभागः कथं स्यान्निन्दाप्रशंसे अर्थवादविशेषौ भवेयातां यथाकथंचित्तथाऽपि परकृतिपुराकल्पौ न निन्दाप्रशंसयोर्व्याप्तौ तौ विशेषाविति तद्व्याख्यानं पदार्थमात्रमाचष्टे न सप्रयोजनत्वमिति ।

क्रमप्राप्तं मन्त्राणां प्रामाण्यं वक्तुं स्वरूपमाह—

**अतोऽन्ये मन्त्राः ।**

विधायकाद्ब्राह्मणात्सार्थवादादन्ये वेदावयवाश्च मन्त्राः सन्तस्तच्छेष इति पूर्वतनमनुवर्तनीयं प्रामाण्याय । प्रमाणस्य शेषः प्रमाणमेव । 'वसन्ताय कपिञ्जलानालभते' इत्यस्य मन्त्रवद्दशायां ब्राह्मणान्यत्वेऽपि विधिदशायां विधायकत्वेऽपि न दोषः । मीमांसकैः शक्तिद्वयाङ्गीकारात् । ते च वैतानिकावैतानिकसाधारण्येनैव लक्षिता विविधा एव । 'मन्त्रं मे गोपाय' 'ऋचो यजूँषि सामानि' इति श्रुतेः । निगदस्यान्तर्भावोऽप्युक्त एव जैमिनिना । एवं च मन्त्राणामपि विधिशेषत्वाद्वेदैर्विधीयत इत्युक्तं तत्समर्थितमेव । तत्र कथं विधिशेषत्वमिति द्वाराकाङ्क्षायां यज्ञकर्मार्था इत्यनेन द्वारं वक्ष्यते ।

मन्त्रवत्प्रयोगकाले प्रयुज्यमानत्वेन मन्त्रत्वाशङ्कायामाह—

**लौकिकाः प्रयुज्यमाना अमन्त्राः ।**

स्वाध्यायाध्ययनविधिना नाध्यापिताः ।

**यथा पुत्रस्य नामधेयं दुन्दुभिशब्दश्च ।**

नामैव नामधेयं, दुन्दुभिशब्दो दृष्टान्तः । चकार इवार्थे । दुन्दुभिशब्देन स्तोत्रमुपाकरोतीति । यथाऽव्यक्तशब्दस्य कर्माङ्गत्वेन विहितस्यापि न मन्त्रत्वमेवमर्थवतोऽपि पूर्वोक्ताद्धेतोर्न मन्त्रत्वमित्यर्थः ।

वेदैकदेशस्य ब्राह्मणस्य कर्मणि प्रामाण्यमभिधाय वेदैकदेशस्य मन्त्रभागस्य प्रामाण्यं वक्तुं मन्त्राणां ब्राह्मणविहितत्र्यंशभावनाङ्गत्वं व्याचष्टे—

**यज्ञकर्मार्था मन्त्राः ।**

यज्ञशब्देनोपलक्षितानि विधेयानि कर्माणि, तान्येव लक्षितानि विधिलक्षणानि कर्माणीत्यनेन, तथा च पौनरुक्त्यम् । तस्मादेवं व्याख्येयं यज्ञशब्देन सर्वाणि विधेयानि कर्माणि गृह्यन्ते । तेषां कर्म क्रियोत्पत्तिरिति यावत् । तत्कर्मार्थो येषां ते तथा । विधिना प्रमितमात्रं न हि श्रेयःसाधनं ब्रह्मवत्, किंत्वनुष्ठितं च । अतो यज्ञानुष्ठानं प्रयोजनमेषाम् । ननु वेदैर्विधीयत इत्यनेन विधिमन्त्रात्मकवेदस्य प्रामाण्यमुक्तम्, अतोऽनुष्ठानं प्रतिपाद्यं येषां ते तथा, अर्थप्रतिपादनेन प्रामाण्यं भविष्यतीति चेत्, न । विधिभिरेवानुष्ठानमपि बोधितं कर्मणि कर्तव्यत्वावेदनेन प्रमाणत्वात् । तस्मा-

१ ख. °प्राप्तम° ।

द्विहितैः कर्मभिरुत्पत्तिरेवापेक्षिता । सा मन्त्रैर्जन्यत्वेन प्रयोजनमित्येव युक्तम् । मन्त्राणां विहितानुवादिनामेवोत्पादकत्वात् । यज्ञस्योत्पादकत्वेन संनिपत्योपकारकत्वेनाङ्गतोक्ता भवति । तथोच्चारणमात्रेण नाङ्गता । दृष्टार्थाध्ययनविधिबलान्मन्त्राणामर्थावबोधपर्यवसायिताऽवगता । मन्त्रा हि दृष्टार्थाध्ययनविध्यध्यापिताः किमस्माभिः पुरुषसमीहितं दृष्टं जन्यमित्याकाङ्क्षमाणा अध्ययनविधिना यच्छक्यते दृष्टं येन जनयितुं तेन तज्जन्यमिति चानुज्ञाता मन्त्राः स्वार्थप्रकाशनमात्रमेवास्माकं जन्यत्वेन शक्यं तज्जन्यमस्माभिः । तच्च कथं दृष्टद्वारा पुरुषसमीहितसाधनं स्यादित्याकाङ्क्षमाणास्तिष्ठन्ति । तत्र जपस्तोत्रशस्त्रकर्माणि चाथ प्रतिपादनरूपाणि विहितानि । तत्र ये समर्था जपस्तोत्रशस्त्रमन्त्रास्तदुत्पादनमात्रेणाङ्गत्वं गताः सप्रयोजनाः सन्तो निराकाङ्क्षा जायन्ते । अन्ये मन्त्रास्तु स्वार्थावबोधकत्वमात्रेण न निराकाङ्क्षाः । स्वार्थावबोधनस्य विधिना समीहितसाधनत्वेनाविधानात् । एवं च कथमङ्गिनामुपकारो दृष्टोऽस्माभिः कर्तव्य इति साकाङ्क्षास्तिष्ठन्ति । तत्राङ्गिनः स्वोत्पत्तये स्मृतिमपेक्षन्ते । न ह्यननुसंहिताः पुरुषेणानुष्ठातुं शक्यन्ते । तदनुसंधानं यद्यपि विधिवाक्यैर्भवेत्तथाऽपि तेषां कर्तव्यताप्रमाजननेनोपक्षीणत्वान्मन्त्राणामानर्थक्या[3]दृष्टार्थत्वापत्तेश्च मन्त्रेभ्यः स्वाङ्गत्वेन विहितेभ्य एव स्वस्मृतिं [4]लब्ध्वा निराकाङ्क्षा भवन्ति । मन्त्रा अपि स्मृतिद्वाराऽङ्गतां गता निराकाङ्क्षा जायन्ते । येषां त्वङ्गत्वावेदको विधिर्नास्ति तेऽपि लिङ्गेन विधिं कल्पयित्वा स्वार्थानुष्ठानाङ्गतां प्रतिपद्यन्ते विधिविनियुक्तमन्त्रसाम्येनैकरूप्याय । तत एवाध्ययनविधेर्दृष्टार्थत्वेनैकरूप्यं स्यात् । क्वचिद्दृष्टार्थता [5]लौकिकेषु मन्त्रे[6]षु चादृष्टार्थतेति वैषम्यं स्यात् । ननु जपतेरुच्चारणमात्रं वाच्यं, न तस्य स्वार्थप्रकाशकत्वेन तत्प्रत्यङ्गत्वं स्वार्थप्रकाशनस्याविधानात् । तदर्थं स्मृतेरपि कर्माङ्गताया अनपेक्षणाच्चेति चेत् । उच्यते—अध्ययनविधिदृष्टार्थतालाभाय जपतीत्यस्यैव विधेरर्थप्रकाशनमर्थाद्विधेयं यथा मन्त्रेणेदं कार्यमित्यत्र मन्त्रोच्चारणमर्थाद्विधीयते । जपतेश्चार्थानुसंधानेनोच्चारणमप्यभिधेयं मन्त्रोच्चारणलक्षणजपेनादृष्टं भावयेन्मन्त्रार्थप्रकाशनद्वारेति विधौ पर्यवसन्नेऽर्थप्रकाशनभावनाऽपि विधेयेति दृष्टद्वारेणैव यज्ञकर्मार्थता नोच्चारणमात्रेणापूर्वोत्पादकता किंतु स्वार्थप्रकाशनद्वारा तेषां दृष्टार्थप्रकाशनमात्रद्वारोच्चारणात्सर्वसाधारणादहष्टं कल्प्यत इत्यदृष्टार्थत्वाभिलापो गौणो न तु दुन्दुभ्यादिशब्दस्य स्तोत्रोपाकरणत्ववन्मुख्यः । एवं स्तोत्रशस्त्रमन्त्राणामपि स्तौतिशंसतिभ्यां देवतागुणकीर्तनवाचिभ्यां विहितस्तोत्रशस्त्ररूपकर्मणोः संकीर्तनरूपयोर्जनकत्वादस्ति ह्येषामपि यज्ञकर्मार्थत्वम् । एवं प्रत्यगाशीर्मन्त्रकृतोपस्थानाभिमन्त्रणानुमन्त्रणाभिमर्शनमन्त्राणामपि ज्ञेयमिदं स्पष्टयिष्यते याजमाने जपतु-

---

१ क. ग. च. °धकस्य । २ क. ग. घ. °जन्यत्वेऽने° । ३ ख. °क्यादृ° । ४ क. ग. च. छ. लब्धा । ५ ख. लैङ्गिकेषु । ६ क. ग. च. छ. °षु वाऽदृ° ।

स्यता च । अप्रत्यगाशीर्मन्त्रकृतोपस्थानादिमन्त्राणां तु यत्र प्रतिपादनमात्रं प्रधानं कर्मजन्यं तत्रापि अपतुस्यता यत्र स्वप्रतिपाद्यं प्रविगुणकर्म तत्रोपस्थानादिनाऽर्थप्रकाशनरूपेणार्थं संस्कुर्यादिति वाक्यार्थे संस्कार्ये स्वदृष्टः संस्कारो मन्त्रेणार्थप्रतिपादनेन जायते । याज्यादिमन्त्रैर्वषट्कारेण स्वाहाकारेण वा देवताद्रव्ययोः स्मृतिर्दृष्टमेव प्रयोजनम् । द्रव्यदेवतादियज्ञाङ्गानां सिद्धानामपि श्रेयःसाधनतया धर्मत्वेन साध्यत्वादस्ति तेषामपि यज्ञकर्मत्वमिति सर्वे मन्त्रा यज्ञाङ्गं यज्ञकर्मार्था इति सिद्धम् । न त्वङ्गत्वं प्रामाण्यद्वारेति किमुक्तम् । न हि व्रीहीणामङ्गत्वेऽपि प्रामाण्यमस्ति । सत्यम् । न हि मन्त्राणां शब्दविधया प्रामाण्यं, तथाऽपि नियमविधिरयं मन्त्रा एव यज्ञकर्मार्था इति । अत एव बौधायनाचार्यः—'मन्त्रैरेव स्मृतमनुष्ठितं श्रेयःसाधनम्' इति । येषां च मन्त्रा न सन्त्येव तेषां स्मृतिस्तु विधायकेभ्य एव । न हि वैदिककर्म प्रकारान्तरेणानुसंधातुं शक्यम् । ततो गत्यन्तराभावाद्विधायकेष्वेव स्मारकत्वं कल्पनीयम् । यथा 'वसन्ताय कपिञ्जलानालभते' इत्यादिमन्त्रेष्वगत्या विधायकताऽपि कल्प्यते मीमांसकैरेवं विधायकेषु मन्त्रशक्तिः कल्पिता । न च तेऽपि मन्त्रा इति वाच्यम् । तूष्णीं चतुर्थमित्यादौ मन्त्रवर्जितकर्मविधानाज्ज्ञायते विधिस्मारितेषु न मन्त्रस्मारितत्वमस्तीति । अन्यथा किमपि तूष्णीकं कर्म न स्यात् । एवं पालनलक्षणकर्मसु विधिरेव स्मारकः । स्मार्तेष्वपि तूष्णीकेषु तथैव । 

अत्र संग्रहश्लोकाः—

कर्मप्रयत्नो धात्वर्थैरनुरक्तो विधीयते ।
धातुप्रकृतिकैर्वाच्या प्रत्ययैस्तु विधायकैः ॥ १ ॥
तदङ्गं देवता द्रव्यं यज्ञाविष्टं च कर्म यत् ।
सैव त्र्यंशा भावनोक्ता क्रिया सैवोच्यते बुधैः ॥ २ ॥
प्रयत्नस्याभिधा नास्ति स्वरूपेणैव कुत्रचित् ।
अनुरञ्जकधात्वर्थभेदाद्भेदोऽवगम्यते ॥ ३ ॥
धात्वर्थैक्येऽपि भेदोऽस्ति ह्यभ्यासाद्यैस्तु पञ्चभिः ।
तत्कर्म द्विविधं प्रोक्तमर्थज्ञानमथेतरत् ॥ ४ ॥
अर्थज्ञानं द्विधैकं तु गुणो यो देवतार्थयोः ।
संस्कारकं तु तन्मन्त्राः संस्कारार्था इतीरिताः ॥ ५ ॥
दृष्टसंस्कारका याज्यानुवाक्या अथ हौत्रके ।
उच्यमाना अदृष्टस्य संस्कारस्याङ्गतां गताः ॥ ६ ॥
अर्थज्ञानं द्वितीयं न जन्यते येन संस्कृतिः ।
प्रधानभूतं तत्तस्य मन्त्राश्चापूर्वसाधनम् ॥ ७ ॥

---

१ ख. छ. न म° । २ क. ग. च. छ. प्रयत्नैस्तु ।

जपः स्तोत्रं तथा शास्त्रमपूर्वार्थं प्रचक्षते ।
तद्द्वारैव च तन्मन्त्रा दृष्टार्था अप्यपूर्वगाः ॥ ८ ॥
प्रधानगुणभूतस्य ज्ञानरूपस्य कर्मणः ।
उत्पादकास्तु ये मन्त्रा अकर्मकरणाः स्मृताः ॥ ९ ॥
ज्ञानं सर्वं हि मन्त्राणां व्यापारोऽर्थात्प्रजायते ।
विहितज्ञानजनका व्यापारान्तरवर्जिताः ॥ १० ॥
व्यापारवद्धि करणमकर्मकरणास्ततः ।
अर्थज्ञानात्पृथग्यत्तु कर्म नानाविधं द्विधा ॥ ११ ॥
गुणप्रधानभेदेन पूर्ववत्तस्य लक्षणम् ।
तन्मन्त्राः कर्मकरणा ज्ञानव्यापारवत्तथा ॥ १२ ॥
एवं सूत्रकृता संज्ञाः कृताः स्वव्यवहारगाः ।
एताभिर्व्यवहर्तव्यं कर्मतन्मन्त्रयोरपि ॥ १३ ॥

ननु वेदैर्विधीयन्ते मन्त्रब्राह्मणात्मकैरिति मन्त्राणां विधायकैकवाक्यत्वेन प्रामाण्यमुपक्षिप्तं तत्समर्थनीयम् । अत एवाऽऽपस्तम्बाचार्यः–' मन्त्रब्राह्मणे यज्ञस्य प्रमाणे ' इति । न चाङ्गत्वे दृष्टद्वारा सिद्धेऽपि व्रीहीणामिव प्रामाण्यं सिध्यति ।

उक्तं च–' प्रयोगवचनो मन्त्रैः सह प्रामाण्यमृच्छति ' इति ।

प्रयोगवचनः प्रयोगविधिर्मन्त्रैः सह प्रामाण्यं लभत इत्यर्थः । एवं चाङ्गत्वे सिद्धे प्रामाण्ये किमायातमिति चेदुच्यते–

दृष्टद्वारा स्थितेऽङ्गत्वे मन्त्राणां वाक्यभावनः ।
स्मृत्युत्पादेन वाक्यार्थो मन्त्रैर्नैव प्रमाप्यते ॥
तथाऽपि विहिता मन्त्राः स्मृत्यैवाङ्गत्वमागताः ।
नतूच्चारणमात्रेणेत्येवमर्थनियामकाः ॥
पदार्थविधया तस्मात्प्रामाण्यमपि लेभिरे ।
अङ्गत्वं विधिना ह्येषां प्रयोगविधिरूपिणो ॥
विहितानां पदार्थत्वात्स्वसामर्थ्यान्नियन्तृता ।
तथा च नियमज्ञानमन्यतो लभ्यमाप्यते ॥

मन्त्रा हि वाक्यरूपा अपि विहितार्थानुसंधानजननसमर्था न स्वार्थे शब्दविधया प्रमाणम् । तथाऽपि स्रुवेणावद्यति हस्तेनावद्यति स्वधितिनाऽवद्यतीत्यादौ विहिता अविशेषणापि नियमप्रमामुत्पादयन्त एव स्रुवेणैव द्रवद्रव्यं हस्तेन कठिनं पुरोडाशादि स्वधितिना च मांसमवदेयमिति स्वसामर्थ्येनैव[3] स्रुवादयोऽपि[4] प्रयोगविधेः सहकारिणोऽ-

१ क. ग. च. छ. °वद्धि क° । २ छ. °णाम् । वि° । ३ क. ग. च. छ. °नैवातो धर्माद° ।
४ क. ग. च. °णोऽङ्गं रू° ।

ङ्गरूपत्वेनावाक्यरूपा अपि प्रमाणमित्युच्यन्ते। एवं विनियोगविहितपदार्थतयाऽर्थ-सामर्थ्येन स्मृतिजनकत्वेनैवाङ्गं नोच्चारणमात्रेणेति नियमप्रमामुत्पादयन्तो हि प्रयोग-विधिविहितपदार्थविषयैव प्रयोगविधिसहकारिणो भवन्त्येव प्रमाणम्। ननु पदार्था अपि प्रमाणं भवन्तु कुत्र प्रमाणेऽन्तर्भविष्यन्तीति चेत्। वाक्य एवेति ब्रूमः। उक्तं चाभियुक्तैः—नन्वङ्गत्वेऽपि प्रयोजनमात्रं लभ्यते न प्रामाण्यम्। नैष दोषः। पदा-र्थानां वाक्यार्थे प्रामाण्याभ्युपगमादित्युक्त्वा वार्तिकाचार्यवचनेनापि दृढी कुर्वन्ति पार्थसारथिमिश्राः। उक्तं हि 'पदार्थास्तन्मतिर्वा स्यात्' इति। एवं वार्तिकसंमति-मुक्त्वोपसंहरन्ति। तेन मन्त्रा विशिष्टमर्थं बोधयन्तः प्रधानवाक्यार्थे प्रमाणम्। तेन मन्त्राणामपि प्रयोजनत्वात्प्रामाण्यमस्तीत्येतावत्सिद्धमिति। वार्तिके तु पदसमुदायस्य स्वार्थे प्रामाण्यमुक्त्वा—

'पदार्थास्तन्मतिर्वा स्याद्वाक्यार्थावगमोऽपि वा' इत्युक्तम्।

वाक्यं पदान्यर्था वा विशिष्टसंसर्गं बोधयन्तः प्रमाणम्। तन्मतिः पदार्थज्ञानं वा वाक्यार्थज्ञानं जनयन्तीति प्रामाण्यम्। वाक्यार्थज्ञानं वा प्रवर्तकत्वान्निवर्तकत्वाद्वा प्रमाणमिति वार्तिकार्थः। शब्दमूलं ह्येषां प्रामाण्यमिति शब्द एवान्तर्भाव इति भावः।

मन्त्राः कर्माङ्गं सन्तोऽपूर्वार्थसंसर्गनियामकतया प्रमाणमित्युक्तम्। तत्र ये विहितं कर्म स्वस्थानस्थिता न जनयन्ति विधेरभावात्, नापि लिङ्गेन विहितं प्राप्नुवन्ति तेषामङ्गत्वाभावेऽप्रामाण्यं च स्यादित्यत आह—

रूपविप्रतिषेधाल्लौकिकेषु।

रूपं यत्र पठितास्तदङ्गत्वं तद्द्वारा च प्रामाण्यं मन्त्राणां रूपं, तस्य रूपस्य विरोधो हानिर्निष्प्रयोजनत्वादप्रमाणत्वाच्च वेदानन्तर्गतिरवेदत्वापत्तिरिति यावत्। तस्मान्मुख्यवेदान्निर्गता अगत्या लौकिकेषु स्मार्तकर्मविशेषेषु कर्मार्था इत्युत्कृष्य पद-मनुवर्तनीयम्। तत्रामुख्यवेदान्तर्गत्या सप्रयोजनतां प्रामाण्यं च लभन्ते विहितकर्मार्थ-त्वादित्यर्थः।

उदाहरति—

*यथा गृह्णामि ते सुप्रजास्त्वाय हस्तमिमां खनाम्योषधीं वह वपां जातवेदः पितृभ्य इति।

त्रयो मन्त्राः प्रतीकेन गृहीताः। एतेषु प्रथमतृतीययोर्वधूहस्तग्रहणे त्वयैतानिके सामर्थ्यात्तद्विवाहे प्रथमस्य गोवपाहोमे चाष्टकासु तृतीयस्य विनियोगः स्वेनैव कारि

* केवलसूत्रपुस्तकेषु यथेतिपदं विद्यते।

१ ख. °गविधिवि°। २ छ. °वाङ्गेनो°। ३ ख. छ. भवन्तः। ४ क. ख. ग. च. °न्ति अङ्ग°। ५ ख. °भावादप्रा°। छ. °भावोऽप्रा°। ६ क. ग. च. °षधिं व°।

ध्यते। मध्यमस्य त्वापस्तम्बेन 'इमां खनाम्योषधिं वीरुधं बलवत्तमाम्। यया सपत्नीं बाधते यया संविन्दते पतिम्'। इति पत्न्योर्मध्ये पत्युरेकस्यामनुरागेऽन्यतरस्यामसति पाठारूयवीरुधं हस्ते बद्ध्वाऽनुरागो भवतीति तस्याः पूर्वेद्युः खनने मन्त्रो विनियुक्तः।

ननु स्वस्थान एव किमपि विहितं कर्म लक्षयन्तु लक्षणा सर्वत्र सुलभेति भविष्यत्यङ्गत्वम्। सन्ति च तूष्णीकानि कानिचित्कर्माणि सापेक्षाणि। न वाऽभिधासंभवे लौकिककर्मसु सति लक्षणा न युक्ता। लक्षणयाऽपि स्वस्थाने निवेशो दृश्यते। यथा गार्हपत्यमुपतिष्ठन्त इत्युपक्रम्यैकयोपतिष्ठन्त इति निवेशनः संगमनो वसूनामिति मन्त्रमिन्द्रप्रकाशकं गार्हपत्योपस्थाने विनियुङ्क्ते। न चायं प्रत्यगाशीर्मन्त्रो येन गार्हपत्यात्प्रत्यगाशिषमेवार्थयत इति स्यात्। किं त्विन्द्रप्रकाशक एव। गार्हपत्यस्यासंस्कार्यत्वेऽपि गार्हपत्योपस्थानेन गार्हपत्यप्रकाशनरूपेणापूर्वं भावयेदित्यर्थविगमे सति गार्हपत्यप्रकाशनं योगेन लक्षणया चे क्रियत एवं किमपि तूष्णीकं कर्म कयाऽपि वृत्त्या प्रकाशयन्तु नोत्कर्षो युक्त इत्यत आह—

यथोपदिष्टं ब्राह्मणवन्तो यथारूपमितरे।

ब्राह्मणमुपदेशलक्षणविनियोजकश्रुतिसहितो मन्त्रविनियोजकविधिः। तद्येषां मन्त्राणामस्ति ते ब्राह्मणवन्तः। तेऽभिधामलभमाना यथोपदिष्टाः श्रुत्या यदर्थत्वेनोपदिष्टास्तमर्थमनुल्लङ्घ्यैव कयाऽपि वृत्त्या यज्ञकर्मार्थाः। न हि गौणी वृत्तिरभिधया समानबला यत एव गौणी। तस्माद्यत्राभिधा प्रमाणान्तरेण बाधिता तत्र दृष्टार्थत्वलाभाय गौण्याश्रीयते नान्यथा। उक्तं च पार्थसारथिमिश्रैः—

'गौणे सदपि सामर्थ्यं न प्रमाणान्तराद्विना।
आविर्भवति मुख्ये तु शब्दादेवाऽऽविरस्ति तत्॥
तादर्थ्यं च स्वतो मुख्ये गौणेऽर्थपरता पुनः।
प्रमाणान्तरविज्ञेया तदभावान्न सिध्यति'॥ इति।

अथासति बाधे तु मुख्ययैव कर्मार्था इत्याह—यथारूपमितरे। इतरे विधिनाऽबाधिताभिधानशक्तयः। ते यथाभिधाशक्ति यज्ञकर्मार्था न तु गौण्या योगेन वा सर्वयज्ञकर्मार्थाः। अभिधया न समानं व्यापारान्तरमस्तीति न सर्वकर्मार्था इत्यर्थः। कुतः सर्वकर्मार्थत्वेन प्राप्तिरिति चेत्। उच्यते—यज्ञकर्मार्था मन्त्रा इत्युक्तं, तत्र च वाक्यप्रकरणस्थानैः साङ्गकर्मार्थताऽवगम्यते। तत्र रूपमभिधाख्यं

---

१ ख. °त्तमम्। २ ख. ग. च. छ यथा। ३ क. ख. ग. च. पाठाख्य°। ४ क. ग. च. °हितकर्मलक्षणा। ५ ख. वा।

नियामकं न भवेत्। तदा कयाऽपि वृत्त्या वाक्याद्यवगतसर्वकर्मार्थताऽपि स्यात्। तस्माद्वाक्यादिभिर्यदर्थत्वमवगम्यते तन्मध्ये प्रधानमङ्गं वाऽभिधयैव प्रतिपादयन्तीति वाक्यादिप्रमाणानां दुर्बलानां संकोचो भवतीति सप्रयोजनं सूत्रम्। तथा चेतरे बाधके-तरप्रमाणविनियुक्ता इति पर्यवसानम्।

ननु यत्र वाक्यादिप्रमाणं सामान्येन विधायकं नास्ति तेषां लिङ्गेनापि नानाकर्मा-र्थता स्यात्तत्राऽऽह—

शेषस्य विनिधानम्।

शेषोलिङ्गव्यतिरिक्तप्रमाणान्तरेण न कर्मविशेषार्थत्वेन नियमिताः। लिङ्गं च तदाऽनेककर्मानुष्ठानगामि कर्माणि[3] मन्त्रान्त एव रुद्धानि। तत्र न समुच्चयः प्रमाणा-न्तरसहकृतलिङ्गविनियुक्तैः केवललिङ्गविनियुक्तानां समानबलत्वाभावात्। अत एव न विकल्पोऽपि। तेषां कर्मविशेषे मन्त्रसाकाङ्क्षे विशेषेण निधानं विनियोगः। उच्यत इति शेषः। योग्यताप्रदर्शनार्थं प्रतिज्ञामात्रसिद्धम्।

ऋक्सामानां शेषाणां समवेतार्थप्रकाशकत्वाभावाल्लिङ्गेन विनियोगाभावमाश-ङ्क्याऽऽह—

पारिप्लवार्था दाशतय्यः।

दश मण्डलानि यस्या ऋग्वेदसंहितायाः सा दशतयी तत्रत्या ऋचो दाशतय्यः। ताभिर्देवतागुणशंसनरूपे पारिप्लवे शस्त्रे शंसितव्ये तत्पूरणार्था देवतागुणशंसनलिङ्गेन हौत्रसमाख्यया पारिप्लवसमाख्यया च तदर्थाः परितः प्लवमाना अन्यत्र विनियोगा-भावात्। क्रमरहितर्चां शंसनं हि पारिप्लवे क्रियतेऽतस्तदपि मन्त्रान्तरसापेक्षमेव। अत उभयाकाङ्क्षया यज्ञार्था इत्यर्थः।

इदानीं साम्नां विकृतिगामित्वं पूर्वेणाविनियुक्तानामाह—

उत्तरयोः पवमानयोः स्तोमाभ्यासे सामानि।

स्तोमानां सामाधारभूतर्क्समुदायानामभ्यासे विवृद्धौ सत्यां न विनियुक्तानां साम्नाम-भ्यासः कार्यः, किंतु यान्यन्यत्र न विनियुक्तानि तानि साकाङ्क्षाणि तैरेव विवृद्धिः कार्या। यथा विवृद्धस्तोमकेषु क्रतुषु श्रूयते—'एकविंशेनातिरात्रेण प्रजाकामं याजये-त्' इति। तत्र त्रिवृत्स्तोमानि पञ्चदशस्तोमानि सप्तदशस्तोमान्येकविंशस्तोमानि चैकविंशस्तोमान्येव ? कार्याणि। तत्र सर्वस्तोत्रेष्वविनियुक्तसाम्नां पूरणायागमे प्राप्ते पवमानयोरित्युक्तम्। अयमभिप्रायः—पवमानव्यतिरिक्तेषु स्तोत्रेषु नापूर्वसामागमः।

---

१ क. ग. घ. छ. °यतीति। २ छ. °माणावि°। ३ क. ग. च. कर्मणि।

तत्रर्गागम एव न्याय्यः । कुतः, त्रीणि वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप्चेति, तथाऽत एतेष्वेवाऽऽवपन्त्येतेष्वेवोद्वपन्तीति च्छन्दसामाधारभूता ऋच एवावगम्यन्ते । पवमानेषु च्छन्दस्त्रित्वाभावान्नर्गागमः किं तु साम्नामेव । उत्तरयोरिति किमर्थम् । उच्यते—बहिष्पवमाने सामागमप्रतिषेधात् । एवं हि श्रूयते—एकं हि तत्र सामेति ब्रूयात्स्वरसाम्नैव गायत्रीभिस्तेनात्रापि चर्गागम एव न तत्र सामागम इत्यत उक्तमुत्तरयोरिति । अत्रापि देवतागुणसंकीर्तनलिङ्गेनौद्गात्रसमाख्यया च साकाङ्क्षत्वेन च विनियोग इत्यर्थः ।

एवमृक्सामानां विनियोगमुक्त्वाऽवशिष्टानां विनियोगमाह—

तूष्णींकेषु प्राकृतेषु यजुः ।

ऋक्सामवेदयोः शेषस्य विनियोगमुक्त्वा यजुर्वेदाथर्वणवेदयोः शेषस्य विनियोगो वाच्योऽतो यजुर्ग्रहणं यजुर्वेदाथर्वणवेदयोरुपलक्षणम् । तेन तयोर्यानि शेषभूतानि यजूंष्यृचो वा तानि सर्वाणि विनियुज्यन्ते । कुत्र, तूष्णींकेषु प्रकृतिभूतदर्शपूर्णमासज्योतिष्टोमाग्निहोत्रेषु । 'मासमग्निहोत्रं जुहोति' इत्यस्याग्निहोत्रमपि प्रकृतिः । प्रकृतिसंबन्धीनि प्राकृतानि कर्माणि । तूष्णींकेषु विहितेष्वप्यविहिता मन्त्रा येषु तानि तूष्णींकानि मन्त्रसाकाङ्क्षाणि । विकृतिस्तु तूष्णीकाऽपि न मन्त्रसाकाङ्क्षा तस्या विनोपदेशं मन्त्रान्तरानाकाङ्क्षणात् । तेषु प्राकृतेषु यजुर्गच्छेति । यथारूपमेव सर्वे मन्त्रा न सर्वत्र किंतु प्राकृतेष्वपि[8] तत्तत्कर्म व्यवस्थिता एव भवन्ति । ननु यथारूपमितर इत्यनेन गतार्थमिति चेत् । सत्यम्[9], एवमेषां शेषत्वं श्रुत्या विनियोगाभावेन वाक्यादिसहकाराभावाच्चोपप्लवमानानाम् । तेन पारिप्लवे शंसनीयम् । यद्यपि सर्वा ऋचः सर्वाणि यजूंषि सर्वाणि सामानि पारिप्लवं (वे) शंसतीति श्रुतौ[7] सर्वमन्त्राणां विनियोगान्न कोऽपि शेषोऽस्ति तथाऽपि लिङ्गनैरपेक्ष्येणैव तत्र विनियोगाद्यथारूपमितर इति बाधितं स्यात्तत्परिहारार्थं यथर्क्सामयोर्देवताद्रव्यगुणलिङ्गेन विशेषविनियोगः प्रदर्शित एवं प्रकृतिगतार्थप्रकाशनलक्षणसामर्थ्येन विशेषविनियोगार्थमिदं सूत्रम् । तत्राऽदृष्टार्थत्वमात्रेण सर्वसाधारणेषु विनियोगे सत्यपि कर्मसमवेतार्थप्रकाशकत्वलिङ्गेन दृष्टार्थत्वसंभवात् । ऋक्सामानामसमवेतार्थप्रकाशकत्वान्नात्र प्राप्तिरिति स्तोत्रशस्त्रयोरदृष्टार्थत्व-

---

१ ख. °हती त्रिष्टुब्वेत्यत एवाऽऽवपन्त्यत एवो° । २ ग. च. 'वोद्वयन्ती' । ३ क. °द्वयन्ती° । ४ क. ग. छ. 'च्छन्ति । य° । ५ क. ग. च. 'ऋाः स' । ६ क. ग. च. °पि च त° । ७ क. ग. च. छ. °म् । यद्यपि मन्त्राणां न कोऽपि विशेषोऽस्ति तथाऽपि लिङ्गनैरपेक्ष्येणैव तत्र विनियोगाद्यथारूपमितर इति बाधितं स्यात्तत्परिहारार्थं यथर्क्सामयोरेव° । ८ क. ग. च. छ. °तो द्र° । ९ क. ग. च. छ. एव ।

मात्रेण कृतार्थत्वात्। तथोत्कृष्टानां शेषभूतमन्त्राणां लिङ्गेन विकृतिगामित्वं च मा भूद्विरुक्तिदोषापत्तेरप्राप्तप्रकृतिगामित्वमेवेत्यपि प्रयोजनम्। प्रत्यक्षाणां हविरनुमन्त्रणमन्त्राणां च प्रकृतौ विप्रतिषेधाद्विकृतौ स्पष्टेन लिङ्गेन विनियोगः। एतेषां प्रकृतौ विरोधाभावात्प्रकृतावेवौत्सर्गिको विनियोगः सिद्धः। ते च मन्त्रा अच्छिद्रप्रपाठकादिपठिता अथर्वणि च विषाणे विष्येतं ग्रन्थिमित्यादयो यथायोग्यं प्रकृतिगामिनो ज्ञेयाः।

एतदपवादमाह—

वेदः कर्मनामधेयेन श्रूयमाणस्तदर्थः।

अत्र प्रकरणेनासंबद्धानामपि शेषत्वेऽपि न प्रकृतिगामित्वमित्युक्तम्। सामान्यलिङ्गस्य विशेषसंज्ञया नियमात्। वेदो मन्त्रब्राह्मणात्मकः। मन्त्रा इति चानुवर्तते। वेदो मन्त्राश्च ये कर्मनाम्ना श्रूयमाणास्ते तत्कर्मार्थाः।

उदाहरति—

यथा वाजपेयो याज्यापुरोनुवाक्याश्च।

वाजमन्नं सुरा पेयं यस्मिन्कर्मणि तद्वाजपेयाख्यं कर्म। तस्य नामधेयेन यस्मिन्वाजपेयो विधीयते स प्रश्नः काण्डो वा श्रूयमाणो वेदो वाजपेय इति याज्ञिकेषु प्रसिद्धः। स वेदो वाजपेयः। न हि वेदो वाजपेयः किं तु वाजपेयार्थो वेदो वाजपेयः। प्रतिपाद्यप्रतिपादकयोरभेदविवक्षया प्रतिपाद्यकर्मनामधेयं प्रतिपादके वेदेऽपि प्रयुज्यते। अयं यजुर्वेदोऽपि न प्रकृत्यर्थः किंतु विकृत्यर्थः। संज्ञयोत्सर्गस्य बाधात्, लिङ्गेन प्रकृतिविरोधाच्च। तथेज्यतेऽनया सा याज्या ततः पूर्वं हविर्ग्रहणायानूच्यत आहूयते देवता यया साऽनुवाक्या। 'ह्वयति वै पुरोनुवाक्यया प्रयच्छति याज्यया' इति श्रुतेः। तथाच सकलयागलक्षणकर्मसंबन्धेन श्रूयमाणा योगेन सकलयागार्था न तु प्रकृतिमात्रार्थाः सर्वयाज्यानां प्रकृतिषु विप्रतिषेधात्। एवं यत्र प्रकरणे श्रूयते मन्त्रोऽसंबद्धस्ततउद्धृतः शेषात्तद्विनियोगे यज्ञकर्मार्था मन्त्रा इति सकलवेदप्रामाण्यं सिद्धम्।

एवं च मन्त्रब्राह्मणयोरित्यादिना प्रमाणस्वरूपं सप्रपञ्चं निरूप्य प्रमाणविशेषसंबन्धोपाधिभिः प्रमेयगतान्सकलकर्मसाधारणधर्मान्व्याचष्टे—

उपांशु यजुर्वेदेन क्रियते।

यजुर्वेदेन यद्विधीयते ज्योतिष्टोमादि कर्माऽऽध्वर्यवमिति यावत्। तद्यजुर्वेदविहितमुपांशु क्रियते कर्तव्यम्। करणवदशब्दममनःप्रयोगमुपांश्विति प्रातिशाख्यम्। मन्त्रोत्पत्तिर्यद्यपि वेदान्तरस्था तथाऽपि विनियोगविधेः प्राबल्यं प्रयोगकाले तस्याऽऽदौ

१ ख. 'भूतं म°। २ ख. छ. दिष्येतं। ३ क. ग. च.. 'माणास्त°। ४ क. ग. ङ. च. 'दर्थाः। अ°। ५ क. ख. ग. घ. ङ. च. . ज्यानु।

बुद्धिस्थत्वात्पश्चान्मन्त्रपाठस्य यथा नैमित्तिकेऽग्निहोत्रहोमे सामवेदगतो मन्त्रोऽग्नेहौत्रमिति[1] तथाऽऽधाने रथंतरमभिगायते गार्हपत्य आधीयमान इति मन्त्राणां सामवेद उत्पन्नानामपि यजुर्वेदेन विनियोगादुपांशुत्वम् । उपांशुत्वं शब्दधर्म इति यजुर्वेदविहिते कर्मण्यसंभवादङ्गावतारन्यायेन यजुर्वेदविहितकर्मार्थेषु मन्त्रेषूपांशुत्वं पर्यवस्यति । यथा सप्तदशारत्निर्वाजपेय[3] इति सप्तदशारत्नित्वं वाजपेयाङ्गे[4] यूपे तद्वत् ।

न्यायेनापवादमाह—

अन्यत्र प्रवरसंवादाश्रावणसंप्रैषेभ्यः ।

एभ्योऽन्यत्रान्यकर्मस्वेव । न्यायमूलमिदं सूत्रं परसंप्रत्यायनार्थानामामन्त्रणानुज्ञादिवचनानामप्युपलक्षणम् । अग्निर्देवो होतेत्यादिः प्रवरः । संवदस्वेत्यादिः संवादः । आश्रावयेत्याश्रावणम् । प्रत्याश्रावणस्यास्तु श्रौषडित्यस्यापि ग्रहणम् । प्रैषो यजेत्यादिः । अत्रान्यत्र परप्रत्यायनार्थेभ्य इति लाघवेन वक्तव्येऽपि विविच्य प्रदर्शनं प्रवसति यजमाने प्रवरस्याग्ने हविर्निर्वप्स्यामीत्यस्योमुन्नेष्यामीत्येवमादीनामुच्चस्वरो[5] यथा स्यात् । तथोपांशुयाजेऽपि चाऽऽश्रावणस्य[6] गां दोहपवित्रे[7] रज्जुमित्यादिकस्यापरप्रत्ययनार्थस्याप्युच्चैर्यथा स्यादिति प्रयोजनम् ।

उच्चैरितराभ्याम् ।

ऋग्वेदसामवेदाभ्यां यद्विधीयते तदुच्चैः क्रियते । एतदर्थवादस्तत्तत्सूत्र एव ज्ञेयः । अत्र निगदानां याजुर्वेदिकानामपि विनियोगविधेर्ऋग्वेदस्थत्वादुच्चैष्ट्वमेव । ननु याजुर्वेदिके हौत्रे याजुर्वेदिक एव विनियोग इति चेत् । न । गुणविधिमात्रार्थमृग्वेदविधेरेवानुवादो यजुर्वेदे । अत एवर्ग्वेदविहितत्वेन होतृकर्तृकत्वाद्धौत्रमितिसमाख्या । गुणविधेरुत्पत्तिविधिप्रयोगादिविधीनां चर्ग्वेदस्थत्वादुच्चैरेव स्वरः । एवं चाऽऽध्वर्यवमपि श्रूयते तत्रर्ग्वेदे, तदपि गुणविधिरेव याजुर्वेदिक उत्पत्तिविधौ सतीति ज्ञेयम् । ब्रह्मत्वेऽपि स्वस्ववेदानुसारेण स्वरो ज्ञेयो विशेषस्तु तत्तत्सूत्रेष्वेव ज्ञेयः । अथर्ववेदे वेदत्वेनोपाधिना ब्रह्मत्वं विना न किंचिदपि विहितमस्ति, तस्मात्तत्र विवाद एव नास्ति । ब्रह्मत्वे तूपांशुत्वमेव । आथर्वणा वै काम्या इष्टयस्ता उपांशु क्रियन्त इति वक्ष्यति । ततो ज्ञायत आथर्वणकर्मोपांश्वेवेति । दूरस्थस्य श्रवणयोग्यमुच्चैः ।

सर्वैरुपांशु ॥१॥ ज्योतिष्टोमे प्रागग्नीषोमीयात् ।

सर्वैर्वेदैर्विहितं तदुपांश्वेव प्रयोक्तव्यम् । तत्रावधिरग्नीषोमीयपशोः पूर्वभावीनि कर्माणि । तत ऊर्ध्वं यथोक्तमित्यर्थः । अत्रोच्चैः प्रयोग ऋग्वेदसामवेदाभ्यामेव प्रतीतोऽपोदि[8] (हि)-

---

१ ख. °ग्नेर्वेहौत्र° । ट. °ग्नेर्वेह होत्र° । २ छ. ट. °त्निर्यूपो वाज° । ३ ट. °पेये पठ्यते त° । ४ छ. °पे पठ्यते त° । ५ छ. ट. °मीत्योमु° । ६ क. च. स्योन्ने° । ७ क. ग. च. °दथ पवा° । ८ छ. ट. सो यो वेदि° ।

तव्यस्तत्रानुवृत्त्यैव लभ्यते सर्वैरिति न वक्तव्यम्। एवं तर्हि वेदान्तरविहितस्य ब्रह्मत्व-स्यापि नियमार्थमारम्भः सर्वैरिति । ननु तदपि सिध्यति तस्यापि ताभ्यामेवोच्चैः प्राप्तेः। एवं तर्हि ज्ञापयत्याचार्योऽग्नीषोमीयादूर्ध्वं यथोच्चैः प्रयोगो द्वाभ्यामेवमनुपां-शुप्रयोगः कश्चिद्यजुर्वेदविहितस्याप्यस्तीति । 'यान्प्राचीनमाग्रयणाद्ग्रहान्गृह्णीयात्ता-नुपांशु' इत्यनूद्य 'यानूर्ध्वांस्तानुपब्दिमतः' इति स्वेनानुक्तोऽपि ग्राह्य इति। एवं सामान्यप्रकरणाद्विशेषविधिविहितानां मन्त्राणां प्रसङ्ग इति तत्सदेवमन्तराऽनू-च्यमित्याद्यपि तत्र तत्र ज्ञेयमिति। यत्र विशेषं न वदति तत्र स्वशाखीयमेव। यत्रान्यथा तत्र विकल्प इति।

एवं मन्त्रधर्मान्नियम्येदानीं यदुक्तं यज्ञकर्मार्था मन्त्रा इति, तत्रर्क्साममन्त्रयोरेक-मन्त्रत्वं स्पष्टमेव पादैरेकत्वज्ञानात्परिशेषाद्यजुषामपादबद्धानां क्रियापदहीनानां वाऽध्याहारं विनाऽपि मन्त्रत्वमस्तीति स्वमतेन विशेषं दर्शयितुं सामान्येन मन्त्रविभाग-निमित्तमाह—

**यावदर्थोऽपवृज्यते स एकमन्त्रः।**

यावदित्यव्ययं तृतीयार्थे। यावता यावत्प्रमाणकपदसमुदायेनार्थः पदार्थ एकत्वमु-द्देश्यगतं न विवक्ष्यते, जात्यभिप्रायेण वा, यावता पदसमुदायेन पदसमुदायार्थोऽपवृज्यते निराकाङ्क्षो भवति, अपवर्गः परिसमाप्तिर्निराकाङ्क्षता स पदसमुदाय एकमन्त्रः। अत्राऽऽकाङ्क्षा पुरुषनिष्ठैव यद्यपि तथाऽपि साऽऽरोप्यते पदेषु वा पदार्थेषु वा। तत्राऽऽचार्येणार्थोऽपवृज्यत इति वदताऽऽकाङ्क्षाऽर्थ आरोपिता। तेनेषे त्वेति द्विपदे मन्त्रे क्रियापदस्याभावा*न्निराकाङ्क्षाणि पदानि न भवन्ति तथाऽपि योग्यपदस्याऽऽम्ना-नादर्थोऽध्याह्रियत इति निराकाङ्क्षताऽर्थस्यैवोक्ता भवति। तस्मात्र च्छिनद्मीत्यध्या-हारः। न्यायविदस्तु पदाध्याहारं मन्यन्ते। अत एवोक्तं जैमिनिना 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्' इति। यद्यपि शाब्दी ह्याकाङ्क्षा शब्देनैवाऽऽ-पूर्यत इति न्यायस्तथाऽपि तादृगर्थ एवाऽऽदावसमाप्ताद्वाक्याद्बुद्धिस्थो भवतीति सिद्धार्थस्मृत्या क्रियोत्पत्तिरिति न पदस्य प्रयोग इत्याचार्याभिप्रायः। अर्थो निरा-काङ्क्षो भवति स एको मन्त्र इत्युक्ते स्योनं ते सदनमित्यमुमर्थमपेक्ष्य तस्मिन्सीदेति निराकाङ्क्षो भवतीति मिलित्वैको मन्त्रः स्यात्तन्निवृत्त्यर्थं विवक्षितमेकत्वम्।

ननु सर्वमन्त्रान्त इतिकरणं[३] लिङ्गं वा यत्र विनियोजकं तत्रैव विनियोगः स्यान्ना-न्यत्र समग्रमन्त्रप्रतिपादकनामधेयस्य प्रातिपदिकस्याभावादितिकरणेन च यावदुच्चरित-

---

* निराकाङ्क्षे पदे न भवत इति पठितुं युक्तम्।

---

१ क. ज. झ. म. वताऽर्थो'। २ ग. ट. 'नत्तीत्य'। ३ क. ख. ग. घ. छ. 'रणो लि'। ४ घ. 'यस्या'। ५ ट. 'तिस्त्रीदारस्या'।

स्यैव स्वरूपपरत्वेन तावानेव मन्त्रः स्यात्। न च निरपेक्षैकार्थप्रतिपादकत्वलक्षणसामर्थ्येन स्वस्वरूपप्रतिपादकं शब्दरूपं स्वप्रतिपाद्याविनाभूतं मन्त्रशेषं लक्षयेदिति वाच्यम्। असमासस्यैवेषे त्वेत्याहेतिवद्यावदुच्चरितप्रतिपादितस्यैव योग्यपदार्थस्मारकत्वेनैकमन्त्रत्वेऽपि न किंचिदनुपपन्नमित्यत आह—

आदिप्रदिष्टा मन्त्रा भवन्ति।

आदिर्मन्त्रस्याऽऽद्यैकदेशस्तेन प्रदिष्टाः प्रतिपादिता एकवाक्यरूपा मन्त्रा एव भवन्ति प्रयुक्ता दृश्यन्ते न स्वरूपमात्रम्। कुतः। शब्दोच्चारणमात्रेणावयवत्वेन ज्ञानात्समग्रोपस्थितिः शीघ्रमेव भवति यावदर्थद्वारा योग्यपदान्तरार्थोपस्थितिर्भवति। तस्मात्पूर्वमेव समग्रमन्त्रविनियोगो भवति। नेयं सांप्रतिकी लक्षणा[3]ऽतोऽपि शीघ्रबोधिका। इषे त्वेत्यत्र न मन्त्रपाठावसरे योग्यं पदान्तरं पठितं यदाकाङ्क्षानिवर्तकं तस्मात्पूर्वस्य च न मन्त्रावयवत्वमवगतं, येन ब्राह्मणेऽवयव्युपस्थितिः स्यादिति यथोपदिष्टमिति न्यायेन तावानेव गृहीतो मन्त्रस्तावानेवानुष्ठानयोग्यमर्थान्तरं लक्षयित्वा स्मारयतीति भावः। तदिदं भवन्तीत्यनेनोक्तमन्यत्राप्येकदेशेन नाम्ना सामानाधिकरण्येन समग्रमन्त्रप्रतिपादकानां विशेषणानां प्रदर्शनादित्युक्तं भवति। तथा हि—इदं विष्णुर्विचक्रम इति वैष्णव्यर्चा जुहोतीत्यादावेकदेशस्य वैष्णव्येति तयर्चेति सामानाधिकरण्यं दृश्यते यदि यावदुच्चरितपरत्वं स्यान्न स्यादेव सामानाधिकरण्यमिति। स्वस्वरूपपदार्थत्वमपि प्रसिद्धमित्यपि भवतीत्यनेनैवोक्तम्। आद्यैकदेशस्य स्वप्रतिपाद्यार्थप्रतिपादकत्ववत्स्वरूपप्रतिपादनपरत्वमपि प्रसिद्धमेवेति। तथा हि पाणिनिर्नियममाह—'स्वं रूपं शब्दस्याशब्दसंज्ञा' इति। तथा 'न वेति विभाषा' इति सूत्रे महाभाष्यकारैरप्युक्तं स्वरूपपदार्थत्वम्। तच्चेतिकरणेन वा प्रकारान्तरेणाभिव्यज्यते यत्रेतिकरणस्तत्र यथा। तथैव याज्याकाण्डे 'त्वं नो अग्ने' 'स त्वं नो अग्ने' इत्यत्रापि असमग्रमन्त्रपाठेऽवयवत्वेनावयविप्रत्यभिज्ञा। एवं पूर्वोक्त एव त्वमग्ने अयासीत्यन्ते तथैवेति।

उत्तरस्याऽऽदिना पूर्वस्यान्तं विद्यात्।

उत्तरमन्त्रस्यो[5]ऽऽदिप्रतीकेनोपलक्षितः (तं) पूर्वस्य मन्त्रस्याऽऽदिप्रदिष्टस्यान्तं समाप्तिं जानीयात्। मध्येऽनेकमन्त्रत्वेन यत्र प्रतीतिर्जायते तत्र नानेकमन्त्रता, किं तु स एक एवाध्ययनविधिबलादेकवाक्यतयैवैक एव ज्ञेयः। यथोपदिष्टं ब्राह्मणवन्त इत्युक्तत्वात्। अत्राऽऽद्यावयवेनैक एवावयवी बुद्धिस्थो भवति मन्त्रः। उत्तरप्रतीकेनोत्तरो विनियुक्तः। तयोर्विनियुक्तयोर्मध्येऽन्ये ये केचिन्मन्त्राः सन्ति तेषामानर्थक्यं स्यात्। यथा सुरूपवर्षवर्ण एहीतीडामाह्रियमाणां प्रतीक्षते। अत्रेमान्भद्रान्दुर्यानिति मन्त्रलक्षणेन मन्त्रः समा-

१ छ. ट. °पाद्यं वि°। २ क. ग. च. छ. ट. °स्मात्सर्वे°। ३ क. ग. °णान्ताऽपि। च. °णान्ता शी°। ४ ट. °न्त्रमानाव°। ५ ख. °स्याऽऽदिः प्र°।

प्यते। अनन्तरं यावदस्मास्विन्द्र इन्द्रियं दधात्विति विनियुक्तः। ततः पूर्वतनानामभ्येहि मामनुव्रतेत्याद्यन्ते केषामविनियोगादानर्थक्यमेव स्यात्[१]। नचाऽऽदिप्रतीकेनेति करणश्रुत्या[२] विनियुक्तस्याभ्येहीत्यादीनां लिङ्गेन कथमपि विनियुक्तानां विकल्पो भवति। श्रुतेः प्रबल[३]त्वाल्लिङ्गस्य दुर्बलस्य बाध एवेति श्रुतिलिङ्गेत्यनेन जैमिनिसूत्रेणोक्तमेव। अतो मध्यस्थानामानर्थक्ये प्राप्त आदिप्रतीकेन समुदाय एव गृह्यत आनर्थक्यभयादित्युक्तमनेन सूत्रेण। दृश्यते च सहकारिवशादादिप्रतीकमनेकेषामपि मन्त्राणाम्। यथा चतुर्भिरभ्रिमादत्ते चत्वारि छन्दांसि छन्दोभिरेव देवस्य त्वा सवितुः प्रसव इत्यादिच्छन्दसाऽऽददेऽङ्गिरस्वदित्यन्तानां चतुर्णां ग्रहणम्। अतोऽत्रोत्तरप्रतीकात्पूर्वतनः समुदायो गृहीत इति गम्यते। एवं च क्वचिन्मन्त्रसमुदायोऽपि विनियुज्यत इति करणश्रुत्या यथोपदिष्टं ब्राह्मणवन्त इत्युक्तत्वाच्छ्रुतिबलादेकवाक्यतयैकमन्त्रत्वेन विनियोगो ज्ञेयः।

मन्त्रान्तेन कर्म संनिपातयेत्।

मन्त्रस्यान्तः समाप्तिस्तया कर्म संनिपातयेत्। मन्त्रो हि पदार्थप्रतिपादकपदसमुदायस्तस्यान्तोऽन्तिमपदनाशरूपः। नाशारम्भेण सहान्तिमपदार्थज्ञानं तेन वाक्यार्थस्मृतौ जन्यमानायामेव तया सहैव कर्मारम्भे सति कर्मान्तेन संनिपातो भवेत्। तथाऽऽरम्भणीयं कर्मेत्यर्थः। मन्त्रोच्चारणकर्मणो[४] मन्त्रेण सहभावनियमात्। वाक्यार्थस्मृतिलक्षणकर्मणोऽप्यनन्तरमेवोत्पत्तेरवश्यंभावात्तत्र नियमविधानं नाकर्मकरणेषु किं तु कर्मकरणेषु। ते हि[५] वाक्यार्थस्मृतिं जनयन्तस्तद्द्वारा तदतिरिक्तं कर्म जनयन्ति। तत्रानियमप्राप्तौ नियमो विधीयते कर्मकरणत्वनिर्वाहाय। कथं, करणं हि यदा स्वव्यापारेण सहैव क्रियामुत्पादयेत्तदा साधकतमत्वेन प्रकृष्टोपकार[६]जनकत्वेन करणं स्यान्नान्यथा। अन्यथा व्यापारात्पूर्वं विलम्बेन वा क्रियोत्पद्यते सा कथमनुत्पन्ने नष्टे वा व्यापारे तज्जन्या स्यात्। अतोऽत्र करणमन्त्राणां दृष्टद्वाराऽङ्गत्वनिर्वाहायायं नियमोऽवगम्यते। अन्यथा वाक्यार्थस्मृतिव्यतिरिक्तक्रियां प्रति दृष्टद्वाराऽङ्गता[७] न स्यात्। ननु पदानि वाक्यं तस्मिन्पक्षे वाक्यार्थस्मृतिलक्षणकर्मोत्पत्तौ पदानि स्वव्यापारेण पदार्थप्रतिपादनेन वाक्यार्थस्मृतिं जनयन्तीति कथं न वाक्यार्थस्मृतिलक्षणा क्रिया वाक्यकरण(णि)का भवेत्, कथं च ते मन्त्रा अकर्मकरणाः।

उक्तं च—'साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम्।
वर्णास्तथाऽपि नैतस्मिन्पर्यवस्यन्ति[८] निष्फले॥

१ च. °न्ते तेषा°। २ ग. च. ठ. °त्। तच्चाऽऽदि°। ३ क. ग. च. ठ. श्रुतिः प्रबला लिङ्ग°। ४ क. ग. च. ठ. °णोर्मन्त्रे°। ५ क. ख. ग. च. ठ. हि पदार्थव्या°। ६ क. ग. च. ठ. °रकज°। ख. छ. °रकजनकज°। ७ क. ग. च. ठ. °ङ्गत्वं स्या°। ८ ख. छ. °स्यति नि°।

वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम् ।
पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् ' ॥

इति, तत्कथं न वाक्यार्थस्मृतिर्मन्त्रकरणिकेति चेत् । उच्यते—न पदानां वाक्यत्वेन मन्त्रतोच्यते सूत्रकारेण । पदानां प्रत्येकं व्यापारो यत्पदार्थप्रतिपादनं, तेन च पदार्थज्ञानम् । पूर्वपूर्वपदार्थज्ञानजनितसंस्कारसध्रीचीनमन्तिमपदार्थज्ञानं वाक्यार्थज्ञानं जनयति । तर्ह्यस्तु तादृशं पदार्थज्ञानमेव व्यापार इति चेत् । न । ज्ञानानां सहोत्पत्तेरनङ्गीकारात् । अन्तिमपदार्थज्ञाने नष्टे वाक्यार्थज्ञानं जायते । अतो न तद्व्यापारस्तेन सह वाक्यार्थज्ञानानुत्पत्तेः । यस्य व्यापारेण सह यदुत्पद्यते तत्तस्य करणमिति सूत्रकृतामिष्टम् । यतोऽन्तिमपदार्थज्ञानादनन्तरं सर्वत्र वाक्यार्थज्ञाने सति मन्त्राणां कर्मकरणत्वाकर्मकरणत्वाभ्यां विभागेन व्यवहरन्ति ततो ज्ञायते वाक्यार्थज्ञानं प्रति न मन्त्रस्य करणतेति । अत एवोच्यते—मन्त्रान्तरे(न्ते)न । सह जातवाक्यार्थस्मृत्या स्थितिदशापन्नयैव व्यापारेण क्रियारम्भे कृते करणता नान्यथेत्यवगम्यतेऽभिप्रायः ।

नन्वग्नये प्रणीयमानायानुब्रूहीत्यादौ होतुरनुवचनलक्षणमन्त्रैः कथं न प्रणयनक्रियायाः संनिपात इत्याशङ्क्याऽऽह—

क्रियमाणे हौत्राण्युच्यन्ते ।

मन्त्रान्तरेणाध्वर्युप्रयुक्तेन क्रियमाणे प्रारब्धे कर्मणि अथवा संस्क्रियमाणे द्रव्ये हौत्राण्यनुवचनानि । अनुवचनविवक्षया नपुंसकता । तेन शस्त्रमन्त्राणां तथा जपमन्त्राणामिवा³नुवचनविधिविहितानां हौत्रत्वेऽपि न क्रियमाणेऽनुवचनमित्युक्तम् । मन्त्रोच्चारणानि क्रियन्ते । उच्यन्त इत्यस्य प्रत्ययार्थो विवक्षितः प्रकृतिः साधुत्वाय प्रयुक्तेति कृतिमात्रं विवक्षितम् । अतो मन्त्रान्तरेणाऽऽरब्धा क्रिया कथमनेन क्रियेत । अतो विधिबलात्क्रियमाणानुवादिमन्त्रलिङ्गाच्च नैते करणमन्त्रा अतोऽनेन न कर्मसंनिपात इत्यभिप्रायः । अत एव प्रणीयमानायेत्यारब्धव्यापारसमाप्तक्रियया संस्क्रियमाणाय सिद्धाय द्रव्यायानुब्रूहि प्रतिपादनं कुर्विति प्रेषितोऽनुब्रूयादिति हौत्रे विधिः । प्रदेवं देव्येति मन्त्रा अपि सिद्धाग्निप्रकाशका एव । अतो नैते करणमन्त्रा अपि तु प्रतिपादनेनोपयोक्ष्यमाणस्य द्रव्यस्य संस्कारका एवेति मत्वोक्तं क्रियमाण इति । अत्रापि मन्त्रैः प्रतिपादनमेव विधेयं न क्रियान्तरमित्यकर्मकरणा एव ।

एवं यज्ञकर्मार्थो मन्त्रा इत्युक्ते यत्रोत्तरस्याऽऽदिना पूर्वेऽनेके मन्त्रा गृह्यन्ते तत्र

---

१ ट. 'रो यावत्प' । २ ट. 'समीचि' । ३ छ. ट. 'वानु' । ४ क. ग. ठ. रब्धा कि' । ५ क. ग. च. ठ. 'रब्धप' ।

समुच्चयोऽपि दृश्यते । तथाच नानाश्रुतिप्राप्तेषु लिङ्गेन वाऽनुज्ञातेषु किं सर्वत्र समुच्चयो विकल्पो वेति संदेह आह—

एकमन्त्राणि कर्माणि ।

एक एव मन्त्रोऽङ्गत्वेन करणं येषां तानि । अत्र हि प्रकाशनव्यतिरिक्ता क्रिया विवक्षिता न कर्ममात्रं, प्रकाशनार्थानां चाग्रिमसूत्रे समुच्चयस्यापि वक्ष्यमाणत्वात् । अतोऽत्र क्रियार्थप्रकाशनव्यतिरिक्तैव विवक्षिता । मन्त्रा अपि करणमन्त्रा एव संभवात् । तत्रैकेन मन्त्रेण क्रियोत्पत्तौ सत्यामितरेषामानर्थक्यं स्यादिति सर्वत्र विकल्प एव । नानाश्रुतीनां परस्परनैरपेक्ष्येणैव विनियोगात् । लिङ्गमपि प्रतिमन्त्रं निरपेक्षमेवाङ्गत्वमावेदयति । तस्मात्प्रत्येकमेव करणताऽतो वैयर्थ्यभयाददृष्टदोषदूषितो विकल्पोऽपि गृह्यते । यत्र तु द्वाभ्यामादत्ते पञ्चभिराहवनीयमित्यादिकरणमन्त्रेषु संख्याश्रुत्या समुच्चयोऽवगतः सामर्थ्यं बाधते, श्रुतेः सामर्थ्याद्बलीयस्त्वात्, तत्र यथोपदिष्टन्यायेन कयाऽपि वृत्त्यैकमन्त्रता संनिपातकरणता च संपादनीया । अत एवाऽऽपस्तम्बाचार्यः–'अपि च संख्यायुक्तानि' इत्याह । संख्या प्रदर्शिता । तान्यपि कर्माण्येकमन्त्राण्येवेत्यर्थः । अकर्मकरणेषु तु समुच्चयोऽप्यनुज्ञातोऽपि(तः) संख्याविधुरा यत्रानेके कर्मकरणा नाम्ना पाठान्तरमे(ए)वैकेनेतिकरणेन वा विनियुज्यन्ते तत्र प्रत्येकमेकमन्त्रलक्षणगुणभेदाद्भेद एव कर्मणां प्राप्नोति । तत्र गुणकर्मसु द्रव्यैकत्वेन प्रयोजनैकत्वात्प्रयोगभेदेन विकल्पः । प्रधानकर्मकरणमन्त्रेषु तु प्रयोजनस्यापूर्वस्य प्रमाणान्तरेणैकत्वानवगमात्कर्मभेद एव । तत्रानेकानि कर्माण्येवैकप्रयोगे क्रियन्त इति न मन्त्राणां समुच्चयो नापि विकल्पः । यथा भगो वामिति सर्वमन्त्रान्त इतिकरणेन गुणकर्मकरणा मन्त्राः । प्रधानकर्मकरणास्तु कूश्माण्डैर्जुहुयादिति नाम्ना । इष्टेभ्यः स्वाहेत्यष्ट(ष्टा)त्रिंशन्मन्त्रान्त इति सर्वप्रायश्चित्तानि जुहोतीति मन्त्रगणेन कर्म चोद्यते तत्र प्रतिमन्त्रं जुहुयादिति च वक्ष्यति । इदं न्यायमूलम् । श्रुतिरपि ' यदेकया जुहुयाद्दर्विहोमं कुर्यात् ' इति । दर्विहोमस्यैकमन्त्रसाध्यत्वेन निन्दयाऽनुवादावगमाद्दर्विहोमा एकमन्त्रसाध्या इति गम्यते । एवमन्यत्रापि द्रष्टव्यम् ।

अकर्मकरणेषु संस्कारकमन्त्रेषु नानामन्त्रप्राप्तौ समुच्चयोऽस्तीत्याह—

समभ्युच्चीयेरन्हौत्राणि ।

नपुंसककर्तृ व्याख्यातम् । समच्चयेनैकस्मिन्नेव प्रयोगे संस्कार्यैकत्वेन क्रियेरन् । अनवचनशब्दबलात्प्रतिपाद्यार्थप्राधान्यात्संस्कारमन्त्रा एव गृह्यन्ते । होतुः कर्तव्यानि

---

१ ख. ट. °ष्टमितिन्या° । २ ट. °न्नानापा° । ठ. °न्नायावान्तरे एवै° । ३ क. ग. च. ठ. अत्र । ४ ट. °पि वक्ष्यति-य° ।

मन्त्रैरर्थप्रतिपादनरूपाण्यनुवचनान्येव गृह्यन्ते, नपुंसकलिङ्गेन निर्देशात्। तेनजपशस्त्रमन्त्राणामपूर्वोत्पादकार्थप्रकाशनसाधनभूतानामनेकेषां प्राप्तावपि प्रतिमन्त्रमपूर्वभेदेन कर्मावान्तरभेदान्न समुच्चयः। हौत्राणीत्यनेनान्यत्र शस्त्रजपेष्वप्यपूर्वभेदाद्भेद एव कर्मणाम्। शस्त्रकर्म यत्रैकवचनेनोच्यते तत्रावान्तरजातिभेदेऽपि समुदायापूर्वस्यैकस्याङ्गीकारादेकवचनमुपपन्नम्। तथा च परिशेषद्रव्यसंस्कारार्थार्थप्रकाशनसाधनमन्त्राणामेवानेकप्राप्तौ समुच्चयोऽनेनोक्तः। अत्रापि प्रतिमन्त्रमदृष्टार्थस्मृतिजनकत्वेऽपि द्रव्यस्यैकत्वात्समुच्चयः।

यत्रानुवचनैर्द्रव्ये दृष्टः संस्कारो जन्यते तत्रान्यस्य वैयर्थ्यं मा भूदिति विकल्प एवेत्याह—

**अन्यत्र याज्यानुवाक्याभ्यः।**

हौत्राणि समभ्युच्चीयेरन्याज्यानुवाक्यानुवचनानि न समभ्युच्चीयेरन्नित्यर्थः। दृष्टसंस्कारार्थस्मृतिजनकत्वमुपपादितं कात्यायनेन। सर्वत्र होत्रकाणां समुच्चये प्राप्त आह—न याज्यानुवाक्यासु विरोधात्। देवतास्मरणार्था ह्यनुवाक्या हविःस्मरणार्था च याज्या। अतो दृष्टार्थत्वाद्विकल्पः। तथा च 'ह्वयति चानुवाक्यया प्रयच्छति याज्यया' इति दर्शनाच्च। दृश्यते चायमर्थो यथा याज्यानुवाक्यासु न समुच्चयः। प्राजापत्यान्प्रकृत्याऽऽमनन्ति—'एकधाऽनुवाक्या भवत्येका याज्यैकदेवत्या हि प्रजापतयः' इति। देवतैकत्वमेकत्वाद्याज्यानुवाक्ययोर्हेतुं ब्रुवन्नेकत्वं दर्शयति। तथा पितृयज्ञे पुरोनुवाक्यां प्रकृत्याऽऽमनन्ति 'एकया वै देवान्प्रच्यावयति द्वाभ्यां पितॄन्' इति। अनुवाक्याद्वित्वविधिपरे वाक्य एकत्वं दर्शयतीत्येवं कात्यायनीये।

क्रियार्था मन्त्रा इति स्थिते यत्र क्रियाया आवृत्तिस्तत्र प्रतिप्रधानं मन्त्रावृत्तिमाशङ्क्याऽऽह—

**यत्रैकस्मिन्द्रव्ये विचेष्टापृथक्त्वेनार्थो निष्पद्यते सकृदेव तत्र मन्त्रं ब्रूयात्।**

यत्र यस्मिन्नेकस्मिन्नेकव्यक्तिरूपे समुदाये वैकया विभक्त्यैकवचनद्विवचनबहुवचनरूपयोद्दिष्टे विषयभूते द्रव्ये विचेष्टाया एकविधिविहिताक्रियायाः पृथक्त्वेन नानात्वेनाभ्यासेनेति यावत्। अर्थो विधेयभावनायाः प्रयोजनं निष्पद्यते समाप्यते प्रयोजनं भवतीति यावत्। तत्र तस्मिन्द्रव्ये विधेयभूत उद्देश्ये क्रियासंबन्धेन प्रकाश्यप्रकाशकत्वेन प्राप्तो यो मन्त्रस्तं सकृदेवोच्चारयेत्। अयमभिसंधिः—एकविधिविहिता क्रिया ह्येकेत्युच्यते यावत्प्रयोजनलाभं तस्याः संस्कार्यद्रव्यस्य चैकत्वात्तत्प्रकाशको मन्त्रोऽपि

---

१ ख. छ. ट. शेषाद्र(द्र)°। २ ख. ट. °ति वा य°। ३ क. ग. च. छ. ठ. °त्येकं का°। ४ क. ग. च. ठ. °नव°। ५ ट. °हिताः क्रि°।

सकृदेवोच्चारितः क्रियाभ्यासावयवेन संबद्धो हि करणं [1]तदङ्गं न तु मध्ये क्रियावयवैः संबध्यमानोऽपि। नहि ते क्रियाभ्यासा अप्यन्याः क्रिया भवन्ति। भेदो हि शब्दान्तराभ्याससंख्यासंज्ञागुणप्रकरणैर्वक्तव्यः । स न प्रकृते क्रियाभ्यासोऽङ्गं, मन्त्रोऽप्यङ्गं क्रियायाः। न च तयोर्विनियोजकप्रमाणमस्ति । तस्मादेकस्या अङ्गं सकृदुच्चारित एवेति त्रिः प्रोक्षतीति संख्यया भावनाभ्यासो विहितस्तत्र मन्त्रावृत्तिर्मा भूदित्येवकारेणोक्तम्। न चात्र संख्यया कर्मभेदस्तया [2]भेदोऽप्यनुसंख्यक्रियापदा[3]त्तिस्र आहुतीर्जुहोतीति। अत्र क्रियाभ्यावृत्तौ कृत्वसुजर्थे त्रिरिति संख्याऽभ्यासपरा । यत्र प्रधानकर्मोत्पत्तिविधिस्तत्रैव प्रायेण क्रियासमानाधिकरणा संख्या त्रिर्निदधातीत्यत्र प्रधानकर्मण्यप्यभ्यास एव विधीयते । संस्कारकर्मसंख्याऽभ्यासप्रतिपादितैव । तत्त्वाभ्यस्तया समानकालैकभावनयैव संख्या च मन्त्रश्च संबध्येते, तस्या वाक्यार्थत्वान्न तु तेषां पर[4]स्परसंबन्धो भवति । तदुक्तम्-'गुणानां तु परार्थत्वादसंबन्धः समत्वात्स्यात्' इति। अतः सर्वत्रावघातपेषणादिसंस्कारकर्मसु बर्हिरादिच्छेदनादिषु प्रोक्षणादिषु दृष्टार्थेष्वपि संस्कारकर्मसु संख्यायुक्तेष्वपि सकृन्मन्त्रः प्रयोक्तव्यः।

उदाहरति—

यथा प्रोक्षे यूपच्छेदने च।

प्रथमोदाहरणं समुदायद्रव्यैकत्वप्रदर्शनार्थमदृष्टार्थसंस्कारेऽपि साम्यप्रदर्शनार्थं च। तत्र त्रिः प्रोक्षतीति वाचनिकाऽऽवृत्तिः क्रियायास्तथाऽप्युद्देश्यप्रयोजनैकत्वात्सकृदेव मन्त्रः। द्वितीयोदाहरणं सामर्थ्येनाभ्यासप्रदर्शनार्थं व्यक्त्येकत्वप्रदर्शनार्थं च। पात्राणीति जात्या पात्रत्वेन समुदायस्य क्रोडीकारेणैकशब्दत्वादेकत्वं नत्वेकवचनान्तत्वेनैव व्यक्त्यैकत्वेनैव वोद्देश्यैकवचनस्याविवक्षितत्वात् । यथा बर्हिरासाद्य प्रोक्षतीति बर्हिःशब्देनैकधर्मक्रोडीकृतं द्रव्यमेकमिति। निर्वापादौ चेष्टापृथक्त्वेन मन्त्रावृत्तिश्चतुरश्चतुरो मुष्टीन्निर्वपतीति द्विरुक्त्या प्रतिदैवतं निर्वापे त्रिर्यजुषा [5]तू[6]ष्णीं चतुर्थं पञ्चकृत्वो यजुषा मिमीते पञ्चकृत्वस्तूष्णीमित्यत्रापि पूर्वन्यायः श्रुत्यैव बाधित इति स्वेनैवोत्तरसूत्रोदाहरणैः सूचितं ज्ञेयम्।

पूर्वन्यायापवादमाह—

द्रव्यपृथक्त्वेऽभ्यावर्तते।

यत्रैकस्मिन्द्रव्ये विचेष्टापृथक्त्वेनार्थो निष्पद्यत इत्यनुवर्तते। तत्रायमन्वयः—यत्रैकस्मिन्द्रव्ये द्रव्यपृथक्त्वे द्रव्यावयवभेदे सत्येव विचेष्टापृथक्त्वेनार्थो निष्पद्यते

---

१ छ. ट. तदङ्गं। २ ख. छ. ट. °दो याऽनुसंख्याक्रि°। ३ क. च. ट. ठ. °दा तिस्र।
४ ख. °स्परं सं°। ५ ख. तूष्णीमिति च°। ६ छ. ट. °ष्णीं चतुर्थमिति च°।

तत्राभ्यावर्तते मन्त्र इति । द्वितीयाया विपरिणामेन योजना । आवर्तत एव, नाऽऽवृत्तिपरिसंख्येयम् ।

उदाहरति—

यथाऽऽज्यग्रहणे लवने स्तरणे च ।

अयमाशयः—षोडशान्याज्यानि भवन्तीति यद्यप्याज्यशब्देनैकं द्रव्यं तथाऽपि षोडशानीत्यवान्तरद्रव्यभेदात् । चतुर्जुह्वामष्टावुपभृति चतुर्ध्रुवायामिति च क्रियाभ्यासः श्रूयते, स तु संसृष्ट एकस्मिन्नेवाऽऽज्ये द्रव्ये, तथाऽपि संख्यया स्रुवेण ग्रहणं नियम्यते । आज्यत्वेनैकद्रव्यत्वेऽपि स्रुवपरिमाणेन परिच्छिन्नस्योद्देश्यस्य षोडशानां नानाद्रव्यत्वादस्त्येव मन्त्रावृत्तिः । संस्कारस्य दृष्टार्थत्वे स्रुवेण ग्रहणं नियतमाज्यस्था-स्यास्तद्गृहीतमेव मन्त्रसंस्कृतमगृहीतं तु मन्त्रान्तरेणैव संस्कर्तुं युक्तं, तथा मन्त्रावृत्तिः। क्रियावृत्तिस्तु न संभवति । यथा प्रोक्षितं पुनरपि प्रोक्ष्यते नैवं गृहीतमेव पुनर्ग्रहीतुं शक्यत इति पुनर्गृह्यमाणं द्रव्यं संस्कृताद्द्रव्यान्तरमेवेति मन्त्रावृत्तिः । बर्हिर्विषये लव-नस्तरणोदाहरणप्रदर्शनं बर्हिर्लुनातीत्यादौ द्रव्यैकत्वेऽपि मुष्टिमात्रस्यावयवत्वं संनखं[1] मुष्टिं दातीति विधानात्तत्रापि पूर्ववत् । बर्हिषा वेदिꣳ स्तृणातीत्येकद्रव्यत्वेऽपि त्रिधातु पञ्चधातु वेति विभागेन स्तरणविधानात्तत्रापि पूर्ववत् । एतेन यत्र बहुवचनेन पात्राणि संमृशतीत्यादि विधीयते तत्रापि संमर्शनं सकृत्कर्तुं न शक्यत इति भवेदेवाऽऽवृत्तिः । तत्र ग्रहणसंमार्गवन्न प्रतिपात्रं किंतु यावन्ति सकृत्संमर्शनयोग्यानि तत्र सकृदन्यत्र पुनरावृत्तिरिति केचिदाहुस्तन्निरस्तम् । तत्रापि केनापि प्रकारेण नानाद्रव्यताया अदर्श-नात्सकृन्मन्त्र इत्येव न्याय्यम् । नाप्यत्र प्रकारान्तरेण वक्ष्यमाणमपि द्रव्यपृथक्त्वाभावेऽपि मन्त्राभ्यासकारणमस्ति । यदाह भरद्वाजः 'मन्त्रव्यवाये मन्त्राभ्यासो द्रव्यपृथक्त्वेऽर्थ-पृथक्त्वे देशपृथक्त्वे च' इति । शुल्बावेष्टने प्रतिधातु मन्त्रावृत्तिर्मध्य आवेष्टन-क्रियायाः संधानमन्त्रेण व्यवधानात् । द्रव्यपृथक्त्वे दर्शित एव । अर्थः प्रयोजनं, तस्य पृथक्त्वे कृष्णाजिनादानमवहननार्थं पेषणार्थं च । देशपृथक्त्वे दक्षिणकपालयोग उत्तरकपालयोगे च मन्त्राभ्यासः । एवं कालपृथक्त्वेऽप्युपवेषादाने सायं सांनाय्यार्थं प्रातः कपालार्थमङ्गारकार्य आवृत्तिः । तत्र तत्र स्वयं मन्त्रावृत्तिमेव दर्शयिष्यति ।

अर्थपृथक्त्वात्कण्डूयनमन्त्रोऽभ्यावर्तते ।

अर्थः प्रयोजनमुद्देश्यं निमित्तं च तस्य नानात्वाद्द्रव्यैक्येऽपि मन्त्र आवर्तते । यथा सुपिप्पलाभ्य इति शिरः कण्डूयते विषाणे विष्येतीतराङ्गानी(णी)ति शिरसि यावन्ति कण्डूयनान्युद्दिश्य प्रवृत्तस्तावतां सकृन्मन्त्रः । तथा चाभ्यासे निमित्तं कालव्यवायः, स

---

[1] क, ख, संनखं । च, ख, सन्नखं ।

त्वर्थपृथक्त्वेनैव व्याख्येयोऽन्यथा कालक्रमेण जातानां निद्राणां प्रत्येकं निमित्तत्वे नैकस्यामपि रात्रावावृत्तिर्मन्त्रस्य प्रसज्येत। तस्मादेतावता कालेन जातानां कण्डूयनानां बुद्धावारूढानां तथा जनिष्यमाणानां स्वापानां नदीतरणानां जातानामम्बुवर्षाणाममेध्यदर्शनानामपि निमित्तत्वेन प्राप्तानि प्रतिमन्त्रोच्चारणानि तानि सकृदेवेति। स्वापे मन्त्रः—अग्ने त्व सु जागृहीति। मन्त्र एकस्यां स्वप्स्यतः सकृदेव। सर्वस्वापान्ते बुद्ध्वाऽपि विश्वे देवा इति सकृदेव। रात्र्यन्तर आवर्तते। नदीतरे नानास्रोतस्कायामपि तरणे देवीरापो अपां नपादिति सकृन्नद्यन्तर आवृत्तिः। अम्बुवर्षे—उन्दतीर्बलमिति बुद्धया यावत्कालवर्षेषु क्रोडीकृतेषु सकृत्ततोऽन्यत्राऽऽवृत्तिः। अमेध्यदर्शने—अबद्धं मन इति पूर्ववत्। भद्रादभि श्रेय इति दीक्षितं प्रयान्तमनुमन्त्रयते। अत्र दीक्षितो गृहे दीक्षित्वा यष्टुं पुण्यमरण्यं प्रयाति। तत्रैतावद्गत्वा स्थास्यामीति संकल्पिते तावत्पर्यन्तं सकृन्मन्त्रः। दैवादधिकप्रयाणे पुनर्मन्त्रः।

आवृत्तिप्रसङ्गेन साधनावृत्तौ विशेषमाह—

**परार्थान्येकेन क्रियेरन्।**

पुरोडाशश्रपणार्थं प्रयुक्तेन कपालेन परार्थानि तुषोपवापादीनि तान्येकेनैव कपालेन क्रियेरन्कर्तव्यानि। कुतः, तत्र न कपालसंस्कारार्थस्तुषोपवापः। येन तुषैः पुरोडाशकपालं पूरयित्वेति कपाले द्वितीयया विभक्त्या ग्रहं संमार्ष्टीतिवत्संस्कार्यत्वं प्रतीयेत। अपि तु भूतोपयोगिनां तुषाणामेव प्रतिपत्तिलक्षणः संस्कारः। कुतः, शाखान्तरे पुरोडाशकपालेन तुषानुपवपतीति तुषा एव द्वितीयया प्रतिपाद्यत्वेनोद्देश्या उपवापः प्रतिपत्तिस्तेषां कपालेनेति तृतीयया तस्य साधनत्वावगतेर्विधेयगतं विशेषणं विवक्षितम्। एवं च तुषप्रतिपत्त्यर्थं कपालं साधनमेव न तूभयोः संस्कार्यत्वं युक्तम्। ततस्तु कपालमिति द्वितीयाऽऽर्थिके कर्मणि तथा युक्तं चानीप्सितमिति विधीयते। तथा कपालस्य विधेयत्वेन विवक्षितैकत्वादेकेनैव सर्वतुषोपवापः सकृन्मन्त्रेण ततस्तूष्णीम्। पुरोडाशकपालेन तुषोपवापोऽभ्यसनीयः। न हि तुषोपवापार्थं कपालानि प्रयुक्तानि। येनान्येषां वैयर्थ्यभयेन तुषोपवापे विनियोगः सर्वेषां स्यात्। किं तु परार्थानि तानि, यतः पुरोडाशकपालेनेति पुरोडाशसंबन्धित्वेन ग्रहणादतः पुरोडाशश्रपणेन तानि सर्वाणि[१] सप्रयोजनानीति वक्तुमुक्तं परार्थानीति। अर्थात्परार्थैनैकेनेति गम्यते।

उदाहरति—

**यया कपालेनोपवपति यजमानेन संमितौदुम्बरी भवतीति।**

कपालेनेति व्याख्यातम्। तथा नानायजमानेषु कर्मसु द्वादशाहादिषु कर्मफलभोगार्थं

१ क. ग. च. छ. ट. ठ. °णि संप्र°।

प्रवृत्तानां यजमानानां मध्य एकेन यजमानेनौदुम्बरीमाने सति शास्त्रार्थो निष्पन्नस्ततो-ऽन्ययजमानेन मानं नापेक्ष्यते । न हि मानं यजमानसंस्कारो येन सर्वेषां प्राप्नुयादेक-त्वाविवक्षया विधेयो यजमानः साधनत्वेनातो विवक्षितमेकत्वम् । परार्थानीति किम् । एकेन बर्हिषा वेदिस्तरणे सिद्धेऽपि बर्हिषामपरार्थत्वादन्येषामयुजां युजां वा वैयर्थ्यं मा भूदिति संस्कारोऽभ्यस्यते । तदेव वक्ष्यति—' त्रिधातु पञ्चधातु वा[1] धातौ धातौ मन्त्रमावर्तयति ' इति । तैः सर्वैरनैकैः क्रियत[2] इति प्रत्युदाहरणम् ।

कर्मविशेषे कर्तृनियममाह—

## यजुर्वेदेनाध्वर्युः करोति ।

यजुर्वेदेन यद्विधीयते तदुत्सर्गेणाऽऽध्वर्यवमिति याज्ञिकैर्व्यपदिश्यते । अध्वर्योः कर्माऽऽध्वर्यवमिति वृतोऽध्वर्युर्जानाति मया यजुर्वेदविहितं कर्तव्यमिति । अन्यथा येन केनचिदृत्विजा वृतेन किमपि कर्तव्यमित्यनियमः स्यात् । तत्रावान्तरसंज्ञया ब्रह्मत्वं हौत्रं चैतादृशं नियम्यते । कात्यायनेन तु अध्वर्युः कर्मसु वेदयोगादित्युक्तम् । तत्रा-ध्वर्युरित्यृत्विजः संज्ञाऽध्वर्युवेद इति वेदं संज्ञाय । तेनाध्वर्युर्वृतो जानाति मत्संज्ञकेन विहितं मया कर्तव्यमिति सूत्रयोजना । यजुर्वेदेन विधीयते तदध्वर्युरेव करोति संज्ञा-साम्यादिति शेषः ।

## ऋग्वेदेन होता ।

ऋग्वेदेन यद्विधीयते तद्धोता करोति । ऋग्वेदविहितस्य कर्मण उत्सर्गेण हौत्र-मिति पूर्ववद्व्यवहारात् । अत्रापि कात्यायनोक्तप्रकारेणापि योजना । ब्रह्मत्वस्यावान्तर-संज्ञया वेदैकदेशो[3] ब्राह्मं कर्म ।

## सामवेदेनोद्गाता ।

पूर्ववद्व्याख्या ब्रह्मत्वे च ।

## सर्वैर्ब्रह्मा ।

यजुर्वेदर्ग्वेदसामवेदेषु च स्वातन्त्र्येणैकदेशे संज्ञा ब्रह्मत्वमिति । त्रिभिः संज्ञाविशेषैर्ब्र-ह्मत्वं नियम्यते । अथर्ववेदे चोत्सर्गेण विहितस्य ब्रह्मत्वमिति संज्ञाप्रसिद्धा विशेष-वचोभिस्तत्राध्वर्युहौत्रौद्गात्राणां शेषो ज्ञेयः । अन्यसंज्ञाभिश्च शान्त्यादि ज्ञेयम् । अतो विशेषसंज्ञाभिर्विहितं वेदत्रये ब्रह्मत्वं नाथर्वणस्य शेष इति पूर्वमेव दर्शितम् । अत-स्तानि वेदभेदेन[4] ब्रह्मत्वानि विकल्प्यन्ते[5] । अथर्ववेदोक्तं तु स्वत एव । अतः सर्वैर्वेदैर्वि-हितं समप्राधान्येन तद्ब्रह्मा करोति । कात्यायनीयानुसारेणाऽऽथर्वणाः स्वं वेदं ब्रह्मवेद-

---

१ क. ग. च. छ. ट. ठ. वेति । २ ख. छ. ट. क्रियन्त । ३ ख. छ. ट. °शे ब्रह्मक° । ४ क. ग. च. ठ. वेदेन । ५ क. ग. च. ठ. °कल्पन्ते ।

मिति व्यवहरन्त्यत उत्सर्गेण संज्ञासामान्येनाथर्ववेदविहितं ब्रह्मा करोति। वेदत्रये तु विशेषसंज्ञया विहितं करोत्येव।

एवमुत्सर्गेण तत्तद्वेदविहितस्य कर्मण ऋत्विक्कर्तृ[क]त्वनियमे सत्यपवादमाह—

**वचनलक्षणा इतरे।**

वचनं संज्ञाविशेषो विधायकं वाक्यं च। तदेवान्येषामृत्विजामनृत्विजां च लक्षणं येषां ते तथा। इतरे चतुर्भ्योऽन्ये कुर्वन्तीत्यनुषङ्गो विपरिणामश्च। तेषामुत्सर्गेण वेदप्रयुक्तं कर्म नास्तीति विशेषवचनैः प्रमाणैः कुर्वन्तीत्यर्थः। तथा चतुर्णां स्वस्ववेदेषु नियमेऽपि संज्ञाविशेषैस्तेषामपि परस्परमन्यवेदविहितमपि किमपि कर्तव्यं दृश्यत इत्यनेनैव नियम्यते। अत्रोदाहरणानि, संज्ञया हौत्रं यजुर्वेदस्थमपि होता करोति। वचनं पत्नी पिनष्टि दासी वा। स्वयमग्निहोत्रं जुहोति उन्नेता जुहोति नेष्टा पत्नियामुद्गात्रा संख्यापयति।

**असंभवाद्वा।**

इतर इत्यनुषङ्गः। यस्य यत्कर्म विहितं तेन तस्य कर्तुमसंभवोऽसंभावना तस्मात्।

उदाहरति—

**यथाऽश्वमेधे पशुकर्मसु।**

अत्र पशूपाकरणं नानादेशस्थनानापशूनामेकेनाध्वर्युणा कर्तुमशक्यमिति न हि वेदेनाशक्यं विधीयते, विधीयते च, तस्मादन्यं कर्तारमपि विदधाति न तु पश्वन्तरोपाकरणाद्यभावमनुजानाति वेदः कर्मवैगुण्यापत्तेः। तस्मादन्यैर्ऋत्विगादिभिः कार्यं, नात्र प्रायश्चित्तं प्रतिनिधिग्रहण इव। बहुवचनग्रहणात्[३]प्रोक्षणादिकमपि प्रकृतौ यद्यस्य विहितं तत्तेन कर्तुमशक्यमन्येन कर्तव्यमिति।

साधननियमं व्याचष्टे—

**आहवनीय आहुतयो जुह्वा हूयन्ते।**

आहवनीयस्याधिकरणता श्रुतिसमाख्याभ्यां, यदाहवनीये जुह्वतीति श्रुतिः, समाख्या च हूयतेऽस्मिन्नित्याहवनीय इति। हूयतेऽनयेति जुहूरिति समाख्यया साधनता जुह्वाः। आहुतयोऽत्र कर्माणि जुहोतिना विहितानि यस्य कस्याप्यृत्विजः। एवं[४] वेदमुक्तं— यत्राऽऽहुतयो हूयन्ते तत्राधिकरणमाहवनीयं, साधनं जुहूः। तथा च वेदचतुष्टयविहितकर्मणामृत्विजां ये होमा विहिता येन केनचिद्द्रव्येण तेषामेतावानेव नियमः, ते सर्वेऽपि तैर्जुह्वाऽऽहवनीय एव कार्या इति नियम्यते। सामान्यश्रुतेर्बाधोऽपि गार्हपत्यादिश्रुत्या द्रष्टव्यः। एवं जुह्वा साधनेनेति नियमः। सोऽपि समाख्ययैव। विशेष-

---

१ क. ग. स. छ. ठ. ब्राह्मं। ख. ब्रह्माणं। २ ख. ड. °षु विनि°। ३ क. ग. च. ठ. °त्प्रोक्षणा°। ४ क. ट. °वं वेद°।

विधिनाऽस्य बाधोऽपि द्रष्टव्यः । याजुर्वेदिकेषु दर्विहोमेषु दर्शपूर्णमासतन्त्रे चानङ्गभूतेष्वेव दर्विहोमान्व्याख्यास्याम इत्यत्रोक्तं ज्ञेयम् । कुतः । अत्राऽऽहुतिमात्रस्यानुक्तद्रव्ये विशेषस्यैव नियमात् । तथा कर्तुर्विशेषेणानभिधानात् । दर्शपूर्णमासयोर्द्रव्यनियमस्य सोमेऽपि च द्रव्यविशेषस्य वक्ष्यमाणत्वात् । दर्विहोमेषु तु यत्र द्रव्यं न श्रूयते तत्रैव तूष्णीकेनाऽऽज्येनेति तथाऽध्वर्युरिति नियमसंभवात् । सोमे होमस्य नानाकर्तृकत्वात् । दर्शपूर्णमाससोमतन्त्रान्तर्गतोङ्गद्रव्यकर्तृविरोधात् । तत्रानन्तर्गता अङ्गभूताः स्वतन्त्रा वा दर्विहोमशब्देन व्याख्येया इति गम्यते । तेन दर्शपूर्णमासयोरनादेशे चोत्तरतउपचारो विहार इत्युत्तरत एव स्थित्वा जुहुयात्तथेतरधर्माणां परिसंख्या तत्रैव व्याख्यास्यते । तथा सोमेऽपि सोमाहुतीनामपीति ज्ञेयम् । तस्मात्परिशेषाद्दर्शपौर्णमासतन्त्रान्तर्गतहोमसोमाहुतित्वविधिहोमेभ्योऽन्ये हि तद्द्रव्यका जुहोतिचोदनाचोदिता दर्विहोमाः पारिभाषिकधर्मयुक्ता दर्विहोमान्व्याख्यास्याम इत्यत्र व्याख्यास्यन्ते नान्य इति ज्ञेयम् ।

कर्मनियुक्तानां विहारे स्वेच्छया संचारं निवारयति—

**उत्तरतउपचारो विहारः ॥ २ ॥**

श्रुतिरेवोत्तरतउपचारो वै यज्ञ इति । तसिस्तृतीयार्थे सप्तम्यर्थे वा । विहारस्य य उत्तरभागस्तेन तत्र वोपसमीपे चारो गमनागमने कार्ये न दक्षिणभागेनेत्यर्थः । तत्रापि सामान्यश्रुतेर्विशेषलिङ्गादिना बाध आज्यसंस्कारवसतीवरीपरिहारादौ वेक्ष्यते ।

अनियतदेशस्य कर्मणो देशनियमं व्याचष्टे—

**प्राङ्न्यायान्युदङ्न्यायानि वा प्रदक्षिणं यज्ञे कर्माणि करोति ।**

प्राञ्च्युदञ्चि च कर्माणि संतिष्ठन्त्रितिश्रुतेः प्रागपवर्गाणि कर्माण्युदगपवर्गाणि वा करोतीति नियमः । न्यायः समाप्तिः । तथा प्रदक्षिणं नियम्यन्ते । कात्यायनेन चाऽऽवृतौ सामन्ते च प्राञ्च्युदञ्चि प्रदक्षिणमिति श्रुत्यनुसारेणोक्तम् । प्राञ्च्युदञ्च्यावृतौ सामन्ते च प्रदक्षिणमिति कर्मावृत्तौ प्राङ्न्यायानीत्यादि । सामन्ते समन्ताद्विहिते कर्मणि प्रदक्षिणमिति नियमः । तेन न सर्वत्र प्राङ्न्यायानीति, नापि प्रदक्षिणमिति किं तु पूर्वोक्तव्यवस्थया । यज्ञग्रहणं वैतानिककर्ममात्रग्रहणार्थम् । या स्मृतिः पित्र्येषु दक्षिणापवर्गाण्यप्रदक्षिणं कर्माणीति सा स्मार्तेष्वेव । अत्र यज्ञग्रहणेन प्रत्यक्षदर्शितश्रुत्यनुसारेणाविशेषेण दैवपित्र्येषु प्राङ्न्यायान्युदङ्न्यायानि वा प्रदक्षिणमिति च निय-

१ क. ग. च. छ. ठ. °जुर्वेदि° । २ ट. °शेषणा° । ३ क. ग. च. ट. °ससाम° । ४ छ. ढ. °र्गतद्र° । ५ क. ग. घ. ठ. °ताङ्ग द्र° । ६ ख. ढ. °र उ° । ७ ख. ड. °शपूर्ण° । ८ ढ. °मासान्त । ९ क. ख. ग. च. छ. ठ. वक्ष्येते ।

ष्यते । प्रदक्षिणमनु परिप्लावयतीति सामन्तस्वरूपापनार्थम् । शुल्बकरणेऽपि प्रदक्षिण- मिति विधास्यते, प्रथमत एव प्रदक्षिणमेकगुणमित्यर्थः । तत्तु द्विगुणरज्जुकरणनिवार- णार्थम् । द्विगुणा हि रज्जुर्गुणानामप्रादक्षिण्ये[१] प्रदक्षिणं यज्ञकर्मणीत्यनेनैव भवेत् । तथा मा भूदेकगुणेत्येवं वक्तुं प्रथमं प्रदक्षिणमेवाऽऽवेष्टयेत्तथाचैकगुणं चेत्यर्थः । तेन न पुनरुक्तं प्रदर्शितन्यायेनैव सर्वत्राऽऽवेष्टनकरणसंभवान्न[२] पृथक्सूत्रकरणम् । तथा हि—यदा रज्जूरेकगुणा तदा मूलमधः कृत्वाऽग्रमुपरि कृत्वा वेष्टयति, तदेवं प्रदक्षिणं भवति । द्विगुणायां तु गुणकरणं द्वौ गुणौ कृत्वा वेष्टयति । अथ वा सहैव गुणौ संपादयन्वेष्टयतीति । तत्र प्रधानानुरोधेनाप्रदक्षिणं गुणौ कृत्वा प्रदक्षिणमावेष्टयति । द्वितीये पक्षे तु गुणार्थं द्रव्यं द्वयोर्हस्तयोर्द्वेधा कृत्वा वामहस्ते दक्षिणं पुरतश्चालयन्घ- र्षणेन गुणौ कुर्वन्नावेष्टयेद्रज्जुमिति । त्रिगुणायां तु तृतीयगुणोऽप्यप्रादक्षिण्येनैव भवति । स्पष्टमेतदापस्तम्बेनोक्तम्—'यानि शुल्बानि समासं गच्छन्ति प्रसव्यं तान्यावेष्ट्य प्रदक्षिणं समस्येदथ यानि समस्यन्ते प्रदक्षिणं तानि' इति । शुल्बान्यावे- ष्टितानि सन्ति द्विगुणानीत्यर्थः ।

न यज्ञाङ्गेनाऽऽत्मानमन्यं वाऽभिपरिहराति ।

आत्मानमन्यं वाऽभिलक्षीकृत्य परिहा[३]रमर्थप्राप्तमनिष्टत्वेन तद्यज्ञाङ्गेन न परिहरे[४]ति। ततस्तु यज्ञाङ्गेन स्फ्यादिनाऽऽत्मानमन्यं वाऽत्रानुलक्षीकृत्याऽऽगच्छल्लोष्टादि न परि- हार्यम् । तथा शूर्पादिना धूमादिबाधाऽपि न परिहर्तव्या । नापि मक्षिकादिनिवारणम् । आत्मना सह चरितो जीव एवान्यो गृह्यते । तेन यज्ञपात्रैर्यज्ञपात्राणां मक्षिकादि- वारणे न दोषः । विस्मरणेन परिहारे कृते सर्वप्रायश्चित्तं कुर्यात् ।

कर्तॄणां नियमान्तरमाह—

न विहारादुपपर्यावर्तेते[६] ।

न विहारादपाच्छिद्य वर्तेत इत्येकं वाक्यं, नापच्छिद्यन्ते (ते) । तदुक्तमाश्वलायनेन- विहारादव्यावृत्तिः । द्वितीयं वाक्यं, ल्यब्लोपे पञ्चमी । विहारं प्राप्य न पर्यावर्तेते, आत्मानं परीत्य नाऽऽवर्तेते । स्पष्टमुक्तं बौधायनेन—'यदि प्राङ्दक्षिणेनांसेन— पर्यावर्तेते यदि प्रत्यङ्सव्येन' इति । तथा चाऽऽत्मानं मध्ये कृत्वा न पर्यावर्तनीय- मित्यर्थः ।

---

१ ट. °गुणिना° । २ ख. छ. ट. °वेत्र वे° । ३ ख. °हारार्थं प्रा° । छ. ट. °हारार्थं° । ४ क. ख. ग. च. ठ. °रन्ति । त° । ५ ख. ट. °त्मस° । ६ क. ख. ग. च. छ. ट. ठ. °र्तन्ते । न । ७ क. ख. ग. च. छ. ठ. वर्तन्त । ८ क. ख. ग. च. ठ. °र्तन्ते, आ° । ९ ख. ग. च. ठ. °र्तन्ते । स्प° ।

संचारे विशेषान्तरमाह—

अन्तराणि यज्ञाङ्गानि बाह्याः कर्तारः ।

अन्तराणि यज्ञाङ्गानि केषामित्याकाङ्क्षायामग्नीनां प्राधान्यादुपस्थितिस्तेषामन्तराणि । अन्तरशब्दः परिधानवाची । ततस्तु परिधानमिव संलग्नानि समीपस्थानीत्यर्थः । बाह्या बहिर्भवा बाह्याः । केभ्य इत्यपेक्षायां यज्ञाङ्गेभ्य इत्युक्तमर्थाद्यतस्तान्यन्तराणि समीपस्थानि । तेषामग्नीनां च मध्ये कर्तृभिर्न संचरणीयमित्यर्थः । कर्तृणां मध्ये यजमान आन्तरः । ततः पत्न्येव बाह्या । ताभ्यामध्वर्युरेव, तेभ्यो ब्रह्मैव, ततो होतैव, तत उद्गाता । एवमन्येऽपि ज्ञेयाः ।

प्राचीनावीती पित्र्याणि करोति ।

अत्र स्मृत्योपवीतं दैवे पित्र्ये प्राचीनावीतं प्राप्तमेव । तदुक्तं कात्यायनेन—'उपवीतिनः कुर्वन्ति स्मृतेः' इति, 'विपर्यस्य पित्र्येषु' इति च । पुरुषसंस्कारत्वेन प्राप्तस्यायमनुवादः ।[1] किमर्थम्, उत्तरार्थमित्युच्यते ।

एवमुत्सर्गे स्मार्ते च प्राप्तेऽपवादमाह—

यज्ञोपवीती दर्शपूर्णमासयोरग्निहोत्रे च ।

पित्र्याणि कर्माणीत्यप्यनुवर्तते । दर्शपूर्णमासयोरग्निहोत्रे च यानि पित्र्याणि कर्माणि तानि यज्ञोपवीत्येव कुर्यात् । अयमभिप्रायः—उपवीतीति वक्तव्ये यज्ञोपवीतीति स्वाध्यायब्राह्मणप्रत्यभिज्ञानार्थम् । तत्र हि 'यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा' इति विहिते पुनरुपव्ययत इति विधिः प्राप्ते पुनरारम्भो नियमायेति दर्शपूर्णमासयोः पित्र्येऽपि कर्मणि यज्ञोपवीत्येव कुर्यात् । कुतः । यत एतदुपव्ययत इति नियम्यते । न च प्राचीनावीतं पितृणामिति विधिकल्पकमिति वाच्यम् । स्मृत्या प्राप्तस्य कर्मान्तरेऽत्र स्तुत्यर्थत्वेनानुवादसंभवात् । निवीताधिकरणे व्युत्पादितमाचार्यैरेतत् । तथाऽग्निहोत्रेस्याप्रत्यभिज्ञानात्कर्ममात्रे प्राप्तस्मार्तयज्ञोपवीतित्वानुवादोऽयमिति[3] तत्राऽऽचार्यस्याभिमतं, किंतु मृताग्निहोत्रसजातीयं दैवमग्निहोत्रं यज्ञोपवीती दोहयतीति दोहधर्मेण बुद्धिस्थं तत्र यज्ञोपवीतित्वविधिरित्युपरिसमिद्धारणवदित्युपदेशः । तेन स्मृत्याऽग्निहोत्र उपवीतित्वप्राप्तावपि यज्ञोपवीतित्वविधानं पित्र्येऽपि नियमार्थमिति । तदपि यज्ञोपवीतीति यज्ञग्रहणेनाधिकेन मृताग्निहोत्रे यज्ञोपवीतिशब्दप्रत्यभिज्ञानार्थम् ।

अनियमोऽन्यत्र ।

दर्शपूर्णमासाग्निहोत्रेभ्योऽन्येषु कर्मसु पित्र्येषु यज्ञोपवीतीत्यनियमो नियमो नास्ति ।

---

१ क. ख. ग. च. ठ. °त्वेन प्रा° । २ छ. ट. °त्रस्य प्र° । ३ च. प्राप्ते स्मा° ।

यथा स्मृत्या प्राप्तं तथैव। श्रुत्योर्नियामिकयोः कल्पितयोरत्र प्राप्त्या दर्शपूर्णमास-दैवाग्निहोत्रेभ्योऽन्यत्र प्राप्त्यभावादित्यर्थः।

प्रत्येकं दर्शपूर्णमासलक्षणकालस्योत्पत्तिवाक्ये संबन्धावगमादेकैकमेवाऽऽग्नेयादिक-मेकैकस्मिन्कालेऽनुष्ठेयमित्याशङ्क्याऽऽह—

चोदनासंयोगात्प्रधानान्येककालानि।

अनेकप्रधानोपकारकाङ्गविधिचिन्तेयम्। सामान्यत एकस्मिन्फले निमित्ते वोद्देश्ये चोदनयाऽधिकारविधिना दर्शपूर्णमासाभ्यां यजेतेत्यनेन, तथाऽमावास्यायाममावास्यया यजेत पौर्णमास्यां पौर्णमास्येति च कालद्वये समुदायकरणात्प्रधानानि सन्ति एकः कालोऽनुष्ठाने येषां तानि तथा भवितुमर्हन्ति। संज्ञया वा प्रकृतपरामर्शेनैत-येष्ट्या यजत इति वा यानि क्रोडीकृत्य विधीयन्ते तानि प्रधानानि सहचोदितत्वा-देककालानीतरेतरव्यपेक्षाण्येव सहभावं गच्छन्ति। न हि तान्यसमुदितान्येकप्रयोज-नानि भवन्ति। समुदायश्चैककालनिबन्धन इति नैकैकत्र दर्शे पूर्णमासे वैकैकमित्यु-त्सर्गः।

युगपत्कर्तव्येषु कर्मसु सत्सु—

तेषां विभवन्ति तन्त्रमङ्गान्यविभवन्त्यावर्तन्ते।

तेषामेककालानां तन्त्रं सकृदङ्गानि सकृदनुष्ठितान्येवाङ्गानि। किमविशेषेण नेत्याह— विभवन्ति समर्थानि, यानि युगपदनुष्ठितानि सर्वोपकारे समर्थानि तान्येव तन्त्रं नान्यानि। पूर्वसूत्रेऽपि कालोऽङ्गं तन्त्रेण न प्रत्येकं चेति चिन्ता। तथाऽपि तस्या-विधेयत्वेन सकृदनुष्ठानायोगात्पृथक्चिन्ता। कर्मणामङ्गैरुपकारो द्वेधाऽदृष्टो दृष्टश्चेति। तत्रादृष्टार्थानां प्रयाजादीनां दृष्टार्थानामपि वेद्यादीनामस्त्येव सामर्थ्यं, याज्यापुरोनुवा-क्यादीनामसामर्थ्यादावृत्तिः। कुतः। चोदनासंयोगादित्यनुवर्तते। चोदनयोत्पत्ति-वाक्ये कथंभावाकाङ्क्षादिभिः सहैव योगाद्युगपदेवाङ्गैः सह संबन्धात्सर्वेऽपि यागा यद्यपि पृथक्पृथक्कथंभावाकाङ्क्षिणस्तथाऽपि युगपदेव चाङ्गैः संबध्यन्ते सकृच्छ्रुतैरङ्गैर्न पौर्वापर्येण सकृच्छ्रुतान्यङ्गान्यपि किं भाव्यमिति सहैव साकाङ्क्षाणि युगपदेव प्रधानैः संबध्यन्ते युगपदेवान्वयं गच्छन्तीति नाऽऽवृत्त्या संबध्यन्ते। अत्र चोदनासंयोगादित्य-स्यान्या व्याख्या-चोदना श्रुतिस्तया संयोगात्संहत्य योगेन तद्गणनात्संख्यानाद्दर्शपूर्णमास-प्रधानानामङ्गानां च तया परिगणितत्वात्तन्त्रमेव युक्तम्। तथाहि, श्रूयते(श्रुतौ) हि—ता एकविंशतिराहुतयो द्वावाघारौ पञ्च प्रयाजा द्वावाज्यभागावाग्नेयः पुरोडाशस्तद्दशाग्नीषो-

---

१ ट. तथाऽपि। २ क. ग. च. ठ. °त्वमत्रा°। ३ क. ख. ग. च. ठ. °ङ्क्षिभिः। ४ ट. °द्वयानां दर्श°।

मीय उपांशुयाजोऽग्नीषोमीयः पुरोडाशोऽग्निः स्विष्टकृदिडा त्रयोऽनूयाजाः सूक्तवाकः शंयोर्वाकश्चाथ यदेवादः पत्नीसंयाजेषु संप्रगृह्णाति समिष्टयजुश्चेत्याहुतीनामेकविंशति-संख्या दृश्यते, सा तन्त्रानुष्ठाने भवति नान्यथेति।

एकया चोदनया सह भावेऽपि क्वचिदपवादमाह—

नानाकालेषु पृथक्।

नानाकाला विहिता येषां कर्मणां तानि तथा तेषु प्रत्येककालप्रधानं पृथक्पुनः पुनर-ङ्गानि कर्तव्यानि। पौर्णमास्यां कृतानामङ्गानामबुद्धिस्थत्वादसहभावात्पौर्वापर्यविपर्ययाच्च दर्शेऽपि सहैव पौर्वापर्येण पृथगनुष्ठेयान्यङ्गानीति भावः। यद्यपि यौगपद्यमधिकारविधिना प्रधानानां सहभावविधिस्तथाऽपि विशेषश्रुत्या भिन्नकालानामेव साधनत्वमित्यर्थः। यथा दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति सहभावेऽपि पौर्णमास्यां पौर्णमास्या यजतेऽ-मावास्यायाममावास्ययेति नानाकालतां (ता)। बहुवचनेन च तथैव चातुर्मास्यैर्यजत इति राजसूयेन यजेतेति विधिषु कालभेदो ज्ञेयः। तत्राङ्गानामावृत्तिरपि भवतीति पौर्णमासी-मात्राहुतीनामेवैकविंशतिसंख्याविधानादित्यर्थः।

ननु दर्शपूर्णमासादिप्रधानानामेव कालदेशकर्तृविधिरमावास्यायाममावास्ययेत्या-दिना समे दर्शपूर्णमासाभ्यां यजेतेत्येका श्रुतिः, प्राचीनप्रवणे दर्शपूर्णमासाभ्यामित्यन्या, तथा दर्शपूर्णमासयोर्यज्ञक्रतोश्चत्वार ऋत्विज इति, अर्थायार्थायाग्निप्रणयनं तथा' उत्त-रस्यां वेद्यामन्यानि हवींषि सादयति। दक्षिणायां मारुतीम्' इति प्रधानमात्रस्य दक्षिणोत्तराभ्योः प्रचारो विहितः। एवं चाङ्गानामन्यैः कालादिभिर्भवितव्यमि-त्याशङ्क्याऽऽह—

यः प्रधानस्य कालः सोऽङ्गानां[1] स देशः स कर्ता सोऽग्निः।

अत्र दर्शपूर्णमासादिशब्दैर्विहिताः कालादयो नाङ्गैः संबध्यन्ते, नाङ्गानां दर्शादि-शब्दवाच्यता, तस्मादङ्गानां कालादिभेद इति प्राप्त इदं सूत्रम्। चोदनादिभि-प्रयोगविधिभिः साङ्गं प्रधानं युगपत्कुर्यादित्येतैः साङ्गस्य प्रयोगस्य संबन्धित्वेन कालादिसंबन्धविधानात्प्रयोगश्च साङ्गस्येति कालादि समानम्। एवं चार्थायार्थायाग्नि-प्रणयनम्। तथाऽपि प्रधानाङ्गं देवतापरिग्रहे सति तदर्थमग्न्यन्वाधाने कृते सति।[3] तदग्निप्रणयनं सकृत्तन्त्रेण साङ्गप्रधानोपकारकं भवति। विकृतिष्वग्न्यन्वाधानात्पूर्व-तनेषु होमेषु पृथक्पृथगेव प्रणयनम्। पश्चादौ चान्वारम्भणीयादिभिर्यज्ञारम्भार्थत्वेन विधानान्न पुनः प्रणयनम्। दर्शपूर्णमासचातुर्मास्यान्वारम्भणीयाया अर्थवादेनादृष्टार्थ-

१ क. ग. घ. छ. ठ. °ङ्गुपश्चे°। २ क. ग. च. ठ. 'थक्च पुनः। ३ ट. °नं च कृतं तन्त्रे°।

त्वावगमात्तथा सारस्वतहोमयोः पृथक्प्रणयनम् । एवं च सति यौगपद्ये तन्त्रमङ्गानां सिद्धम् । कालदेशकर्त्रग्निभेदे प्रधानानां विद्यमाने पृथगङ्गानुष्ठानमपि सिद्धम् ।

दर्शपूर्णमासाङ्गतया पात्राण्युत्पादितानि तानि नान्यस्य प्रयोगस्याङ्गं भवितुमर्हन्ति । ततः प्रयोगान्तरार्थमन्यान्येवमन्येष्वपि प्रयोगेष्विति प्राप्त आह—

आधानप्रभृति यावज्जीवं पात्राणि धार्यन्ते ।

स्फ्यादिपात्राणि आधानप्रभृति यावज्जीवं धार्यन्ते । तैरेव यावज्जीवं प्रयोगः कार्यः । न हि दर्शपूर्णमासप्रकरणे तेषामुत्पत्तिर्विधीयतेऽपि तु सर्वार्थमनारभ्याधीतविधिभिः प्रकरणाद्बहिरेव लौकिकेन कर्मणाऽऽधानेनाग्नीनामिव । तस्माद्धारणं नियम्यते प्रयोगान्तरार्थमुत्सर्गे वा विरामे वा धार्याण्येव । कुतः । तत्र हेतुर्जीवशब्देनोक्तो मृत एव प्रतिपत्तिविधानात्, गृहीतस्याविधिना त्यागायोगात् । देशकर्त्रोस्तु परिगृहीतत्यागः शिष्टैर्नाऽऽदृत इति तत्त्यागेऽपि न गर्हेत्याहुर्मीमांसकाः । ननु प्रतिपत्तिर्धारणं न प्रयोजयेदिति वाच्यम् । यजमानशरीरसंस्कारार्थान्यपि श्रूयन्ते । तद्यथा—पात्रे तु यजमानेन सह पात्राणि दहन्तीत्युक्त्वा यजमानस्य दक्षिणे हस्ते जुहूमुपदधातीत्यादिनाऽऽधारत्वेन शरीरस्यापि संस्कार्यत्वावगमात्पात्राणां द्वितीयया प्रतिपाद्यत्वावगमाद्वैगुण्याय धार्यन्ते । आधानप्रभृतीत्यनेन यानि दर्शपूर्णमासपशुचातुर्मास्यसोमानां पात्राण्यप्रतिपादितानि तानि सर्वाणीत्यर्थः । यावज्जीवामिति यावत्प्रतिपत्ति धार्याणि । यः पूर्वं म्रियते तेनैव पात्राणां प्रतिपत्तिः । प्रव्रजति वनमनग्निर्वा प्रतिष्ठति तदा भार्यया धार्यन्ते पात्राणि ।

ननु सकृदेव संस्कृतानामग्नीनामिव पात्राणामङ्गत्वमस्त्वित्याशङ्क्याऽऽह—

तेषां प्रतितन्त्रं संस्कारोऽभ्यावर्तते ।

आधानेनानारभ्याधीतेनोत्पादितानामग्नीनां न प्रयोगमध्य उत्पत्तिः । पात्रसंस्कारो हि प्रयोगमध्ये कृतः । स एकस्मिन्प्रयोगे कृतो न प्रयोगान्तरस्याङ्गं प्रयाजादिवदिति प्रतितन्त्रं प्रतिप्रयोगं कर्तव्यः । आधानेष्टिषु कृतोऽपि पात्रसंस्कारोऽतिदेशेनैष प्राप्त इति नाऽऽधानवत्सकृत् । पात्राणां प्रयोगमध्ये भेदनादौ प्रायश्चित्तं कृत्वा प्रतिनिधिर्ग्राह्यो योग्योऽनुपयुक्तस्य यथाशास्त्रं प्रतिपत्तिः । प्रयोगात्पूर्वमसामर्थ्ये त्वसमर्थमेव प्रयोगकालपर्यन्तं स्थापयित्वा प्रतिनिधाय तस्य शुचौ देश आहवनीये वा प्रतिपत्तिः कार्या । बौधायनीये ह्यसमर्थारण्योराहवनीये प्रतिपत्तिदर्शनात् । एतावता सूत्रसंदर्भेण सर्ववेदसर्वकर्तृसर्वकर्मसर्वाङ्गानां(णां) सामान्येन साध्यसाधनभावावेदनेन प्रयोगसामान्यस्वरूपं दर्शितं, विशेषस्तु जैमिनीयन्यायैरवगन्तव्य इति सूचितम् ।

---

१ ट. 'नमिति सि'। २ ख. ट. तान्येकस्य । ३ ग. ठ. °धिप्र° । ४ ख. छ. ट. ननु प्र° । ५ ख. हन्तीत्यु° । ६ ट. 'र्वाति' । ७ ख. च. ट. °देशत एष ।

अथ प्रयोगः । प्रयोगक्रमाधिकारास्तु न सामान्यतो व्याख्येया इति तेषां प्रयोगविशेषादेव स्पष्टा विशेषा भविष्यन्तीति फलप्रदर्शनपूर्वकं दर्शपूर्णमासप्रयोगं व्याचष्टे—सर्वकामावित्यादिना ननु तृतीयप्रश्ने सर्वनियतकर्मणां निःश्रेयसं फलं व्याख्यास्यमानमत्र व्याख्याय पश्चात्सर्वकामावित्यादिना व्याख्येयमिति चेत् । सत्यम् । यज्ञं व्याख्यास्याम इत्यारभ्य व्याख्या या कृता सा तु कर्मकाण्डमात्रविषयजैमिनीयन्यायोपबृंहणेन कृता, न चात्र जैमिनिना कर्मणां मोक्षोपायतोक्ता, येन तदुपबृंहणं क्रमप्राप्तमत्रैव स्वेन कर्तव्यं स्यात्किं तर्हि किंचिदविवेचितं नियतकर्मसाध्यं फलमस्तीत्येतावदेव जैमिनीयेऽर्थात्सिद्धं तत्तथैव दर्शपूर्णमासयोरेव ताभ्यां यावज्जीवं यजेतेति कर्मकाण्डमात्राधिकारिणं प्रत्येव व्याख्यास्यते । दर्शपूर्णमासावुपोद्घातत्वेनैव व्याख्येयावाधानादि वाऽनुष्ठानक्रमस्य मुख्यत्वात् । तस्मादत्रोपोद्घातमात्रेण दर्शपूर्णमासयोरवसर इति दर्शयितुं जैमिनीयन्यायसिद्धमेव फलमनूद्यते । ततः परमाधानादिप्रयोगे व्याख्येये बादरायणमतसिद्धं फलं मुमुक्षुं प्रकृत्य स्वतन्त्रशास्त्रसिद्धत्वेन पृथगधिकारिप्रकरणतया प्राधान्येन प्रतिज्ञातानां नियतकर्मणां प्राधान्येनैव फलं व्याख्येयमिति दर्शयितुं तत्रैव व्याख्यास्यते । यच्च काम्यप्रयोगे फलं तत्तु प्रयोगभेदेन जैमिनीयन्यायेनैव दर्शपूर्णमासयोर्दर्शयिष्यते । प्रासङ्गिकमुत्तरत्र सर्वं ज्ञेयमिति तदुत्तरत्र न व्याख्यायते । कर्मणाऽभ्युदय इत्येतत्तु निःश्रेयसफलसाधनोपयोगितयैव व्याख्यास्यत इति न क्वाप्यनवसरेण व्याख्या ।

आधानेष्टीनां विकृतिरूपत्वेन दर्शपूर्णमासविध्यन्तापेक्षायामाधानात्पूर्वं तावेवाऽऽदौ निरूपयंस्तद्विषयन्यायप्रदर्शनार्थं तयोरादौ फलसंबन्धं व्याचष्टे—

## सर्वकामौ दर्शपूर्णमासौ ।

कस्यांचिच्छाखायां श्रूयते । काम्य एव फलवत्ता जैमिनीये साधिता । न चास्मच्छाखायां दर्शपूर्णमासयोः फलं श्रूयते । न च तस्मिन्नसति कथमित्याकाङ्क्षात्मकं प्रकरणमुदेति । तथा च तौ समानविधानावित्यादि न व्याख्यातुं युक्तमिति फलमेव बुद्ध्वा पुरुषः प्रवर्तत इति तदादौ वक्तुं युक्तम् ।

शाखान्तरे हि श्रूयते—'एकस्मै वै कामायान्ये यज्ञक्रतव आरभ्यन्ते, सर्वेभ्यो वै कामेभ्यो दर्शपूर्णमासौ ' इति । तदिदं व्याख्यानतो निर्दिष्टम् । काम्यन्ते ते कामा इष्टानीति यावत् । सर्वे कामा याभ्यां साधनाभ्यां साध्यास्तौ सर्वकामौ । परस्परापेक्षाणामेव कारणता । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति प्रसिद्धं वाक्यमुपेक्षितम् ।

---

१ क. ग. घ. ठ. 'गक्रमाधि' । २ ठ. 'चिदुचितं । ३ क. ग. च. छ. ठ. यजत इति । ४ घ. 'धेनानु' ।

तत्र प्रयोगभेदोदाहरणत्वाभावः। स्वशाखायां च परमामेव काष्ठां गच्छतीत्यर्थवादेन फलकल्पनाऽपि न युक्ता श्रौते फले सति। तस्मादिदमेव फलमुदाहृत्य विचार्यते किं शाखान्तरीयमत्रोपसंहर्तव्यं फलं न वा। तत्र नोपसंहारः कर्तुं युक्तः। कुतः। दर्शपूर्णमाससंज्ञया प्रत्यभिज्ञानेऽपि फलस्यैवाविधेयत्वाद्विहितयोरेव फलानुवादेन विधानमयुक्तमतोऽभ्यासात्कर्मभेद एवेति प्राप्तेऽभिधीयते—

तौ समानविधानौ।

अत्रत्यदर्शपूर्णमासाभ्यां समानविधानौ तत्रत्ययोरत्रत्ययोश्चाभिन्नयोः समानमेकमेव फलविधानं ब्राह्मणं ययोस्तौ तथा। अयं भावः- यथा सर्वेभ्यः कामेभ्यो दर्शपूर्णमासावित्यधिकारविधिना दर्शपूर्णमासत्वेन तत्रत्यौ विहितौ तथा तत्त्वाविशेषात्तेनैव शब्देनैतावपि विहितौ। न च संनिधिर्विशेषकः। प्रत्यभिज्ञया संनिधेरपि साम्यात्। तत्राप्येतौ यदि प्रत्यभिज्ञातौ तदा कयोरसंनिधिर्भवेत्। तथा च यथोत्पत्त्यादिविधिविहितयोस्तत्रत्ययोः फलार्थं विधानमेवमनयोरपीति संतोष्टव्यम्। अन्यथा तत्रापि विहितस्य न विधिरिति तयोरपि कर्मभेदे प्राप्ते न कस्यापि कर्मणः फलवत्ता भवेत्। ययोश्च फलवत्ता न तयोरुत्पत्त्यादिविधय इत्यतिविशीर्णं कर्म नानुष्ठेयं स्यात्। न हि निष्फलमनुष्ठेयम्। न च फलवदपि द्रव्यदेवतादिसंबन्धविधुरं दर्शपूर्णमासशब्दप्रतिपाद्यं स्यादरूपत्वेन कालसंबन्धानवगमात्। ययोश्चावगतस्तयोरफलत्वादप्राप्ते शास्त्रमर्थवदिति फलोद्देशेन पुनर्विधानं युक्तमिति। तदुक्तं जैमिनिना—'संनिधौ त्वविभागेन फलार्थेन पुनः श्रुतिः' इति। प्रत्यभिज्ञया संनिधापिते कर्मणि भेदाभावेन तदेव फलार्थं पुनः श्रुत्या विधीयत इत्यर्थः। एतेन दर्शपूर्णमासप्रकरणं सर्ववेदसर्वशाखास्वेकमेवेत्युक्तम्। तदिदमाहुः—'सर्वशाखाप्रत्ययमेकं कर्म' इति। यदि यादृशं विहितं तादृशमेव चेत्पुनर्विधीयेत तदा भवेदभ्यासात्कर्मभेदोऽप्राप्तेंऽशे विधानान्न सा विधिपुनःश्रुतिरिति।

ननु प्रतिशाखं विविधगुणभेदेन शाखान्तरीयानुष्ठाने प्रायश्चित्तश्रवणाच्च कर्मभेदे प्रत्यभिज्ञा भ्रान्तेतिशङ्कानिरासार्थमाह—

निर्देशाद्व्यवतिष्ठेते।

समानविधानावपि गुणादिभेदेन यस्यां शाखायां निर्दिष्टौ तेषां शाखिनां तावेव व्यवस्थितौ च व्यवस्थितविकल्पप्राप्तौ विहिताविति यावत्। तेन तं प्रति तथैव निर्दिष्टविशेषणैव व्यवस्थितौ ज्ञेयौ। तथा प्रयोगभेदमात्रं स्यान्न तु कर्मभेदः। यथा नीले घटे संकेतग्राही पीतेऽपि घटोऽयमिति प्रत्येत्येवं स्वशाखीयकिंचिद्गुणविशिष्टयोर्दर्शपूर्णमासत्वेनावगतौ शाखान्तरेऽपि गुणान्तरविशिष्टावपि दर्शपूर्णमासावेकत्वेनैव गृह्णातीति

१ क. गै. च. ठ. °दिदं वास्तव°। २ क. ग. च. छ. ठ. °स्यापि श्रेयस्त्वाद्वि°।

सर्वसाक्षिकम् । न केवलशाखाभेद एव प्रयोगभेदः किंत्वेकस्यामपि नानागोत्राणां तनूनपान्नाराशंसभेदेनोदितानुदितभेदेन चाग्निहोत्रेऽपि प्रयोगभेददर्शनात् । तस्मात्स्वशाखागुणाबाधेनैव समानविधानौ, ततो न सर्वशाखाप्रत्यभिज्ञाबाध इति भावः ।

आवृत्त्या पुनरेते सूत्रे व्याख्येये अग्रिमप्रयोगनिर्वाहाय पूर्वोक्ताङ्गतन्त्रनिर्वाहाय च । सर्वकामतया फलवत्तयाऽवगतौ स्वशाखायामुत्पत्तिविधिभिः प्रत्येकं विहितौ तदा प्रत्येकं करणत्वेनावगतौ प्रत्येकं कथंभावाकाङ्क्षिणौ तौ समानविधानौ समानानि सर्वेषां समुदाययोः प्रत्येकं विधानानि ब्राह्मणानि ययोस्तौ तथा । तथा चाङ्गविधानानि समानानि न स्वरूपविधानानि संभवन्ति भिन्नकर्मत्वात् । तथा च संनिधिसमाख्ये अनादृत्य विहिता असंनिहिताश्च पदार्था अङ्गत्वेन गृह्यन्त इत्यर्थः । किमविशेषान्नेत्याह— निर्देशो विशेषावेदकं प्रमाणं वचनमिति यावत्तस्मादेव व्यवस्थितावित्यर्थः । तत्र स्फ्यादिद्रव्याणां संस्कारकर्मणां च योग्यतालक्षणेन सामर्थ्येन तेषां व्यवस्था, तथा मन्त्राणामपि, केषांचित्प्रमाणान्तरेणापि । आरादुपकारिणां तु सर्वत्र समानैवाङ्गता । वैमृधप्रभृतीनां तु वचनाद्व्यवस्थेति बोद्धव्यम् । प्रयोगे नैव स्पष्टयिष्यते । अङ्गिनोर्व्यवस्थाभिधानेनाङ्गानामेव व्यवस्थोक्ता । तेन कानिचिदङ्गानि प्रधानेषु साक्षादुपकुर्वन्ति कानिचिदङ्गद्वारेत्यपि व्यवस्था संगृहीतेति । तेन मन्त्राणां लिङ्गेन विनियुक्तानां साक्षात्प्रधानाङ्गत्वाभावेऽपि अन्वाधानाद्यङ्गत्वेनापि व्यवस्थितानां समानविधानावित्यनेन न त्यागः । यानि साक्षादङ्गानि यानि च परम्परया तानि सर्वाण्यपि विधानशब्देन संगृहीतानि ।

**ताभ्यां यावज्जीवं यजते त्रिंशतं वा वर्षाणि ।**

जीवनं निमित्तं प्राणधारणं तन्न कर्माङ्गं भवतीति यावज्जीववाक्येन न काम्ययोः कालविधिः किंतु निमित्तान्तरे तौ विधीयेते । त्रिंशदादिकालसंबन्धेनापि नान्यौ भिन्नौ तत्त्वेन प्रत्यभिज्ञानादित्याह—ताभ्यामिति । यौ सर्वकामार्थौ ताभ्यामिति प्रत्यभिज्ञा जातिनिमित्ता न व्यक्तिनिमित्ता । एकस्यां व्यक्तौ निमित्तार्थत्वं कामार्थत्वं च न सिध्यति । उद्देश्यद्वये प्रयोगद्वयावश्यं भावयेत् । तथा च निमित्तेनोपलक्षिते काले प्रयोगो नित्यस्तस्यैव शाखान्तरे कालान्तरविधानं त्रिंशतमिति तत्रैवाऽऽपस्तम्बेन जीर्णो वा विरमेदिति कालान्तरं विहितं, काम्ये त्वैहिकफलाय यावत्फलप्राप्त्यनुष्ठानं, पारलौकिकं तु सकृदभ्यासाश्रवणात् । तथा च नैतौ प्रकृतिविकृतिभावं भजेते द्विविधावपि यौ पुनर्द्वितीयप्रश्ने काम्यौ व्याख्यायेते गुणवैकृतौ च ।

**एकस्मिन्प्रयोगे सर्वान्कामान्कामयेत प्रयोगपृथक्त्वे वैकैकम् ।**

यथा पशुकामोऽनेकान्पशूनेकस्मिन्प्रयोगे कामयत एवं सर्वान्कामान्कामयेतेति पूर्व-

पक्षयित्वोच्यते प्रयोगपृथक्त्वे वैकैकम् । वेति पूर्वपक्षो व्यावर्तते । कामानां प्राधान्येन प्रतिप्रधानमङ्गावृत्तिर्न्याय्या । न च पशुदृष्टान्त एकजात्या क्रोडीकृतानामेकफलत्वम् । न चात्र तथा । उद्दिश्यमानानां फलानां न स्वरूपेण फलत्वं किं तु काम्यमानत्वेन । न सर्वस्य सर्वं काम्यं तथा वेदमिदमिति बुद्धया ग्राह्यं तत्रैकया क्रोडीकर्तुं शक्यत इति प्रतिप्रधानमङ्गावृत्तिः । तस्माद्वाक्यभेदोऽङ्गीकार्यः । प्रजाकामो दर्शपूर्णमासाभ्यां यजेत पशुकाम इत्यादि ।

## पूर्वा पौर्णमास्युत्तराऽमावास्या ।

अत्र दर्शपूर्णमासौ निर्दिष्टौ दर्शपूर्वौ सर्वत्र तथा पाठक्रमेणैवोभयोरनुष्ठाने प्राप्त इदं सूत्रम् । तत्रायमर्थः—अल्पाच्तरमिति दर्शस्य पूर्वनिपातेऽपि पूर्वा पौर्णमास्येवाऽऽरम्भणीयाप्रकरणे सारस्वतहोमार्थवादे 'य एनयोरनुलोमं च प्रतिलोमं च विद्यादित्यमावास्याया ऊर्ध्वं तदनुलोमं पौर्णमास्यै प्रतीचीनं तत्प्रतिलोमम्' इत्युक्त्वा 'यत्पौर्णमासीं पूर्वामालभेत प्रतिलोममेनावालभेत' इत्यादिना पूर्णमासस्य पूर्वानुष्ठाने दोषोऽभिधीयते । तद्दोषपरिहाराय सारस्वतहोमयोर्विधिरिति कृत्वा पूर्वा पौर्णमासी तथैवोत्तराऽमावास्यैवात्र बहूनि लिङ्गान्यनुमन्त्रणसूक्तवाकदेवतायाज्यादीनीति भावः ।

ननु दर्शपूर्णमासशब्दौ कालपरौ कथं सर्वकामौ दर्शपूर्णमासावित्यादिनिर्देश इत्यत आह—

## पौर्णमास्यां पौर्णमास्या यजतेऽमावास्यायाममावास्यया ।

अत्र सप्तमीनिर्दिष्टोऽधिकरणं कालस्तृतीयानिर्दिष्टौ न कालौ, तयोरधिकरणत्वेनैव साधनत्वेऽसति करणत्वायोगात् । तस्माद्यागनामधेये ।

तथोक्तं—' विधाने वाऽनुवादे वा यागः करणमिष्यते ।
तत्समीपे तृतीयान्तं तद्वाचित्वं न मुञ्चति' ॥ इति ।

तस्मात्पौर्णमास्यमावास्याकालयोः क्रियमाणत्वात्कर्मसमुदायावपि तन्नामकौ । अनेन च फलकरणस्यैकत्वेऽपि तस्य कालभेदात्प्रयोगभेदेन कालनिमित्तकरणावयवकर्मसमुदायवाचकत्वेन द्विवचनमुपपद्यतेऽग्नीषोमयोरिव दर्शपूर्णमासयोरेते वाक्ये समुदायद्वयानुवादेनाऽऽग्नेयाद्युत्पत्तिवाक्यविहितकालानन्यत्वेऽप्येकैकस्मिन्समुदाय एकैक एव

---

१ क. °मिति । २ ख. ट. दोषमभिधीय त° । ३ ख. ट. तथोत्त' । ४ ट. 'ष्टौ यागौ न । ५ क. ग. च. छ. ठ. 'धने स° । ६ ख.छ. ठ. °यान्तस्तद्वा' । ७ क. ख. ग. च. ठ. °कालनान्य° । ट. °कालजन्य° ।

कालोऽङ्गं प्रयोगयोरिति विभक्तः । अत एवोक्तम्—चोदनासंयोगादित्यादि । समुदाये च विद्वद्वाक्यावगतौ य एवं विद्वानमावास्यां यजते य एवं विद्वान्पौर्णमासीं यजत इति सूत्रवाक्ये पाठानुसारेण नत्वनुष्ठानानुसारेण पठित एकैकस्मिन्समुदायो न । एकवचनेन न समुदितानामेव संज्ञाकरणं, किंतूत्पत्तिवाक्यावगतपरस्परसंबन्धानिरपेक्षाग्नेयत्वाष्टाकपालत्वादिवदेकैकस्यैव प्रत्येकं संज्ञा पर्यवस्यति । तेनाग्नीषोमीयाकरणपक्षेऽपि क्रियमाणयागयोरेवाऽऽग्नेयोपांशुयाजयोरेव संज्ञेति सिध्यति । ततस्तु काम्यदर्शपूर्णमासयोरप्यग्रे प्रदर्श्यमानयोरुपांशुयाजाभावेऽपि क्वचिद्द्ध्नो भावेऽपि क्वचिद्गुणान्तरसंयोगे संज्ञा न हीयते । तत्राप्युत्पत्तिवाक्ये कालविधानात् । तद्यथा दाक्षायणयज्ञे पूर्णमासे संनयेन्मैत्रावरुण्याऽऽमिक्षयाऽमावास्यायां यजेतेति शास्त्रान्तरे यत्र कौण्डपायिनामयने कर्मणि मासं दर्शपूर्णमासाभ्यां यजेतेति तत्र गौणी संज्ञा[१] । अविधिरेतेषां मखः क्रतुसमूह इति संज्ञा मुख्यास्तदभावे[२] शब्दमात्रम् । यत्र पश्चात्संज्ञासबन्धादन्यधर्मलाभस्तत्र गौणी । यथाऽग्निहोत्रसंज्ञा मुख्या यदग्नये च प्रजापतये च सायं जुहोतीत्युत्पत्तिवाक्येऽग्नेर्दर्शनान्मुख्या । कौण्डपायिनामयने कर्मणि मासमग्निहोत्रं जुहोतीति कालविधौ नाग्निर्देवता विधानमिति गौणी । काम्यदर्शपूर्णमासयोर्नित्यदर्शपूर्णमासयोरपि मुख्यैव संज्ञा, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति कस्यांचिच्छाखायां विधानं साङ्गयोरस्ति । यत्रापि यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेत्यत्रापि तथा कालविशिष्टाश्चोत्पत्तिविधय उभयत्रापि सर्वकामावित्यत्र तु फलवाक्यमनारभ्याधीतम् ।

पौर्णमास्यां पौर्णमास्येत्यादि यदुक्तं तत्र कोऽयं पौर्णमासी नाम यागोऽमावास्या नामेत्यपेक्षायां नामद्वयोपात्तान्विविच्य प्रधानयागान्दर्शयति—

**आग्नेयोऽष्टाकपाल उपांशुयाजश्चाग्नीषोमीयो वैष्णवः प्राजापत्यो वाऽग्नीषोमीय[३]श्चैकादशकपालः पौर्णमास्यां प्रधानानि ।**

प्रधानानीति बहुवचनेन कर्मणां प्रधानभूतानां भेद उक्तः । प्रधानानीत्यनुवर्ततेऽग्रिमेऽपि सूत्रे । तत्रापि कर्मभेद एव । अग्नीषोमीयो यद्यपि पञ्चमप्रपाठके समाम्नातोऽथ षष्ठप्रपाठक आग्नेयस्तथाऽपि तं(?) याज्यादिहौत्रानुष्ठानकाले[४] तु स्मारकत्वात्प्राबल्यं तत्क्रमेण क्रम इति जैमिनीयैः साधितं ज्ञेयम् ।

**नासोमयाजिनो ब्राह्मणस्याग्नीषोमीयः पुरोडाशो विद्यत इत्येकेषामाग्नेयोऽष्टाकपाल ऐन्द्राग्न एका-**

---

१ क. ख. ग. च. ठ. °ज्ञा इ° । २ क. ख. ग. च. ठ. °षे यु° । ३ क. ख. ग. च. °य एका° । ४ ट. °लेऽनुस्मा° ।

दशकपालो द्वादशकपालो वाऽमावास्याया-
मसंनयत आग्नेयः सांनाय्यं च संनयतः।

अत्र 'आग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति' इति वाक्य-विहितस्योभयत्रोपादानम्। अत्रोत्पत्तिवाक्ये यजतिर्न श्रूयते तथाऽपि साऽस्य देव-तेत्यधिकारेऽग्नेर्ढक्प्रत्ययो विधीयते। अष्टाकपाल इति त्वष्टसु कपालेषु संस्कृतः। संस्कृतं भक्षा इति सूत्रेणाण्प्रत्यये सति तस्य लुकि सति निष्पन्नस्तयोः सामानाधिकरण्येन द्रव्यमष्टाकपालमग्निदेवतासंबन्धीति गम्यते। यद्यप्यत्र द्वयोर्विशेष्यं नोक्तं तथाऽपि पुरोडाशः स इति वाक्यशेषादवगम्यते 'तेऽपश्यन्पुरोडाशं कूर्मं भूतम्' इति। पुरो-डाशशब्दश्च जातिनिमित्तको लोके पिण्डाकारे द्रव्ये सुप्रसिद्ध इति न्याय इति दर्शे-यितुं न प्रयुक्त आचार्येण। प्रकृतिद्रव्यमपि शास्त्रान्तरोक्तं व्रीहिभिर्यजेत यवैर्यजे-तेति निर्वापेनै(णै)व ज्ञास्यत इति। अन्यत्राग्नीषोमीयादिषु सर्वत्र न पुरोडाशशब्दो वाक्यशेषे तथाऽपि ज्ञास्यते। पिण्डकरणादिना पुरो डा(दा)श्यत इति व्युत्पत्तिः साधुत्वाय न यौगिकत्वाय। तेन त्रैयम्बकपुरोडाशेषु न संस्कारा इति दर्शितम्। न च देवताद्रव्ययोरन्यः संबन्धोऽस्ति यस्तस्यै[1]व द्रव्यस्य दीयमानत्वं विना। तावतैव संबन्धनिर्वाहे सति प्रक्षेपान्ततापर्यन्ततया होमकल्पने प्रमाणाभावात्। त्यागश्च दानरूपो यागः। प्रधानभूत एव होमे कल्[2]प्यमाने तस्योपसर्गत्वं प्रक्षेपस्य प्राधान्यं स्यात्। न हि द्रव्यदेवतासंबन्धः प्रक्षेपेण विना न भवतीत्यस्ति। तात्पर्य-ग्निकृतानुत्सृजतीत्यत्र तथा यागस्य दर्शनात्। तस्माद्यागमात्रेण संबन्धचरितार्थत्वाद्या-गमात्रं कल्पनीयम्। एतेन दानकल्पनाऽपि निरस्ता। यस्तु प्रक्षेपस्तस्य चतुरवत्तं जुहोतीति साक्षाद्विधिरेवास्ति। एवमन्यत्रापि यागकल्पना। उपांशुयाजमन्तरा यजतीति साक्षाद्याग एव श्रूयते। यजयाजेति सूत्रेण संज्ञायां कुत्वाभावः। चकारो विलक्षणत्वमुपांशुयाजस्याऽऽह। त्रयाणामग्नीषोमीयादीनां विकल्प इति। अग्नीषो-मीय इति वृद्धाच्छ इति देवताधिकारे। तथा वैष्णव इत्यौत्सर्गिकोऽण्। प्राजापत्य इति दित्यदित्यादित्यपत्युत्तरपदाण्ण्य इत्येता देवता मान्त्रवर्णिक्यो याज्याकाण्डात्। शाखान्तरेऽग्नीषोमावुपांशु यष्टव्यौ, अजामित्वायेत्यादिवाक्या[3]त्। यागद्रव्यं तु ध्रौवमा-ज्यम्। 'सर्वस्मै वा एतद्यज्ञाय गृह्यते। यद्ध्रुवायामाज्यम्' इति।

तदुक्तं—'ध्रौवं साधारणं द्रव्यं देवता मान्त्रवर्णिकी' इति।

उपांशुयाज इत्यन्वर्थसंज्ञा। आग्नेययागादस्याभ्यासेन भेदोऽभ्यासो विधिपुनश्श्रुतिर्गु-णेन देवतो[4]लक्षणेन द्रव्यलक्षणेनै[5] वोत्तरस्मादपि तथैवं सर्वेष्वप्युत्तरेषु ज्ञेयम्। आग्नेयस्य

१ ट. °स्यै द्र°। २ ख. छ. ट. कल्पमा°। ३. क. ग. च. छ. ठ. °वयाद्याज्यद्र°। ट. °क्याद्याजिद्र°। ४ क. ग. त. छ. ट. ठ. °ताद्र°। ५ क. °न चोत्त°।

परस्परभेदः कालभेदात्। 'अग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्' इति द्रव्यदेवतासंबन्धानुवादाद्यागः पूर्ववदेव कल्पितः। 'आग्नेयो वै ब्राह्मणोऽग्नीषोमीयेनेष्ट्वा सौम्यो भवति' इति शाखान्तरीयो विशिष्टाधिकरणो[1] विधिर्विकल्पकोऽस्माकं क्षत्रियवैश्ययोस्तु नित्य एवाग्नीषोमीयः। संनयदसंनयतोर्व्यवस्थया सांनाय्यैन्द्राग्नयोर्विकल्प इत्यर्थः। ऐन्द्राग्नपक्षे यागद्वयममावास्यायाम्। सांनाय्यं चैन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायामिति यागद्वयं, तद्द्रव्या समुदितं सानाय्यम्। निर्वचनमपि 'यत्समनयन्तत्सांनाय्यस्य सांनाय्यत्वम्' इति। तत्तु सोमयाज्यसोमयाजिनोरपि। 'नासोमयाजी संनयेत्' इति, कापेयाः संनयेरन्निति च वक्ष्यमाणत्वात्तत्र यागत्रयम्।

तदङ्गमितरे होमाः।

पूर्वं सर्वकामौ दर्शपूर्णमासाविति शाखान्तरीयमधिकारविधिं प्रदर्श्य तस्य दर्शपूर्णमासाभ्यां सर्वान्कामान्भावयेदिति[2] वाक्यार्थं मत्वा कथमिति भावनायामङ्गाकाङ्क्षिण्यां प्रत्येकोत्पन्नत्वेन सर्वाकाङ्क्षानिवृत्त्यर्थं तौ समानविधानावित्यनेन श्रुत्यादिप्रमाणैरसंनिधिमनादृत्य[3] कथंभावाकाङ्क्षितत्वेन गृहीतैः पदार्थैः प्राकरणिकैरुपकृत्येत्युक्त्वा दृष्टार्थाङ्गानामसाधारण्येन प्राप्तेऽदृष्टोपकाराभावेऽदृष्टकल्पनाप्रसङ्गेन[4] प्रश्ने तृतीये विचारयिष्यति। निर्देशादित्यनेन च प्रकरणे व्यवस्थाभावं परिहृत्य प्रयोगभेदेऽपि न तयोः शब्दान्तरादिभिर्भेदोऽस्तीत्येवं ताभ्यामित्यनेन पूर्वं दर्शप्रयोगभेदमुक्त्वा समुदायद्वित्वोपात्तसमुदायनामभ्यामनुष्ठानक्रममुक्त्वोत्पत्तिकालोपाधिकृतनामभ्यां समुदायानुवादेन द्वित्वसंख्याममावास्यायाममावास्यया यजेत इत्यादिनोपपाद्योत्पत्त्यधीनस्वरूपौ ताविति द्रव्यदेवतात्मभ्यां निरूपितरूपयागानां(णां) कालद्वयसंबन्धेन न्यायापेक्षवाक्यप्रतिपाद्यानि स्वरूपाण्युक्त्वा परिशेषसिद्धस्वरूपेण कथंभावापेक्षितोपकारकाणि साकाङ्क्षत्वेनान्वययोग्यानि दर्शयत्यनेन सूत्रेण। तेषां कालसंबन्धेन प्राप्तनाम्ना[5] समुदायद्वयेन फलाय विधीयमानानामत एव कथंभावसाकाङ्क्षिणामर्थात्तेभ्यः कालफलसंबन्धिभ्योऽन्येऽतो निष्फलाः पदार्था विधिविषयीकृताः परम्परयाऽपि भाव्यमिष्टमपेक्षमाणाः प्रधानानामङ्गं भवन्तीत्यर्थः। शेषोऽङ्गमित्यनर्थान्तरम्[6]। इदमपेक्ष्योक्तं तौ समानविधानौ निर्देशाद्व्यतिष्ठेते इति। तेषां यागानां फलवतामितरे भिन्नाः संनिहिताः[7] पदार्था अफला जातिद्रव्यगुणक्रियात्मका अङ्गम्।

'दृष्टादृष्टोभयार्थत्वात्त्रिधाऽङ्गानि प्रचक्षते।
दृष्टार्थं तु चतुर्धा स्याज्जातिद्रव्यगुणक्रियाः'॥ इति।

---

१ ख. ट. °धिकारिणो। २ ट. °मान्कामये°। ३ क. ग. च. ट. °नावृत्य। ४ क. प्राप्तेनास°। ग. प्राप्तं न स°। च. ठ. प्राप्तानां स°। ५ ख. °नाम्नी स°। ६ क. ग. च. छ. ट. ठ. °त्यर्था°। ७ च. छ. ट. °हितार्थाः प°।

फलवत्संनिधावफलं तदङ्गमिति च न्यायात् । जातिर्व्रीह्यादिः । द्रव्यं स्फ्यादि । गुणो वैकङ्कतत्वादिः । क्रिया धात्वर्थरूपाः । तेषां मध्ये जात्यादीनां संस्कारकर्मणां च स्पष्टदृष्टोपकारकत्वेन श्रुत्यादिप्रमाणैश्च स्पष्टमङ्गत्वम् । प्रयाजादियागानामपि परस्परमभ्यासाद्भेदः प्रधानयागेभ्यश्च ते भिन्ना एवाफलाः सन्तो हि फलवतामङ्गम् । दर्विहोमाश्च शब्दान्तरादेव भिन्नास्तेऽपीतर इत्यनेनैवाङ्गतां गताः पुनर्ग्रहणं होमा इति यत्तेन चतुरवत्तं जुहोतीत्यादिना प्राप्तास्तेषां यागादविवेकमाशङ्क्य निरस्यति वषट्कारसाध्यत्वान्न तैर्भिन्नं दानमस्तीति यागान्तर्गत्याशङ्का शब्दान्तरात्सा निरस्ता । यागेभ्यो यजतिचोदितेभ्यो होमा जुहोतिचोदिता भिन्नाः प्रक्षेपमात्ररूपा इति तेषां भेदस्तूपपादित एव न विस्मरणीयो यागद्रव्यप्रतिपत्तिरूपत्वेन । एवं च दर्शपूर्णमासयोः फलप्रकरणयागस्वरूपभेदाङ्गानि निर्णीतानि ।

अथ प्रयोगो वक्तव्यः । तत्र प्रयोगाङ्गभूतदर्शपूर्णमासाख्यकालस्य दिनद्वयात्मकस्य विभागेन व्यवस्थिताङ्गतानिर्णयाय पौर्णमास्यमावास्याशब्दौ व्याख्येयौ । तत्रेदमिदानीं विचार्यते—पौर्णमास्यां पौर्णमास्या यजतेऽमावास्यायाममावस्यया यजत इति कर्मणामेकैकतिथ्यात्मकः कालोऽङ्गत्वेन विहितः पूर्वेद्युरग्निं गृह्णात्युत्तरेद्युर्यजतीति, 'पूर्वेद्युरिध्माबर्हिः करोति । यज्ञमेवाऽऽरभ्य गृहीत्वोपवसति' इति, 'यो वै देवताः पूर्वः परिगृह्णाति स एनाः श्वोभूते यजते' इतिश्रुतिभिर्द्व्यहकालताऽवगम्यते । तत्र विरोधात्संशयः । तत्रोभयदिनात्मकत्वमेकैकस्याङ्गभूतस्य कालस्य न संभवतीति निश्चितमन्यतरदहर्गौणं पूर्वमपरं वा ग्राह्यमिति संदेहे स्थिते सूत्रेण पौर्णमासीविषये तावत्पूर्वपक्षमाह—

पूर्वां पौर्णमासीमुपवसेत् ।

अन्वाधानादेरङ्गत्वात्तदेव पौर्णमासीशब्देन सामीप्येन लक्षितायां चतुर्दश्यामेव कार्यं न तु प्रधानं तथालक्षितायां प्रतिपदि कार्यमङ्गप्रधानविरोधे प्रधानं बलीय इति न्यायादिति पूर्वपक्षसूत्रार्थः । कालाध्वनोरत्यन्तसंयोग इति द्वितीयाविभक्तिरिति नाऽऽशङ्कनीयम् । उपान्वध्याङ्वस इत्युपपदविभक्तिरेव । नात्राशनाभाव उपवासः, प्रातराशे दंपती अश्नीत इति विरोधात् । तस्मादयं 'देवता उपवसन्तु मे, अहं ग्राम्यानुपवसामि' इति संकल्पो दृश्यते । तथोपवासशब्देन जायापत्योरेकवारं भोजनमेवेति धर्मे वक्ष्यमाणत्वात्प्रातराशे जायापती सर्पिर्मिश्रमश्नीत इति, तदैवाद्यैकवारं भोक्ष्यामीति संकल्पः कार्य इति । अथवा व्रतेन नियमग्रहणात्तदपेक्षया

'उपावृत्तस्तु पापेभ्यो यस्तु वासो गुणैः सह ।
उपवासः स विज्ञेयः'

इति स्मरणात्संकल्पादीनामुपवासशब्देन ग्रहणम्।

सिद्धान्तमाह—

संपूर्णा वा।

वेति पूर्वपक्षव्यावृत्तिरन्यतरद्गौणे काले कर्तव्यमिति यदुक्तं तन्नेति। कुतः। संपूर्णां पौर्णमासीमेवोपवसेत्, पञ्चदशीमित्यर्थः, पौर्णमास्यामेव। यागस्य मुख्ये काले प्रतिपदि विधानात्। 'पक्षान्ता उपवस्तव्याः पक्षादयो यष्टव्याः' इति स्मृतेः। तथा संधिमभितो यजतीतिश्रुतेः पर्वप्रतिपदोः संधिर्यागमध्य उक्तो विरुध्येत। तर्हि किमर्थमुक्तं पौर्णमास्यां यजेतेति परदिने यागो गौण एवाऽऽपद्येतेति। न। उभयदिनात्मको मुख्यः कालो यतः संधिमभितो यजतीति चन्द्रपूरणनिमित्तोपलक्षिता पौर्णमासी दिनद्वयात्मिका यागायोक्ता। संपूर्णां पूर्वदिनात्मिकां पौर्णमासीशब्दवाच्यां पूर्वामुपवसेदित्याकृष्यते पूर्वसूत्रं सर्वमपि। तथा च चन्द्रपूरणवती द्वितीयाऽपि पौर्णमासी तिथिस्तत्र यष्टव्यमित्यर्थादुक्तं भवति। गोभिलः—'यः परमो विप्रकर्षः सूर्याचन्द्रमसोः सा पौर्णमासी यः परमः संनिकर्षः साऽमावास्या'। क्षणमात्रमेव परमविप्रकर्षसंनिकर्षशब्दवाच्यमुभयत्रापि पर्वप्रतिपदोः स एव संधानं तदुभयोरपि तिथ्योः सममेवेति तिथिद्वयात्मकः कालः स एव क्षणश्चन्द्रस्य पूरणसंबन्धेनोपलक्षितः। तथा च श्रुतिः 'पूर्णो मासो येन क्षणेन भवति सः' इति। तथा पूर्णो मासश्चन्द्रमा यस्मिन्क्षणे स इत्यपि पूर्णमासस्य निर्वचनदर्शनात्। तथा च श्रुतिः(तौ) 'ऊर्ध्वं मध्यरात्रात्पौर्णमास्यां चन्द्रमाः पूर्यते' इत्यादिना क्षणस्यैव परमपूर्णत्वेनोपलक्षणत्वं परमविप्रकृष्टत्वेन च तिथ्योर्द्वयोरेवोक्तम्। परदिनात्मकत्वात्पूर्वामित्युक्तम्। तथाचायमर्थः–संपूर्णां दिनद्वयसाध्ययागाय संपूर्णां मुख्यामेव पौर्णमासीं पूर्वां पूर्वदिनात्मिकामेवोपवासाय विहितामुपवसेत्परदिनात्मिका पौर्णमासी मुख्यैव पूरणगुणयोगिनी यागकालत्वेन साक्षाद्विहिता पौर्णमास्यां यजेतेति सामर्थ्यादुक्ता। अनेन च पौर्णमासीशब्दार्थे प्रदर्शिते पूर्णमासशब्दोऽपि समानार्थत्वेन व्याख्यातो ज्ञेयः। तत्र पूर्णो मासश्चन्द्रमा यस्मिन्क्षणे तद्युक्तं तिथिद्वयं पौर्णमासी तेनोपलक्षितं तिथिद्वयं पूर्णमास इति न तद्धितोत्पत्तिः। संज्ञया रूढस्य पुंलिङ्गता। यथा यागत्रये पुंलिङ्गे पौर्णमास्यमावास्याशब्दौ रूढ्या स्त्रीलिङ्गौ, दर्शपूर्णमासशब्दौ च तत्रैव पुंलिङ्गौ, तत्पर्यायत्वं न विरुध्यते, उभयोरेकप्रवृत्तिनिमित्तत्वात्पर्यायत्वम्। तथा च श्रौते कर्मणि सर्वत्रेष्टिपशुसोमात्मके पूरणगुणयोगादेव पौर्णमासीशब्दोदितः कालो दिनद्वयात्मकः प्रवर्तते, तथाऽमावास्याशब्दोऽपि गुणान्तरादेव पिण्डपितृयज्ञादौ स्मार्तेषु च लोकप्रसिद्ध एव। कुतः। तस्मात्पितृभ्यः पूर्वेद्युः क्रियत इति यागात्पूर्व एव दिवस इति दिङ्मात्रम्।

दर्शे तु पूर्वपक्षो यद्यप्यनेन पूर्वसूत्रेणैव स्यात्तथाऽप्यन्यथा सिद्धान्तयितुं पुनः पूर्वपक्षमाह—

**पूर्वाममावास्याम् ।**

उपवसेदित्यनुवृत्तिः । पूर्ववद्व्याख्या ।

सिद्धान्तमाह—

**यदहर्वा न दृश्यते ॥ ३ ॥**

**इति हिरण्यकेशिसूत्रे प्रथमप्रश्ने प्रथमः पटलः ॥ १ ॥**

---

चन्द्र इति शेषः । आपस्तम्बे तथा दृष्टत्वात् । न दृश्यत इत्यनेनामावास्याशब्दोऽपि दर्शशब्दोऽप्येतदर्थत्वेन व्याख्यातौ । यतो न दृश्यते सूर्यसहभावादतोऽमावस्यदन्यतरस्यामिति पाणिनिस्मृत्याऽपि च सह वसतश्चन्द्रार्कावस्मिन्निति त्वमावास्याशब्दस्तथा च सूर्येणैव दृश्यते नान्येनेति दर्शशब्दो व्याख्यातः । तथा च श्रुतिः—'अमावास्याया औपवसथ्येऽहन्यूर्ध्वं मध्यंदिनाच्च चन्द्रमसमादित्यो रमते' इति । रमते लभते पश्यति नान्यदा विप्रकृष्टत्वात्काष्ठाभिरित्यर्थः । तथा च निर्वचनमदर्शननिमित्तं पुराणादौ[1] दृश्यते तदपि सुतरां युक्तमिति सूत्रतात्पर्यम् । पर्वनिर्णयस्तु विशेषानभिधानात्सामान्यकृतो ग्राह्यः । तथा हि शिष्टोदाहृताः स्मृतयः—

'आवर्तने यदा संधिः पर्वप्रतिपदोर्भवेत् ।
तदहर्याग इष्येत परतश्चेत्परेऽहनि ॥

आवर्तनात्परत इत्यर्थः ।

तथा—पर्वप्रतिपदोः संधिरर्वागावर्तनाद्यदि ।
तस्मिन्नहनि यष्टव्यं पूर्वेद्युः स्यादुपक्रमः ॥

उपक्रमोऽन्वाधानादि तत्समाप्य ।

पूर्वाह्णे मध्यमे वाऽपि यदि पर्व समाप्यते ।
तदोपवासः पूर्वेद्युस्तदहर्याग इष्यते ॥
आवर्तनात्परे संधिर्यदि तस्मिन्नुपक्रमः ।
परेद्युरिष्टिरित्येवं पर्वद्वयविनिर्णयः' ॥ इति ।

तथा—'संधिश्चेत्संगवादूर्ध्वं प्राक्पर्यावर्तनाद्रवेः ।
सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः' ॥ इति ।

अयं पर्वनिर्णयो येषां शाखायां सूत्रे वा विशेषो नोक्तस्तेषाम् । नोक्तश्चास्मच्छाखासूत्रयोरित्ययमेव ग्राह्यः । सूत्रमप्यावृत्त्याऽत्र निर्णये योजयितुं शक्यम् ।

---

१ क. ग. च. छ. ट. ठ. ड. पूरणादौ ।

पूर्वां चतुर्दशीयुक्तामुपवसेत् । यदि परेद्युरसंपूर्णेत्यग्रिमसूत्रपर्यालोचनयाऽर्थात्सि- ध्येत् । संपूर्णा वेति, तस्याः साम्येन विहितायाः परम्परया प्रतिपदा संयुक्तामित्यर्थो- ऽस्यात् । संपूर्णां द्विधाविभक्तस्य दिवसस्य प्रथमार्धव्यापित्वेन स्थितामित्यर्थः । तथा चासंपूर्णा चेत्परा तर्हि पूर्वां पौर्णमासीमित्यर्थादवगतम् । अत्रैवावान्तरभेदेन सद्य- स्कालो ज्ञेयः । तथा पूर्वाममावास्यामत्रापि समानं यदहर्न दृश्यत इति । तत्रापि पूर्व- युक्ता यस्मिन्दिने न दृश्यतेऽमावास्या तत्र संपूर्णममावास्यामित्याकृष्य योज्यं पूर्ववत् ।

अत्र संग्रहः—श्रौते कर्मणि मध्याह्नापराह्णाभ्यां विभज्यते ।
दिनं स्मार्तेषु नवधा विभक्तेऽह्न्ययुजोंऽशकाः ॥
प्रातः पर्वप्रवेशोऽपि स्यात्तदैव ह्युपक्रमः ।
संकल्पादिरिमामूर्जमिति मन्त्रो न लुप्यते ॥
कालात्ययेऽपि कस्यांचित्तिथौ सद्योऽपि न क्षतिः ।
सद्यः परिस्तृतौ लोप उभावग्नी मनोर्भवेत् ॥
अग्निं गृह्णामि सुरथमत्र श्व इति लुप्यते ।
विकृतिष्वपि सर्वासु सद्यस्कालासु चोहनम् ॥
पौर्णमासीविकारे तु नोहः प्रकृतिलोपतः ।
इमामूर्जमिति प्राप्तं सर्वं स्यात्तु यथातिथि ॥
प्रतिपद्यवशिष्टायां यागः स्यान्न विलम्बनम् ।
विकृतिष्वपि सर्वासु यदि पूर्वं यजिर्भवेत् ॥
नित्येन हविषेष्ट्वा तु ततः स्यान्न विलम्बनम् ।
योग औपवसथ्येऽह्नि पूर्वं पश्चात्तु नित्यतः ॥
न विशेषोऽस्ति कश्चित्तु सत्याषाढानुशासनात् ।
विकृतिष्वपि सामर्थ्याद्द्व्यहता वा पशावपि ॥
पूर्वत्रोपक्रमं कृत्वा यागं कुर्यात्तु पर्वणि ।
ततोऽपराह्णे रात्रौ वा नित्ययाग उपक्रमः ॥
पशोर्नित्यस्य सद्योऽपि पूर्वं पश्चाद्यजिर्भवेत् ।
काम्येष्टिपशुबन्धानां नित्ययागादनन्तरम् ॥
काम्यकाण्डस्थितप्रायश्चित्तेष्टिपशुबन्धयोः ।
काम्येष्टौ यदि सांनाय्यं तदा नित्येष्ट्युपक्रमात् ॥
पूर्वं पर्वणि यष्टव्यं सायं दोहस्ततः पुरा ।
काम्येष्टिपश्वोर्नैवास्ति व्यहता क्वापि चेच्छया ॥

---

१ क. ग च. ट. ड. यस्याः । २ क. च. छ. ड. आग ।

अन्यत्र स्थितयोः पूर्वं पश्चाद्वेति विकल्पनम् ।
चातुर्मास्येषु सर्वेषु पूर्वेद्युर्याग इष्यते ॥
केचिदाग्रयणेष्टौ तु व्यवस्थां ब्रुवते पुरा ।
पौर्णमास्यां परा दर्शे कार्येयं तु व्यवस्थिता ॥
पूर्वपक्षे याजयेदित्येतद्ब्राह्मणवाक्यतः ।
तेषां स्मार्तानि कर्माणि संभवन्त्यविशेषतः ॥
आपूर्यमाणे कृष्णे वा पक्षे पुण्यर्क्ष एव च ।
ये दाक्षिणात्याः स्मार्तेषु पूर्वपक्ष इति श्रुतिम् ॥
गृह्णन्ति तेषां नाऽऽग्रयणेष्टौ कश्चिन्नियमः स्थितः ।
अन्ये प्रकृतये पूर्वपक्षमेवं वदन्ति हि ॥
छन्दोगानुसृतास्तेषां मतं नेष्टं विरोधतः ।
अविशेषेण सूत्रे हि काम्ययागप्रचोदनात् ॥
हविषेष्ट्वेत्र नित्येन येन केनाविशेषतः ।

संक्षिप्य नानाविधयाऽल्पशब्दगैः सूत्रैः समर्थैरतिगूहिताशयैः ।
न्यायाननेकांस्तु वितन्वता जडोऽप्यहं स्वसूत्रार्थविवेचकः कृतः ॥
तस्मै नमस्तेऽस्तु हिरण्यकेशिने दुर्ग्राह्यवेदाम्बुधिपारदृश्वने ।
स मे स्वसूत्रार्थगतिं कृपाम्बुधिर्दिशत्वजस्रं जडतां प्रणोदयन् ॥

प्रयोगवैजयन्त्यास्तु मालायाः सूत्रसंस्थितेः ।
न्यायसूत्रस्येह कृतो निर्णयः कौस्तुभो मणिः ॥
मध्यगो यज्ञवपुषस्तुष्ट्येऽस्तु मयाऽर्पितः ।
गृह्णाति हि किमप्येष भक्त्यैर्यद्यत्ततः कृतम् ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां प्रयोगवैजयन्त्यां महादेवकृतायां प्रथमप्रश्ने प्रथमः पटलः* ॥ १ ॥

---

अथ द्वितीयः पटलः ।

---

प्रथमे पटले यज्ञं व्याख्यास्याम इतीरिते ।
यज्ञे[1] मानं कर्तृशेषधर्माद्या अधिकारिणः ॥ १ ॥

---

* एतदनन्तरं च. पुस्तके ' इति परिभाषाप्रकरणं समाप्तम् ' इति विद्यते ।

---

१ क. यज्ञमा° ।

उक्ताः सामान्यतो दर्शे पूर्णमासे च पर्वणी[1] ।
निर्णीते देवतास्तत्र प्रधानहविषामपि ॥ २ ॥
व्याख्यायाथ यजुर्वेदविहिताध्वर्यवं क्रमात् ।
निर्देशादपरेषां तच्छ्रुत्या लिङ्गेन वाक्यतः ॥ ३ ॥
अवान्तरसमाख्यातो[3] ब्रह्महोतृपतिष्वपि ।
गृह्यकर्म भवेत्पत्युर्ऋत्विजोऽनभिधानतः ॥ ४ ॥
इष्टीनां पशुबन्धस्य प्रकृती तावदादितः ।
निरूप्येते दर्शपूर्णमासावध्वर्युकर्तृकौ ॥ ५ ॥
प्रथमस्य द्वितीयादिसप्तभिः पटलैस्तथा ।
द्वितीयस्याऽऽदिमैः षड्भिः पिण्डयज्ञश्च सप्तमे ॥ ६ ॥
ब्रह्मत्वं तु तयोरेव चाष्टमे तु विधीयते ।
याजमानं हविर्यज्ञे षष्ठे प्रश्ने निरूप्यते ॥ ७ ॥
हविर्यज्ञगतं हौत्रमेकविंशे वदिष्यति ।
हौत्राध्वर्यवशेषं तु तत्रैव प्रवरं तथा ॥ ८ ॥
सूत्रान्तरोपात्तमपि स्मृत्युक्तमपि चेर्यते ।
अविरुद्धं प्रयोगस्य साकल्यप्रतिपत्तये ॥ ९ ॥
व्याख्यास्याम इति ह्यादावाचार्येणैव दर्शितम् ।
व्याख्याने बहुकर्तृत्वं तत्र विस्मर्यतामिह ॥ १० ॥
उदयात्पूर्वमेवाऽऽदावग्निहोत्रे हुते सति ।
दंपती तु भवेयातां वस्त्रयज्ञोपवीतिनौ ॥ ११ ॥
आचान्तावपरेणैव गार्हपत्यं कुशेष्वपि ॥
स्थितौ कुशधरौ स्वान्तौ(न्त)त्रियेतास्[4] यथाविधि ॥ १२ ॥
विनायकादि संपूज्य कालं चापि विशेषतः ।
कुर्वाते दंपती आगूष्करणं तत्सहैव तौ ॥ १३ ॥
प्रयोगे प्रथमे वक्ष्यत्यन्वारम्भणपूर्वकम्[6] ।
विधिं तत्रापि संकल्पो वक्ष्यते काम्यनित्ययोः ॥ १४ ॥
कामेन संप्रवृत्तेऽपि यदा कामो निवर्तते ।
तदा ताभ्यां च यष्टव्यं न त्याज्यौ सति जीवने[7] ॥ १५ ॥

---

१ ठ. ड. पर्वणि । २ क. ग. च. ठ. ड. °तासूत्र° । ३ क. ग. च. ठ. ड. °ख्याते ब्र° । ४ ड. संस्तुस । ५ क. ग. च. छ. ट. ठ. ड. थाऽपि । ६ क. ग. घ. छ. ठ. ड. °त्यन्तर° । ७ क. ग. ठ. ड. याचने ।

निरूपितं प्रपञ्चेन परिभाषार्थनिर्णयैः ।
न विस्मर्तव्यमेवैतदित्यन्यत्रापि चोच्यते ॥ १६ ॥

त्वां वृण इत्यादिना वृतास्ते प्रतिब्रूयुस्तथा भविष्यामीति, वस्त्रयज्ञोपवीता(तिनं) आचान्ता दर्भपाणयस्तीर्थेन प्रविश्याऽऽयतप्राणा अभ्यावृत्ता विहाराच्च परिभाषितधर्मैः स्वं स्वं कर्म यथान्यायं कुर्युस्तौ दंपती च ॥

**प्रातरग्निहोत्रं हुत्वाऽनुगमयित्वाऽऽग्निहोत्रिकमपोद्धृत्य वोदित आदित्ये गार्हपत्यादाहवनीयमुद्धृत्य ममाग्ने वर्च इत्यन्वादधात्युत्तरया गार्हपत्यमुत्तरया दक्षिणाग्निम् ।**

प्रातरग्निहोत्रमिति विशिष्टं कर्मनामधेयं रूढचैत्रोषःप्रभृतिसंगवात्पूर्वं विहितस्याग्निहोत्रस्य कर्मणः । तद्धुत्वा कृत्वा । प्राप्तानुवादोऽयं क्त्वाप्रत्ययेन दर्शपूर्णमासार्थोद्धरणात्पूर्वकालत्वख्यापनाय । हुत्वोद्धृत्येति संबन्धः । प्रातरग्निहोत्रमपि प्रातः प्राप्तम् । इष्टयर्थमुद्धरणमपि प्रातःकाले प्राप्तम् । इष्टेः प्रातरुपक्रमानियमात् । तत्र प्रातरग्निहोत्रकालः सूर्योदयात्पूर्वमप्यस्ति । तत्र सावकाशमग्निहोत्रं निरवकाशश्चेष्टिप्रातरुपक्रमः । अतः सूर्योदये सत्येव यः प्रातःकालस्तत्रैवेष्टयर्थमुद्धरणम् । तदिदमाह—उदित आदित्ये गार्हपत्यादाहवनीयमुद्धृत्येति । यदि सायमेवोद्धरणमग्निहोत्रार्थं तदा प्रातर्होमस्याप्युपक्रान्तस्य समापनं कार्यम् । प्रातरपि पुनरुद्धरणपक्षे[4] चाप्युपक्रान्तस्य समापनमेव । संभवति पौर्वापर्येण समापने न च कर्मणि प्रारब्धेऽसमाप्ते कर्मान्तरारम्भो युक्त इत्यर्थः । आग्निहोत्रिकमग्निहोत्रार्थमुद्धृतः सायमेव वा प्रातरपि वा स आग्निहोत्रिकः, तं शान्तिं प्रापयित्वा, यदि शान्तिं सूर्योदयात्पूर्वं न गच्छेत्तदाऽऽयतनादपोद्धृत्य बहिः कृत्वा ततोऽन्यस्योद्धरणमित्यर्थः । आग्निहोत्रिकशब्देन नित्यधार्यस्य न त्याग इत्युक्तम् । न हि सोऽग्निहोत्रार्थमुद्धृतो धार्यते । किंतु स सर्वार्थधृतो नाऽऽग्निहोत्रिकत्वव्यपदेशं लभतेऽसाधारण्येन व्यपदेशा भवन्तीति न्यायात् । इष्टयर्थमुद्धरणे प्राप्ते पूर्वस्यापवृत्तकर्मकस्य त्यागे प्राप्तेऽपि पुनर्वचनं मतान्तरनिवृत्त्यर्थम् । भारद्वाजेनोच्यते 'य एषोऽग्निहोत्रार्थोऽग्निस्तं गृह्णीयात्' इति । गृह्णीयादन्वादध्यात् । तस्यापवृत्तकर्मकस्य लौकिकत्वादाहवनीयत्वाभावात्तत्त्याग एवेत्यर्थः । उदित आदित्य इत्येतदप्राप्तं विधीयते । तस्मादुद्धृत्येत्यत्रोद्धरेदिति विधिरनुमितो ज्ञेयः । अर्थायार्थाय गार्हपत्यादाहवनीयमुद्धरतीति वक्ष्यमाणस्यानुवादो गार्हपत्यादित्यादि । नित्यधार्येऽप्यदृष्टार्थं पुनरुद्धरणं मा भूदिति । आहवनीयमिति गार्हपत्ये यदाऽऽहवनीयः

---

१ ग. ट. ठ. ड. वोच्यते । २ क. च. ट. ठ. त्वा । ३ ख. अतः । ४ छ. °क्षे वाऽप्यु° । ५ क. ग. घ. छ. ट. ठ. ड. °ण । न ।

विष्टः स्यात्तदाऽऽहवनीयमुद्धृत्येत्युपपद्यते। नित्यधार्ये त्वाहवनीयशक्तेर्गार्हपत्ये प्रवे-
भावात् । अन्वादधातीत्यनेनाऽऽहवनीयमित्यपि संबध्यते साकाङ्क्षत्वात् । उद्धृत्ये-
नेन गार्हपत्यात्पृथक्कृत्वाऽन्वादधातीत्यर्थो न किंतु हरतेर्द्विकर्मकत्वादुत्कृष्याऽऽहवनी-
यतनं प्रापय्य स्थापितमाहवनीयमाहवनीयत्वापन्नं मत्वाऽऽदधाति कर्मार्थत्वेन स्थाप-
ति संकल्पमात्रेण बाह्यक्रियाया अभावात्। अन्वादधातीत्यस्य स्थाने गृह्णातिप्रयोगो भर-
जादिसूत्रेषु दृश्यते, श्रुतौ च पूर्वेद्युरग्निं गृह्णात्यपरमहर्यजतीत्यादौ। ततोऽन्वादधाति
पापयत्युत्तरकर्मार्थत्वेन गृह्णाति संकल्पमात्रेण । ममाग्ने वर्च इत्यृचा तथैवोत्तरावपि ।
भ्यावसथ्ययोर्नान्वाधानं विहव्याभिः । अत्रे विहव्याभिरन्वादधातीति शाखान्तरीयो
धिः । तत्र जात्याख्यायामेकस्मिन्बहुवचनमिति पाणिनिस्मृतेरेकवचनविवक्षायामेकैव
मा। तत्र शौखान्तरे वाऽऽहवनीयादीनामन्वाधाने प्रत्येकं त्रयाणां श्रवणात्पृथग्द्रव्यत्वेन
न्त्रावृत्तौ प्राप्तायां तिसृणां विनियोगः । न हि व्याहृतिभिरन्वाधाने मन्त्रान्तरमस्ति । न
न्तिमस्याऽऽवृत्तिः । तयोरुत्तरकर्माङ्गत्वाभावान्न संस्कार्यत्वं, ततो न मन्त्रावृत्तिः ।
चाच्छिद्रैरपि नान्वाधानं प्राप्नुयाद्वक्ष्यति च । सत्यम् । मन्त्रलिङ्गेन विधिरनुमीयते
स्कार्यत्वाभावेऽपि तयोरपूर्वार्थमारादुपकारकमन्वाधानम् । न चान्वादधातीत्यत्र विधे-
रूप्यं स्यात् । तयोरनुमितस्य विधेः प्रत्यक्षान्यस्य स्वीकारान्न वैरूप्यम् । नचाग्न्यन्वा-
नमित्येकवचनप्रयोगादन्वाधानस्य संस्कारकर्मण एकत्वात्तयोरन्वाधानयोर्ग्रहणं न
ादिति । तयोरारादुपकारकयोरपि संस्कारकान्वाधानाङ्गत्वात्साङ्गेऽन्वाधाने उपपन्न-
कत्वम् । ननु संनिपत्योपकारकस्य कथमारादुपकारकमङ्गम् । संनिपत्योपकारकेना-
ऽ)पि नियमापूर्वं जन्यते, तत्राऽऽरादुपकारकमुपकारकमित्यदोषः । यद्यप्यर्थायार्थाय
र्हपत्यादाहवनीयोद्धरणं विहितं तथाऽपि न कर्ममात्रमत्रार्थो विवक्षितो येन कृतेऽ-
धाने तत्त्यागेऽन्यस्योद्धरणं, यथा होतृहोमार्थमुद्धृतस्य त्यागे पुनरुद्धरणं, किं त्वपू-
त्रार्थशब्देन विवक्षितं प्रयोजनम् । अर्थायार्थकर्मणे न तु गुणकर्मणे संस्कारकार्ये-
र्थः । न चान्वाधानेन संनिपत्योपकारिणा होतृहोमवदपूर्वं जन्यते । तस्मादपूर्वजन-
स्य प्रधानस्यैव प्रयोजनत्वात्तदर्थमुद्धृतस्य संस्कारो द्वितीयाश्रुत्याऽवगम्यतेऽग्नीनन्वाद-
तीति । अत एवाऽऽहवनीयमन्वादधातीति प्रयोगोऽग्नीनन्वाधायेत्यादिकश्च सूत्रकृ-
ऽपि । यश्च प्रधानस्याग्निः सोऽङ्गानामिति वक्ष्यतीति नाङ्गार्थं पृथगुद्धरणम् । नच
तृहोमार्थमुद्धृतः प्रधानार्थो भवति, अङ्गार्थमुद्धृतस्य प्रधानार्थत्वे प्रमाणाभावात्,
ानस्य तदानीमनुद्धिस्थत्वात् । नचान्वाधानेऽपि तथा । अन्वाधानं संस्कारकर्म

१ ट. °यमन्वाद° । २ क. ख. छ. °त्वायतमन्वाद° । ग. ठ. ड. °त्वायतनमन्वाद° । ३ ट. भार° । ४ ख. ग. च. छ. ठ. ड. °त्र हि वि° । ५ ड. शाखान्त° । ६ ख. °णां ग्रहणा° । ट. विधिनि° । ८ ट. °क्षादन्य° । ९ क. ख. ग. च. छ. ठ. ड. °धानेत्युप° । १० ख. °कमि°।

'भूतभाव्युपयोगं हि द्रव्यं संस्कारमर्हति' इतिन्यायाद्भाव्युपयोगिन एव संस्कारो नोत्तर-कर्मार्थोऽग्निसंस्कारस्तस्मिन्नकृते तत्त्यागे पूर्वकर्मवैयर्थ्यमुत्तरकर्मवैगुण्यं च। होतृहोमा-दीनां तु न तथा।

तत्र श्लोकाः- अन्वाधानात्पूर्वभाविन्यापि पश्विष्टिकर्मणि।
आरादुपकृतौ वाऽपि वह्नेस्त्यागो न हीष्यते ॥ १ ॥
तत्रान्वारम्भणीयेति संज्ञयेष्टाग्निसंस्कृतिः।
अन्वारभ्यते ह्यनया कर्मेत्यर्थावधारणात् ॥ २ ॥
अग्निसंस्कारतो ह्यत्र कर्मारम्भो विनिश्चितः।
यतो वक्ष्यति पश्विष्ट्या वह्नेर्धारणमत्र तु ॥ ३ ॥
दीक्षणीया यथा ह्यारादुपकारिण्यपीष्यते।
देवतानां वाऽपि परिग्रहार्था ह्यर्थवादतः ॥ ४ ॥
अन्वाधानं च पश्चात्तत्संस्कारान्तरमिष्यते।
शब्दान्तरात्कार्यभेदादतो नैतन्निवर्तते ॥ ५ ॥
दर्शपूर्णमासयोर्याऽऽरम्भणीया न सा तथा।
तदर्थवादतोऽस्यास्तु न दृष्टफलता मता ॥ ६ ॥
किं च सा नोत्तरस्यैव प्रयोगस्याङ्गमिष्यते।
किंतु प्रथम आरम्भे निमित्ते च विधीयते ॥ ७ ॥
अतः पश्विष्टिवत्सा तु नाऽऽवर्तेत इति स्थितिः।
आरम्भे तु निमित्ते सत्यसौ कार्येति संज्ञया ॥ ८ ॥
प्रयोगाङ्गं ततो नेष्टमतो नाऽऽवर्तते सदा।
एवं सर्वं च विज्ञेया व्यवस्थोद्धरणाय हि ॥ ९ ॥

विहव्याभिरितिबहुवचनविवक्षया पक्षान्तरमाह—

सर्वाभिर्वाऽऽहवनीयम्।

विनियुक्ताभिस्तिसृभिरित्यर्थः। अत्र पूर्ववन्नानाद्रव्यत्वेन प्रत्यग्नि तिसृणां प्राति-स्तथैव पक्षान्तरस्याऽऽपस्तम्बेनाभिधानात्तथाऽप्याहवनीय एव शास्त्रान्तरेण विहव्य-विनियोगनियमादाहवनीय एवेत्युक्तम्। अत एव भरद्वाजो ममाग्न इति पूर्वमग्निं गृह्णी-यात्तूष्णीमितराविति ह्याह। न चात्रापि तूष्णीमितरयोः प्रातिस्विक्रियाया अभावात्किं मन्त्रेण विना कर्तव्यं स्यात्। यदपि समिदाधानं दृश्यते सूत्रान्तरे तदपि नाम्न्यन्वाधान-शब्दवाच्यं किं तु तदङ्गमदृष्टार्थमेव। नच तस्य मन्त्रः साधनं किंतु मन्त्रान्ते प्रक्षेपो हविषः प्रक्षेप इव वषट्कारान्ते। तदभिप्रायेण तूष्णीमुक्तं भरद्वाजेन।

---

१ क. ग. च. छ. ट. ठ. ड. अत्राऽऽधा°। २ ख. ट. °रात्कर्मभे°।

ननु वक्ष्यत्याहवनीयं गार्हपत्यं दक्षिणाग्निमिति तत्तर्हि वक्ष्यमाणाच्छिद्रिकैः[2] प्राति[तस्वि]कान्वाधानाभिप्रायम् । तत्र विहव्याभिरन्वादधातीत्यत्र बहुत्वस्य विधेयगतस्य विव[क्षि]तत्वेऽपि कपिञ्जलाधिकरणन्यायेन त्रित्वे पर्यवसानान्न दशभिराहवनीयान्वाधानम् । [विशि]ष्टार्थानां मन्त्राणां बहुवचनेन त्रित्वमात्रं संगृह्यते नत्वन्येषामपि समुच्चयः । तदि[दमा]ह—

अवशिष्टा विकल्पार्थाः ।

[चतु]र्थीप्रभृत्यृचां त्रिषु वाऽऽहवनीय एव वा विकल्पः । दशम्या विनियोगायाष्टमी नवमी [चा]ऽनुवर्तनीये ।

व्याहृतीभिरन्वादधातीत्येकेषाम् ।

विहव्यावद्व्याख्या विशेषानभिधामात् ।

अग्निं गृह्णामि सुरथं यो मयोभूर्य उद्यन्तमारोहति सूर्यमह्ने ।
आदित्यं ज्योतिषां ज्योतिरुत्तमꣳ श्वो यज्ञाय रमतां देवताभ्यः । वसून्रुद्रानादित्यानिन्द्रेण सह देवताः । ताः पूर्वः परिगृह्णामि स्व आयतने मनीषया । इमामूर्जं पञ्चदशीं ये प्रविष्टास्तान्देवान्परिगृह्णामि पूर्वः । अग्निर्हव्यवाडिह तानावहतु पौर्णमासꣳ हविरिदमेषां मयीति पौर्णमास्यामामावास्यꣳ हविरिदमेषां मयीत्यमावास्यायामिति तिसृभिराहवनीयमन्तराऽग्नी पशवो देवसꣳसदमागमन् । तान्पूर्वः परिगृह्णामि स्व आयतने मनीषयेत्यन्तराऽग्नी तिष्ठञ्जपतीह प्रजा विश्वरूपा रमन्तामग्निं गृहपतिमभिसंवसानाः । ताः पूर्वः परिगृह्णामि स्व आयतने मनीषया । इह पशवो विश्वरूपा रमन्तामग्निं गृहपतिमभिसंवसानाः । तान्पूर्वः परिगृह्णामि स्व आयतने मनीषयेति द्वाभ्यां गार्हपत्यमयं पितृणामग्निरवाड्ढव्या पितृभ्य आ । तं पूर्वः परिगृह्णाम्यविषं नः पितुं करदिति दक्षिणाग्निमजस्रं त्वाꣳ सभापाला विजयभागꣳ समिन्धताम् । अग्ने दीदाय मे सभ्य विजित्यै शरदः शतमिति सभ्यमन्नमावसथीयमभिहराणि शरदः शतम् । आवसथे श्रियं मन्नमहिर्बुध्नियो नियच्छत्वित्यावसथ्यम् ।

[सह]पाठेन प्रदर्शनेनापि त्रिभिर्द्वाभ्यामिति संख्या विकल्पनिरासार्था । भिन्नद्वारत्वात्स[मुच्च]य इत्यर्थः । अन्वादधातीत्यनुवर्तते ।

---

१ ट. °च्छिद्रकैः । २ क. ग. च. छ. ट. ठ. ड. °तिष्ठिका° ।

इति वैताभिः ।

इत्येतदाच्छिद्रिकमन्वाधानमेताभिर्विहव्याभिः सह वा कर्तव्यम् । सर्वाभिरिति पक्षे भवत्येव सह । एकैकयाऽन्वाधानपक्षेऽपि वैकयाऽऽहवनीयेऽन्वाधानं कृत्वाऽत्रैव तिसृभिराच्छिद्रिकैर्गिरेवमपरयोरित्येकः पक्षः । द्वितीयस्तु प्रथममेवोक्तप्रकारेण त्रयाणां विहव्याभिः कृत्वा पश्चात्पुनः पृथगेवोक्तमाच्छिद्रिकैर्मन्त्रैस्तत्तथैव कार्यमित्यर्थः । सभ्यावसथ्ययोः केवलमाच्छिद्रिकाभ्यामन्वाधानं तद्व्याख्यातमेव । नन्वग्न्यन्वाधानमेकमेव देवतापरिग्रहद्वारा दृष्टार्थमिति सर्वसूत्रकारसंमतम् । तदिदं वाजसनेयिन आहुः—' कस्य देवा गृहानागच्छन्ति कस्य न यः पूर्वेद्युर्मभाग्न इत्यग्नीन्गृह्णाति ' इति । वाक्येनार्थवादरूपेण विहव्यान्वाधानमेव वक्ष्यमाणदेवतापरिग्रहद्वारा दृष्टार्थमित्याहुः । तत्रापि ज्ञापकमप्याहुः-दीक्षणीयाया अनन्तरास्विष्टिषु यदन्वाधानं निवर्तयति कात्यायनस्तद्देवतापरिग्रहार्थेऽन्वाधाने सत्युपपद्यते । तत्र दीक्षणीयया देवतापरिग्रहस्य जातत्वादित्यभिप्रायं वर्णयन्ति । यतः ' आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणोऽग्निरवरार्ध्यो विष्णुः परार्ध्यस्तावन्तरेण सर्वाश्चैता देवताश्च सर्वं च यज्ञमारभ्य दीक्षते ' इति । प्रधानार्थाया अपि दीक्षणीयाया अर्थवादबलेनाङ्गप्रधानदेवतापरिग्रहोऽपि प्रयोजनान्तरमङ्गी क्रियते । अतो दीक्षणीययाऽर्थवादेन सर्वाश्चेति श्रुत्याऽङ्गप्रधानदेवतापरिग्रहः साध्यते । अतो दीक्षणीयानन्तरेष्टिषु चाग्न्यन्वाधानं प्रतिषिध्यत इति वर्णयन्ति । आपस्तम्बादिभिरप्येवमेवाङ्गीकृतम् । तेषां त्वग्न्यन्वाधानस्य देवतापरिग्रहार्थत्वे लिङ्गमातिथ्येष्ट्यादिष्वग्न्यन्वाधानप्रतिषेध एव । तेषामप्यर्थवादेन कस्य वा ह देवा यज्ञमागच्छन्तीत्याद्युपक्रम्याग्निं गृह्णाति स्व एवाऽऽयतने देवताः परिगृह्णातीत्युपसंहारादग्निग्रहणरूपेणाग्न्यन्वाधानेन देवतापरिग्रहलक्षणं कार्यं साध्यते । दीक्षणीयया वाऽग्निः सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं चाऽऽरभत इति । तत्राग्न्यन्वारम्भेणाग्न्यन्वाधानसिद्धिः । तथा देवता एवोभयतः परिगृह्य यजमानोऽवरुन्ध इति । तथाऽग्नेरङ्गप्रधानार्थस्याऽऽरम्भेण तत्कार्यमङ्गप्रधानदेवतापरिग्रहो देवता एवोभयतः परिगृह्येत्यर्थवादेनैव सिध्यतीति नाऽऽतिथ्यादिष्वग्न्यन्वाधानमिति । एवं च दृष्टार्थत्वे विहव्यान्वाधानस्य सिद्ध आच्छिद्रिकैरन्वाधानं व्यर्थमेव । नापि तत्र विधिरस्ति । मन्त्रलिङ्गं तु याजमानजपेनाप्युपपन्नमिति चेत् ।

अत्रोच्यते-विहव्यान्वाधानमिदं न दृष्टार्थं हि दृश्यते ।
अर्थवादेन चेदेवं तेषामेवास्तु शाखिनाम् ॥
येषां तु विधिरेवास्ति देवतानां परिग्रहे ।
न तैः कल्प्योऽर्थवादेन देवतानां परिग्रहः ॥

---

१ छ. ट. °क्षः । अत्र द्वि° । २ क. ग. च. छ. ट. ठ. ड. °पु वाऽग्न्य° ।

शाखान्तरे विहव्याभिरेवान्वाधानमिष्यते।
यथा वा अनुवाकेन मन्त्रहीनं विधीयते॥
अन्वाधानं द्वितीयं चेदग्नीनां देवरूपिणाम्।
तेषां ग्रहणतः सर्वदेवतानां परिग्रहः॥
उपपादित एवात्र सापेक्षो मन्त्रसाधने।
मन्त्रा आच्छिद्रिकाः स्पष्टलिङ्गा आलिङ्ग्य तं विधिम्॥
सप्रयोजनतां यातास्तैर्द्वितीयमिदं भवेत्।
दृष्टार्थमेवान्वाधानं तस्याङ्गं प्रथमं भवेत्॥
ततस्तदपि दृष्टार्थमिति सूत्रकृतो मतम्॥

अत्र सूत्रकारेण विहव्यान्वाधानमभिधाय तत आच्छिद्रिकैरन्वाधानं विहितम्। न च तदेकं भवेत्। श्रुतिप्राप्तविहव्यावरुद्धेऽन्वाधाने लिङ्गप्राप्तानामाच्छिद्रिकाणां न समुच्चयो नापि विकल्पोऽतुल्यबलत्वात्। अत इदं कर्मान्तरमेवाभिमतं सूत्रकारस्य। अत एवान्वाधानयोः क्रमसहभावपक्षावुक्ताविति वैताभिरिति। तदिदं भिन्नं कर्म विहितं द्वितीयमन्वाधानम्। यथा वै समृतसोमा इत्यनुवाकस्य सार्थवादस्य विधित्वसंभवे शाखान्तरीयविहव्यावरुद्धकर्मणोऽन्यन्वाधानस्यार्थवादोऽनुवाकः कथं भवेत्। एकवाक्यताया अश्रवणात्। देवतापरिग्रहलिङ्गेन शाखान्तरार्थवादसाहय्येन च व्यवहितैकवाक्यताकल्पनातो वरमनन्यत्वेनैवापूर्वेण विधिना सप्रयोजनबलसंपादनेनैकवाक्यता। एवं चाऽऽच्छिद्रिकाणामाध्वर्यवसंज्ञाया अबाधेनैव विनियोगसिद्धिः। यथा वै समृतसोमा इत्यस्य याजमानत्वेऽपि नात्यन्तं याजमानसंज्ञाबाधेनाऽऽच्छिद्रिकमन्त्रप्रापणम्। अध्वर्युणा कृते यजमानेन कृतं भवति। यजमानेन चाऽऽच्छिद्रिकाणां जपमात्रे कृतेऽपि तेषामाध्वर्यवसंज्ञाबाध एव। तस्माद्यो वै श्रद्धामित्यनुवाकस्य याजमानत्वेऽपि मन्त्रविध्यन्तरवशादध्वर्योरेव कर्मैवं द्वितीयमप्यग्न्यन्वाधानम्। ननु विहव्याभिरेव तस्य जातत्वादाच्छिद्रिकैर्देवतापरिग्रहमात्रं कार्यं न पुनराहवनीयादीनामन्वाधानं पूर्वेण समानत्वाद्देवतापरिग्रहस्य लाभाच्च। न। उद्धृताहवनीयौ हि प्रत्यक्षाग्निशरीरस्तैस्तत्समभिव्याहृतौ तदन्यावपि प्रत्यक्षाग्निशरीरावेवान्वाहिताः पुनश्च तैः शब्दैर्देवताशरीरा अग्नयो विवक्षिता इति गम्यते पौनरुक्त्यपरिहाराय। मन्त्रलिङ्गादपि देवताशरीरा एवान्वाधीयन्ते। देवतारूपाग्निग्रहणादेव देवतापरिग्रहोऽपि ब्राह्मणेन दर्शितः। तथा हि— 'यो वै देवताः पूर्वः परिगृह्णाति स एनाः श्वोभूते यजते' इत्युपक्रम्य कथमिव देवतापरिग्रहः कार्य इत्यपेक्षिते देवतारूपाग्निग्रहणेनैवेति वक्तुं देवतारूपाग्नेः सर्वदेवता-

---

१ ख. °धनम्। म°। २ क. ग. घ. छ. ट. ठ. ड. °यो विहितप्र°। ३ क. ग. घ. छ. ट. ठ. ड. °स्तसंसम°। ४ क. ख. °राधाम°।

मयत्वं श्रुतिसिद्धं वक्तुं तद्देवतारूपाग्नेराहवनीयादिदेवताशरीरत्रयभेदेन देवताशरीरत्रयमयत्वं दर्शयति—एतद्वै देवानामायतनमित्यादिना। मयि तनूः संनिषद्ध्वमिति देवतारूपेणाग्निना देवतानां संनिधानं कारितमतोऽग्निः सर्वा देवता इति तत्र तत्र श्रूयते। अग्निः सर्वदेवतामयस्तासां सर्वदांऽशेन तत्राऽऽश्रितत्वात्। तदिदमत्र विविच्योच्यते-एतद्वै देवानामायतनमित्यादिना। अधिकरणत्रयगता देवता हि साजात्येन धर्मेण शरीरत्रयेण त्रेधा तिष्ठन्ति देवा मनुष्याः पितर इति। ते ह्यत्र श्वोभूते पूज्यन्ते। ततस्तेषां पूर्वेद्युः परिग्रहः कर्तव्यः। कथं हि त्रैराश्येन दर्शपूर्णमासयोः पूजेति चेत्। उच्यते-होता हि वदति-'ईडामहै देवा१ ईडेन्यान्नमस्याम नमस्यान्यजाम यज्ञियान्' इति। तस्य ब्राह्मणं 'मनुष्या वा ईडेन्याः' इत्यादि। ये देवा भागधेयेनाग्नित्रयेऽपीन्यास्ते तु बहुभिर्हविर्भागिभिराहवनीय इज्यैः सहैवाऽऽहवनीय एव तिष्ठन्ति हविर्ग्रहणायैव तत्र तत्र गच्छन्ति। गार्हपत्ये तु मनुष्या ईडेन्या ब्रह्मणः प्रथमसृष्टिः प्रजापशुरूपा मनुष्यशब्दवाच्यास्तिष्ठन्ति। अग्निर्गृहपतिस्तेषामुत्पादयितेति श्रूयते—'एतस्माद्वै मिथुनात्प्रजापतिर्मिथुनेन प्राजायत' इति। दक्षिणाग्निस्तु पिण्डपितृयज्ञपित्र्येष्ट्यादौ कव्यवाहन इति तस्मिन्नपि पितरस्तिष्ठन्ति। आजानसिद्धा ब्रह्मसृष्टिः। एवं स्थिताः स्वस्वपूजां गृह्णन्तीति तेषामवस्थानार्थं तन्मयानामग्नीनामेव ग्रहणमित्याह—'अग्निं गृह्णाति स्व एवाऽऽयतने देवताः परिगृह्णाति ताः श्वोभूते यजते' इति। तत्तद्राशिमयस्याग्नेस्त्रेधा विभक्तस्यैव ग्रहणेन देवतापरिग्रहं कुर्यादिति वाक्यार्थः। तस्मादत्र विहव्याभिर्व्याहृतिभिर्वा प्रत्यक्षाग्नीनामन्वाधानं द्वारसाकाङ्क्षसदृष्टप्रयोजनार्थमाच्छिद्रिकैः कृतदेवतामयाग्निग्रहणस्याङ्गं स्यात्। तेन च प्रत्यक्षाग्निग्रहणे सति तत्र देवतामयानां देवतारूपाणामाहवनीयादीनां ग्रहणं युक्तम्। 'श्वो यक्ष्यमाणे देवता वसन्ति' इति श्रुतेः प्रत्यक्षाग्नीनां देवतारूपाग्निनिवासाधिकरणता दृश्यते। तस्मादङ्गत्वेनाऽऽश्रयभूतानां प्रत्यक्षाणामपि ग्रहणम्। न ह्यगृहीत आश्रये तत्राग्निदेवतानां ग्रहणं युक्तम्। तस्मादङ्गं प्रत्यक्षाग्निग्रहणं प्रथमं, तेषु देवतारूपाग्निग्रहणं द्वितीयम्। एवमिष्टं सूत्रकारस्य देवतारूपाग्नेः परिग्रहणेन देवतापरिग्रहो भवति न तु प्रत्यक्षाग्निधारणार्थेन विहव्यान्वाधानेनेति। अत्र लिङ्गम्—यदयं दीक्षणीयया प्रधानार्थमारादुपकारिण्या यजमानसंस्कारिण्याऽप्यर्थवादबलेन याज्यालिङ्गेन च सोमदेवतापरिग्रहोऽपि कार्य इति सूचयति। कथं, यतो वक्ष्यति सवनीये पशौ सवनीयेषु पुरोडाशेषु च नाग्न्यन्वाधानं विद्यत इति। तत्तु दीक्षणीयया सोमदेवतापरिग्रहे सति तत्कालपातिनीनां सवनीयपशुसवनीयपुरोडाशदेवतानां प्रसङ्गेन परिग्रहे सत्येवोपपद्यते। तथा हि—'आग्नावैष्णवमेकादशकपालं निर्वपेत्' इत्युपक्रम्याऽऽह 'अग्निरवमो देवतानां विष्णुः परमो यदाग्नावैष्णवमेकादशकपालं निर्वपति देवता एवोभयतः परिगृह्य यजमानोऽवरुन्धे' इति। देवताया अग्नेर्विष्णोश्च परिग्रहेण प्रधानदेवतापरिग्रह एवोक्तो दीक्षणीयायाः प्रधानार्थत्वात्प्रधानदेवतापरिग्रह

एव सिद्धः। तथा याज्यानुवाक्ये प्रधानदेवतापरिग्रहमेव वदतः, अग्निश्च विष्णो तप इति विश्वेर्देवैर्युक्तौ यजमानाय दीक्षां धत्तमिति। दीक्षा च प्रधानार्थातो देवाः प्रधानार्था एव दीक्षासंपादकाः। तथाऽग्निर्मुखं प्रथमो देवतानामत्रापि प्रधानार्थया दीक्षणीययाऽग्निविष्णुयागद्वारेण प्रधानदेवतापरिग्रह एव युक्तो न तु साङ्गप्रधानार्थानां परिग्रहः। यतो वदिष्यति। आतिथ्यादिषु पुनर्देवतापरिग्रहार्थमन्वाधाने चोदकप्राप्तेऽपि चाऽऽतिथ्यादिष्वग्न्यन्वाधानमिति परैः प्रतिषिद्धं पुनर्विहितम्। ननु चात्राप्यग्निः सर्वा देवतेति देवतारूपाग्नेरारम्भेण साङ्गप्रधानार्थेन साङ्गप्रधानदेवतापरिग्रहसिद्धौ कथमग्न्यन्वाधानं विहितमिति चेत्। सत्यम्। देवतारूपाग्नेरारम्भेण देवतारम्भमात्रं सिध्यति नत्वन्वाधानं, तस्य शब्दान्तरेण कर्मान्तरत्वात्। अत एवाङ्गभूतेषु पशुषु चान्वारम्भणीयां प्रतिषेधति। सवनीयमात्रे चान्वाधानप्रतिषेधादातिथ्यादिष्वग्नीषोमीयानुबन्ध्ययोश्चानुजानाति। अत एव निरूढेऽपि धारयत्याहवनीयमित्यन्वारम्भणीयानन्तरमुक्त्वाऽग्नीनन्वादधातीत्याह। ततो ज्ञायत आरम्भे सिद्धेऽपि नान्वाधानं सिध्यतीति। द्वयोरप्यन्वाधानयोरङ्गाङ्गिभावे च लिङ्गं यदयं पृथगन्वाधानद्वयमभिप्रायाऽऽह—इति वैतामिरिति। अत्र देवतापरिग्रहरूपान्वाधानस्य प्रत्यग्न्यभ्यासा त्तदङ्गं विहव्यान्वाधानं संयुक्तान्येकापवर्गाणीति न्यायात्तत्तदङ्गभूतं विहव्यान्वाधानं प्रधानेनैकैकेन सह कार्यमित्यर्थोऽवगम्यते। अङ्गत्वेऽपि यस्या(श्चाऽऽ)नन्तरं त(त)देकं समाप्यान्यत्कार्यमिति। तत्रायमभिप्रायः—विहव्यान्वाधानमङ्गमपि सर्वैकः पदार्थोऽग्नीनन्वादधातीति संसृष्टद्रव्यत्वेनैकत्वात्। आहवनीयादिषु क्रियमाणं न प्रत्येकं पदार्थोऽपि तु पदार्थावयवः सः। तस्मात्कृत्स्नमेकैकमपवर्जयतीत्यभिधानात् सर्वमेकं कृत्वा परं कार्यमेतावता नाङ्गाङ्गिभावविरोध इति सर्वं समञ्जसम्।

अथ शाखाहरणम्।

पलाशशाखा[४] शमीशाखां वाऽऽहरति।

प्रथमाऽऽरमच्छाखोक्ताऽन्या शाखान्तरीया। पलाशवृक्षस्य शमीवृक्षस्य या(वा) शाखासामान्यमात्रमाग्निविशेषविधिप्रपञ्चार्थं प्रतिज्ञातं शाखाद्वयेऽपि समान एवाऽऽहरणान्तो विधिरिति दर्शयितुम्। यद्यप्यत्राऽऽहरणेन शाखां संस्कुर्यादिति संस्कारविधिः, शाखामित्येकवचनमविवक्षितं, तथाऽपि तया वत्सानपाकरोतीति साधनत्वमेतस्या एव दृष्टमिति सैकैव। इह त्वाहरणं वत्सापाकरणेन शाखापवित्रकरणेन च युक्तं, जाते वत्सापाकरणे यदि शाखा नष्टाऽन्याऽऽनेतव्यैव पवित्रार्थम्। एवं

---

१ ख. °ना यतो। २ क. ग. च. छ. ट. ठ. ड °पि वाऽऽति°। ३ क. ग. च. छ. ट. ठ. °तामार°। ४ क. ग. च. छ. ट. ठ. ड. °द्रव्येने°। ५ ख. छ. ट. °इदमाह°।

शाखापवित्रे नष्टे पुनस्तदर्थं शाखाहरणमिति न्यायविस्समयः। उपवेषे नष्टे न पुन-रानयनं येन केनचिद्याज्ञिकेन काष्ठेनोपवेषं कुर्यादिति।

आदौ शाखागुणानित्यान्व्याचष्टे—

प्राचीमुदीचीं प्रागुदीचीं वाऽहीनां बहुपर्णामशुष्काग्राम्।

वृक्षात्प्राग्भाग उत्पन्नां प्राचीं प्राग्दिग्भागवृद्धाग्रां तथोदीचीमत्रापि। अत्र प्राचीं वोदीचीं वा प्राचीमुदीचीं वेति तयोर्विकल्पः। कुतः। मन्त्रे हीमां प्राचीमुदीचीमिति विशिष्टा दृश्यते। तदुक्तं कात्यायनेन—प्रागुदीचीमन्यतरां वेति। अहीनामत्यक्तां केनचित्पूर्वमाहरणार्थं परिगृह्य त्यक्ता हीना तादृशी न भवति। ओहाक्त्याग इत्यस्य धातो रूपं निष्ठान्तम्। अथवा न विद्यते हीनं त्यागो यस्याः सा, पूर्व एवार्थः। बहूनि पर्णानि पत्राणि यस्यां सा तथा। न शुष्कमग्रं यस्याः सा। सूत्रान्तरे ब्राह्मणे च बहुशाखामित्यपि विद्यते तत्काम्यमित्यत्र नोक्तं मन्त्रेणानभिधानात्।

गुणद्वयस्तुत्यर्थमगुणाया निन्दार्थवादमुदाहरति—

यं कामयेतापशुः स्यादित्यपर्णां तस्मै शुष्काग्राम्।

यं यजमानमपशुर्भूयादिति कामयेत तस्मै यजमानाय निर्गुणामाहरेदध्वर्युरिति वाक्यार्थस्तत्र परिक्रयलब्धेनार्त्विजा कथं यजमानायानिष्टं कामयितव्यं, प्रतिषेधाच्च। तस्मादर्थवादोऽयमपशुकरत्वान्न तादृशीमानयेदित्यर्थः। एतद्याजमाने प्रपञ्च्यते।

काम्यं कल्पं व्याचष्टे—

यं कामयेत पशुमान्स्यादिति बहुपर्णां तस्मै बहुशाखामशुष्काग्राम्।

अयमपि कामो यजमानस्येत्यपि वक्ष्यते। बहुशाखत्वं काम्यमन्यद्द्वयं नित्यानु-वादो विरोधाभावात्समुच्चयार्था बह्व्यः शाखा यस्यां साऽवान्तरभेदयुक्तेत्यर्थः।

विशेषविधिं व्याचष्टे—

इषे त्वेति शाखामाच्छिनत्यूर्जे त्वेति संनमयत्यनुमार्ष्टि वा।

तावन्तौ मन्त्रौ। छिनद्मीति नाध्याहारः शब्दस्यापि त्वर्थ एव लक्षणीय इति परिभाषायामुपपादितं न विस्मरणीयम्। शस्त्रेण हस्तेन वृक्षात्पृथक्करोतीत्यर्थः। उदकस्पर्शनं स्मार्तम्। संनमनमवान्तरशाखासमीकरणम्। अनुमार्जनमनुलोमं संम-र्शनं विकल्पेन।

इमां प्राचीमुदीचीमिषमूर्जमभिसꣳस्कृताम्। बहुप-र्णामशुष्काग्राꣳ हरामि पशुपामहमित्याहरति।

गृहीत्वा विहाराभिमुखो गच्छतीत्यर्थः। प्राच्यादिगुणत्रयवैशिष्ट्यमेकस्यां न संभवतीति जातिपदार्थपक्षे जातेः स्तुतिरित्यविकृतो मन्त्रः। व्यक्तिपदार्थपक्षे

१ क. ग. घ. छ. ट. ठ. ड. °र्थमु°। २ ख. °दशाखायु°।

गुडीच्यामविकृतोऽन्ययोस्तु प्राचीमुदीचीमित्यसंबद्धपदस्यान्यतरस्य त्यागः। वेमन्त्रत्यागस्त्वनुचितः। विकृतिष्वपि तथा। यदि न लभ्यते दिक्त्रये तदाऽन्य-कस्याऽपि ग्राह्या। तस्यां व्यक्तिपक्षे न मन्त्रलोपो विकृतिष्वपि नोह इति वक्ष्यते। ग्रामावास्यायां यजमानयोर्भोजनं तथा व्रतोपायनमपि। परेद्युरपि पर्वद्वयेऽपि तोपायनकालं विधास्यति प्रणीतासु प्रणीयमानास्वासन्नेषु हविष्षु चैतौ साधारणौ ावाविति।

वायवः स्थेति तया षड्वत्सानपाकरोति॥ ४॥

मातृभ्यः पृथक्करोति गृहेऽवस्थापनार्थं, पाने सति दोषे प्रायश्चित्ताभिधानात्। ा च 'आसंगवं मात्रा सह चरति' इति श्रुतेः। अत एव वैखानसः—अध्वर्युः संगव स्थेति शाखां छिनत्तीति। संगवात्पूर्वं न वत्सापाकरणं, तावत्सहचार इत्यर्था-कम्। वत्सानिति पुंलिङ्गमविवक्षितमुद्देश्यगतत्वात्। 'ग्राम्यपशुसंघेष्वतरुणेषु ' इति सूत्रेण स्त्रीपुंवत्सानामेकशेषेऽपि तरुणेषु पुमाञ्शिष्यते। वायवः स्थोपा-ः स्थेति मन्त्र उत्तरस्याऽऽदिना पूर्वस्यान्तमिति परिभाषितत्वात्। वत्सानिति दृष्टद्रव्यत्वे षडिति द्रव्यावान्तरभेदात्। प्रतिवत्सं मन्त्रावृत्तिर्द्रव्यपृथक्त्वेऽभ्यावर्तेत परिभाषितत्वाद्वत्सशब्देन बहुवचनान्तेन सर्वोपादानेऽपि संस्कार्यद्रव्यप्राधान्या-ापत्कर्तुमशक्यत्वाच्च। बहुवचनं षड्वत्सापेक्षमुपरवेषु रक्षोहणवत्। योक्ष्यमाणानां स्वार्थमपाकृतानामेव संस्कारो द्वितीयानिर्देशात्। शाखासाधनं तस्याः शाखाया ाकरणद्वारा दोहसंस्कारकत्वात्। प्रस्तरेण सह प्रतिपत्तिः। षडवरार्ध्यानित्याप-म्बः। तदपि षट्संख्यया न विरुध्यते न्यूननिवृत्तिमात्रपरत्वात्संख्यायास्तत्रापि त्रो दोहयित्वा विसृष्टवागुत्तरा यावत्यः सन्ति तावतीर्दोहयति। सर्वासां वत्सापाक-म्। अत्रोक्तानामभावे बौधायनेनोक्तं 'ताश्चेत्तिस्र एव स्युः प्रथमां चोत्तमां गृह्णीयादथ चेद्द्वे एव स्यातामुभे एव त्रिस्त्रिर्निगृह्णीयादथ चेदेकैव स्यात्तामेव कृत्वोनिगृह्णीयात्' इति। निगृह्णीयाद्विगृह्य विगृह्य दोहयेदित्यर्थः। एवं ायने नोक्तम्। तत्रैकस्मिन्नपि वत्से बहुवचनेनापाकरणं नोहः प्रकृतौ प्रतिषेधात्। कृत्वो मन्त्रावृत्तिरुपावसर्जनप्रभृतिदोहद्रव्यस्य द्रव्यपृथक्त्वेऽभ्यावर्तेत इति त्येव मन्त्रावृत्तिः। वत्से तु प्रधानानुरोधेन मन्त्रावृत्तिः। द्वयोस्तिसृणामपि दोहे विग्रहणानुसारेण ज्ञेयाऽऽवृत्तिः संस्काराणां वत्से। उपलक्षणमेतद्बौधायनीयं नं चतसृणां पञ्चानां वा। किं च विगृह्य दोहसमर्थैव दोह्या प्रथमोत्तमा मध्यमा

---

१ ख. छ. °क्षे म°। २ क. ग. च. छ. ट. ठ. ड. °व्यान्त°। ३ क. च. ट. °र्ते इ°। ४ ख. च. ट. ठ. °र्ते इ°।

वेत्यपि ज्ञेयम् । तिसृणां तूष्णीं दोहे तु साङ्गस्य दोहशब्दत्वाद्वत्सापाकरणव्यतिरिक्तमपि तूष्णीमेव ।

**दर्भैर्वा सदर्भयेत्येकेषाम् ।**

दर्भैस्तदाहृतैः परिभोजनीयैर्वा । न तस्यां शाखाहरणविधिरविधानान्मन्त्रलिङ्गविरोधाच्च । न चान्यस्मिन्द्रव्ये तेनार्थेन संयुज्यमाने धर्मावेश इति वक्ष्यमाणन्यायप्राप्तिः । तस्य विकृतिविषयत्वेनातिदेशार्थत्वान्न च प्रकृतावूहोऽस्ति । अपाकरणं तु मन्त्रेणैव वत्ससंस्कारत्वात् । अत्र पक्षे शाखाहरणं पवित्रार्थमस्त्येव । तत्र पशुपामहमिति लिङ्गं यजमानस्य पशून्पाहीत्यदृष्टार्थेनोपपन्नम् । पुंस्त्वं वत्सगतमविवक्षितमुद्देश्यगतत्वात् । वत्सासु मिश्रेष्वपि विधिः समान एव । तयैव सदर्भया शाखया वेत्यर्थः ।

**अपाकृतानामेकꣳ शाखयोपस्पृशति ।**

एकं वत्समपाकृतानां मध्ये । दर्भैरपाकरणे तैरेव सदर्भया तयैव सांनिध्यात्, आपस्तम्बे तथा दर्शनाच्चेति केचित् । तन्न । तयेति लाघवेन वक्तव्ये गुरुनिर्देशेनाप्रस्तुतत्वमुक्तं, तेन येन केनापि वत्सापाकरणे स्पर्शनं वत्सस्य शाखयैवेति नियमः । पश्वसंबन्धे पशुपामिति लिङ्गविरोधः स्यात् ।

**देवो व इति गोचरमभि मातॄः प्रस्थापयति ।**

शाखयैवानुवृत्तेः । स्पष्टमाहाऽऽपस्तम्बः शाखयेति । गावश्चरन्त्यस्मिन्देशे स गोचरस्तृणयुक्तो देशस्तमभिमुखाः प्रेरयति । रुद्रस्य हेतिः परि वो वृणक्त्विति मन्त्रान्तः । सकृन्मन्त्र इत्युक्तमेव ।

**इन्द्रं निगमेपषूलक्षयेदिन्द्रयाजिनो महेन्द्रं महेन्द्रयाजिनः ।**

इन्द्रमहेन्द्रयोर्देवतयोर्भेदो न्यायशास्त्र इन्द्रमहेन्द्राधिकरणे स्थितः । अस्मच्छाखायां सांनाय्ये कर्मणि महेन्द्रदेवताप्रकाशका मन्त्रा न दृश्यन्ते । दृश्यन्ते(ते) च—'महान्वा अयमभूद्यो वृत्रमवधीदिति तन्महेन्द्रस्य महेन्द्रत्वम्' इत्यर्थवादे देवतैक्यम् । अतो महेन्द्रपदवन्तो मन्त्रा न सन्तीतीन्द्रपदेनोपलक्षणं मन्त्रेषु कार्यमित्याशङ्कानिवृत्त्यर्थं लाघवेन लक्षणेनैव शाखान्तरीयान्मन्त्रान्महेन्द्रपदवतो दर्शयत्यनेन च सूत्रेण । सर्वशाखाप्रत्ययमेकं कर्मेत्युक्तमेव । न चेन्द्रपदवन्तो मन्त्रा महेन्द्रयागे ब्राह्मणेन विहिता येन लक्षणयाऽपि प्रवर्तेरन् । तदिदमाह—इन्द्रं देवता(तां) निगमेषु निगदरूपेषु मन्त्रेषु देवताया हविःसंबन्धो येषु मन्त्रेषु निगम्यते स्पष्टो ज्ञायते ते निगमा नामान्तरेण मन्त्रविशेषा उच्यन्ते न सर्वेऽपि मन्त्रा इति निर्वचनकृद्भिर्नैघण्टुकैरुक्तं तेषु मन्त्रेषूपलक्षयेत्तत्पदेनैव

१ ख. °यागभ्रा° ।

तिपादयेत्पठेदिति यावत्। इन्द्रो देवता यस्यासाविन्द्रयाजी यजमानस्तस्यैव देवतां कृत्य। तथा महेन्द्रं देवतां महेन्द्रयाजिन उपलक्षयेद्व्यत्ययेन भिन्नयोर्देवतयोः प्रति- दने सामर्थ्याभावात्। एतदुक्तं भवति—यथेन्द्रपदवन्तो मन्त्रा अस्मच्छाखायां पठ्यन्त ां महेन्द्रपदवन्तोऽप्यन्यस्यां शाखायां, ततस्त्वस्मच्छाखिभिर्यदा महेन्द्र इज्यते तदा इन्द्रपदवन्त एव मन्त्रा ग्राह्या न तु स्वशाखीया इन्द्रयाजिनोऽर्थे पठितास्तेऽपीति वः। निगमेष्वित्यधिकरणबलान्मन्त्रेष्विन्द्रमिन्द्रपदमुपलक्षयेदिति सामर्थ्यादिन्द्रया- नोऽर्थे पठेदित्यर्थो वा। इन्द्रस्य देवताया उपलक्षणं कुर्वत्युपलक्षयेदित्यर्थात्। न र्थस्यार्थ एवोपलक्षणं न पदमिति वाच्यम्। पदमपि यन्नाममात्रं तत्स्वरूपेणैव व्याव- ाम्।

तथोक्तं—'शब्देन देवतायागे समवैति न रूपतः।
तस्मान्महेन्द्रशब्दोक्त्या महेन्द्रो देवतेष्यते' ॥ इति।

यद्यपि स्यादस्मन्मते रूपेण समवायस्तथाऽपि देवतात्वं तत्तच्छब्दविशिष्टाया एव। शाब्दिका अपि—'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गृह्यते' ॥
इति निर्विकल्पकं निराकुर्वन्त आहुः ॥

प्रस्थितानामेकां॰ शाखयोपस्पृशति।

ष्णीमेव। प्रस्थितानां प्रस्थानाभिमुखीभूतानाम्। शाखाग्रहणं नियमार्थमित्युक्तमेवा- ऽपस्तम्बेनापि नियमार्थं कृतमेव शाखाग्रहणमस्मत्सूत्रकारेण पूर्वत्रापीति विशेषः। मिति नियमाददृष्टार्थमेवाऽऽरादुपकारकम्। अन्यथा सर्वासामापद्येत। अथ वा द्रव्यत्वेनैकत्वाददृष्टद्रव्यसंस्कारार्थमेकस्या एवोपस्पर्शने सर्वासां संस्कारो भव- ।

शुद्धा अपः सुप्रपाणे पिबन्तीः शतमिन्द्राय शरदो दुहानाः।
रुद्रस्य हेतिः परि वो वृणक्त्विति प्रस्थिता अनुमन्त्रयते।

॥ अनुलक्षीकृत्य मन्त्रयते मन्त्रेण प्रतिपादयेददृष्टार्थः संस्कारः प्रत्यगाशीष्ट्वाभावा- यजमानस्य। शतं महेन्द्रायेति महेन्द्रयाजिनो द्रष्टव्यम्। अत्र महेन्द्रेऽसमवे- काशमिन्द्रपदमाहुस्तत्र पूर्वसूत्रविरोधात्। भारद्वाजः साक्षादमुमेव प्रकृत्याऽऽह— ायेति चेति। पाठद्वययुक्तमन्त्रसंग्रहः—
शुद्धा अप उपवेषोऽस्येता अग्र च कामधुक्।
बहु दुग्धि च सोमेनेन्द्रस्य भागं द्विषण्मताः ॥

---

१ ख. स्यैवार्थे तस्यैव।

**ध्रुवा अस्मिन्निति यजमानस्य गृहानभि पर्यावर्तते ।**

बह्वीरित्यन्तः । पर्यावर्तते प्रदक्षिणमावर्तते यजमानालयमभिलक्षीकृत्य गृहान्गन्तु-मित्यर्थः ।

**यजमानस्य पशून्पाहीत्यग्निष्ठेऽनस्यग्न्यगारे वा पुरस्ता-त्प्रतीची१ शाखामुपगूहति पश्चात्प्राचीमित्येकेषाम् ।**

अग्निसमीपस्थमग्निष्ठम् । अनः शकटं, तत्राग्निशालायां वा पुरस्ताद्भागेऽन्यतरस्य प्रत्यगग्रां शाखां पश्चाद्भागे वा पूर्वाग्रामुपगूढां न पतति तथा संवृतां कुर्यात् । एवमिषे त्वेति मन्त्राणां तृतीयस्यामिति ब्राह्मणस्य पाठेनाऽऽच्छिद्रिकैः शाखान्तरमन्त्रैर्ब्राह्मणे-श्चोपबृंह्य शाखाहरणविधिर्व्याख्यातो गूहतीत्यन्तः । अत्रामावास्यायां वेदिकरणं वक्तव्य-मपि शाखान्तरीयत्वेन विकल्प एवेति दर्शयितुं नोक्तम् । तथा वेदकरणानन्तरमपि प्राप्तं न दर्शयति किंत्वाज्यलेपनिनयनान्त एव व्याख्यास्यते विकल्पोऽपि तत्रैवेति ।

इति वत्सापाकरणविधिः ॥

अथ पाठानुक्रमेण पर्वद्वयसाधारणं मन्त्रब्राह्मणानुसारेण बर्हिराहरणविधिं व्याचष्टे-

**देवस्य त्वेत्यश्वपर्शुमसिदं वाऽऽदत्ते ।**

उत्तरेण गार्हपत्यं निहितयोरन्यतरादानमापस्तम्बमतात् । आदद इत्यन्तः । अश्वस्य पार्श्वे स्थितमस्थि वङ्क्रिनामकमश्वपर्शुः स्त्रीलिङ्गोऽश्वपर्श्वा बर्हिरच्छैतीति दृश्यते । साऽय सोपस्कृता छेदनयोग्या कार्या । तस्यामस्मच्छाखीयो विधिर्मन्त्रस्य । असिदो वक्रायुध-विशेषः । तत्र शाखान्तरीयोऽयमेव मन्त्रः । छेत्तुं गच्छतः शस्त्रादानं दृष्टः संस्कारः ।

**यज्ञस्य घोषदसीति गार्हपत्यमुपतिष्ठते ।**

उप समीपं गत्वा गार्हपत्यस्योपस्थानं मन्त्रकरणमुपश्लोकनेन प्रकाशनं कुर्यादिति गार्हपत्यस्यासमवेतत्वेनैव प्रकाश्यत्वादारादुपकारकं कर्मेदम् । प्रकृते समवेतत्वेऽपि वा सूर्याद्यसमवेतार्थप्रकाशकत्वेनोपस्थानस्य विधेर्वैरूप्यमिया सर्वत्रोपस्थानं विशिष्टो जप एव । अथवा यथासंभवं वैरूप्येण प्रधानगुणकर्मणोरेका संज्ञा३ऽऽघारादिवद्धात्वर्थोऽ-प्येको जुहोतिवद्भविष्यति । सर्वथा दृष्टार्थं न भवति । याजमानेऽयमर्थः स्पष्टो भविष्यति ।

**प्रत्युष्टमित्याहवनीये गार्हपत्ये वा निष्टपति ।**

अरातय इत्यन्तः । निरातिशयेन तपति तापयतीत्यर्थः । आपस्तम्बो नाश्वपर्शुमि-त्याह दाहप्रसङ्गात् ।

---

१ क. ग. च. ठ. ड. °रणम° । २ क. ग. च. ठ. ड. °भ्रः । वा° । ३ ड. °ज्ञाऽऽधारा° ।

प्रेयमगादुर्वन्तरिक्षं प्रेहीत्यन्यतरेण प्राचीनमुदीचीनं वाऽभिप्रव्रज्य यतः कुतश्चिद्दर्भमयं बर्हिराहरति ।

सर इत्यन्तः प्रथमस्य । द्वितीयः शाखान्तरीयः । यत्र निष्ठपति ततोऽग्नेः सकाशात्प्रा- नं क्रियाविशेषणं किंचिद्गत्वा तथोदीचीनमिति शाखान्तरीयम् । द्वौ त्रींश्चतुरः प्रक्र- निति बौधायनः । अभिप्रव्रज्याभिमुखं गत्वा यस्यां दिशि बर्हिरस्ति तां दिशं गत्वाऽऽ- तीत्यर्थः । प्रथमे पुरस्तादिति मन्त्रलिङ्गात्तद्ब्राह्मणाच्च प्राचीनगमने प्रथमः । प्रेयमि- लिङ्गादश्वपर्श्वा सह गमन एव । विषणापेक्षया स्त्रीत्वमित्यसिदेन सह गमनेऽपि प्राचीनो त्र इति केचित् । तन्न । एवं कल्पनायां प्रमाणाभावात् । तदिदं दर्शयितुमन्यतरेणे- धिकः प्रयत्नः । अन्यतरेण विधिना स्वशाखीयेनैव वा परशाखीयेनैव वा । परशाखीयाः र्थो उर्वन्तरिक्षमिति मन्त्रोऽसिर उदीचीनं गमनं न ते व्यत्ययं गच्छन्ति संनियोग- ष्टत्वादिति भावः । नोनेद्वेति सूत्राल्लाघवेनातो व्यवस्थितं त्रितयं त्रितयमिति ज्ञाप- ते । दिङ्नियमस्तु ब्राह्मणानुसारेणादृष्टार्थः । प्रव्रज्येत्यस्योपसर्जनत्वेनाऽऽहरतीत्यनेन प्रसंबन्धविधानमिति न वाच्यम् । आहरणं वक्ष्यमाणमनूद्यते न विधीयते, गमनं श्यपा निर्दिष्टमप्यपूर्वत्वाद्विधेयं, तदेवोभयमन्त्रप्रकाश्यमिति तत्रैव मन्त्रविधिः कल्प- ः । आहरतीति प्रतिज्ञा क्रियत आहरणस्यातः परं वक्ष्यमाणमङ्गमिति दर्शयितुम् । ान्तरे समुच्चयोऽनयोर्मन्त्रयोर्दृष्टस्तन्निवारणमप्यन्यतरग्रहणेनेत्यपि प्रयोजनम् । यतः श्चिदिति ब्राह्मणमेवानुकृतं 'अथो यदेतदुक्त्वा यतः कुतश्चाऽऽहरति । तत्प्राच्या दिशो भवति' इति । दर्भमयम् । दर्भा दशप्रकाराः सप्तप्रकारा वा । कुशादिमध्ये ः पूर्वो ग्राह्यः । दर्भरूपं दर्भमयं तदेव बर्हिः । तत्रैव बर्हिःशब्दो मुख्यस्तृणजाति- ौ चामुख्य इति ज्ञापयितुं पूर्वं दर्भमयमित्युक्तं, दर्भमयमेव बर्हिर्नान्यदित्यर्थः । ःरेव सत्पश्चाद्विधिना नयति । जातिवाचित्वं बर्हिराज्याधिकरणे स्थितम् । ःरित्येकवचनमविवक्षितमुद्देश्यगतत्वात् । तथाऽप्येकजातीयमेवेत्यस्ति विवक्षा ।

विष्णोस्तूपोऽसीत्यभिप्रेतानामेकं[1] स्तम्बमुत्सृजती- न्द्रस्य परिषूतमसीत्यन्यं परिषौति देवानामिति वा ।

वर्षवृद्धमसीत्यन्तोऽन्त्यस्य । अभिप्रेता ग्रहणयोग्यत्वेन, स्थलविशेषनिष्ठस्तम्बा दर्भा- ां मध्य एकं स्तम्बं छेद्येभ्यो बहिर्लक्षयित्वाऽन्यमवशिष्टं स्तम्बजातं परिगृह्णाति । नीयत्वेन बुध्या परिग्रहः । स्तम्बत्यागेन सर्वेषामपादानभूतानां दर्भाणां संस्कार इति ज्यं स्तम्बमुपादेयं तदङ्गं विशेषणं च विवक्ष्यते । तथाऽप्येकमिति संख्योपादानं न मुष्टि स्तम्बत्याग इति प्रदर्शनार्थम् । अन्यमित्येकवचनमविवक्षितमुद्देश्यगतत्वात् । बशब्दः पुंलिङ्गोऽग्निवान्ते दर्भस्तम्ब इति दर्शनात् ।

---

१ क. ग. च. छ. ट. ठ. ड. 'रेण द°' । २ ख. 'कृतम् । तथाहि । अ° ।

तं सर्वं दाति ।

तं परिषूतं, सर्वग्रहणमसर्वेण पर्याप्तावपि परिषूतावशिष्टस्योपघातो मा भूदेवमर्थम् । स्तम्बजातं सर्वं दाति वक्ष्यमाणविधिना तन्मध्ये किमपि न त्यजति ।

विधिना त्यागपक्षमाह—

अपि वा पशूनां त्वा भागमुत्सृजामीति
परिषूतस्यैकां द्वे वा दर्भनाड्यावुत्सृजति ।

नाड्यौ शलाके । अत्रापि संख्योपादानं पूर्ववद्व्याख्येयम् । अयमपि परिषूतानां संस्कारस्तस्मादेकत्वमविवक्षितम् । परिषूतस्येति जात्या वाऽन्यं परिषौतीति च ।

इतः परं सर्वच्छेदननाड्युत्सर्गपक्षयोः साधारणं विधिमाह—

इदं देवानामिति परिषूतमभिमृशतीदं पशू-
नामित्युत्सृष्टमवसृष्टो गवां भाग इति वा ।

अनुत्सृष्टोत्सृष्टनाडिकं परिषूतमविशेषेण । मन्त्र इदमिति नपुंसकं बर्हिर्मात्रविव-क्षया । तत एव परिषूतमुत्सृष्टमिति च नपुंसकम् । अथोत्सृष्टायां नाड्यामसंगतं स्यान्ना-ड्योरपि । अभिमृशतीत्युभयत्र संबन्धः । एते संस्कारा अदृष्टार्था एते मन्त्राः संस्कारार्थाः ।

दृष्टानाह—

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो
हस्ताभ्यां बर्हिर्देवसदनमारभ इति विशाखेष्वभिपद्यते ।

विगताः शाखा येभ्यः पर्वसंधिभ्यस्तानि विशाखानि परूंष्युच्यन्ते 'यत्परुषि दिनम् । तद्देवानाम्' इति श्रुतेस्तेषु च्छेत्तुमभिपद्यते मुष्टिनाऽऽरभते गृह्णातीति यावत् । बहु-वचनं सर्वेषु मुष्टिमात्रतृणेष्वित्येवं वक्तुम् ।

देवेभ्यस्त्वोर्ध्वबर्हिभ्य इत्यूर्ध्वमुन्मार्ष्टि ।

गृहीतस्थानादूर्ध्वं दक्षिणहस्तेनोन्मार्ष्टि दक्षिणेनैव वाऽऽरभते तेनैवोन्मार्ष्ट्यग्रपर्यन्तं, बर्हिरिति शेषः ।

देवबर्हिर्मा त्वाऽन्वङ्मा तिर्यगित्यसिदं निदधाति
माधो मोपरि परुस्त ऋध्यासमिति वा ॥ ५ ॥

पूर्वस्य राध्यासमित्यन्तः । पूर्वं गृहीतमसिदं निदधाति पर्वसंधौ नाधस्तादुपमूलस्य पित्र्यत्वान्नोपर्युपरि लूनस्य मानुषत्वात् । गुरुनिर्देशेनैतदेव दर्शितं पूर्वं व्यवस्थितौ प्रेय-मगादित्यादिकौ मन्त्रावुक्तौ । तथाऽत्र शाखान्तरीयो मन्त्रः शाखान्तरीयेऽसिद एवेति मा भूदित्यसिदमित्युक्तं शाखान्तरेऽसिदेऽप्ययं मन्त्रोऽश्वपर्श्वां शाखान्तरे परुस्त इति,

मादुंभयमुभयत्रेति ज्ञापितम् । असिदमपीति न तु पर्शुमेवेत्यर्थः । केचिदसिदमेवेति यमार्थत्वं वदन्त आहुर्मन्त्रे पुंस्त्वेन निर्देशादिति हेतुं तदभिप्रायं न विद्मः । कथं त्रे पुंस्त्वेनाऽऽयुधनिर्देशः । किंचाश्वपर्शुरेवास्मच्छाखायां देवबर्हिरिति मन्त्रोऽपि कथमुभयोरसंबन्धो द्वयोरेवास्मच्छाखीयत्वात् ।

या जाता ओषधयो देवेभ्यस्त्रियुगं पुरा । तासां पर्व राध्यासं परिस्तरमाहरन्नित्यभिमन्त्र्य ।

बर्हिरिति शेषः । अभिमुखः प्रकाशयेदित्यर्थः संस्कारोऽदृष्टार्थो बर्हिषः ।

आच्छेत्ता ते मा रिषमित्याच्छिनत्ति ।

शस्त्रमाकर्षन्बर्हिश्छिनत्ति शस्त्रयोरुभयोरपि वक्रत्वाद[1]वान्तरधारत्वाच्च ।

संसर्गिद्रव्याणामेकद्रव्यत्वं बर्हिषामेव तथाऽपि मुष्टेस्तदवयवत्वं वक्तुं परिमाणमाह—

सनखं मुष्टिं दाति ।

मुष्टिर्नखप्रधानः पुंलिङ्गो मुष्टिशब्दो बर्हिष इति शेषः । बर्हिर्मुष्टिं सनखमङ्गुष्ठा- ळेसंबन्धेन मण्डलीकरणेऽवान्तरावकाशो मुष्टिस्तत्तिर्यग्मानं बर्हिर्मुष्टिस्तावत्पर्याप्तं ‍नीयमाच्छेत्तेति सकृदुच्चारितेन मन्त्रेणैकमेव तत्संसृ[2]ष्टं द्रव्यस्यावयवस्ततोऽधिके ष्टेना ग्रहीतुमशक्ये पुनर्मन्त्रोऽवयवद्रव्यत्वेन पृथग्द्रव्ये विचेष्टा पृथक्त्वेनार्थनिष्पत्ते- महस्तेन गृहीतं न तन्मुष्टिनैव मितम् ।

प्रथमबर्हिर्मुष्टेर्विशेषसंज्ञामाह—

स प्रस्तरः ।

स बर्हिर्मुष्टिः प्रस्तरसंज्ञकः । संस्कारनिमित्तः शब्दः ।

मुष्टिपरिमाणे सर्वेषां बर्हिषामविशेषेण प्राप्ते प्रस्तरे वैकल्पिकैः परिमाणैर्बाधमाह—

स्रुग्दण्डमात्रमूर्वस्थिकुल्मिमात्रं वा ।

तिर्यक्प्रमाणानीत्यापस्तम्बः । स्रुग्दण्डो नवाङ्गुलपरिणाह उक्त एव । उरुणोऽस्थि ध्वं, कुल्मिर्गोपुच्छं, मात्रशब्दस्य प्रत्येकं संबन्धः ।

एवं प्रस्तरे परिमाणविशेषानभिधायेतरबर्हिषामुक्तमेव प्रमाणं न प्रस्तरगतेन परि- णेन बाध्यत इत्याह—

ए[3]तेनैव कल्पेनेतरान्दाति ।

एतेनेति परामृष्टो विशेषः प्रस्तरपरिमाणादन्यो बर्हिर्मुष्टिमात्रविषयस्तस्य द्रव्यपृ- वेन प्रतिमुष्टि प्राप्तावपि प्रस्तरविधानेन व्यवधानादनुसंहितः स एव पुनरेवमितरा-

---

१ क. ग. च. ठ. ड. 'त्वावा°' । ख. 'त्वादेवा°' । २ क. ग. 'सृष्टद्र' । ३ क. ग. च. छ. ट. ड. °तेन क° ।

नित्येतावता सिद्धे गुरुनिर्देशेन सर्वेषु मुष्टिपूत्सर्गतः पदार्थानुसमयः प्राप्नुयात्स मा भूत्काण्डानुसमयो यथा स्यादित्युक्तम् । एतेनैकस्मिन्मुष्टौ कृतेन कल्पेन समर्थेन काण्डानुसमययुक्तो हि समर्थः संयुक्तान्येकापवर्गाणीति वक्ष्यमाणत्वात् । अतस्तेन विधिविशेषेण दातीतरान्बर्हिर्मुष्टीन्प्रत्येकं छिनत्तीत्यर्थः ।

तत्र प्रतिमुष्टि स्वावर्तनीयं परिच्छिनत्ति—

यदन्यत्परिषवणादुत्सर्जनाच्च ।

द्वयस्य सर्वार्थत्वं स्पष्टमिति न तस्याऽऽवृत्तिप्राप्तिरिति मत्वा यदन्यत्परिषवणादिति परिवर्जनीयमुक्तं, सर्वेषां परिग्रहो जातः परिषवणाख्यो विभुत्वात्संकल्परूपस्य परिषवणस्य नाडत्युत्सर्गो वैकल्पिकः । सोऽपि सर्वस्य परिषूतस्येत्युक्तमेव । अतो द्वयं विहायान्यद्देवस्य त्वेत्यादि समानमित्यर्थः । परिषवणोत्सर्गशब्दाभ्यां परिषूताभिमर्शनोत्सृष्टाभिमर्शने च परिसंख्याते । उभयोः संस्कारप्रतिपत्तिरूपयोः सर्वार्थत्वेन जातत्वात् ।

सर्वं यथार्थं लुत्वा ।

उत्तरविधानार्थमनुवादमात्रं, दित्वेति वक्तव्येऽप्याच्छिनत्ति दाति लुनाति लुनोति । एते प्रयोगाः समानार्थाः क्वचिच्छाखायां कश्चिदिति दर्शयितुमाच्छिनत्तीति प्रयुज्य गुणविध्यर्थं दातीत्युक्त्वा लुत्वेति प्रत्ययेनानुवदति यथार्थं वेदेर्दैर्घ्यानुसारेण मुष्टीनां संख्या बर्हिर्दैर्घ्यानुसारेण च । देवस्य त्वेत्यादिना मन्त्रजातेनाभिप्रतिपद्यत इत्यादि कर्मजातं प्रतिमुष्ट्यावर्तत इति न्यायः स्मारितः ।

देवबर्हिः शतवल्शं विरोह[2]त्यालवानभिमृशति ।

उलपाः स्तम्बशेषा आव्रश्चनानि भूमौ येऽवशिष्टाश्छेदकालेऽपादानभूता इति यावत्तत्प्रतिपत्तिरियं सकृदेव प्रयत्नावृत्तावपि न मन्त्रावृत्तिर्यत्रैकस्मिन्द्रव्य इति न्यायात् ।

सहस्रवल्शा वि वयꣳ रुहेमेत्यात्मानं प्रत्यभिमृशति ।

आत्मानं हृदयदेशं तत्रैव पुमान्हस्तं दत्त्वाऽहमस्मीत्यात्मानं दर्शयति हस्तेन स्पृशति आत्मानं प्रतिसंधायाभीति न मनोमात्रेण पश्यन्नपि तु चक्षुषाऽपीत्यर्थः । अपामुपस्पर्शनं स्मार्तम् ।

अयुजो युजो वा मुष्टीन्निधनानि वा[3] लुनोति ।

नेदं मुष्टीनां निधनानां च विकल्पार्थं मुष्टीनामेव नित्यं छेदनीयत्वेन विधानात् । निधनानि मुष्टिराशयो धान्यादिलवने प्रसिद्धास्तेषामेव संभरणं नित्यं विधास्यते । अतो द्वयं नित्यमयुक्त्वं युक्त्वं च विकल्पमानमन्यतरन्मुष्टिषु वा स्यान्निधनेषु वेति विकल्पार्थः ।

---

१ ख. °ति प्रथमं प° । २ क. ख. ग. च. छ. 'हेत्युलपान° । ३ ख. निधये ।

मुष्टीनामयुक्त्वयुक्त्वे स्वविवक्षिते । तैः कृतानि निधनानि समानि विषमाणि वाऽथवा मुष्टय एव समा विषमा वेति । न चात्र कोट्यन्तरासंभवाद्वाच्यमिति वाच्यम् युग्मविधानेऽपि द्वयोस्त्रयाणां च निषेधः फलति बहुवचनेन विधानात् । एवमयुग्म विधाने बहुवचनेनैकस्य द्वयोश्च प्रतिषेधः । तथा च ब्राह्मणद्वयानुरोधेनैवमुक्तम् फलं तु चतुःप्रभृति समत्वं विधेयं त्रिप्रभृति विषमत्वं वेति । अत्र परिभोजनीनामका न्दर्भाञ्शुष्कानशुष्कांश्च परिस्तरणाद्यर्थे लुनन्ति याज्ञिकाः । तथैव वैखानसेनोक्तम् ॥

अदित्यै रास्नाऽसीति प्रदक्षिणᳪ शुल्बमावेष्टयति ।

आवेष्टयतीत्यनेन सामन्ते सिद्धे प्रदक्षिणमित्यवाच्यं वाच्यं द्विगुणत्वनिरासार्थ मन्यथा सव्यं गुणं वेष्टयित्वा प्रदक्षिणं स्यात् । शुल्बं बन्धनार्था रज्जुस्तथा म भूदिति किं तु प्रथमत एव प्रदक्षिणमेकसरामेवाऽऽवेष्टयतीत्यर्थः ।

अयुपिता योनिरिति प्रतिनिदधाति त्रिधातु पञ्चधातु वा धातौ धातौ मन्त्रमावर्तयति ।

मन्त्रेण प्रतिनिधानं प्रतिसंधानं मुष्ट्यन्तरस्य पूर्वमेकमुष्टिमात्रमावेष्टितं तस्य संधानेन द्वितीयमुष्टिं प्रतिसंदधातीत्यर्थः । कथं, त्रिधातु त्रयो धातवोऽवयवा संधानार्था यस्मिञ्छुल्बे, तथा धातवो यावन्तः प्रक्षिप्यन्ते प्रतिप्रक्षेपं मन्त्रावृत्तिः । कुतः, धातूनां संख्यया पृथग्द्रव्यत्वात् । यावान्संहितस्तावानेव संस्कृतोऽन्यस्य संधीयमानस्य संस्कारार्थं भवितव्यं मन्त्रेण । तत्र पूर्वसूत्रे शुल्बमावेष्टयतीत्यावेष्टनम भिहितं, तत्तु दर्भमुष्टिनैवेत्यर्थात्सिद्धम् । ततस्तु संधानार्थे मन्त्र उक्तस्तत्र संख्योक्ता धातूनां सा संख्या प्रथमधातुना सहेति गम्यते । तदुक्तं कात्यायनेन—‘ अयुग्धातूनि पूनानि ’ इति । पूनानि बन्धनानि, तेन रज्ज्वा एव तथात्वमुक्तम् । प्रतिसंधानक्रि याविशेषणत्वे तु धातूनां भवत्येव पूर्वेण सह ग्रहणं, न हि प्रतिसंधानमेकस्य भवति । तथा च त्रिधातुशुल्बे द्विःसंधाने चतुरावृत्तिरिति ज्ञेयम् । नन्वत्र मन्त्रावृत्तिर्न वाच्या द्रव्यपृथक्त्वेऽभ्यावर्तेत इति प्राप्तत्वात् । सत्यं, नेयमावृत्तिर्मन्त्रस्य संधानार्थोच्यतेऽपि तर्ह्यावेष्टनार्था । तत्र शुल्बस्यैकत्वे च सकृत्प्राप्ताविदमुक्तं यद्द्रव्यैकत्वेऽपि मध्ये मध्य आवेष्टनक्रियायाः संधानार्थं मन्त्रेण व्यवधानात् । यथा कालदेशकृते भेदे द्रव्यभेदोऽभि धास्यत एवं मन्त्रकृते व्यवायेऽपि द्रव्यभेदान्मन्त्रावृत्तिरिति । तदेव भरद्वाजवचनेन द्रव्यपृथक्त्वेऽभ्यावर्तेत इत्यत्र सूत्रे व्याख्यातं न विस्मरणीयम् ।

पृथिव्याः संपृचः पाहीति प्रागग्रमुदगग्रं वा शुल्बं निदधाति ।

विततं पृथिव्यां स्थापयति । स्पष्टमन्यत् ।

अपरिमितानां परिमिताः संनह्ये सुकृताय कम् । एनो मा निगां कतमच्चनाहं पुनरुत्थाय बहुला भवन्त्वित्यभिमन्त्र्य सुसंभृता त्वासंभारमीति शुल्बे निधनानि संभरति ।

अभिमन्त्र्य निधनानि मन्त्रलिङ्गात्तेषामेव प्रतीतेः । संभरति निदधाति । संभरामीत्यन्तः । अभिमन्त्रणं तन्त्रं विभुत्वात्संभरणे तु प्रतिनिधानं मन्त्रो न हि तानि सकृत्संभर्तुं शक्यन्ते, न च मेलनीयानीति विधिरस्ति । तथाचाऽऽह वैखानसः—'यथालूनं संभरति' इति । लवनक्रमेणैव संभरणविधानात् । तथाच प्रस्तरस्योत्तमे निधाने संभरणमुपपद्यते सुसंभृता त्वेति प्रकृतनिधनैकत्ववचनाच्च न संभरणं सकृत् ।

अलुभितो योनिरित्युत्तमे निधने प्रस्तरमादधाति ।

स्पष्टम् ।

इन्द्राण्यै संनहनमिति संनह्यति पूषा ते इति प्रदक्षिणं ग्रन्थिमावेष्ट्य[1] ।

ग्रथ्नात्विति मन्त्रान्तः । संनह्यति शुल्बेन संगृह्णाति शुल्बान्तावुपर्यानीय विपर्यस्य वितनोतीति यावत् । ग्रन्थिमावेष्टयतीत्येतावता प्रादक्षिण्यं सिध्यति परिभाषयैवेति प्रदक्षिणमित्यवाच्यं वाच्यं प्रकारान्तरग्रन्थिनिरासार्थमुपरिगुणावेष्टनमात्रेण ग्रन्थिर्यथा स्याल्लोकसिद्धप्रकारान्तरग्रन्थिर्मा भूदिति ।

स ते इति पुरस्तात्प्रत्यञ्चमुपकर्षति पश्चाद्वा प्राञ्चम् ।

मा स्थादित्यन्तः । ग्रन्थिमित्यावर्तते । बर्हिषि दिशोरमावाद्बर्हिषो वेष्टनस्य पूर्वभागेन (ण) ग्रन्थिमधस्ताद्वेष्टनस्यैव प्रत्यञ्चं प्रतीचीनं कर्षति निर्गमयति, ग्रन्थिमात्रं न तु शुल्बप्रान्तावपि, ग्रन्थिरेव मध्ये द्विगुणीकृतोऽपकर्षणीय इत्यर्थः । विपरीतं वाऽपकर्षति ।

आपस्त्वामश्विनौ त्वामृषयः सप्त मामृजुः । बर्हिः सूर्यस्य रश्मिभिरुषसां केतुमारभ इत्यारभते ।

बर्हिरिति शेषः प्रकृतत्वात् । आरभत आहरणार्थमारम्भं हस्ताभ्यां गृहीत्वा करोतीत्यर्थः ।

इन्द्रस्य त्वा बाहुभ्यामुद्यच्छ इत्युद्यच्छते ।

ऊर्ध्वमुद्यौति बर्हिरेव । उद्यच्छत इत्यात्मनेपदं छान्दसम् ।

---

१ क. ख. ग. °वेष्टयति° । प्र° ।

बृहस्पतेरिति शीर्षन्नधिनिधाय हरति।

हरामीत्यन्तः। शीर्षन्निति सुपां सुलुगिति सप्तम्या लुक्तस्यासिद्धत्वान्न नलोपः। शिरसि निधाय यजमानस्य विहारं प्रति नयति मन्त्रेण शिरसि निधानं विधीयते न तु हरणं तस्य प्राधान्याद्विधिप्रत्ययश्रवणाच्च। मन्त्रसंबन्धप्राप्तावपि तत्र मन्त्रान्तरस्यानन्तरमेव विधास्यमानत्वान्नायमपि तत्रैव मन्त्रानर्थक्यप्रतिहतत्वादुपसर्जनेनापि संबन्धनीयः। तथा चाप्राप्तविधिः शीर्षन्नधि निदधातीति। हरतीत्येतदग्रिमप्रतिज्ञाऽधिनिधानहरणयोरविनाभावार्थं, तेन यत्र देशान्तराद्बर्हिष आहरणमस्ति तत्रैवाधिनिधानम्। यत्र सिद्धा एव दर्भा यथोपपन्नसंस्कारैर्बर्हिर्गृह्यते तत्र न। न ह्येतद्धर्ममात्रं किंतु दृष्टार्थं नियम्यते।

यौ गमनौ तौ प्रत्यायनौ।

गम्यते याभ्यां मन्त्राभ्यां तौ गमनौ, पूर्वं गमनार्थत्वेन प्रेयमगाद्उर्वन्तरिक्षं प्रेहीति मन्त्रावुक्तौ तावेवात्र प्रत्यायनौ प्रत्ययते प्रत्यागम्यते याभ्यां तौ प्रत्यायनौ। अस्मच्छाखायां गमनप्रक्रमे प्रेयमगादिति पठितस्तत्स्थान एव शाखान्तर उर्वन्तरिक्षं प्रेहीति पठितः। शाखान्तरे पुनः प्रत्यायनस्थाने द्वावपि पठितौ स्वशाखायां यत्रोर्वन्तरिक्षमन्विहीत्ययमध्यायान्ते पठितस्तस्मादयमपि तौ च गमनार्थत्वेन ज्ञेयौ। अन्यथा स्वशाखामन्त्रस्यान्विहीत्यस्य त्यागः स्यात्।

अदित्याः सद आसीदेति परिधिदेशेऽन्तर्वेद्यनधः सादयति।

मध्यमपरिधिदेशे वेदेर्मध्ये तृणादिना प्रदेशं व्यवधाय तत्र बर्हिरासादयति।

देवंगममसीत्यासन्नमभिमन्त्रयते।

तत्रैवाऽऽसादितं बर्हिरभिमन्त्रयते।

अदित्यास्त्वा पृष्ठे सादयामीति गार्हपत्यदेश उपरि निदधाति॥ ६॥

गार्हपत्यस्योपरिष्टात्कटादौ[1] यथा न निपतति तथा स्थापयति परिभोजनीयानपि बर्हिषा सहाऽऽनीय स्थापयति। अत्रानुग्रहं बर्हिराहण आह बौधायनः—'आहृतं यजुषा करोति' इति। कात्यायनस्तु निखातलूनच्छिन्नावहतपिष्टदुग्धेषु यजुष्क्रियासंभवादिति।

इति बर्हिराहरणविधिः।

पालाशं खादिरं वैकविंशतिदारुमिध्मं[2] संनह्यति।

संज्ञासंख्याप्रदर्शनार्थमेतत्। पलाशस्य विकारस्तं पालाशं, खदिरस्य विकारस्तं वा, एकविंशतिर्दारूणि काष्ठानि यस्मिन्नसावेकविंशतिदारुस्तम्। इध्ममिति व्युत्पन्नोऽयं

---

१ क. च. छ. ट. °तस्ताद°। २ गं. ठ. ड. °स्तद°।

शब्द इध्यतेऽग्निरनेनेति ननु (तु) संस्कृतवाचीत्युक्तं दारूण्यतष्टकाष्ठानि संनह्यति वक्ष्यमाणप्रकारेण ।

काष्ठानां विनियोगमाह—

पञ्चदश सामिधेन्यर्थानि ।

सामिधेन्यनुवचनकाले समिन्धनार्थत्वेन प्रक्षेप्यमाणानि सामिधेन्यः प्रयोजनं येषां तानि सामिधेनीभ्य इति वा सामिधेन्यर्थानि सामिधेनीप्रयुक्तानीति यावत् । सामिधेनीभिः प्रकाश्यमानोऽर्थः समिद्भिः समिध्यमानोऽग्निस्तस्य विशिष्टस्य विशेषणान्यपि सामिधेनीभिरर्थ्यन्तेऽभिधीयन्तेऽतस्तान्युपकारकत्वात्तदर्थानीत्युक्तम् । न ह्यसत्यर्थे शब्दः प्रवर्तते ।

त्रयः परिधयोऽनियतवृक्षाः सत्वक्काः ।

अग्नेः परितो धीयन्ते तानि दारूणि परिधयः, अनियतवृक्षा नानाजातीयो वृक्ष उपादानं येषां ते । अत एवाऽऽहाऽऽपस्तम्बः—'त्रयः परिधयः पलाशकार्ष्मर्यखदिरोदुम्बरबिल्वरौहीतकविकङ्कतानां ये वा याज्ञिका वृक्षाः' इति । समिधां सत्वक्त्वं स्मृतिसिद्धम् । परिधीनां तु शम्याकारत्वं स्वेन विधास्यते स्मार्ते, आकारस्तु तक्षणेन विना न भवति तच्छङ्कानिवृत्त्यर्थं सत्वक्का इत्युक्तम् ।

तत्रैव वैशेषिकं सार्थवादं विधिद्वयमाह—

आर्द्रा भवन्ति ते हि सरसा इति विज्ञायते
शुष्का भवन्ति मेध्यत्वायेति विज्ञायते ।

विज्ञायत इति शाखान्तरीयसाक्षाच्छ्रुतित इत्यर्थः । ते हि सरसा इति मेध्यत्वायेति चार्थद्वयप्रदर्शनं कर्माङ्गज्ञानार्थम् । उक्तं च बौधायनेनार्थवादैरभ्युदयायेति । अर्थवादाज्ञाने यजुर्भ्रेषप्रायश्चित्तं भुवः स्वाहेति दक्षिणाग्नौ । एवं यत्र यत्रार्थवादानुदाहरति तत्र दृष्टं प्रयोजनं येषु लभ्यते तत्र तथा । यत्र न लभ्यते तत्र कर्माङ्गज्ञानार्थमेव ग्रहणम् । त्रय आर्द्रा एव वा कर्तव्याः शुष्का एव वा ।

स्थविष्ठो मध्यमोऽणीयान्द्राघीयान्दक्षिणार्ध्योऽणिष्ठो ह्रसिष्ठ उत्तरार्ध्यः ।

अत्र हि स्मृतिकारैः कनिष्ठिकास्थूलाः समिधोऽनामिकास्थूला इध्मसमिध इतराङ्गुलिस्थूलाः परिधयः समिधामपि प्रादेशमात्रत्वं स्मृत्य(त)म् । द्विप्रादेश इध्मस्त्रिप्रादेशाः परिधयो बाहुमात्रा इति भारद्वाजः । द्विचत्वारिंशदङ्गुला इत्यर्थः । एतानि प्रमाणानि मध्यम एव । इध्मसमिधामपि प्रादेशमात्रत्वं स्मृत्यन्तरे । कात्यायनीयैस्त्वायतनमानते-

१ ख. छ. ट. ड. लक्ष्यते । २ ख. छ. ठ. ड. °भिधस्तु ।

ध्मसमिन्मुक्ता। स्थविष्ठत्वं स्थूलत्वमुत्तरापेक्षया च मध्यमे किंचिदणुत्वं पूर्वापेक्षया दक्षिणार्ध्य एव तथैव द्राघीयस्त्वं दीर्घत्वं दक्षिणार्ध्य एव। अणिष्ठो ह्रसिष्ठ उत्तरार्ध्यः। मध्यमापेक्षया ह्रस्वत्वं तदपेक्षयैवाणुत्वं च। अर्धशब्दो भागवाची। दक्षिणभागे भवो दक्षिणार्ध्यः। एव मुत्तरार्ध्योऽपि।

**द्वे आघारसमिधौ।**

आघारप्रदेशे आधीयमानत्वात्तथा।

**अनूयाजसमिदेकविंशीति।**

अनूयाजार्थं समिदनूयाजसमित्। सर्वासां समिधां भूम्नाऽग्नीन्धनत्वेन तदपेक्षयेध्म इति संज्ञा।

**समूलानाममूलानां वा दर्भाणामयुग्धातु**
**शुल्बं कृत्वा प्रागग्रमुदगग्रं वा निदधाति।**

शुल्बशब्दो जातिनिमित्तो न संस्कारनिमित्त इति[1] ज्ञापयति यदाहायुग्धात्विति। संस्कारवत्त्वे( त्वं ) तु प्राप्तमेव शुल्बत्वेन। तथा पूर्वोक्तमन्त्रनिवृत्तिः। समूलानाममूलानामिति विधानमन्यत्र ज्ञापयति नियमं पूर्वस्मिञ्छुल्बेऽमूला एव कर्तव्याश्छेदनस्य प्रकृतत्वात्। पित्र्ये समूला एव। 'यत्समूलम्। तत्पितृणाम्।' इति श्रुतेः। अत्रानियमः। अत्रैव वा नियमः समूलानामेवामूलानामेव वा।

**यत्कृष्णो रूपं कृत्वा प्राविशस्त्वं वनस्पतीन्। ततस्त्वा-**
**मेकविंशतिधा संभरामि सुसंभृता। त्रीन्परिधीꣳ-**
**स्तिस्रः समिधो यज्ञायुरनुसंचरान्। उपवेषं मेक्षणं**
**धृष्टिꣳ संभरामि सुसंभृतेति शुल्ब इध्मꣳ संभरति।**

प्रागग्रमुदगग्रं वा निदधाति शुल्बानुसारेण व्यवस्थया। अत्र यज्ञायुरनुसंचरानिति पुंलिङ्गः शब्दः समिधां परिधीनां च वाचकः*स्तथाऽपि पुमान्स्त्रियेति सूत्रेणैकशेषे पुंलिङ्गताविधानात्। तथा च यत्र न परिधयस्तत्र स्त्रीलिङ्गेनोहः। ननूपवेषं मेक्षणं धृष्टिमिति पुनरपि पुंलिङ्गताप्राप्तिरिति चेत्। न। तिस्रः समिध इति स्त्रीत्वेनापि प्रतिपादनात्। अत्र भाष्यकृन्मतं पूर्वं द्वे आघारसमिधावनूयाजसमिदेकविंशीत्युक्तं तस्मादातिथ्यायामनूयाजसमिदभावाद्धृष्टिशब्दस्योपसत्सु चाऽऽघारानुयाजसमिधामभावाद्धृष्टिमेक्षणशब्दयोर्निवृत्तिरिति। केचिदुपवेषादिशब्दा न कर्मसमवेतार्थप्रकाशका अपि तु संभ्रियमाणस्येध्मस्य स्तुतिस्तत्पक्षे तु न त्यागः। प्रकृतौ काम्यत्वेन काष्ठवृद्धा-

* तथाऽपीत्यधिकम्।

[1] क. ख. ग. छ. ट. ठ. ड. °श्री अ°।

वपि नोहो मन्त्रलोप एव तूष्णीं संभरणं न काम्यो गुणो मन्त्रं गृह्णात्यप्रकरणत्वात् । अत एव वक्ष्यति तूष्णीकं संनहनमिति । विकृतौ यथार्थमूहः—ततस्त्वां त्रयोविंशति· धेति । आतिथ्यायां द्वे समिधाविति । उपसत्सु त्वेकां समिधमिति । अस्मिन्पक्ष उपवेषादिशब्दानामनिवृत्तिरसमवेतार्थत्वात् । अयं पक्षः साधीयान् । उपवेषादिश· ब्दानामाघारानूयाजसमित्सु प्रवृत्तिनिमित्ताभावात् ।

**कृष्णोऽस्याखरेष्ठो देव पुरश्चर सध्यासं त्वेति संनह्यति ।**

पूर्ववत् ।

**पूषा त इति प्रदक्षिणं ग्रन्थिमावेष्टय[1] तेनैव कल्पेन यथा बर्हिषि ।**

प्रभ्रात्वित्यन्तः । तेनैव कल्पेन सत इत्यादि अपकर्षणान्तं, नायमतिदेशः शाखा· न्तरीयस्योपदेशस्य लक्षणेन कथनम् ।

**विप्रतिपाद्य वा ।**

अथवा विप्रतिपत्त्या विलक्षणग्रन्थिप्रतिपादनेन यथाकथंचिदेव ग्रन्थ्यपकर्षणं कार्यं न तत्पुरस्तात्प्रत्यञ्चमित्यादिविशेषेण ।

**तेनैव मन्त्रेण ।**

सत इत्यनेन मन्त्रेण यथाकथंचिद्ग्रन्थ्यपकर्षणपक्षेऽपीत्यर्थः ।

**बर्हिषा सह निदधाति ।**

सर्वं तूष्णीमेव ।

**वेदोऽसि येन त्वं देव वेदर्देवेभ्यो वेदोऽभवस्तेन**
**मह्यं वेदो भूया इति दर्भाणां वेदं करोति ।**

मध्य इध्मेन व्यवधानात्पुनर्दर्भाणामित्युक्तं, वेदशब्दोऽयं संस्कारवाची, य एवं क्रियते स वेदशब्दवाच्य इत्यर्थः ।

कर्तव्यताप्रकारमाह—

**वत्सज्ञुं मूतकार्यं पङ्क्तिकार्यं त्रिवृतं वा ।**

वत्सस्य जान्विव वत्सज्ञुः । जानुशब्दस्य ज्ञुरादेशः । दर्भमुष्टिं गृहीत्वा ह्यप्रदक्षि· णमावेष्ट्य किंचित्प्रदक्षिणमावेष्टनेन द्विगुणं कृत्वा द्विगुणप्रदेशानन्तरमेव शुल्बेन बध्नाति । यथा मूलाग्रे विविच्य तिष्ठतः । वत्सो ह्युपविष्टस्तस्य जानुनि संनमनेनोरु· जङ्घयोर्जानुसमीपे च संनिकर्षः परतोऽसंनिकर्षस्तथा कार्य इति भावः । मूतकार्यं यत्र राशीभूते तृणपुञ्जविशेषेऽधस्तादुपरिष्टाच्च बद्धे मध्ये धान्यं निधीयते तद्वन्मूत· सदृशमित्यर्थः । पङ्क्तिकार्यं विस्तीर्णं गुम्फितमुपवेशनाद्यर्थं तत्पङ्क्तिस्तद्वत्कार्यं, तद्वत्त्रि· वृतं त्रिरावर्तनेन संपादितस्त्रिवृतो वेणीसदृश इत्यर्थः ।

---

१ घ. छ. ज. झ. ञ. ढ. 'वेष्टयेते' ।

काम्यान्कल्पानाह—

वत्सज्ञुं पशुकामस्य मूतकार्यमन्नाद्यकामस्य पङ्क्तिकार्यं प्रजा-
कामस्य त्रिवृतं ब्रह्मवर्चसकामस्य त्रिवृच्छिरसं ब्रुवते ।

यजमानगताः कामास्त्रिवृच्छिरसं ब्रुवत इत्येतद्विना पूर्वं चतुष्टयं नित्यं काम्यं चेदं काम्यमेव । त्रिवृच्छिरसं त्रिवृच्छिरो यस्यासौ त्रिवृच्छिरास्तं त्रिगुणशिरसमिति यावत्, ब्रुवते यजमानाय काम्यप्रायपाठाद्यक्तवाक्त्वकामाय ।

तृणात्प्रादेशे परिवासयति ।

शुल्बेन बद्ध्वा तत ऊर्ध्वं प्रादेशमात्रे समाप्ते छिनत्ति । स वेद इत्यर्थः ।

इध्मप्रव्रश्चनानि वेदपरिवासनानि च सह निदधाति ॥ ७ ॥

इति हिरण्यकेशिसूत्रे प्रथमप्रश्ने द्वितीयः पटलः ॥ २ ॥

---

इध्मस्य प्रव्रश्चनानि च्छेदनकाले पृथग्जातानि मूलाग्रादीनि वेदस्य च्छेदनकाले पृथक्कृतानि तृणानि तानि प्रज्ञातानि सहैव निदधाति शेषकार्याय ।

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां प्रयोगवैजयन्त्यां
महादेवकृतायां प्रथमप्रश्ने द्वितीयः पटलः ॥ २ ॥

---

अथ तृतीयः पटलः ।

---

इध्माबर्हिराहरणानन्तरं संहिताब्राह्मणपाठक्रमप्राप्तं शाखापवित्रकरणपूर्वकं सायंदोहं व्याचष्टे—

अन्तर्वेदि शाखायाः पलाशानि
प्रशात्य सर्वाणि मूलतः परिवास्य ।

अन्तर्वेदि वेद्या अन्तरन्तर्वेदि, तत्र करिष्यमाणवेदिदेशे कृतायां तु मध्ये वेद्या-मुपगूढां शाखामानीय तस्या विद्यमानानि पलाशानि पर्णानि प्रशात्य च्छित्त्वा, पला-शान्यसर्वाणीत्ययमकारः प्रतिषेधार्थः, न सर्वाणीत्यर्थः । सर्वस्या अपि कियन्ति च्छित्वा छेदनेन शाखासंस्कारो वेदिदेशे पातनेन पर्णप्रतिपत्तिः । मूलतः परिवास्येति मूलतो मूलभागमेव परिवास्य च्छेदनेन पृथक्कृत्वा । अयमपि शाखासंस्कारः ।

उपवेषोऽसि यज्ञाय त्वां परिवेषमधारयन् । इन्द्राय हविः
कृण्वन्तः शिवः शग्मो भवासि न इति तमुपवेषं करोति ।

तं छिन्नं शाखाया मूलभागं मन्त्रेणोपवेषं करोति कल्पयति न तु मन्त्रेण च्छित्त्वा यत्र न शाखाहरणं तत्रोपवेषकार्यं याज्ञिकेन केनापि काष्ठेन कार्यं, मन्त्रं च केचिदि-

च्छन्ति । न चेन्द्रपदविरोधस्तस्यैं पदस्यासमवेतार्थप्रकाशकत्वात् । तस्मान्न महेन्द्रपद॰वान्मन्त्रोऽपि मृग्योऽत्र । तत्र । मन्त्रत्वसांनाय्यमन्त्रपाठसंदंशमध्यपठितत्वेन सांनाय्य॰प्रयुक्तशाखानुनिष्पादिन्येव मूलभागे न तु काष्ठान्तरकृते सूत्रकृताऽपि तमुपवेषं करो॰तीति पदेन प्रासङ्गिकत्वमुक्तम् । ग्रहणेन संकल्पेन वा मन्त्रजेन संस्करोति भाव्युप॰योगाय न शाखाहरणप्रयुक्तमन्त्रः । तदभावे च नास्ति । तथाऽपि काष्ठमात्रं तु युज्यत एवाङ्गारानेर्हरणार्थम् । तदाह भारद्वाजः–चोद्यमाने कर्मणि द्रव्यमुत्पादयेद्य॰था पौर्णमास्यामुपवेष इति । भाष्यकृत्पूर्वं परिवासितस्य पुनः परिवासनायोगान्मन्त्रेण करणमुपादानमात्रमित्याह ।

तस्यां त्रिवृद्दर्भमयं पवित्रमविदलं करोति ।

सामान्यप्रतिज्ञेयम् । तस्यामग्रभागेन(ण) विद्यमानायां शाखायां त्रिवृत्त्रिभिर्दर्भैः कृतं दर्भमयं पवित्रं पयःपवनयोग्यमविदलमविलग्नान्यसंश्लिष्टानि दलानि यस्य तत्तथा । अत्र त्रिवृदादिगुणयुक्तं पवित्रमादौ पृथगेव तूष्णीं करोतीति वाक्यार्थः । तस्यां मूले मूलमुपसृजतीत्यन्वयः । अत एवाऽऽपस्तम्बः–' त्रिवृद्दर्भमयं पवित्रं कृत्वा वसूनां पवि॰त्रमसीति शाखायां शिथिलमवसृजति ' इति । अथ वा तस्यामविदलं करोतीति संबन्धः । अविदलमविलग्नदलं शिथिलमिति यावत् ।

त्रिवृत्पलाशे दर्भे इयान्प्रादेशसंमितः । यज्ञे पवित्रं पोतृतमं पयो हव्यं करोतु म इति मूले मूलमुपसृजत्यग्रेऽग्रं न ग्रन्थिं करोति ।

उपसृजति श्लेषयतीत्यर्थः । कथं, शाखाया मूले पवित्रस्य मूलं तथैवाग्रेऽग्रं न ग्रन्थिं करोतीति । पवित्रावयवेन ग्रन्थिं करोति संश्लिष्टं मूलाग्रयोर्यथा तिष्ठति तथा प्रकारा॰न्तरेण कर्तव्यमेवेति प्राप्ते दर्भान्तरेण बन्धनमप्यनुज्ञायत एव । मन्त्रलिङ्गाद्दर्भाणां प्रादेशमात्रत्वेऽवगते मूले मूलमित्यादिना लिङ्गेन शाखाऽपि प्रादेशमात्रैवावशेषणीये॰त्यवगम्यते । तेन तावतीमवशेषयित्वाऽवशिष्टस्य मूलभागस्योपवेषार्थ इ(त्यपि)त्यवगम्यते ।

एवं पलाशशाखायां लिङ्गेन प्रथमं मन्त्रमभिधायोभयोरपि शाखयोः पवित्रकरणे शाखान्तरीयं मन्त्रमाह—

वसूनां पवित्रमसि शतधारमिति वा ।

गतम् । अनन्तरमपराह्णे पिण्डपितृयज्ञः । अथ सायंदोहः ।

साय१ँ हुतेऽग्निहोत्रे ।

इष्ट्यर्थमुद्धृत एवाग्नावग्निहोत्रं नानुगमनादिविधिरिति दर्शयितुं हुतेऽग्निहोत्र इत्यु॰

१ ट. °स्मान्महे° ।

क्तम् । हुत एव दोहारम्भोऽन्यथा मा भूदिति । हुते यजमानेनेति दर्शयितुं क्त्वाप्रत्ययो न प्रयुक्तो हुत्वेति ।

द्वंद्वं सांनाय्यपात्राणि प्रक्षाल्य न्यञ्चि प्रयुनक्ति ।

स्थापयति द्वंद्वं द्वे द्वे संभरति सह, सायंदोहपात्राणीति वक्तव्ये सांनाय्यपात्राणीति सामान्यनिर्देश उभयत्र पात्रेषु समानधर्मता यथा स्यात् । प्रक्षाल्याद्भिर्न्यञ्चि अधोबिलानि बिलवन्त्युत्तरेण गार्हपत्यं दर्भान्संस्तीर्येति सूत्रान्तरे दर्शनात्तत्रैव कार्यमासादनम् ।

तान्येव दर्शयति—

अग्निहोत्रहवणीमुखामुपवेषं शाखापवित्रमभिधानीं निदाने दोहनमयस्पात्रं दारुपात्रं वा पिधानार्थम् ।

अष्टावत्र पात्राणि पिधानार्थपात्रयोरन्यतरस्यैकस्यैव ग्रहणात् । एकैकविभक्तिनिर्दिष्टमेकैकं निदाने द्वे अपि एकविभक्तिनिर्देशादेकम् । अग्निहोत्रहवणीमिति व्युत्पन्नः । उपवेषं शाखापवित्रमिति शब्दसंस्कारनिमित्तौ । व्युत्पन्नो दोहनमिति । उखाभिधान्यादिशब्दास्तु जातिनिमित्ता एव । उखा मृन्मयं पात्रमभिधानी गोबन्धनार्था रज्जुर्निदाने पश्चिमपादयोरधस्तादुपरिष्टाच्च बन्धन्यौ रज्ज्वावथवा धेनुविषाणयोर्वत्सस्य च बन्धन्यौ । दोहनं दुह्यतेऽनेनेति यस्मिन्वा तद्दोहनपात्रमायसदारुमयपात्रयोरपिधानार्थयोर्विकल्पः । एतानि यथावत्प्रयुनक्ति ।

समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे करोति ।

सामान्यप्रतिज्ञयम् । समौ वर्णरूपाभ्यां प्रादेशमात्राविति परिमाणस्य विधानात् । एतादृशौ यौ दर्भौ तौ पवित्रे पवनयोग्यौ संस्कारैः करोति । पवित्रशब्दो यद्यपि विशेष्यलिङ्गोऽप्यस्ति तथाऽपि पवनसाधने नपुंसक एव दृश्यते द्विवचनं तूद्भूतावयवत्वात् । आचारप्राप्तग्रन्थिकरणं श्रौते कर्मणि दुर्लभमेवाविधानात् । अच्छिद्रेणेति लिङ्गं च द्वयोर्व्यवधिं निवारयति । तेनाऽऽर्द्रौ कृत्वा श्लिष्टौ कार्यौ ।

कथं करोतीत्यपेक्षित आह—

पवित्रे स्थो वैष्णवी वायुर्वो मनसा पुनात्विति तृणं काष्ठं वाऽन्तर्धाय छिनत्ति ।

दर्भावग्रे प्रादेशमात्रमवशेषयित्वा( ष्य ) तत्र तृणं काष्ठं वा व्यवधाय तदुपरि छिनत्ति दर्भावपि छिन्नौ यथा स्यातामिति । छेदन एव मन्त्रः । अप उपस्पृश्य ।

तच्च नखव्यतिरेकेणान्येनोपायेन न तु नखैरित्याह—

न नखेनेमौ प्राणापानौ यज्ञस्या-

ङ्गानि सर्वशः । आप्याययन्तौ संच-
रतां पवित्रे हव्यशोधन इत्यभिमन्त्र्य ।

तौ दर्भौ पवित्रत्वेन क्रियमाणौ ।

विष्णोर्मनसा पूते स्थ इत्यद्भिरुन्मार्ष्टि ।

अनुलोममूर्ध्वं च । अद्भिरितिविधानं सर्वत्रोन्मार्जनमेवोदकैरनुमार्जनादिकं तु केवलेन हस्तेन ।

गां दोहपवित्रे रज्जुं[१] सर्वा पात्राणि शुन्धतेति संप्रेष्यति ।

गामिति जात्यभिप्रायं, रज्जुमित्यपि । प्रेषस्य कर्ताऽत्र नोक्तो नापि प्रैषानन्तरं प्रैषानुसारि किंचित्कर्म विहितं गवादिशोधनरूपम् । न च शुन्धध्वमिति प्रोक्षणार्थोऽयं प्रैष इति वाच्यम् । पात्राणीति प्रोक्षणविधानात् । शुन्धध्वमिति सकर्मके कर्तारो बहवोऽत्र प्रकृता न सन्ति, तस्माददृष्टार्थोऽयं प्रैष आत्मानं प्रति यद्यपि संभवतीत्यग्रे प्रतिपादयिष्यते तथाऽपि प्रकृते प्रैषानुरूपः कोऽप्यर्थो नास्तीत्यदृष्टार्थमुच्चैर्जपमात्रमिति सूत्रान्तरेऽत एव वदतीत्युक्तम् ।

अग्निहोत्रहवण्यां पवित्रान्तर्हितायामप आनीय ।

पवित्राभ्यामन्तर्हिता अन्तर्बिलमध्ये स्थापिताभ्यां पिहिता अन्तर्धानप्रदेश एव । अप आनीयापः प्रक्षिप्य ।

देवो व इति पच्छो गायत्र्योदग्राभ्यां[२] पवित्राभ्यां त्रिरुत्पुनाति ।

देवो वः सवितोत्पुनात्विति प्रथमम् । अच्छिद्रेण पवित्रेणेति द्वितीयम् । वसोः सूर्यस्य रश्मिभिरिति तृतीयम् । पच्छ इति विधानात्त्रयो मन्त्रा इत्येकां व्याख्यामाहुः केचित् । तन्न । गायत्र्येति तृतीयया सर्वस्या एव ऋचः साधनताऽवगम्यते न पादानां, गायत्र्या पच्छ इत्यनभिधानात् । द्वितीयतृतीयपादयोस्तु क्रियापदाभावाच्च । अतः पच्छः पठितया गायत्र्यैवोत्पुनाति सकृन्मन्त्रेण द्विस्तूष्णीमिति युक्तम् । त्रिरुत्पुनातीति संख्ययाऽभ्यावृत्तौ विहितया न कर्मभेदः । संस्कारकर्मणि हि नोत्पत्तिविधिः । उत्पत्तिविधिर्हि संख्यासहकृतो भेदकः । तस्मादेकस्यैव कर्मणोऽभ्यासोऽभ्यासस्य गुणभूतस्य च न मन्त्रोऽङ्गं किं तु प्रधानभावनायास्तस्या एकत्वान्मन्त्रे गायत्र्येति पुनरेकमन्त्रत्वावगतेः प्रत्येकं मन्त्रेषु वाक्यपरिसमाप्त्यभावात् । अतस्त्रिपदया गायत्र्या प्रथममुत्पवनं तूष्णीं द्वे । अनवानं मन्त्रोच्चारणं मा भूदित्येतदर्थं पच्छ इत्युक्तम् । उत्पवनमुदग्राभ्यां पवित्राभ्यामूर्ध्वपवनं शोधनमपाम् । याज्ञिका हस्तद्वयेन पवित्रे गृहीत्वोत्पुनन्ति तन्मूलमन्वेष्टव्यम् ।

---

१ ख. ग. घ. छ. झ. ञ. ट. ठ. ड. °यत्रियोद° । २ क. ग. च. छ. ठ. ठ. ड. °दस्तस्मा° ।

आपो देवीरित्यनुमन्त्रयते ॥ ८ ॥

प्रोक्षिताः स्थेति मन्त्रान्तः। अयं मन्त्र उभयदोहयोः।

आपो देवीः शुद्धाः स्थेमा पात्राणि शुन्धत। उपातङ्क्याय देवानां पर्णवल्कमुत शुन्धतेति वा।

अत्र तूपातङ्क्याय देवानां पर्णवल्कमिति लिङ्गात्सायंदोह एव।

शुन्धध्वमिति त्रिः सर्वाभिरुत्तानानि पात्राणि प्रोक्षति शुन्धन्तां विश्वकर्माणि देवयज्यायै दैव्याय कर्मणे शुन्धध्वं यद्वोऽशुद्धाः पराजग्मुस्तद्व एतेन शुन्धतामिति वा।

यज्याया इत्यन्तः। सर्वाभिरिति शेषं नावशेषयेत्।

एता आचरन्ति मधुमद्दुहानाः प्रजावतीर्यशसो विश्वरूपाः। बह्वीर्भवन्तीरुपजायमाना इह व इन्द्रो रमयतु गाव इति गा आयतीः प्रतीक्षते।

मन्त्रान्तेनेक्षणं प्रतीपं गत्वाऽऽयतीरग्निशालासमीपमागच्छन्तीः।

धृष्टिरसीत्युपवेषमादाय।

ब्रह्म यच्छेति मन्त्रान्तः।

निरूढं जन्यं भयꣳ सह तेन यं द्विष्मः सुभूताय श्रयध्वमिति तेन गार्हपत्यादुदीचोऽङ्गारान्निरूह्य।

गार्हपत्याद्गार्हपत्यायतनात्तेन गृहीतोपवेषेणोदीच उदीचीं दिशं प्रति निरू(रु)ह्याऽऽयतनात्पृथक्कृत्वा।

मातरिश्वन इति तेषु कुम्भीमधिश्रयति।

दृꣳहस्व मा ह्वारिति मन्त्रान्तः। उखाशब्देन प्रयुनक्तीत्युक्तम्। अत्र तु कुम्भीमधिश्रयतीत्याह तज्ज्ञापयति जातिनिमित्तौ पर्यायशब्दावेताविति।

वैकल्पिकं मन्त्रान्तरमाह—

अभ्रस्रꣳसाय यज्ञस्योखे उपदधाम्यहम्। पशुभिः संनीतं बिभृतामिन्द्राय शृतं दधीति वा।

अत्रोखे इति द्विवचनं प्रातर्दोहोखापेक्षम्। अत एव संनीतमिति शृतं दधीति च दधिपयसोः संस्तवः। तद्यद्यप्येकैकस्मिन्दोहे न संभवति तथाऽपि व्यक्तिविशेषोपस्थित्या जातिमात्रं स्तूयते। महेन्द्रपदवानपि ज्ञेयो मन्त्रः।

भृगूणामङ्गिरसां तपसा तप्यस्वेत्यङ्गारैः परीन्धे।

इन्धे दीपयति परितः।

उपसृष्टां मे प्रब्रूतादिति संप्रेष्यति ।

उपसृष्टां वत्सेन संगताम् । गोदुहं प्रत्येव प्रैषः ।

वसूनां पवित्रमसि सहस्रधारमिति कु-
म्भ्यां प्रागग्रꣳ शाखापवित्रमादधाति ।

स्पष्टमेतत् ।

अन्वारभ्य वाचं यच्छति धारयन्नास्ते ।

कुम्भीमन्वारभ्य पवित्रं धारयन्नास्त इत्युभयेन संबध्यते । तथा चान्वारम्भं कृत्वा मध्ये न त्यजति वाचं यच्छति यावद्विसर्गविधानं शाखापवित्रं धारयन्निति संबन्धः ।

अदित्यै रास्नाऽसीत्यभिधानीमादत्ते ॥ ९ ॥

अभिधीयतेऽनया साऽभिधानी तां रज्जुमादत्ते गोधुक् । अध्वर्योः कुम्भ्यन्वारम्भादादानादिकर्मणां विरोधादसंभवादन्यः कर्तेत्युक्तमेव । तूष्णीं निदाने । द्रव्यपृथक्त्वेन मन्त्रावृत्तिः प्राप्ता वचनेन निवार्यते । ताभिः कृत्यमपि तूष्णीम् ।

वैकल्पिकं मन्त्रान्तरमाह—

त्रयस्त्रिꣳशोऽसि तन्तूनां पवित्रेण सहाऽऽगहि ।
शिवेयꣳ रज्जुरभिधान्यघ्नियामुपसेवतामिति वा ।

आदानं पूर्वमन्त्र उक्तं तस्यायं मन्त्रो विकल्पतेऽभिधान्यामेव मन्त्रलिङ्गात् ।

पूषाऽसीति वत्समुपसृजति ।

गोधुगेव गोसमीपं नीत्वा विसृजति मुञ्चतीति यावत् । पुंस्त्वमविवक्षितमुपसर्जनेन संस्कार्यत्वात् । वत्सेन च दोहार्थं प्रस्रवः साध्यः ।

धावन्तं वाऽनुमन्त्रयते ।

अध्वर्योरशक्यत्वात्स एव कर्ता मनसा लक्षीकृत्य पठेत् । उपसृष्टां मे प्रब्रूतादिति संप्रैषबलाद्दोग्धा होपसृष्टेति ततोऽध्वर्युः ।

विहारं गां चोपसृष्टामन्तरेण मा संचारिष्टेति संप्रे-
ष्यति न दुह्यमानामन्तरेण यन्ति विहारं गां च ।

अन्तरेण मध्य उपसृष्टां वत्सेन संगतामुपसृष्टामित्यनेनोपसर्जनसंस्कारेणोपलक्षितां दुह्यमानां गां विहारं चान्तरेण न यान्तीत्युक्तं सर्वेऽपि ।

व्यवाये प्रायश्चित्तमाह—

यदि व्यवेयात्सांनाय्यं मा विलोपीति ब्रूयात् ।

व्यवेयाद्यः कश्चन तदा सांनाय्यं मा विलोपीत्यध्वर्युर्ब्रूयादिदमेव प्रायश्चित्तम् ।

---

१ ख. ग. छ. ट. नयन्ती ।

अयक्ष्मा वः प्रजया सꣳसृजामि राय-
स्पोषेण बहुला भवन्तीरित्युपसृष्टाम्।

गोदुहोपसृष्टेत्युक्ते तामनुमन्त्रयत इत्यग्निमाकृष्यते व्यवहितं वा पूर्वम्।

ऊर्जं पयः पिन्वमाना घृतं च जीवो
जीवन्तीरुप वः सदेयमित्युपसन्नाम्।

दोग्धा दोहार्थमुपविश्यानुमन्त्रयते, उप वः सदेयमिति लिङ्गात्। न वा विधाना-भावात्। स्वयमेव प्रयोजकत्वेन कर्त्रा यत्पुरुषेण प्रयोज्येन कृतं स्वयमेव तत्। तदाऽध्वर्युरुपसृष्टामुपसन्नामनुमन्त्रयते।

द्यौश्चेमं यज्ञं पृथिवी च संदुहातां धाता सोमेन सह वा
तेन वायुः। यजमानाय द्रविणं दधात्विति दुह्यमाना-
मुत्सं दुहन्ति कलशं चतुर्बिलमिडां देवीं मधुमतीꣳ
सुवर्विदम्। तदिन्द्राग्नी जिन्वतꣳ सूनृतावत्तद्य-
जमानममृतत्वे दधात्विति धाराघोषमनुमन्त्रयते।

घोषं शब्दम्।

दोग्धा हरति।

दुग्धमिति शेषः। कुम्भीं प्रति नयति दोग्धेत्यत्राऽऽनिधानात्पूर्वमशक्यमध्वर्यो-र्दोग्धा करोत्यन्यदध्वर्युरेवेति ज्ञापितम्।

तं पृच्छति कामधुक्षः प्र णो ब्रूहीन्द्राय हविरिन्द्रियम्।

तं गोदुहं कां गामधुक्ष इति पृच्छति। महेन्द्रपदवानपि मन्त्रो ज्ञेयः।

गोधुक्प्रत्याह—

अमूं यस्यां देवानां मनुष्याणां
पयो हितमित्यसाविति गोधुगाचष्टे।

अध्वर्युं प्रति किममूमिति नाम गृह्णातीति ब्राह्मणं द्वितीयान्तं नाम गृह्णाति गङ्गामित्यादि।

सा विश्वायुरिति प्रत्युच्य।

अध्वर्युः प्रतिवचनं दत्त्वा।

देवस्त्वा सविता पुनातु वसोः पवित्रेण
शतधारेण सुपुवेति कुम्भ्यामानयति।

१ च. °त्यत्र नि°। २ क. ख. ग. च. छ. ट. ठ. °धामेति। तं।

दुग्धमिति शेषः । सपवित्रायां कुम्भ्याम् ।

**यदन्यत्संप्रैषात्तेनोत्तरे दोहयति ।**

संप्रैषव्यतिरिक्तेन दोहनविधिना द्वे गावौ दोहयति । उपसृष्टां मे प्रब्रूतादिति यत्रै॰ कस्मिन्द्रव्य इत्यादिन्यायस्य विलक्षणता[१] क्रियाव्यवधानेन द्रव्यपृथक्त्वेन बाधमाशङ्क्य विजातीयक्रियाभ्यः पूर्वमेव[२] कृतस्य प्रैषस्याविवक्षितोद्देश्यविशेषणत्वेनैव विभक्तैसर्वार्थ॰ त्वात्पुनःप्रैषाप्राप्तिरिति भावः । पूषाऽसि न विहारमिति संप्रैषस्यापि[४] न प्राप्तिः पूर्ववत् । अयक्ष्मा वः । ऊर्जं पयः॰ । द्यौश्चेमं॰ । उत्सं दुहन्ति॰ । कामधुक्षः॰ । अमूं य॰ । सा वि॰ । देवस्त्वा॰ । एतैर्मन्त्रैर्द्वे दोहयति ।

तत्र विशेषमाह—

**सा विश्वव्यचा इति द्वितीयां[४] सा विश्वकर्मेति तृतीयाम् ।**

अध्वर्युप्रतिवचने विशेषो गोदुहा द्वितीयान्तनामग्रहणेऽपि यथा नाम यदि न तादृक्संकेतस्तदा यमुनां सरस्वतीमिति क्रमेण दोग्धा वर्णत्रयान्यतमो वा सच्छूद्रो वाऽग्निहोत्रमेव न दुह्याच्छूद्र इति विशेषप्रतिषेधाच्छूद्रोऽप्यधिक्रियते तस्य मन्त्रोच्चा॰ रणमपि स्थपतिवत् ।

**तिस्रो दोहयित्वा बहु दुग्धीन्द्राय देवेभ्यो हव्यमाप्यायतां पुनर्व॰ त्सेभ्यो मनुष्येभ्यः पुनर्दोहाय कल्पतामिति त्रिः संप्रेष्यति ।**

अत्र संप्रैषार्थस्य कर्तुमशक्यत्वान्न दृष्टार्थोऽयं प्रैषः । यतः कल्पतामिति पुनर्दोह॰ सामर्थ्यमाशास्यते । अतो मन्त्रमेवोच्चारयेदित्यर्थः । अथ वा बहु दुग्धीत्येतावान्संप्रैष इतरदनुवादमात्रं स्तुतिरिति गोदुहं प्रति प्रैषः ।

**विसृष्टवागनन्वारभ्य ॥ १० ॥ उत्तरा दोहयति तूष्णीं वा ।**

दोहनपक्षे पूर्ववदेव मन्त्राः । वाङ्नियमान्वारम्भत्यागमात्रमधिकं, पुनरपि सा विश्वा॰ युरित्यादि *पुनरावर्तनीयं षडधिकास्वपि, तथैव विगृह्य दोहेऽपि । अत्र दोहस्य तूष्णीं॰ पक्षे मन्त्रवर्जं सर्वं गृह्यते षण्णां गवां दोहनं नित्यमुत्तरा दोहयति सर्वासु दुग्धास्वित्यत्र संख्याया अदर्शनाच्छास्त्रान्तरेण गवाधिक्यमुक्तं तदप्यनुज्ञातम् । षण्णां मध्ये कति॰ पयीनामभावे विगृह्य दोहनं व्याख्यातमेव । नामानि तु श्वेतां पीतामित्यादिगुणैर्ज्ञेयानि । सर्वाभावे लौकिके पयसि तदभावे दधिन वा सर्वमन्त्राज्ञपतीत्ययमर्थो बोधायनभरद्वा॰

---

* पुनःशब्दोऽधिक इति प्रतिभाति ।

---

१ क. ख. ग. च. ट. ड. °क्षता । २ क. ग. च. ठ. ड. °मेवाकृ° । ३ ख. °षस्य स° । छ. ट. °वता स° । ४ क. ग. त. छ. ठ. ठ. ड. °पि प्रा° ।

जादिभिरुक्त आपदि ज्ञेयः । यजुष्करणं सूत्रकारस्यानभिमतमपि लोकगर्हापरिहारार्थमपि कर्तव्यम् ।

**सर्वासु दुग्धासु हुतः स्तोक इति विप्रुषोऽनुमन्त्रयते ।**

द्यावापृथिवीभ्यामिति मन्त्रान्तः । विप्रुषः स्कन्ना दोहबिन्दवो यदि सन्ति ।

**द्यौश्चेमं यज्ञमिति सांनाय्यम् ।**

अनुमन्त्रयत इत्यनुषज्जते ।

**दोहनं संक्षाल्य संपृच्यध्वमिति कुम्भ्यामानयति ।**

दोहनं दोहनपात्रमद्भिः प्रक्षाल्यान्तरे वाऽऽलोड्य सातय इति मन्त्रान्तेन तत्प्रक्षालनोदकमधिश्रितसांनाय्यकुम्भ्यामानयति । दोहनमिति द्वितीयानिर्देशात्संक्षालनेन तस्य प्रतिपत्तिर्निनयनेन संक्षालनस्य प्रतिपत्तिरिति गम्यते । प्रक्षालननाशे पुनः प्रक्षालनं कुम्भ्यामानयतीति नास्ति विद्यमानस्य कुम्भ्यामभिकरणे प्रतिपत्तिमात्रविधानान्न त्वानयनविधिप्रयुक्तं तत् ।

**श्रपयित्वा तूष्णीकेन सर्पिषाऽभिधार्य ।**

सम्यक्पक्त्वा तूष्णीकेन मन्त्रवर्जितेन विधिना संस्कृतं तूष्णीकं तेन स्मार्तावृता संस्कृतेनेति गम्यते । अन्यथा पदं व्यर्थं स्यात्तूष्णीमि(केने)ति । सर्पिषेति जातिवचनो लौकिकं घृतमाह । अतस्तेन कुम्भीगतसांनाय्यमभिधार्याभिन्नारयेत् । अपूर्वत्वाद्विधिः ।

**दृꣳह गा दृꣳह गोपतिं मा वो यज्ञपती रिषदिति**
**प्राचीनमुदीचीनं प्रागुदग्वा कर्षन्निवोद्वासयति ।**

प्रागुदगीशान्ययं त्रिप्रकारो विकल्पः । नपुंसकनिर्देशात्कुम्भ्या सह सांनाय्यमित्यवगम्यते । कर्षन्निव वर्त्म कुर्वन्निवोद्वासयति अङ्गारेभ्य उत्कृष्योक्तदिग्भागं प्रति निर्गमयति । आर्थिकं स्थापयतीति मन्त्रान्तेनोत्कर्ष्यमाणस्य संनिपातः—

**पूर्वेद्युर्दुग्धं दधि हविरातञ्चनमेकस्या द्वयोस्तिसृणां**
**वैकाहे त्र्यहे त्र्यहे वा संततमभिदुग्धमौपवसथाद्भवति ।**

औपवसथ्यात्पूर्वेद्युश्चतुर्दश्यां दुग्धं लौकिकं गोपयो दधि कृत्वा हविरातञ्चनं सायंदोहातञ्चनमङ्गत्वेन दधित्वलक्षणविकारजनकमौपवसथ्यो यष्टव्यानां देवतानां योऽग्निसमिपे वासः स उप वसथस्तत्संबन्ध्यहरौपवसथमन्वाधानदिनमिति यावत् । तस्मात्पूर्वेद्युर्दुग्धमातञ्चनार्थं दधि संपादितं भवति । तत्रैकस्ये(स्या इ)त्यादिविकल्पेनैकः पक्षो त्र्यह इत्यादि द्वितीय एतयोः कालभेदाद्विरोधादेव विकल्पो वाशब्दयोरन्यत्रान्वयात् । द्वितीये पक्षे तु संततमभिदोहोऽत्रापि पूर्वेद्युरित्यनुवृत्तिः । यद्येकस्या गोस्तद्दधि तदा चतुर्दश्यां प्रातर्दुग्ध्वा तस्मिन्नेव दोह आतञ्चनेन दधिकृते

१ छ. ठ. °श्यां वा प्रा° ।

सायमभिदोग्धि। तथा त्रयोदश्यां द्वादश्यां वा प्रातर्दुग्ध्वा दधिकृते तत्रैव सायं प्रातः संततमभिदोग्धि, तथाऽपि चतुर्दश्यां त्रयोदश्यां द्वादश्यां वा प्रातर्दुग्धे दध्नि पुनर्द्वे संततमभिदोग्धि। एवं तिसृणामपि। एवंरूपेण द्वितीयः पक्ष आपस्तम्बे दृष्टः।

**सोमेन त्वाऽऽतनच्मीति तेन शीतं बुध्नं कृत्वाऽऽतनक्तीन्द्रस्य त्वा भाग१ सोमेनाऽऽतनच्मीति वा।**

इन्द्राय दधीति मन्त्रान्तः। पूर्वस्योभयत्र महेन्द्रपदं महेन्द्रयाजिनस्तेन पूर्वकृतेन दध्नाऽऽतनक्ति दधित्वलक्षणं विकारं प्रापयति। शीतं बुध्नं कृत्वा कुम्भ्या यावदधस्तात्कुम्भी न शीता तावदातञ्चने कृते पयो विकृतिं गच्छेन्न दधि भवेत्तदर्थं शीतमित्युक्तम्।

आतञ्चनदध्यभावे वैकल्पिकानि पञ्च द्रव्याण्याह—

**तण्डुलैः पर्णवल्कैः कलैर्बदरैः पूतीकैर्वा।**

मन्त्रस्तु पूर्वोक्त एव। पर्णवल्कैः पर्णत्वगवयवैः कलैर्ग्राम्यैर्बदरैर्बदरैरारण्यैः पूतीकैः सोमप्रत्याम्नायौषधिखण्डैः।

**यज्ञस्य संततिरसि यज्ञस्य त्वा संततिमनुसंतनोमीत्यग्निहोत्रोच्छेषणमानयति तूष्णीं वा।**

अग्निहोत्रोच्छेषणमग्निहोत्रे हुते यदुच्छिष्यते स्थालीगतमिति केचित्स्रुग्गतमिति न्याय्यं वाजसनेयिश्रुतेश्च तत्तस्यां कुम्भ्यामानयति प्रापयति मन्त्रेण तूष्णीं वा। अग्निहोत्रोच्छेषणमभ्यातनक्तीति विद्यमानस्योच्छेषणस्य प्रतिपत्तिः संस्कारो दोहस्य। तेन नोच्छेषणनाशे बौधायनोक्तमिव पुनरग्निहोत्रम्। उच्छेषणाभावेऽनुग्रहमाहाऽऽपस्तम्बः—'उच्छेषणाभावे तण्डुलैरातञ्च्यात्तण्डुलाभाव ओषधीभिः' इति। एताभ्यां तूष्णीमेव। सौम्ये पयसि प्रतिनिधिनैवाऽऽतञ्चनं भवति। अत एव ज्ञायते न पुनरग्निहोत्रं होतव्यमुच्छेषणनाश इति। यवाग्वाऽग्निहोत्रहोमोऽमावास्यायां रात्रौ स्वयं यजमानस्य संनयतो नैमित्तिको नोच्छेषणप्रयुक्त उच्छेषणं चानुनिष्पादि वाजिनवत्तस्येयं प्रतिपत्तिरग्निहोत्रोच्छेषणमभ्यातनक्तीति द्वितीयानिर्देशात्संस्कारोऽयं दोहस्यापि आनयतेर्द्विकर्मकत्वान्मन्त्रलिङ्गाद्यज्ञस्य संतत्या इति ब्राह्मणाच्च यज्ञेनाग्निहोत्रिणाऽस्य यज्ञस्य सांतत्यसंस्तुतेः। न ह्यग्निहोत्रोच्छेषणप्रतिपत्तिर्दर्शपूर्णमासब्राह्मणप्रतिपाद्या भवति। ततस्तु संस्कारलोपो मा भूदिति प्रतिनिधिराश्रित आपस्तम्बाचार्येण। नोक्तस्त्वस्मदाचार्येण प्रतिनिधिर्न्यायेन लौकिकी यवागूस्तत्प्रकृतितण्डुला अन्यास्तत्सदृशा ओषधयो वा प्राप्नुवन्त्येवेति।

---

१ क. ख. ग. ङ. च. छ. ज. झ. ञ. ट. ठ. ड. °मेन त्वाऽऽत°।

आपो हविःषु जागृत यथा देवेषु जाग्रथ । एवम॰
स्मिन्यज्ञे यजमानाय जागृतेत्यपिधानार्थे पात्रेऽप आन॰
यत्यद्स्तपासि विष्णवे त्वा यज्ञायापिदधाम्यहम् ।
अद्भिररिक्तेन पात्रेण याः पूताः परिशेरत इत्यपिदधाति ।

अयस्पात्रेण दारुपात्रेण वेति श्रुतेरायसे दारुमये वा ।
तयोरभावे विशेषमाह—

यदि मृन्मयꣳ स्यात्तृणं काष्ठं वाऽनुप्रविध्येत् ।

पात्रे मृन्मये प्रक्षिपेत् ।

इमौ पर्णं च दर्भं च देवानाꣳ हव्यशोधनौ । प्रातर्वेषाय गोपाय
विष्णो हव्यꣳ हि रक्षसीत्युन्मुच्य शाखापवित्रं मन्त्रातं निदधाति ।

पलाशशाखापवित्र एवायं मन्त्रो न शमीशाखापवित्रे लिङ्गविरोधात् । तत्र
तूष्णीमेव निधानं पूर्वत्रापि निधानमेव मन्त्रेण न तून्मोचनम् ।

विष्णो हव्यꣳ रक्षस्वेति सांनाय्यं गार्ह॰
पत्यदेश उपरि निदधाति ॥ ११ ॥

इति हिरण्यकेशिसूत्रे प्रथमप्रश्ने तृतीयः पटलः ॥ ३ ॥

---

शिक्यादौ स्थापयति । अत्र सांनाय्येऽनुग्रहं बौधायनः—दुग्धमलममानस्य
वत्सापाकरणप्रभृतिमन्त्रान्साधयेदिति बौधायन आसेचनप्रभृतीति शालीकिरिति ।
वामभावे दोहाशक्तौ वा दुग्धमेव ग्राह्यं, तत्रैव प्रागुक्तसंस्काराः कार्याः ।
आचार्यस्य तु दुग्धे दोहनमन्त्रप्रयोगस्यानिष्टत्वाद्द्वाराभावे सति शालीकिमतमिष्ट-
माचार्यस्याऽऽसेचनगोदोहनप्रक्षालननिनयनं तत्प्रभृति मन्त्रैः कार्यम् । दध्नि प्रति-
निधिभूते तु नैव यजुष्क्रिया बौधायनपक्षादन्यत्र पक्ष आचार्यपक्षे च नेति ज्ञेयम् ।

इति सत्याषाढ हिरण्यकेशिसूत्रव्याख्यायां प्रयोगवैजयन्त्यां
महादेवकृतायां प्रथमप्रश्ने तृतीयः पटलः ॥ ३ ॥

---

अथ चतुर्थः पटलः ।

---

अन्याꣳ शाखामाहृत्य तेनैव कल्पेन तया दर्भैर्वा
प्रातर्दोहाय वत्सानपाकरोति यथा सायंदोहाय ।

तेनैव कल्पेन पलाशशाखां शमीशाखां वाऽऽहरतीत्याद्युक्तेनाऽऽहरणेन संबद्धं

---

१ ङ. °त्सादये° । २ क. ग. घ. ठ. ङ. दधिप्र° ।

वत्सानपाकरोत्येतद्यथा सायं दोहायेत्यनेन संबध्यते। दोहायेति वदता दोहात्पूर्वतनः सर्वोऽपि विधिः समान इत्युक्तम्। तन्मध्ये देवो व इति प्रस्थापनमेकस्या उपस्पर्शनं प्रस्थितानुमन्त्रणं चार्थलुप्तानि न विद्यन्ते। अन्यत्सर्वं क्रियत उपगूहनान्तं, तस्या अपि शाखायाः प्रस्तरेण सह प्रतिपत्तिः। यदा तु दर्भैर्वत्सापाकरणमिति पक्षस्तत्र न पुनः शाखाहरणं प्रयोजनाभावात्। शाखापवित्रस्य च पूर्वस्यैव मन्त्रलिङ्गाद्विधानात्स्थिति-रुत्तरदोहार्थम्। अत्राऽऽरण्याशनपरिस्तरणं यद्यपि विधेयमस्मिन्नुभये तथाऽपि सायंदोहस्य प्रातर्दोहस्य च समानं विधानमौपदेशिकमेवेति दर्शयितुं न व्यवधानेनै-कप्रकरणतया प्रदर्श्येते। तथोभौ सायंप्रातर्दोहौ सांनाय्यमतोऽप्यव्यवधानेन व्याख्येयौ।

तत्रापि क्रमविशेषं वक्तुमाह—

**उपधाय कपालानि प्रातर्दोहं दोहयति**
**तस्य सायंदोहेन कल्पो व्याख्यातः।**

स्पष्टमेतत्।

विशेषमाह—

**अप्रस्रःसाय यज्ञस्योखे उपदधाम्यहम्। पशुभिः**
**संनीतं बिभृतामिन्द्राय शृतमिति मन्त्रान्तः संनमति।**

एवं पाठेन पठतीत्यर्थः।

विशेषान्तरमाह—

**उदगग्रः शाखापवित्रमादधाति।**

सायं दोहे प्रागुदगग्रमत्रोदगग्रमिति विशेषः। संक्षालननिनयनान्तं समानं, तूष्णी-केनेत्येतन्नास्ति स्थालीगतेनाभिधारणस्याभिधास्यमानत्वात्।

विशेषान्तरमाह—

**नाऽऽतनक्ति।**

अर्थलुप्तस्यानुवादोऽयमग्रिमपदार्थनिवृत्त्यर्थम्। तेनाग्निहोत्रोच्छेषणानयनमपिधानं शाखापवित्रनिधानं सांनाय्यनिधानं च निवर्तन्ते। एवमुभौ दोहावुक्तौ दर्शमात्रं प्रकृत्य संनयतः सांनाय्यमिति।

इदानीं संनयदसंनयतोर्विभागमाह—

**नासोमयाजी संनयेदथो खल्वाहुः कापेयाः संनेयमेवासोमयाजिनेति।**

नासोमयाजी संनयेदित्यस्मच्छाखास्थमथो खल्वाहुरिति शाखान्तरस्थमथो खलु कल्पान्तरं कापेयशाखिन आहुः, तत्किं, संनेयमेवेत्यादि। तथा च विहितप्रतिषि-द्धत्वादसोमयाजिनोऽपि विकल्पः।

असोमयाजिनः सांनाय्ये देवतामाह—

ऐन्द्रꣳ सांनाय्यꣳ सोमेनेष्ट्वा महेन्द्रं यजेत ।

व्यवस्थिते देवते सोमेनेष्ट्वैवानन्तरे दर्शे महेन्द्रं यजेत। सोमात्पूर्वमिन्द्रमेवानन्तरं पूर्वकृतसांनाय्योऽकृतसांनाय्यो वा महेन्द्रमेव यजेत ।

इदानीं स्वशाखीयं सोमयाजिनः पक्षान्तरमाह—

अपि वा संवत्सरं द्वौ वेन्द्रामिष्ट्वाऽग्नये व्रतपत-
येऽष्टाकपालं निरुप्य[1] कामं महेन्द्रं यजेत ।

पूर्वं कृतसांनाय्यो वाऽकृतसांनाय्यो वा सोमेनेष्ट्वाऽपि संवत्सरं द्वा वा संवत्सराविन्द्रमेव सांनाय्येनेष्ट्वाऽग्नये व्रतपतयेऽष्टाकपालामिष्टिं कृत्वा ततो महेन्द्रं यजेत काममिति सत्यामिच्छायामग्नय इत्यादीष्टिस्ततो महेन्द्रयागः । असत्यां तु नेष्टिर्न महेन्द्रयागोऽपि त्विन्द्रयाग एवेति सूचितम् । कथं, निरू(रु)प्येति ल्यपाऽधिकारसंपादकत्वात् (त्वं) वदता पौर्वापर्यमेव दर्शितं, तेन नेयं नैमित्तिकेष्टिः संवत्सरेऽतीते विधीयतेऽपि तु महेन्द्रापेक्षायामेव विधीयत इति व्याख्यानलाभात् ।

कल्पान्तरमाह—

और्वा गौतमो भारद्वाजः शुश्रुवान्ग्रामणी
राजन्य इति सर्वत्र कामं महेन्द्रं यजेरन् ।

इति एत इत्यर्थे वार्थे वा । और्वादयस्त्रयस्तद्गोत्राः शाखान्तरोपात्ता अन्ये स्वशाखायां गतश्रीशब्देनोपात्ताश्च ' त्रयो वै गतश्रियः शुश्रुवान् ' इत्यादिना । शुश्रुवान्सर्ववेदाध्यायी । ब्राह्मणे ' यमृषयस्त्रयिविदो विदुः । ऋचः सामानि यजूꣳषि । सा हि श्रीरमृता सताम् ' इति श्रुतेः । गता प्राप्ता श्रीर्येन स गतश्रीः । शुश्रुवान् । ' शुश्रुवाꣳसो वै कवयः कविः क्रान्तदर्शनः ' इति निर्वचनमपि । ग्रामणीर्महत्तमो वैश्यानां परमसमृद्धो श्रीशब्दः स्पष्ट एव । राजन्योऽभिषिक्तस्य राज्ञः पुत्रः । सोऽपि महदैश्वर्ययोगाद्गतश्रीः । एते षडपि । सर्वत्रेति सोमात्पूर्वमपि पश्चाच्चेन्द्रमेव महेन्द्रमेव वा सांनाय्येन स्वेच्छयैव यजन्त्वित्यर्थः । अत्र याजमान आरण्याशनम् ।

एवं प्रासङ्गिकं समाप्य सायंदोहानन्तरं कर्तव्यमाह—

परिस्तृणीत परिधत्ताग्निं परिहितोऽग्निर्यजमानं भुनक्तु ।
अपाꣳरस ओषधीनाꣳसुवर्णो निष्का इमे यजमान-
स्य सन्तु कामदुघा अमुत्रामुष्मिँल्लोक इति संप्रेष्यति ।

अनियतकर्तृकं परिस्तरणं परिस्तृणीतेत्यादिबहुवचनेनोक्तम् । तत आग्नीध्रोऽन्यो वर्त्विक्परिस्तृणाति । दृष्टे संभवत्यदृष्टकल्पना नेति भाष्यकृत् । तदिदं व्याख्यानं

1 क. ग. घ. छ. ज. झ. ञ. ट. ड. ढ. निरूप्य ।

नानुमन्यन्तेऽन्ये प्रैष्यस्य कर्मकर्तुरनिर्देशादध्वर्युसमाख्यया च केन बाध्यताम् । न च प्रैषसामर्थ्येन बाध इति वाच्यं, प्रैषस्याऽऽत्मानं प्रत्यपि दर्शनात्स्वयमग्निहोत्र· होमे चोद्धरेत्युन्नयेत्यात्मविषयस्य दर्शनात् । न च प्रैषवैयर्थ्यम् । स्मृतिर्हि यथाऽन्यस्य निगदेन मन्यते तथा स्वस्यापि मन्यमाना दृष्ट एव संस्कारो भवेत् । तथोक्तं कात्यायनेन ' यथा प्रेषितमन्यः करोति पराधिकारात्तथा स्वयं वा करोत्य· विरोधात् ' इति । भारद्वाजेनापि–' आग्नीध्र एतानि कर्माणि कुर्यादित्येकमध्वर्युरित्य· परम् ' इति । सन्ति प्रैषवचनानि च प्रैष्यस्याभावेऽपीति सूचितमेव भगवता परि· भाषायाम् । * यत्प्रैषस्य परप्रत्यायनार्थस्य यजुर्वेदविहितस्यापि सामर्थ्यादुच्चैरुच्चारणे प्राप्तेऽपि यदयमन्यत्र प्रवरसंवादाश्रावणप्रैषेभ्य उपांशुत्वं यजुर्वेदविहित इत्याह । तेन ज्ञापयत्यात्मानं प्रति प्रैषेऽप्युच्चैरुच्चारणं विधानसामर्थ्येन निर्देशादन्य इति । परि· भाषाकरणाच्चानिर्दिष्टकर्तृके याजुर्वेदिकेऽध्वर्युरेव कर्तेति सूत्रकृतो मतम् ।

परिस्तरणप्रकारमाह—

**दर्भैरग्नीन्परिस्तृणाति ।**

परिभोजनीयैर्दर्भैरुपादेयविशेषणविवक्षया बहुत्वं विवक्षितं, तेनैकैकस्मिन्भागे चत्वारो दर्भा आचाराच्छ्राघेन तु बहुत्वं त्रित्वे पर्यवस्यति ।

क्रममाह—

**आहवनीयं परिस्तीर्य गार्हपत्यमथ दक्षिणाग्निं गार्ह· पत्यं वा परिस्तीर्य दक्षिणाग्निमथाऽऽहवनीयम् ।**

पूर्वो मुख्यक्रमो द्वितीय आधानक्रमो विशेषाद्विकल्पः । यदपि श्रूयते 'उपस्तीर्यः पूर्वश्चाग्निरपरश्चेत्याहुः ' इति तत्रापि पूर्व इति पूर्वभागे पूर्वमाहित इति व्याख्यान· संभवात् । सभ्यावसथ्ययोस्तु क्रमेणाग्रेवेति ज्ञेयम् ।

परिस्तरणसंनिवेशविशेषमाह—

**उदगग्राः पश्चात्पुरस्ताच्च भवन्ति ।**

पश्चाच्चेति मध्ये चकारः पश्चात्पुरस्तादित्येकपदभ्रमनिवारणार्थम् । दक्षिणत उत्तरतस्तु प्रागग्रा इत्यर्थसिद्धम् । नात्रोत्तराधरभावोऽविधानात् । अत्र भरद्वाजेनोक्तं 'दक्षिणः पक्ष उपरिष्टाद्भवत्यधस्तादुत्तरः' इति । सूत्रकृता स्मार्ते नियमविधानादनियमः श्रौत इति गम्यते ।

---

* यत्पदमधिकम् ।

---

१ क. ख. ग. घ. छ. ठ. ड. °चाकार° ।

ननु पूर्वेद्युरमावास्यायां वेदिकरणमिति वक्ष्यति, प्रकृते दर्शतन्त्रं दर्शयता कथं नोक्तमित्याशङ्क्याऽऽह—

एतत्कृत्वोपवसत्यमावास्यायाम्।

सत्यं तत्रोच्यते शाखान्तरीयं तदनेन विकल्पते। कुतः, अस्मच्छाखायामेतदेव कृत्वोपवसतीति यत उक्तम्। आयमाशयः—न चायमध्वर्योरुपवासविधिर्न तस्य याजमानधर्मत्वात्तस्मादुपरतेऽध्वर्योरुप वा समीपे निवासो वा विधीयते। स च पूर्वोक्तपाठक्रमेण परिस्तरणान्ते प्राप्नोति तत्रैतदित्यनूद्यते, तदनर्थकं सदेतदेवेति साधारणमन्यशाखाविधिपरिसंख्यार्थमिति गम्यते। न च पाठेन श्रुतेरपरिसंख्येति वाच्यम्। वाशब्दमप्रयुञ्जानेनैतादृश्याः श्रुतेरेवानुवादो दर्शितः। सा श्रुतिरेतत्कृत्वोपवसत्यमावास्यायामिति। सा च ततोऽपि श्रुत्यन्तरात्प्राप्तममावास्यायां वेदिकरणं तत्प्रतिषेधति, न तत्र वाशब्दापेक्षा, विहितप्रतिषिद्धत्वादस्मच्छाखायां विकल्पो भवतीति नात्र वाशब्दो नापि वेदिकरणसमयेऽपीति श्रुतिभिरेव विकल्पो दर्शितः। पूर्वेद्युर्वेदिकरणमपि बर्हिषः पूर्वं वेदादनन्तरमित्यपि वक्ष्यते। भाष्यकारेणैक एव प्रयोगो बर्हिष आहरणात्पूर्वतनः प्रदर्शितः प्राथम्यात्। न चान्तर्वेद्यनयः सादयति तथाचान्तर्वेदि शाखाया इत्यनुवादबलाद्वेदिकरणं पूर्वेद्युरेवामावास्यायामिति वाच्यम्। प्रथमानुवादेन पौर्णमास्यामपि प्राप्नोतीति नायं मुख्योऽनुवादोऽपि तु वेदिशब्देन वेदिदेशग्रहणम्। यथा विध्यपराधेऽग्निहोत्रेऽन्तःपरिधि निनयेदिति देशलक्षणा तथैवात्रापि ततो न काचिदनुपपत्तिः।

ननु पौर्णमास्यामपि मन्त्रब्राह्मणानुसारेण सांनाय्यप्रयुक्तं विहायान्यदस्त्येव समानं तत्कथममावास्यायामित्युक्तं व्यावर्त्याभावादित्याशङ्क्य शाखान्तरविधिवशात्तु न समानं पौर्णमास्यामित्याह—

पौर्णमास्यां तु।

त्विति मन्त्रब्राह्मणोक्तपदार्थक्रमनिवृत्तिः क्रियते।

कथं तत्राऽऽह—

पूर्वेद्युरग्न्यन्वाधानमग्निपरिस्तरणं च।

एतावदेव पूर्वेद्युरित्यर्थः।

पदार्थान्तरं तु कुत्र, तत्राऽऽह—

श्वो भूत इध्माबर्हिर्वेदं च करोति।

श्व इत्यव्ययमागाम्यनन्तरदिनाभिकरणत्वप्रतिपादकमुत्तरत्राव्यवहितेऽह्नीत्यर्थः। भूते प्राप्ते भूप्राप्ताविति स्मरणात्। इध्मादि करोति शाखान्तरीयविधिवशादित्यर्थः।

ननुमन्त्रब्राह्मणपाठप्राप्तः पदार्थक्रमः शाखान्तरीयश्रुत्या यद्यपि बाध्यते तथाऽपि पूर्वेद्युरिध्माबर्हिः करोति। यज्ञमेवाऽऽरभ्य गृहीत्वोपवसतीतिश्रुत्या विहितस्य कथं

बाधनं, न च तत्सांनाय्यसमभिव्याहारात्सांनयत एवेति वाच्यं, तथा सत्यसंनयतो दर्शेऽपि न स्यात्तथा चामावास्यायामित्यविशेषोपसंहारोऽपि न स्यात्तौ च समानविधानाविति परिभाषितत्वाच्च । किंच 'बर्हिषा पूर्णमासे व्रतमुपैति वत्सैरमावास्यायामेतद्ध्येतयोरायतनमुपस्तीर्यः पूर्वश्च' इत्येतत्क्रमसादेश्यानुगृहीतालिङ्गेन सांनाय्यसंनिधेः शैथिल्यान्निरङ्कुशा श्रुतिः पूर्वेद्युरिति प्रवृत्ता कथं बाध्येतेति तत्राऽऽह—

सद्यो वा ।

करोतीत्यनुवर्तते । श्रुत्योः समानबलत्वाद्विकल्प इत्यर्थः । समानेऽह्नि सद्य इध्माबार्हिर्वेदं चान्वाधानदिने यथाऽस्मच्छाखायां विहितं तथा कार्यं न श्वो भूत एवेत्याशयः ।

ननु सद्यस्कालपौर्णमास्यामपि पूर्वेद्युर्वा सर्वं प्राप्नुयादिति तत्राऽऽह—

सर्वं क्रियते* ॥ १२ ॥ सद्यस्कालायामुपरिष्टाद्वेदकर्मणोऽग्नीन्परिस्तृणाति ।

सद्यस्कालत्वेनोपवसथयजनीयदिनयोः समानमेकमेव दिनमित्येवंरूपेण प्रवृत्तिनिमित्तेन प्रवृत्तया सद्यस्कालसंज्ञया सर्वं सद्य एव । सर्वमिति पूर्वेद्युः परेद्युः शाखान्तरवशात्प्राप्तमेकस्यामेव सद्यस्कालायां तिथौ करोति न तिथिद्वय इति भावः । भारद्वाजेनोक्तं 'सद्यस्कालां पौर्णमासीम्' इति, तदपि चेदनुमंयेयं तर्हि पूर्वसूत्र एवं व्याख्या— सद्यो वेत्येतावत्सूत्रं पूर्वेद्युः श्वो भूते चोक्तं समानेऽह्नि पूर्वेणाह्ना परेण वा करोति । पूर्वेण यदा तदा पूर्वोक्त एव द्वितीयोऽन्यन्वाधानमिध्माबर्हिराहरणं वेदकरणं परिस्तरणमुपवासः श्वो भूते कर्मणे वामित्यादि यथापाठमेव पक्षो वैकल्पिकः । परेणाह्ना समानेऽह्नि यदा तदा सद्यस्कालां पौर्णमासीमिति भारद्वाजोक्तः पक्षस्तृतीयः । यजनीय एव दिनेऽन्वाधानमिध्माबर्हिर्वेदं परिस्तरणं च करोतीत्यर्थः । सूत्रान्तरेऽयं पक्षः पूर्वतनाभ्यां पक्षाभ्यां समविकल्पतया पौर्णमासीमात्रनिष्ठतया व्याकृतो व्यवस्थयोक्तः । सर्वं करोति सद्यस्कालायामिति पक्षः सद्यस्कालायामेवेति व्याख्यातः । अत्र भाष्यकृता सद्यो वेति द्वितीयपक्षस्य पूर्वपक्षतया कृतस्य निराकरणेन सद्यो वेति व्याख्यातं, तेनैक एव पक्षः स्थापितस्तद्व्याख्यानं सूत्रकृतः प्रयत्नाधिक्यस्य सार्थक्यासंपादकत्वादुपेक्ष्यम् । सूत्रान्तरेषु चैतयैव विधया नानापक्षस्वीकारात् । सद्यस्काले सायमग्निहोत्रानन्तरं प्राप्तं परिस्तरणं तत्तत्कालालाभेऽपि पदार्थक्रमेणैव कार्यं न्यायबलेनेति दर्शयितुं सद्यस्कालायामुपरिष्टाद्वेदकर्मणोऽग्नीन्परिस्तृणातीति दर्शितं, कालाभावेऽपि क्रमपदार्थयोरुभयोर्लोपो मा भूदिति । अत्र सद्यस्कालपौर्णमास्यामयमपरो विशेषः ।

संग्रहः—श्वःपदं लुप्यते मन्त्र उभावग्नी च सर्वशः ।
नोहोऽस्ति प्रकृतौ नापि विकृतौ तद्विकारतः ॥

---

*टीकापुस्तकेषु क्रियत इति स्थाने करोतीति वर्तते ।

इति पूर्वेद्युर्विधिः समाप्तः ।

अथ श्वो भूते विधिः ।

प्रातरग्निहोत्रꣳ हुत्वोदित आदित्ये पौर्णमास्या-
स्तन्त्रं प्रक्रमयति प्रागुदयादमावास्यायाः ।

अत्राविशेषात्प्रातरग्निहोत्रं हुत्वोदित इति श्रवणात्पर्वद्वयेऽपि पूर्वमुदयाद्धोमनियमः । तन्त्रोपक्रमे तु व्यवस्थेति समञ्जसं सूत्रम् । उदित आदित्ये प्रातरग्निहोत्रं हुत्वा पौर्णमास्यास्तन्त्रमित्येतत्तु व्याख्यानमसमञ्जसम् । प्रक्रमयतीति स्वार्थे णिच्, परिकर्मिणः प्रक्रमार्थं प्रेरयतीत्यर्थो वा ।

कर्मणे वामिति पाणी प्रक्षाल्य ।

शकेयमित्यन्तः । अद्भिः प्रक्षालनमदृष्टसंस्कारः कर्मणि शक्तत्वलक्षणो मन्त्रलिङ्गाद्वाक्यशेषाच्च । अत एव नोलपराजिस्तरणमात्रात्पूर्वभावित्वेन तावन्मात्राङ्गमपि तु सर्वयज्ञार्थत्वेनाङ्गमिति न्यायसिद्धम् ।

यज्ञस्य संततिरसि यज्ञस्य त्वा संतत्यै स्तृणामि
संतत्यै त्वा यज्ञस्येति गार्हपत्यात्संततामुलपराजीꣳ
स्तृणात्याहवनीयात्तूष्णीं दक्षिणां तूष्णीमुत्तराम् ।

गार्हपत्यायतनादारभ्याऽऽहवनीयायतनमा मर्यादीकृत्य विच्छेदवर्जितां शुष्कदर्भपङ्क्तिं तनोति । तूष्णीमिति प्रत्येकश्रुतिपाठस्य शाखान्तरीयस्य प्रदर्शनार्थम् । किं प्रयोजनं पाठप्रदर्शनस्य, तूष्णीमिति श्रुत्या न्यायप्राप्तमन्त्रावृत्तिनिवारणं यथा स्यादिति । तथा हि राज्या भूतभाव्युपयोगाभावान्न द्वितीयया संस्कार्यत्वं बोध्यते, गार्हपत्याहवनीययोरपि पञ्चमीनिर्दिष्टयोर्न संस्कार्यत्वं मन्त्रान्तयोरप्रतीतेश्च यज्ञस्य संतानकरणमात्रं प्रतीयते यज्ञस्याविच्छेदायेति वाक्यशेषाच्च । तस्मादारादुपकारकं प्रधानकर्म । तथा चास्मच्छाखायां यद्यप्याहवनीयात्संतनोतीत्येतावतैकं कर्म विधीयते तथाऽपि शाखान्तरे गुणभेदेन द्वे अन्ये दक्षिणोत्तरे राजी विधीयेते । तथा च त्रीण्येतानि प्रधानकर्माण्येवेति । यत्रैकस्मिन्निति न्यायेन मन्त्राभ्यासनिवारणं न संभवति, ततस्तु प्रतिप्रधानमन्त्रावृत्तिरिति मन्त्रावृत्तौ प्राप्तायां तूष्णीमिति पाठप्रदर्शनमावृत्तिनिवारणार्थमिति सिद्धम् ।

दक्षिणेनाऽऽहवनीयं ब्रह्मयजमानयोः सदने करोति ।

आहवनीयस्यादूरे दक्षिणभागे याज्ञिकैस्तृणैरुपवेशनार्थमासने करोति । ब्रह्मसदनात्तृणं निरस्येति दर्शनात्तृणमये आसने । तत्रारत्निपरिमाणाहवनीयायतनस्य दक्षिणत आञ्जस्येनोभयोरुपवेष्टुमशक्यत्वात्साक्षाद्व्यवधानयोश्चाग्निमे सूत्रे पूर्वं ब्रह्मणेऽपरं

यजमानायेति निवारितत्वादुभयोर्मुख्यदक्षिणावस्थितित्यागायोगादन्यतरस्य प्राप्तावपि प्रथमस्य ब्रह्मण एव मुख्यं यजमानस्य तदनुरोधेन किंचिन्निर्ऋतिकोणेऽपि च न दुष्यति। तथा च 'दक्षिणतआयतनो वै ब्रह्मा' इति तथा 'दक्षिणतःशय एतद्वै यजमानस्याऽऽयतनम्' इति च समानश्रुत्योरपि दक्षिणं वेद्यंसं श्रितो यजमान इति श्रुत्यन्तराद्विरोधपरिहारोऽपि दृश्यते ।

**पूर्वं ब्रह्मणेऽपरं यजमानाय ।**

चतुर्थ्यौ तादर्थ्ये । अत्र ब्रह्मयजमानयोः सदने पूर्वापरे करोतीति व्याख्यातमेतत् ।

**उत्तरेण गार्हपत्यं दर्भान्संस्तीर्य द्वंद्वं पात्राणि प्रक्षाल्य न्यञ्चि प्रयुनक्ति ।**

प्रागग्रानुदगग्रान्वा परिभोजनीयेभ्यो दर्भानास्तीर्य तेपु पात्राणि प्रयुनक्ति स्थापयति। उत्तरेणेत्यदूर उत्तरेण प्रयुनक्तीति वोभयत्र संबन्धः। द्वंद्वमित्यपि प्रयुनक्तीत्यनेनैव संबध्यते। तथा पात्राणि न्यञ्चीत्यपि प्रक्षाल्येत्यपि प्रधानेनैव संबध्यते। पश्चात्परस्परसंबन्धः सामर्थ्यात्। ततस्तु पात्राण्यद्भिः प्रक्षाल्य न्यञ्चि बिलवन्त्येवावाङ्मुखानि द्वंद्वं सर्वाणि प्रयुनक्तीत्यन्वयः। द्वंद्वं द्वे द्वे संभरतीति श्रुतेः।

तान्येवाऽऽह—स्फ्यमित्यादीडापात्रमित्यन्तम् । ततश्चकारः श्रूयमाणो द्वाभ्यां द्वाभ्यामेकेन वा संबध्यते श्रौतस्य चकारस्य प्रत्येकं श्रूयमाणस्य व्याख्यानाय। श्रूयते हि-स्फ्यश्च कपालानि चेति । अत्रैकधिया क्रोडीकृतयोर्द्वयोः पदयोरर्थौ द्वे पात्रे विवक्षिते । तद्गतं द्वित्वं द्वंद्वमित्येतेनोक्तं, तद्युक्तौ क्वचित्क्वचिज्जातौ पर्यवस्यति ततस्त्वेकप्रातिपदिकार्थ एकोऽर्थोऽनेन द्वंद्वपूर्तिः कार्या।

तद्यथा—

**स्फ्यं कपालानि ।**

सर्वाणि कपालान्येकं पात्रम् । स्फ्योऽस्याकृतिरित्यापस्तम्बः । असिः खड्गः। अहोमार्थत्वोद्वारणवृक्षस्य। आपस्तम्बस्तु स्फ्यः शम्याः प्राशित्रमिति खादिराणीत्याह। स्फ्यः शम्या च बाहुमात्राविति भारद्वाजः। द्वात्रिंशदङ्गुलेति बौधायनः। षट्त्रिंशङ्गुलेत्यन्ये। कपालानि नूतनस्य भिन्नस्य मृन्मयस्य पात्रस्य शकलानि पुरोडाशाधिश्रयणयोग्यानि। रौहिणकपालेषु चाऽऽकृतिविधानात्तथा मृन्मयानि कृत्वा रेखाभिर्विभागं किंचित्कृत्वा पक्त्वा भङ्क्त्वा कार्याणि वा, न तु पृथगेकैकस्मिन्कृते पक्वे कपालशब्दो युक्तः। उत्तानेषु कपालेष्वधिश्रयतीति दर्शनात् । सोऽवयववाची । रौहिणेषु तु

---

१ ख. ङ. ट. °रस्य सं° । २ ख. ट. °त्वाद्वर' ।

विधानादेकैकं कर्तुं शक्यम् । तत्र कपालशब्दो गौणो भविष्यति कपालधर्मप्राप्त्यर्थम् । द्वितीयान्तता प्रयुनक्तीत्यनेन संबन्धार्थम् ।

अग्निहोत्रहवणीꣳ शूर्पम् ।

अग्निहोत्रं हूयतेऽनया साऽग्निहोत्रहवणी स्रुग्लक्षणलक्षिता । सा वैकङ्कती होमार्थत्वात् । यान्यनादिष्टवृक्षाणि विकङ्कतस्य तानीति वक्ष्यति । शूर्पं लोकप्रसिद्धं, तद्वैणवं नलमयं वेति भरद्वाजः । वर्षवृद्धमसीति शूर्पे मन्त्रदर्शनाद्वर्षवृद्धा इषीका इति लिङ्गादैषीकमिति केचित् । इषीका इषीकासदृशतृणानि ।

कृष्णाजिनꣳ शम्याम् ।

कृष्णमृगत्वक्सग्रीवमसत् । शम्या स्फ्येन व्याख्याता । आकारस्तु यथार्थः । शम्या तु युगबिले प्रविष्टं काष्ठम् ।

उलूखलं मुसलम् ।

तत्प्रमाणमर्थसिद्धमेव । वरणस्यैवैते ।

दृषदमुपलाम् ।

लोकप्रसिद्धे पेषाणार्थौ ग्रावाणौ कृत्रिमौ जातिवचनौ ।

खादिरꣳ स्रुवं पालाशीं जुहूमाश्वत्थीमुपभृतं वैकङ्कतीं ध्रुवाम् ।

वषट्कारो वै गायत्रिया इत्यनुवाके तथोक्तत्वात् ।

शाखान्तरीयं मानमाह—

अरत्निमात्र्यो बाहुमात्र्यो वा मुखवत्यो हंसमुखप्रसेचना अग्राग्रा भवन्ति त्वक्तोबिला वायसपुच्छय इत्येकेषाꣳ हस्त्योष्ठय इत्येकेषाम् ।

इदमग्निहोत्रहवण्याः स्रुवस्य च मानं तयोर्मानान्तरानभिधानात् । अरत्निमात्र्य इत्यादि यद्यपि स्त्रीलिङ्गनिर्देशस्तथाऽपि स्रुचः संमार्ष्टि स्रुवमग्र इत्यादिभूम्ना स्रुवस्यापि ग्रहणात् । तथा च मानमात्रमेव स्रुवेण संबध्यते । आकारविशेषः स्रुचां चतसृणामेव । स्रुवस्याऽऽकारस्तु स्रुगाकारेण विरुध्यते । यतोऽस्यावदानार्थत्वेनैव संस्तवः । 'यस्य खादिरः स्रुवो भवति छन्दसामेव रसेनावद्यति' इति वाक्यशेषात् । अक्षप्रमाणबिलत्वेनाङ्गुष्ठपर्वमात्रबिलत्वेन च शास्त्रान्तरे विधानाच्च । अग्राग्रत्वं त्वक्तोबिलत्वं चाविशेषादत्रापि संबध्यते । अरत्निस्तु चतुर्विंशत्यङ्गुलः । बाहुरङ्गुल्यग्रमारभ्य जत्रुसंश्लिष्टास्थिपर्यन्तो द्विचत्वारिंशदङ्गुल इति केचित् । षट्त्रिंशदङ्गुलो बौधायनभारद्वाजयोर्मते । स्रुचां प्रादेशमात्रत्वमपि बौधायनेनोक्तम् । मुखवत्यो मुखं बिलभागादूर्ध्वभागो न तु स्रुववद्बिलमात्रे समाप्तिरित्यर्थः । हंसस्य मुखमिव प्रसेचनं यासां ताः प्रसिच्यतेऽनेन

प्रसेचनमित्युच्यते । हंसस्य मुखं चञ्चुपुटस्याधःप्रणालिका तत्सदृशप्रणालिकमित्यर्थः । स्रुगतं द्रव्यं प्रणाल्या गच्छदग्नौ पतति येन प्रदेशेन विभागं गच्छति तत्प्रसेचनं काष्ठाग्रमग्रिमोऽवधिस्तदेवाग्रं यासां ताः । भवन्तीत्यनेन नानाश्रुतिसामर्थ्यसिद्धतोक्ता । त्वक्सारा वै वृक्षा इति श्रुतेः, त्वक्तः सप्तम्यर्थे तसिल्, त्वग्भागे बिलमाज्यादिद्रव्यसंग्रहार्थं खातं यासां तास्तथा । द्वेधा पाटितस्य काष्ठस्यान्तर्भागे बिलं न कार्यं किं तु त्वग्भागे समीकृत्य तत्रैव बिलम् । अपाटितस्य तु मध्यभागादधिकभागे बिलं न्यूनभागे बुध्नं त्वक्समीपे यथा बिलं भवति तथा कार्यमित्यर्थः । वायसस्य पुच्छमिव पुच्छं यासामिति दण्डमूले स्थूलाः परिणाहे नतास्तत ऊर्ध्वं पात्रपर्यन्तं सूक्ष्मं किंचिदित्यर्थः । अत्रैकेषामिति विशेषदर्शनार्थं न विकल्पार्थम् । हंसमुख्यो वायसपुच्छ्य इत्येतयोर्गुणयोरविरोधात् । हस्तिन ओष्ठ इवौष्ठा यासामिति विरुद्धधर्मोपसंहारेण विकल्पप्रतिपादनार्थमेकेषामिति वचनम् । हंसमुख्य इत्यनेन हस्त्योष्ठ्य इत्यस्य विकल्पः । यथाशोभं कार्या इति बौधायनः । भरद्वाजः—अङ्गुष्ठपर्वमात्रबिलः स्रुवो भवत्यर्धप्रादेशमात्रबिलाः स्रुच इति । अञ्जल्याकृति पात्रं स्रुचामिति शास्त्रान्तरम् ।

आज्यस्थालीं कुटरुम् ।

आज्यनिर्वापार्था स्थाली मृन्मयी । कुटरुः पाषाणः कुट्टनसाधनम् ।

पात्रीं मेक्षणम् ।

पिष्टसंवपनार्था मृन्मय्येव । मेक्षणं पिष्टस्य मेलनार्थं दर्वीसदृशं वारणम् ।

वेदं प्राशित्रहरणम् ।

वेदो व्याख्यातः । ब्रह्मणेऽवदानं प्राशित्रं येन ह्रियते तत्पात्रं प्राशित्रहरणं, गोकर्णाकृतिचमसाकृतीति भरद्वाजः । आदर्शाकृतीति कात्यायनः ।

प्रणीताप्रणयनमिडापात्रं च ।

प्रणीता आपः प्रणीयन्ते येन स चमसो वारणः । तथेडावदानाधानार्थमपि चमसो द्रोणीकंसमृन्मये कांस्ये पात्रे (?) प्रणयनार्थम् । चकारो द्वाभ्यां संबन्धनीयः ।

एकामन्वाहार्यस्थालीम् ।

एकामित्यर्थसिद्धम् । मानुषे पात्रे च न द्वंद्वसंपत्तिः । अन्वाहार्यो ह्यृत्विग्भ्यः परिक्रयणार्थं दीयतेऽतो मानुषम् । सह सर्वाणि मानुषाणीति श्रुतेरन्येषामभावाच्चार्थादेकस्यैव प्रयोगस्तस्माच्च पूर्वेण दैवेन सहैकत्वकरणेन द्वंद्वसंपत्तिर्न कार्येत्यर्थः । एतेनान्यत्र विकृतिष्वपि पदार्थद्वयमप्येकीकृत्य यथाकथंचिद्दैवेषु द्वंद्वसंपत्तिः कार्येति ज्ञापितम् ।

एवं स्वशाखानुसारेण स्रुचां व्यवस्थितोपादानवृक्षत्वं व्याख्यायेदानीं शाखान्तरानुसारेण वैकङ्कतैकवृक्षोपादानत्वं व्याचष्टे—

**तेषां यान्यनादिष्टवृक्षाणि विकङ्कतस्य तानि ।**

अत्र वाशब्दाभावेऽपि विकल्पो ज्ञेयो विरुद्धगुणविधायिकयोः श्रुत्योरेकत्रोपसंहारायोगात् । तृणं द्वितीयां शाखान्तरीयां विरुद्धगुणविधायिकामस्मात्सूत्रे दंशेऽविरोधिनां(?)प्रदर्शयन्नर्थतो व्याख्यातवाननेन सूत्रेण । तेषां नानावृक्षजानां पात्राणामस्मच्छाखोक्तानां मध्ये यान्यवैकङ्कतानि शाखान्तरे च वैकङ्कतोपादानत्वेन निर्दिष्टवृक्षाणि अस्मच्छाखायावत्त (यां च त)त्त्वेनानिर्दिष्टवृक्षाणि तान्यपि विकङ्कतस्यैव । अग्निहोत्रहवणीध्रुवयोः शाखान्तरवदस्मच्छाखायामपि वैकङ्कत एवाऽऽदिष्टः । तत्राविकल्पः । इतरेषां तु वैकङ्कतवृक्षजत्वेन विकल्प इत्यर्थः । तत्राप्यहोमार्थानि वरणस्येति वक्ष्यते । तत्राप्रासैव वारणता विधीयते नियतैव । परिशेषाद्धोमार्थानामेव वैकङ्कतत्वेन विकल्पः ।

**अहोमार्थानि तु वारणस्य ।**

शम्यादीनि सर्वाण्यपि । इदमनेन वाक्यद्वयं व्याख्यातं यदाधानं पठ्यते शाखान्तरे । तस्माद्वारणो वै यज्ञावचरः स्यान्नत्वेतेन जुहुयाद्वैकङ्कतो वै यज्ञावचरः स्याज्जुहुयादेवैतेनेति जैमिनीयैरुदाहृतम् । यज्ञावचरो यज्ञपात्राणि । तत्राऽऽधानेष्टीनां स्वप्राधान्येनाङ्गत्वं यज्ञत्वेन, तत्रेदं पात्रविधानमिति पूर्वपक्षः । सिद्धान्तो यदाहवनीये जुह्वति तेन सोऽस्याभीष्ट इत्यादिना । अग्निसंस्कारत्वावगमादिष्टयोऽप्यग्निसंस्कारत्वेनाऽऽधानरूपा एवेति तासामयज्ञत्वमतो वाक्यमुत्कृष्यते प्रकरणात्तेनानारभ्य विधिवाक्यमिति । दर्शपूर्णमासयोरग्निष्टोमे वेदं गच्छति प्रकृतौ । तत्रापि यानि होमार्थानि विकङ्कतस्य तानीत्येको वाक्यार्थः । द्वितीयस्तु यान्यहोमार्थानि तानि वरणस्येति । एवमेव भरद्वाजेनाप्युक्तम् ।

स्रुचां लक्षणं याज्ञिका उपदिशन्ति—

आयामं पञ्चधा कृत्वा चतुर्धा वाऽग्रतो द्वयोः ।<br>
उपान्त्यः पात्रमित्युक्तो हविराश्रयभावतः ॥ १ ॥<br>
उपान्त्यभागे विस्तारः स्वदैर्घ्येण समो भवेत् ।<br>
सोऽङ्गुल्याकृतिरुद्दिष्टो बिलमत्र च वर्तुलम् ॥ २ ॥<br>
षडङ्गुलं बाहुमात्र्यां तदर्धेन च निम्नता ।<br>
अरत्निमाने हस्तस्य तलमानं बिलं स्मृतम् ॥ ३ ॥

---

१ ख. छ. द. °मस्मच्छु° । २ च. ङ. °नि वार° । ३ छ. ट. °ववरः । ४ क. ग. च. °वरः । छ. ट. °वचरः । ५ क. ग. च. छ. ट. °ववरो । ६ ट. वेदं ।

विस्तारार्धेन निम्नं स्यादन्त्यभागेऽथ निर्णयः ।
भागेऽन्तिमे भवेद्ग्रीवा दैर्घ्यार्धेन च विस्तृता ॥ ४ ॥
तस्या मुखं हंसमुखं ह्रस्योष्ठमुखमेव वा ।
बिलात्प्रणालिका तावत्पर्यन्तार्थानुरूपतः ॥ ५ ॥
कर्णौ ससुषिरौ ग्रीवापार्श्वयोश्चोदितौ तथा ।
बिलस्य बुध्ने पद्मं स्यादथ दण्डस्य लक्षणम् ॥ ६ ॥
अविशिष्टास्त्रयो द्वौ वा भागौ दण्ड इतीर्यते ।
तस्य मूले भवेत्स्थूलः परिणाहो नवाङ्गुलः ॥ ७ ॥
अन्ते पञ्चाङ्गुलः श्लक्ष्णो यन्त्रतो वर्तुलो भवेत् ।
दण्ड एवं स्रुचां काकपुच्छत्वं समुदीरितम् ॥ ८ ॥
यथाशोभं स्रुचः कार्या इति बौधायनोऽब्रवीत् ।
शास्त्रान्तरात्तु विज्ञेयं विशेषान्तरमत्र यत् ॥ ९ ॥
प्रादेशमात्रताऽपि स्याद्बौधायनमतादि तत् ।
दण्डो भागद्वयेन स्यात्पात्रं भागद्वयेन च ॥ १० ॥
ऊर्ध्वमेकेन भागेन ग्रीवा चेति यथार्थतः ।
स्रुचः सह स्रुवेण स्युरुक्तवृक्षा अथापि वा ॥ ११ ॥
वैकङ्कत्यो वारणानि पात्राण्यन्यानि सर्वतः ।

आपस्तम्बेनाप्युक्तम्—'एतेषां वृक्षाणामेकस्य स्रुचः कारयेत्' इति । एतेषां खदिरपलाशाश्वत्थविकङ्कतानामन्यतमेन वृक्षेण स्रुचः कारयेदित्यर्थः ।

अत्र प्रातर्दोहपात्राणि प्रयुनक्ति ।

अत्रापि द्वंद्वमित्यादि पूर्ववत् । तत्र विशेषः सायंदोहपात्रेभ्य उपवेषं शाखापवित्रमभिधानीं निदाने दोहनमिति षडेव । अग्निहोत्रहवण्याः सर्वार्थत्वेन प्रयुक्तत्वात् । पिधानं तु नास्ति प्रातर्दोहे । अत्रास्मिन्काले ।

इतः पूर्वं संनयत एव प्रयोगो मन्त्रब्राह्मणानुसारेण प्रदर्शितः । तत्र न्यूनं शाखान्तरेण पूरणीयं पूर्वेद्युर्वेदिकरणं, तदग्रे सिंहावलोकनन्यायेन वक्ष्यति वेदिकरणसमये, तद्वदिहापि सामर्थ्यसिद्धौ विशेषौ व्याचष्टे—

अत्रासंनयतः पवित्रे करोति ।

सायंदोहाभावात्तदर्थमकृते अत्र काले करोतीत्यर्थः । इदं संनयनममावास्यायां दाक्षायणयज्ञिनः पौर्णमास्यामपि । दर्शेऽपि च 'दाक्षायणयज्ञेन सुवर्गकामो यजेत पूर्णमासे संनयेन्मैत्रावरुण्याऽमिक्षयाऽमावास्यायां यजेत' इति वक्ष्यति च । ततस्तु पर्वद्वये

प्रयोगौ संसांनाय्याविति *न पौर्णमासीमतिक्रम्य दर्शप्रयोग एव कथं सूत्रकारेण प्रदर्शित इति शङ्काऽपि निरस्ता । पर्वविशेषप्रयुक्तौ विशेषौ त्वेतत्कृत्वोपवसतीत्यादिनोक्तौ ।

संनयतः पवित्रे पूर्वकृते एवेत्यर्थात्सिद्धेऽपि सायंदोहकाले कृतयोरपि पवित्रयोः प्रकरणेन सर्वार्थता गम्यत इत्याह—

**पूर्वेद्युःकृते संनयतो धार्येते ।**

पूर्वेद्युःकृते धार्येते । अधारणे तु प्रायश्चित्तमित्यर्थः ।

**दक्षाय त्वेति प्रणीताप्रणयनं चमसमादाय ॥ १३ ॥**

चमसग्रहणात्कांस्यं मृन्मयं च तूष्णीमेव । तथैवाऽऽपस्तम्बेनाप्युक्तम् । कुत एतदिति चेत् । कांस्यद्रव्यं हि न क्रत्वर्थमतो न प्रकरणेन गृहीतं ततस्तु प्रकरणगृहीतो मन्त्रो न कांस्यमपेक्षते । नापि कांस्यं तेनान्वेति तस्याप्राकरणिकत्वात् । तथा च विकृतौ न पुरुषार्थस्यातिदेशः ।

**वानस्पत्योऽसि देवेभ्यः शुन्धस्व देवेभ्यः**
**शुम्भस्व देवेभ्यः शुध्यस्वेति त्रिः प्रक्षालयति ।**

जलैरित्यर्थात् । अत्र प्रत्येकं क्रियादर्शनादसीतिक्रियायाः प्रक्षालनप्रकाशकत्वाद्वानस्पत्योऽसि देवेभ्यः शुन्धस्वेत्येको मन्त्रस्तथाऽन्यौ द्वौ । त्रयाणां कर्मकरणानां समुच्चयावेदकं प्रमाणं नास्तीति बलादेकमन्त्रता न कल्प्या । चेष्टापृथक्त्वेन चार्थो निष्पद्यते त्रिः प्रक्षालयतीति साभ्यासविधानात् । मन्त्रविकल्पस्याष्टदोषदुष्टत्वादभ्यासाङ्गता मन्त्राणामवगम्यते । तेन त्रीण्यपि प्रक्षालनानि समन्त्राणीति सिध्यतीति भाष्यकारः तदन्ये नानुमन्यन्ते । कुतः, देवेभ्य इत्यादित्रयमुच्चार्येतिकरणेन शाखान्तरीयब्राह्मणस्यैवानुवादो न च लिङ्गप्रातानामस्पष्टलिङ्गत्वात् । तस्माद्यथोपदिष्टं ब्राह्मणवन्त इति भवत्येव समुच्चय इति सर्व एक एव मन्त्रस्तं समुच्चार्य प्रथमं प्रक्षालनं ततो द्विस्तूष्णीमिति पक्षमेव साधयांबभूवुः । [ यत्र ]सूत्रकारस्येष्टं मन्त्रनानात्वं तत्र हि करोत्येव प्रयत्नाधिक्यम् । यथा शुक्रं त्वा शुक्रायामित्येतैर्जुहोमिति बहुवचनान्तमेतच्छब्दं प्रयुङ्क्ते । वैखानसेन सकृत्प्रक्षालने मन्त्रो विनियुक्तः सर्वोऽपीति ज्ञायते ब्राह्मणमेव विनियोजकमिति ।

तथा च प्रकृतौ पुरुषार्थत्वेन प्रणयने पात्रद्वयं विधत्ते—

---

* नेत्यस्य प्रदर्शित इति व्यवहितेन संबन्धः ।

---

१ क. ख. ग. च. छ. °मादत्ते ॥ १३ ॥ २ ख. छ. ठ. °स्याप्रकरणित्वा° । ३ छ. ढ. ङ. °वनपा° ।

कं॰सेन ब्रह्मवर्चसकामस्य प्रणयेन्मृन्मयेनान्नाद्यकामस्य ।

ब्रह्मवर्चसं वेदवेदाङ्गार्थज्ञानानुष्ठानाभ्यां यो यजमानो वर्चः शोभामात्मनः कामयते तस्याध्वर्युः कंस्ये(से)न पात्रेणापः प्रणयेन्मृन्मयेन पात्रेणान्नाद्यमन्नमत्तीत्यन्नादः प्रकृष्टान्नस्यान्नादस्य भावोऽन्नाद्यं तत्कामस्य यजमानस्येति पूर्ववत् । चमसेनापः प्रणयेदिति शाखान्तरीयं दर्शपूर्णमासप्रकरणे पठितम् । तद्वाक्यमङ्गत्वमावेदयति प्रणयनं प्रति चमसस्य । अप इति द्वितीयया संस्कार्यत्वमवगम्यते प्रणयनेनापः संस्कुर्यादिति । संस्कृतानां च विनियोगः प्रणीताभिर्हवींषि संयौतीति । न्यायदर्शने उदाहृत्य दृष्टार्थत्वमेव स्थापितम् । प्रणीतानामादाय पिष्टेष्वानयतीति सूत्रकारेणाप्युक्तम् । यदा न संयवनप्रयुक्ताः स्युस्तदा न प्रतिनिधिं विदध्यात् । यदि प्रणीता न विद्येरन्याः काश्चिदापो यजुषोत्पूय ताभिः संयौतीति । ततो ज्ञायते दृष्टार्थत्वमविप्रतिपन्नं सूत्रकृतामिति । तथा यत्राऽऽज्यपयसी चरौ श्रपणार्थे श्रूयेते तत्र ते प्रणयतीत्येवं वक्ष्यति । तस्मात्पिष्टेष्वानयतीति सूत्रेऽर्थ एव निर्दिष्टो वाक्यं तु प्रणीताभिर्हवींषि संयौतीति न्यायशास्त्रे दर्शितमेव । अन्यथा कः प्रसङ्गश्चरौ प्रणीतानाम् । तस्माद्धविःसंयवनार्थाः प्रणीताः । अदृष्टार्थता चावगम्यते, यत उपनयनादिषु प्रणीताप्रणयनं विधत्ते । आह च भरद्वाजः सर्वसंस्थासु प्रणीता इति । एवं च प्रणयनस्यादृष्टार्थत्वे दर्शपूर्णमासप्रकरणपठितानां सर्वेषां यागानां प्रकरणैर्गृहीतस्य प्रणयनस्य सर्वाङ्गता सिध्यति । दृष्टार्थत्वमात्रे तु पुरोडाशमात्राङ्गता स्यादुपांशुयागसांनाय्ययागाङ्गता प्रकरणगता बाध्येत । तस्मात्तौ समानविधानाविति सूत्रकारवचनाच्चादृष्टार्थं, तथा सर्वयागाङ्गता युक्ता । तथा प्रणीताब्राह्मणेषु च प्रणयनस्तुतिः समस्तदर्शपूर्णमासयागफलार्थत्वेन दृष्टा चादृष्टार्थत्व एव युक्ता भवति । एवं वा दृष्टार्थप्रणनयने विनियुक्तानामप्यपां संयोगे(ग)पृथक्त्वन्यायेन हविःसंयवनार्थत्वेनैकदेशस्य दृष्टार्थत्वेनाविनियुक्तस्यापि शास्त्रान्तरबलाद(दृ)ष्टार्थत्वेऽपि न कश्चिद्दोषः । न चापः प्रणयतीति द्वितीयानिर्देशादपां प्रणयनसंस्कार इति वाच्यम् । प्रणयनव्यतिरेकेणान्यस्य कर्मणः सर्वयागार्थत्वेनादृष्टार्थस्यासंभवात् । न च हविःसंयवनोपयोक्ष्यमाणस्य संस्कार इति वाच्यम् । प्रकरणैः सर्वयागार्थत्वमवगतं बाध्येतेत्युक्तमेव । तस्मात्सक्तूञ्जुहोतीतिवद्द्वितीया व्याख्येया । ततः प्रणयनमुपांशुयाजसांनाय्ययागाङ्गमपीति तद्विकृतिषु केवलाज्ययागपश्वामिक्षादिष्वपीति । प्रणयनं कार्यमेवादृष्टार्थमिति सिध्यति । ननु यदि पशौ प्रणयनं स्यात्तदा पवित्रे कृत्वा यजमान वाचं यच्छेति संप्रेष्यति, वाग्यतः पात्राणि संमृशति, प्रोक्षितेषु वाचं विसृजत इति क्रमनियमो बाध्येतेति चेत् । न । नेदं क्रमनियमार्थं पशौ सूत्रं वक्ष्यति, किं तु पशावप्राप्तपवित्रविधानार्थं तथैवाप्राप्तवा-

---

१ क. ग. ङ. कांस्येन । २ ट. ङ. °याजसां° । ३ क. ख. ग. छ. ट. °णवता ।

ग्विसर्गकालविधानार्थं च। पशुं प्रातर्दोहविकारं वक्ष्यति। प्रातर्दोहे च सायंदोहकृतपवित्रं गृह्यते। पशौ तदसंभवात्क कार्यमिति जिज्ञासिते पवित्रकार्ये चोदकप्राप्त उपस्थितं तदैव कार्यमिति दर्शितम्। ब्रह्मणि स्वस्थानमवस्थिते पवित्रे कृत्वा ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छेति संप्रेष्यतीति वक्तव्येऽपि यथा चोदकप्राप्तं कर्मणे वामित्यादिनोक्तमेवं ब्रह्मन्नित्यादिनोक्तं प्राप्तत्वादेव यथाकालम्। अतोऽप्राप्तं पवित्रकरणमेवोक्तम्। वाचं यच्छत्या हविष्कृत इति याजमाने हविष्कृता वाचं विसृजत इति चाध्वर्यवे वाग्विसर्गकालस्य पशावसंभवाद्वाङ्नियमविधानमपि निवर्तते। कुतः, नियमस्य समाप्त्यसंभवाद्यावत्कर्मसमाप्ति वाङ्नियमः प्राप्नुयात्तच्च नेष्टम्। तस्माद्यावद्धविष्कृदाह्वानात्पशौ पूर्वतनवाङ्नियमव्याप्तकर्मसंभवस्तावदेव नियमोऽथ त्याग इति न्याय्यं न तु प्रकृत्युक्तविसर्गकालाभावान्नियमाङ्गीकाराभाव इति युक्तमिति वक्तुं यजमान वाचमित्यादिना नियमस्तद्विसर्गश्च प्रदर्शितो यजमानस्य। तस्याध्वर्योरपि प्रणयन्वाचं यच्छति हविष्कृता विसृजत इति विसर्गासंभवेऽपि यजमानवदेव विसर्गकालसंभव इति साक्षादेव दर्शितमाध्वर्यवं यथा याजमानम्। कथं, पवित्रे कृत्वा संप्रेष्यति संमृशति प्रोक्षिते विसृजत इत्यध्वर्योरेव कर्म प्रदर्शितम्। यजमान वाचं यच्छेति संप्रेषकालाद्यजमानस्य प्रदर्शितमर्थात्। यदि प्रणयन्वाचं यच्छतीति चोदकप्राप्तं नाङ्गीकृतं स्यात्तदा कः प्रसङ्गो विसर्गकालविधानस्य। न च वाग्यतः पात्राणीत्यनुवादबलात्प्राप्तस्य विसर्गकालविधानमिति वाच्यम्। वाग्यत इति विधेरभावादतिदेशाभावाच्च कथं प्राप्तिः स्यात्। तस्मात्प्रणयन्वाचं यच्छतीति चोदकप्राप्तस्य वाङ्नियमस्य व्याप्यं पदार्थं पूर्वोक्तन्यायेन दर्शयन्विसर्गकालमेव दर्शितवानिति प्रणयनानुज्ञालिङ्गमेवेदं न प्रणयनपरिसंख्यार्थं पवित्रे कृत्वेत्यादि वचनमिति सिद्धम्। न च सति पशौ प्रणीताप्रणयने पशुपुरोडाशे प्रणीतापात्रासादनमयुक्तमिति वाच्यम्। पशौ प्रणयनस्यादृष्टार्थत्वमात्रप्रयुक्तस्य न प्रसङ्गेन पुरोडाशे दृष्टद्वाराऽप्युपकारकता भवेत्। तस्मात्पुरोडाशार्थमन्यदृष्टप्रयोजनमेव प्रणयनं कार्यम्। अदृष्टद्वारा प्रसङ्गेनोपकारे सत्यपि दृष्टप्रयोजनस्य प्रसङ्गेन सिद्ध्यभावात्। न च प्रसङ्गेनादृष्टद्वारोपकारिणीनामपामेकदेशेन दृष्टद्वारोपकारकत्वमपां प्रसङ्गेनैव स्यादिति वाच्यम्। प्रणयनमदृष्टद्वारा प्रसङ्गेनोपकरोति तत्साधनत्वेनैव विनियुक्तानामपां कर्मान्तराणां साधनत्वं न प्रसङ्गसिद्धमिति युक्तम्। यथा पश्वर्थसमवत्तवान्याः प्रयोगेऽपि तस्यास्तदर्थत्वेनाविनियुक्ताथा न पुरोडाशेडार्थत्वं प्रसङ्गेन सिध्यति। तत्तथोपकारान्तरेण प्रसङ्गादुपकारकं च रूपान्तरेण प्रसङ्गादेवोपकारकमिति प्रणयनान्तरमेव विहितम्। यदपि कात्यायनापस्तम्बादिभिर्निरूढपशौ प्रणीताविधानं तत्तेषां शास्त्रान्तरेणाग्नीषोमीये प्रणयनं प्रतिषेधति। तन्मतेन तद्विकृतौ निरूढेऽपि प्रतिषेधे प्राप्ते पुनःप्रणयनप्रतिप्रसवार्थं प्रणयनविधानमिति।

तत्प्रणयनप्रकारं व्याचष्टे—

अपरेणोत्तरेण वा गार्हपत्यमुपविश्य को वो गृह्णाति स वो गृह्णातु कस्मै वो गृह्णामि तस्मै वो गृह्णामि पोषाय व इति पवित्रान्तर्हिते पात्रेऽप आनयत्यनया वो गृह्णामीति पृथिवीं मनसा ध्यायन् ।

अपरेणोत्तरेणेति वायव्यां पात्रेऽप आनयतीति काम्यपात्रयोरपि मन्त्रेण ग्रहणं यथा स्यात् । तत्रापि प्रणयनस्य क्रत्वर्थत्वात् । कथमानयतीत्यनया वो गृह्णामीति पृथिवीं मनसा ध्यायन्नप आनयतीत्यन्वयः । अनयेति तृतीयान्तेन पृथिवीं स्मरन्गृह्णामीति पूर्वमन्त्रलिङ्गानुवादो न त्विदं मन्त्रान्तरं, पृथिवीध्यानं प्रति ध्यायन्निति शतृप्रत्ययेन ध्यानानयनयोरेककालत्वे मन्त्रद्वयोच्चारणानुपपत्तेः । तस्माद्गृह्णामि पोषाय व इति मन्त्रेऽनया पृथिव्या वो गृह्णामीति तदर्थं पृथिवीं मनसा ध्यायन्गृह्णाति । मनसा प्रणयतीतिश्रुतेर्न मन्त्रस्योच्चारणम् । आनयनेन पात्रपूरणम् ।

तद्विशिनष्टि—

उपबिलं पूरयित्वा ।

बिलं पात्रमध्यपुष्करं तत्र पूरणीयमद्भिर्यथा न प्रणयनसमये स्कन्देत् ।

उत्पूयाभिमन्त्रयते ।

अप इत्यनुषज्यते । पवित्रेणेति यौगिकसंज्ञया पूयतेऽनेनेति पवित्रं संस्कारक्रियानिमित्तः शब्दस्तेनोर्ध्वं शोधयित्वाऽभिमन्त्रयते । आभिमुख्येन मन्त्रेण प्रकाशनमर्थस्य । संस्कारौ चादृष्टार्थौ ।

तत्रेतिकर्तव्यतामाह—

यथा प्रोक्षणीः ।

त्रिरुत्पुनाति येन च मन्त्रेण येन चाभिमन्त्रयते तथा तेन तेन मन्त्रेणोत्पूयाभिमन्त्रयते ।

अभिमन्त्रणे वैकल्पिकं मन्त्रान्तरमाह—

याः पुरस्तात्प्रस्रवन्त्युपरिष्टात्सर्वतश्च याः । ताभी रश्मिपवित्राभिः श्रद्धां यज्ञमारभ इति वा ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छेति संप्रेष्यति ।

मन्त्रेणोभयोरुपदेशार्थं प्रेष्यतीति ब्रूयादित्यर्थलक्षणया सामर्थ्याद्ब्रह्मयजमानौ प्रति । तत्र ब्रह्माणं प्रत्यामन्त्रयते यजमानं प्रति प्रेष्यति । स्वयं कर्म कर्तुं यत्रानुज्ञा

१ क. ख. ग. च. ट. ठ. ड. पूर्णे पूर° ।

पृच्छयते तत्राऽऽमन्त्रणशब्दः । यत्र तेन किंचित्कारयति तत्र प्रैषशब्दः प्रयुज्यते । ब्रह्मयजमानयोः स्मृतिजननलक्षणः संस्कारो दृष्टार्थः प्रसङ्गवाग्यमजनकत्वात् ।

तदेवाऽऽह—

**सर्वेष्वामन्त्रणेषु प्रसव उक्ते करोति ।**

सर्वेष्विति वचनं प्रस्तुतमामन्त्रणं ब्रह्माणं प्रत्येवेति तन्मात्रं मा भूदितिप्रदर्शनार्थम् । यत्र यत्र योऽयमामन्त्रितस्तेन तेन प्रसवेऽनुज्ञानार्थे वचस्युक्त एव करोतीतिनियमार्थं व्याप्त्यर्थं च ब्रह्मणा यजमानेन वा प्रसव उक्ते यत्कर्मानुज्ञातं तत्तत्करोतीत्यर्थः ।

**प्रणयन्वाचं यच्छति ।**

प्रणीताप्रणयनकाले वाचं यच्छति प्रणयनमन्त्रोच्चारणे न वाङ्नियमभङ्गः । अन्यं वाग्व्यापारं न च कुर्यात् ।

**ताꣳ हविष्कृता विसृजते ।**

तां वाचमध्वर्युर्यजमानस्य तु याजमाने वक्ष्यते । वाङ्नियमो वदनाभावपरिपालनम् । विसर्गस्तु पालनप्रयत्नत्यागः । ततः परं नियमो नास्तीत्यर्थो न तु किंचिद्वक्तव्यमेवेति । हविष्कृता हविष्कृद्व्यापारेण त्रिष्फलीकरणारम्भेन(णे)ति तत्रैव वक्ष्यते, तेनोपलक्षिते काले ।

**को वः प्रणयति स वः प्रणयत्वपो देवीः प्रणयामि यज्ञꣳ सꣳसादयन्तु नः । इरंमदन्तीर्घृतपृष्ठा उदाकुः सहस्रपोषं यजमाने न्यश्वतीरिति स्फ्येनोपयम्य समं प्राणैर्धारयमाणो विषिञ्चन्हरति ।**

स्फ्येनोपयमनं संवरणं तूष्णीं प्रणीतापात्रस्य । मन्त्रस्य त्वपो हरतीत्यनया विधीयमानया प्रधानक्रिययैव नोपयमनेनान्वयस्त्वाप्रत्ययनिर्दिष्टेनाङ्गभूतेन । प्रणयनलिङ्गाच्च मन्त्रस्य । एवमन्यत्रापि ज्ञेयम् ।

हरणे वैकल्पिकं मन्त्रान्तरमाह—

**देवा गातुविदो गातुं यज्ञाय विन्दत । मनसस्पतिना देवेन वाताद्यज्ञः प्रयुज्यतामिति वा ।**

स्वशाखामन्त्रस्याऽऽच्छिद्रिकस्य स्पष्टलिङ्गत्वाभावेऽपि वाताद्वा अध्वर्युर्यज्ञं प्रयुङ्क्त इति ब्राह्मणेन विनियोगात् । प्रणीयमानासु भूश्च कश्चेति मन्त्रं यजमानो जपति ।

**ब्रह्मपूताः स्थ को वो युनक्ति स वो युनक्तु विश्वेभ्यः कामेभ्यो देवयज्याया इत्युत्तरेणाऽऽहवनीयं दर्भेषु सादयित्वा दर्भैरपिदधाति ।**

अत्र मन्त्रो दर्भेषु सादन एव नापिधाने, अस्यैव मन्त्रस्य साद्यमानासु जपे विनियोगात् । मन्त्रलिङ्गाच्च योगे स्थापन एव । उत्तरेणाऽऽहवनीयमदूर आहवनीयस्योत्तर-

देशे स्तीर्णेषु दर्भेषु दर्भैरपिधानमाच्छादनं पात्रबिलस्य । उत्तरतउपचारो विहा इति परिभाषितत्वादुत्तरेणैव प्रणयनम् । केचित्प्रायोगिकास्तु दक्षिणेन कुर्वन्ति तन्मू चिन्त्यम् ।

ता नेङ्गयन्त्या सꣳस्थानात् ।

न चालयति प्रणीता एव, आ संस्थानात्संस्थानसमीपे क्रियमाणात्प्रणीताविमोका त्पूर्वमित्यर्थः ।

संविशन्तां दैवीर्विशः पात्राणि देवयज्याया इति
सपवित्रेण पाणिना पात्राणि संमृशति ॥ १४ ॥

इति हिरण्यकेशिसूत्रे प्रथमप्रश्ने चतुर्थः पटलः ॥ ४ ॥

---

स्फ्यादीनि । अङ्गुष्ठेन पवित्रं प्रागग्रमुदगग्रं वा हस्ततले नियम्य तेन हस्तेन संमृ शति । यथा लोके बालादिलालनार्थं सम्यक्स्पृशति तथा पाणिना संस्पृशति पात्रा णीति द्रव्यैकत्वात्सकृन्मन्त्रः सर्वेषां स्पर्शनम् ।

संग्रहः—स्वशाखायां न पूर्वेद्युर्दर्शे वेदिकृतिस्तथा ।
पौर्णमास्यां न बर्हिष आहृतिः परशाखया ।
स्वशाखया तु पूर्वेद्युः सद्यस्काले व्यवस्थितिः ।
दर्भसंस्तृतिरगुणकर्मपात्रेषु होमिषु ।
वैकङ्कतत्वं पक्षे स्यात्प्रणीतानां द्विरूपता ।
काम्ये पात्रे न मन्त्रोऽस्ति नित्ये ह्यस्त्यङ्गता मनोः ।

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां प्रयोगवैजयन्त्यां
महादेवकृतायां प्रथमप्रश्ने चतुर्थः पटलः ॥ ४ ॥

---

अथ पञ्चमः पटलः ।

---

वृक्षाय वानस्पत्याऽसीत्यग्निहोत्र-
हवणीमादत्ते वेषाय त्वेति शूर्पम् ।

निर्वापार्थमादान एवाग्निहोत्रहवण्या मन्त्रो न पशौ प्रोक्षणार्थम् । आदत्त इत्युभ यत्र संबध्यते । ग्रहीतुं शक्यत्वाद्दक्षिणेनैव हस्तेन । द्वयोरत्यागो यावन्निर्वापसमाप्ति ।

---

१ क. ख. ग. च. °यरया स°।

प्रत्युष्टमित्याहवनीये गार्हपत्ये वा निष्टपति।

अरातय इति मन्त्रान्तः। गतार्थम्।

यजमान हविर्निर्वप्स्यामीत्यामन्त्रयते।

अनुज्ञार्थं यजमानं पृच्छति।

प्रवसति।

यजमाने।

अग्ने हविर्निर्वप्स्यामीत्यनुब्रूयात्।

अदृष्टार्थमेतत्। प्रतिवचनदातुरभावाद्ब्रूयादित्युक्तम्। आत्मसंस्कारत्वेन दृष्टार्थता कुं शक्या। याजमानमों निर्वपेति। नात्र वाङ्नियमलोपो विधिसामर्थ्यात्। प्रणय क्ते करोतीति पूर्वमेव परिभाषितं, हविर्व्रीहयो यवा वा, व्रीहिभिर्यजेत यवैर्यजेतेति तेः। वाशब्दाभावेऽपि न समुच्चयः परस्परनैरपेक्ष्येऽसाधनत्वावगमात्समुच्चयस्य। व्यान्तरत्वान्न व्रीहिभिर्नापि यवैरिष्टं भवतीति विधिद्वयबाधभियाऽष्टदोषदुष्टोऽपि कल्प एव युक्तः। विकृतावपि विजातीयेऽपि हविषि नोहः सर्वेषां हविष्ट्वात्।

उर्वन्तरिक्षमन्वेमीति गच्छति।

यत्र हविः शकटे तिष्ठति तदभिमुखो गच्छति।

अपरेणाऽऽहवनीयमपरेण वा गार्हपत्यं नद्धयुगꣳ सपरिणत्कꣳ शकटमवस्थितं व्रीहिमद्यवमद्वा प्रागीषमुदगीषं वा।

भवतीति शेषः। आहवनीये गार्हपत्ये वा हवींषि श्रप्यन्त इति वक्ष्यति तदनुसारेण व्यवस्थितो विकल्पो गार्हपत्ये वेति। कुतः, अपरेण वाऽऽहवनीयमित्यपरशब्दे विद्यमानेऽप्यपरेण वेति पुनर्ग्रहणात्। नद्धं युगं यस्येति तथा, ईषाभ्यां बन्धनप्रकारेण बद्धं युगं यस्य, सपरिणत्कं परिणद्धान्यावस्थित्यर्थं शकटोपरि समन्ततो बद्धं कटादि तेन युक्तं सपरिणत्कं शकटमनः, जातिवाची शब्दो न संस्कारवाची तेन सिद्धमेव लौकिकं ग्राह्यम्। अवस्थितमपरेणेत्यन्वयः। व्रीहिमद्यवमद्वेति विकल्पो व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेताऽऽग्रयणाद्यवैरिष्ट्वा यवैरेव यजेतेति शास्त्रव्यवस्थया। अनारब्धाग्रयणस्य त्विच्छाविकल्पः। व्रीहयो यस्मिन्सन्ति शकटे तत्तथा व्रीहिमदिति मादुपधायाश्चेति न मकारस्य वकारोऽयवादिभ्य इति यवादिगणपरिसंख्यानात्। प्राची ईषे यस्य तत्तथा। तथोदगीषमित्यपि। ईषे शकटयुगयोः संधानकाष्ठे विशेषकृते।

---

१ क. ख. ग. च. °मीतिब्रू°। २ क. ग. च. छ. ट. ठ. ड. °चनं दा°। ३ क. ग. घ. छ. ट. ठ. ड. °क्ष्येण सा°।

**धूरसीति तस्य दक्षिणां धुरमालभ्य ।**

अपूर्वत्वाद्विधिः । धूर्यत्र बध्यते बलीवर्दस्तद्युगस्थानम् । आलम्भः स्पर्शः । धूर्वाम इति मन्त्रान्तः ।

**त्वं देवानामिति सव्यामीषामालभ्य जपति ।**

नायमालम्भे मन्त्र आलम्भानन्तरं जपे । देवहूतममिति मन्त्रान्तः । जपत्वाच्चातुः-स्वर्यम् ।

**विष्णुस्त्वाऽक्रꣳस्तेति सव्ये चक्रे दक्षिणं पादमादधाति ।**

स्थापयति शकटमारोढुं दृष्टार्थत्वात्तेन स्पर्शनमात्रं पादेन कृत्वा पादं नापसारयेत् ।

**अह्रुतमित्यारोहति ।**

शकटमुत्तरपादेनाऽऽरोहति । मा ह्वारिति मन्त्रान्तः ।

**मित्रस्य त्वेति परिणहं प्रेक्षते ।**

मा त्वा हिꣳसिषमित्यन्तः ।

**उरु वातायेति परिणहो द्वारमपच्छादयति ।**

यत्र हविर्निहितं परिणहि पात्रे तद्द्वारमुद्धाटयति । तावानेव मन्त्रः ।

**मित्रस्य त्वेति पुरोडाश्यान्परिणहं च प्रेक्षते ।**

पुरोडाश्यान्पुरोडाशार्हान् । प्रत्येकं मन्त्रो द्रव्यपृथक्त्वात् । हविर्मात्रविवक्षयैकव-चनं मन्त्रगतम् । मन्त्रान्तः पूर्ववत् ।

**ऊर्जे धत्स्वेति पुरोडाश्यानभिमृशति ।**

पुरोडाशसाधनमात्रविवक्षया मन्त्र एकवचनमेवं सर्वत्र गतार्थम् ।

**पयो मयि धेहीत्यात्मानं प्रत्यभिमृशति ।**

आत्मानं हृदयदेशस्थं प्रत्यक्तयाऽनुसंधायाहमस्मीति हृदयदेशेऽभिमृशति । स्मार्त उदकस्पर्शः ।

**अपहतꣳ रक्ष इति ततस्तृणं लोष्टं वा निरस्याप उपस्पृश्य ।**

निरसने मन्त्रः । श्रौतमुपस्पर्शनम् । तयोरभावे तु कात्यायनः—अविद्यमानेऽभि-मृशेत् । अनेन मन्त्रेण । 'यद्यु नाभ्येव मृशेत्' इति श्रुतेः ।

**दशहोतारं व्याख्याय ।**

वाक्यशः पठित्वा चातुःस्वर्येण जपरूपत्वात् । चित्तमाज्यमित्यादि सामाध्वर्युरि-त्यन्तो दशहोता दशहोतृनामको मन्त्रो होतृविनियोगे प्रवृत्तिनिमित्तं ज्ञेयम् ।

---

१ क. ख. ग. च. 'दमवद'।

**शूर्पे पवित्रे निधाय ।**

तूष्णीमेव ।

**यच्छन्तां पञ्च गोपीथाय यो नारातय इति मुष्टिं पूरयित्वा ।**

पुरोडाश्यानेकेन मुष्टिना पूर्णं गृहीत्वा ।

**स्रुच्योप्य ।**

वामहस्तेन गृहीतायामथवा शूर्पे हवनीं निधायेति वैखानसोक्तेस्तस्यामग्निहोत्रहवण्यां मुष्टिमोप्य रेचयित्वा गृहीतं मुष्टिं तूष्णीमेव मन्त्रस्य संनिधिना लिङ्गेन च पूरणं प्रत्येव विधेः ।

**देवस्य त्वेति पवित्रान्तर्हिते चतुरो मुष्टीन्निर्वपति त्रिर्यजुषा तूष्णीं चतुर्थम् ।**

पवित्रान्तर्हिते शूर्पे यत्र पवित्रे तत्रैवाग्नये जुष्टं निर्वपामीत्यन्तेन निर्वपति मुष्टिमात्रमेव तस्यैव स्रुच्यावापान्न चतुर्णामावाप उक्तोऽस्ति । निर्वापस्तु स्रुचैवान्यथा तस्यावापोऽदृष्टार्थः स्यादग्निहोत्रहवण्या चतुरो मुष्टीन्निर्वपतीत्यापस्तम्बोक्तेश्च । चतुर्णामेकवारं निर्वापः संभवति स्रुचि ग्रहीतुमसामर्थ्यात् । यद्यपि चतुर इति द्रव्यगता संख्या तथाऽपि त्रिर्यजुषा तूष्णीं चतुर्थमिति क्रियाभ्यासस्यैव विधानात् । न च चतुर्मुष्टिपरिमितस्यैको निर्वापस्तादृशानां त्रिर्यजुषा तूष्णीं चतुर्थमित्यभ्यास इति वाच्यम् । चतुरश्चतुर इति वीप्साया अश्रवणात्सर्वस्यैव निर्वापस्य चतुर्मुष्टिमात्रपरिमितत्वं चतुर इत्येतेनावगम्यते । मुष्टीनिति मुष्टित्वेनोद्देश्यत्वात्प्रतिमुष्टि द्रव्यपृथक्त्वादभ्यावृत्त्या निर्वपतीति गम्यते । तथा च चतुर्मुष्ट्यात्मक एकः पदार्थस्तथाऽपि स्रुवेण गृहीतमाज्यं मन्त्रेण संस्कृतं पुनर्गृह्यमाणमसंस्कृतमेवेति । यथा द्रव्यैकत्वेऽप्यवयवस्य स्रुवमात्रत्वेन परिच्छिन्नत्वान्मन्त्रावृत्तिरेवमत्र पदार्थैकत्वेऽपि मुष्टिमानेनावान्तरद्रव्यभेदाद्द्रव्यपृथक्त्वेऽभ्यावर्तेत इति न्यायात्प्रत्येकं चतुर्षु मुष्टिषु निर्वापमन्त्रावृत्तिर्निर्वापाङ्गं च मुष्टिपूरणमावापश्च दृष्टार्थं तदपि संयुक्तान्येकापवर्गाणीत्येकस्य मुष्टेः पूरणमावापो निर्वापश्च तथैवान्येषामपि तथैव मन्त्रोऽपि प्रतिमुष्ट्यावर्तते । तथा चायमर्थो भवति देवस्य त्वेति स्रुचोप्तांश्चतुरो मुष्टीन्प्रत्येकं मन्त्रेण निर्वपति । आवापस्तु सामर्थ्यसिद्ध एकैकस्यैव मुष्टेर्मन्त्रावृत्त्या द्रव्यपृथक्त्वादेव पूरणमपि तथैव । एवं विशिष्टविधिनोत्सर्गतश्चतुर्ष्वपि यच्छन्तामित्यादिमन्त्रेषु प्राप्तेष्वपवादवाक्यं ब्राह्मणं दर्शयति त्रिरित्यादि । त्रिर्यजुषेति प्राप्तस्यानुवादस्तूष्णीमितिविधानार्थः । यच्छन्तामिति देवस्य त्वेति च यजुर्द्वयं यजुःशब्देनानूद्यतेऽनुवादगतमेकत्वं न विवक्ष्यते । अथवाऽस्मच्छाखायामश्रुतं प्रथमं यजुर्नानुवदेदस्मद्ब्राह्मणं तथाऽपि साङ्गस्यैव निर्वापत्वात्सर्वोऽपि चतुर्थमुष्टिनिर्वापस्तूष्णीमेव विधीयते । तथा च यच्छन्तामित्यस्यापि निवृत्तिश्चतुर्थे । अत्र मुष्टिं पूरयित्वेति मुष्टिना पूर्णं

गृहीत्वेत्यर्थः। तेनाध्वर्योरेव मुष्टिनेति संज्ञानुग्रहो भवेत्। यदि मुष्टिमितमिति तत्र याजमानमपि स्यात्तदाऽऽध्वर्यवसंज्ञा बाध्येत। निर्देशाद्बाध्यतामिति चेत्। न। ओप्येति समानकर्तृकत्वं चतुरो मुष्टीनित्यनेनासंबद्धं स्यात्। तस्मान्मुष्टिना गृहीतं धान्यमेव मुष्टिः पूर्णग्रहणेन मानमर्थसिद्धं न तु तत्र विधिस्तदेव लक्षणया मुष्टिशब्देन व्यवहृतमिति।

निरुप्यान्वावपति।

निरुप्येति किमर्थं पाठादेव सिद्धेः[1]। तर्हि त्रियजुषा तूष्णीं चतुर्थमित्यस्यानुवृत्त्यर्थं, तेन निरुप्यैवान्वावपति। अग्निहोत्रहवण्या निर्वपतीत्येतावता संबद्धाया निवृत्तत्वाद्‌धस्तेनान्वावापः। तथा चैकैकमुष्टिनिर्वापान्तेऽपि नान्वावापस्तस्यावयवानङ्गत्वादित्यपि सिध्यति त्रियजुषा तूष्णीं चतुर्थं[2] निरुप्यान्वावपतीति संबन्धादन्यथाऽनुलक्ष्यीकृत्येति किं मुष्टिमात्रनिर्वापं सर्वं वेति न ज्ञायत इति प्रयोजनम्। स्पष्टमुक्तमापस्तम्बेन—चतुरो मुष्टीन्निरुप्य निरुप्तेष्वन्वोप्येति। एवं चैकैकस्यै देवताया एकैकं मुष्टिं निरुप्य पुनर्द्वितीयं द्वितीयमित्यपि नेत्युक्तम्। पदार्थो हि चतुर्मुष्ट्यात्मको निर्वापोऽस्यावयवा एव मुष्टय आश्रिताश्च पदार्थानुसमयबाधेन कृत्स्नमेकैकमित्यनेन काण्डानुसमयो ह्यत्रेत्यर्थः।

तौ समानविधानाविति परिभाषितत्वादन्येषामप्ययमेव विध्यन्त इत्याह—

एतेनैव कल्पेन यथादेवतमुत्तरं पुरोडाशं निर्वपति।

नायमतिदेशोऽपि तु प्रकरणादेतेनैव कल्पेन विधिना यच्छन्तामित्यादिनेत्यर्थः। उत्तरं यद्यस्ति पुरोडाशग्रहणमुपांशुयाजदेवताया आज्यनिर्वापो मा भूदिति। अग्नये जुष्टं निर्वपाम्यग्नीषोमाभ्यामिति हि पठ्यते नोपांशुदेवतेति भावः। अग्नीषोमीयपक्षे पौर्णमास्यां देवस्य त्वेत्यादिकमनुद्रुत्याग्नीषोमाभ्यां जुष्टं निर्वपामीति निरुप्तेष्वेव निर्वापः। दर्शे त्वाग्नेयानन्तरमिन्द्राग्निभ्यां जुष्टं निर्वपामीति शाखान्तरीयो मन्त्रो ब्राह्मणेऽनुसंहितो द्रष्टव्यः। तूष्णीं चतुर्थम्। अपरिमितमेवावरुन्धे स एवमेवानुपूर्वꣳ हवीꣳषि निर्वपतीति बहुवचनात्पुरोडाशत्रयं गम्यते। न चायमूहेन सिध्यत्यर्थो न प्रकृतावूहो विद्यत इत्यूहप्रतिषेधात्। पर्वद्वयाभिप्रायेण ब्राह्मणम्। एवमन्येष्वपि मन्त्रेषु ज्ञेयम्।

विना शकटं शाखान्तरीयं कल्पान्तरमाह—

पात्र्यां वा निर्वपति दक्षिणतः
स्फ्यमुपकृष्य सर्वाञ्शकटमन्त्रानुक्त्वा *।

पात्र्यां मृन्मय्यां शकटस्थाने कृतायां न शूर्पस्थाने तस्यां सर्वाञ्शकटमन्त्राञ्जपतीत्यभिधानान्न हि शूर्पस्थाने कृतायां शकटमन्त्रप्राप्तिरस्ति। वाचनिकः प्रतिनिधिर्मन्त्रज-

* टीकापुस्तकेषु उक्त्वेतिस्थाने जपतीति वर्तते।

1 छ. ट. ड. सिद्धेः। 2 क. ख. ग. च. झ. ट. ठ. ड. चेति।

पश्च स्वेन यजुष्करणानङ्गीकारात्। तस्यां पात्र्यां निर्वपतीत्याधारता हविर्मात्राधारत्वान्न तु क्रियाश्रययोः कर्तृकर्मणोराधारो भवति पात्री। अथ वा सामीप्ये सप्तमी पात्रीसमीपे स्थित्वा निर्वपतीति शूर्प एव पूर्ववच्चातुःस्वर्येण जपः शाकटमन्त्राणामिव करणमन्त्रत्वासंभवात्। देवस्य त्वेत्यादयस्तु यथापूर्वमेव। पात्र्या अधस्ताद्दक्षिणभागे स्फ्यमाकृष्य स्थापयित्वा। वैखानसेनोक्तम् 'अपरेण गार्हपत्यं स्फ्यं निधाय तस्मिन्पात्रीम्' इति।

प्रकृतमनुसंधत्ते—

इदं देवानामिति निरुप्तानभिमृशतीदमु नः सहेति यतोऽधि निर्वपति।

येभ्यः सकाशान्निर्वापः कृतस्तान्परिणहि पात्र्यां वाऽवशिष्टान्। यतोऽपीत्यपिशब्दात्पूर्वेषामत्यागस्तेन द्वितीयमन्त्रेण निरुप्तानवशिष्टांश्च सहैव।

तदेव द्रढयन्नाह—

स्फात्यै त्वेति निरुप्तानेव।

नारात्या इति मन्त्रान्तः। एवकारस्तु शिष्टनिषेधार्थः।

इदमहं निर्वरुणस्य पाशादिति पुरोडाश्यानादाय परिणह उपनिःसर्पति।

शूर्पेण सहेति ज्ञेयम्। तूष्णीमादाय मन्त्रेण परिणहः सकाशादुप समीप एव निर्गत्य तिष्ठति पात्र्याः सकाशाद्वा। अत्र प्रक्रमे नास्मच्छाखायां मन्त्रोऽस्तीति शाखान्तरीयत्वात्सर्वोऽपि पठितः।

सुवरभिविख्येषमिति ॥ १९ ॥ सर्वं यज्ञमनुवीक्षते।

यज्ञविहृतानग्नीन्हविः पुरुषान्पात्राणि चान्यानि यज्ञसाधनानि अनु प्रत्येकं लक्षयित्वा विविच्येत्यर्थः। सकृदेव मन्त्रो यज्ञमित्येकत्वेन न द्रव्यपृथक्त्वम्।

वैश्वानरं ज्योतिरित्याहवनीयं परेक्षते।

तत्रैव तिष्ठन्निति परेत्यस्यार्थः। दक्षिणार्धं परेक्षेतेति दर्शनात्।

दृꣳहन्तां दुर्या इति प्रत्यवरोहति।

शकटादित्यर्थः। पात्र्यां जपः। द्यावापृथिव्योरित्यन्तः।

स्वाहा द्यावापृथिवीभ्यामिति स्कन्नानुपश्रयत उर्वन्तरिक्षमन्विहीति गच्छति।

अन्विहीति मन्त्रान्तः। यत्र श्रपयति हविस्तस्याग्नेः समीपं गच्छति।

---

१ क. ख. ग. च. यतोऽपि। २ क. ख. ग.. स्कन्नमभिम°। ३ क. ख. ङ. च. °क्षमिति।

अदित्यास्त्वोपस्थे सादयामीत्यपरेणाऽऽह-
वनीयमपरेण वा गार्हपत्यमुपसादयति ।

हविःशूर्पमन्यतरस्याग्नेः समीपे स्थापयति ।

व्यवस्थामाह—

यतरस्मिन्नग्नौ श्रपयति ।

तस्य समीप एव सादयतीत्यर्थः । अनेन पूर्वमुक्तो गार्हपत्याहवनीययोर्विकल्प ऐच्छिक इत्युक्तम् । यत्र श्रपणं तत्समीप उपसादनमित्यत्रैव व्यवस्थितविकल्पविधानात् ।

अग्ने हव्य५ रक्षस्वेति यथादेवतं परिददाति ।

तस्यास्तस्या देवताया वशे परिरक्षणार्थं तेन तेन मन्त्रेण ददाति । अग्ने हव्य५ रक्षस्वेत्याग्नेयमग्नीषोमौ हव्य५ रक्षेथां, दर्शे तु इन्द्राग्नी हव्य५ रक्षेथामिति शाखान्तरीयौ मन्त्रौ लक्षणेन प्रदर्शितौ ।

सशूकायाः५ स्रुचि प्रोक्षणीः स५स्कृत्य यथा पुरस्तात् ।

सशूकत्वं न विधीयते किं तु शूकप्रक्षालनं निवार्यते । शूका व्रीह्यादिद्रव्यस्याग्निहोत्रहवण्यां लग्नाः सूक्ष्मशिखावयवाः । एतेन व्रीहयोऽपि ज्ञेया ये सशूकास्त एव व्रीहयोऽन्याः शालयो व्रीहिसदृशाः । अत एव सशूकत्वसाम्येन व्रीह्यभावे नीवारा एव प्रतिनिधीयन्ते न शालयोऽशूकत्वात् । यवास्तु सशूका एव सशूकानामेव व्रीहित्वं न्यायविद्भिरप्युक्तमेव । प्रोक्ष्यते याभिस्ताः प्रोक्षण्यः सत्यस्ताः संस्कृत्येतिनिर्देशात्संस्कारात्पूर्वमपि प्रोक्षणीत्वमस्तीति न संस्कारवचनः । तेन प्रोक्षणीरासादयेत्यादौ तथाऽऽज्यं प्रोक्षणमित्यादावपि विना संस्कारं प्रोक्षणीत्वं सिद्धम् ।

ब्रह्मन्प्रोक्षिष्यामीत्यामन्त्रयते ।

गतार्थम् ।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां
पूष्णो हस्ताभ्यामग्नये वो जुष्टं प्रोक्षाम्यमुष्मा
अमुष्मा इति यथादेवतं त्रिः प्रोक्षति ।

तन्त्रेणैव विभागाभावात् । अग्नीषोमाभ्यामिति यथापाठं मन्त्रान्तः । न चानुषङ्गोऽग्नीषोमाभ्यां वो जुष्टं प्रोक्षामीति, वाक्यान्तरे ह्यनुषङ्गस्तन्त्रेण प्रोक्षणे न वाक्यान्तरप्रयोगः । कल्पान्तरे स्पष्टमुक्तमेतत् । यथाऽग्नये वो जुष्टं प्रोक्षाम्यग्नीषोमाभ्याममुष्मा अमुष्मा इति च तथा दर्शेऽग्नये वो जुष्टं प्रोक्षामीन्द्राग्निभ्यामिति मन्त्रान्तरं पूर्ववज्ज्ञेयम् ।

**नाग्निमभिप्रोक्षेत् ।**

अग्निमभि प्रोक्षणं न कार्यं हविः प्रोक्षन्नग्नौ यथा बिन्दवो न पतन्ति तथा कार्यम॰न्यथोपघातात्प्रायश्चित्तं स्यादित्यर्थः ।

**पात्राणि प्रोक्षति यथा पुरस्तात् ।**

उत्तानानि कृत्वा शुन्धध्वमित्यनेन त्रिः प्रोक्षतीति पूर्वं यथोक्तं तथेत्यर्थः ।

**वातस्य ध्राजिरसीति कृष्णाजिनमादत्ते देवस्य त्वेति वा ।**

द्वितीयस्याऽऽदद इत्यन्तः । आसादितं कृष्णाजिनम् ।

**अवधूत१ँ रक्ष इत्यूर्ध्वग्रीवं बहिर्विशसनमुत्करे त्रिरवधूनोति ।**

अरातय इत्यन्तः । ग्रीवाभागमूर्ध्वं[1] कृत्वा विशसनं मांसलग्नो देशो विशसनं विशा॰स्यते मांसात्पृथक्क्रियते छिद्यते यत्तत् । कृत्यल्युटो बहुलमिति प्रत्ययः । स भाग आत्मानं प्रति न कार्य इत्यर्थः । अवकृष्यावकृष्य धूनोति कम्पयति निर्झाटयतीत्यर्थः । उत्करो यत्र करिष्यते तत्र व्याख्यास्यतोऽ(तेऽ)पि क्वचित्स्मारयिष्यते च ।

**अदित्यास्त्वगसीत्यपरेणोत्करं प्रती॰चीनग्रीवमुत्तरलोमाऽऽस्तृणाति ।**

उत्करस्य पश्चाद्भागे यथा तथा प्रतीचीनग्रीवमुपरिलोमाजिनमास्तृणाति प्रसार॰यतीत्यर्थः ।

**प्रति त्वा पृथिवी वेत्त्विति पुरस्तात्प्रतीचीं भसदमुपसमस्यति ।**

भसदं गुह्यप्रदेशे[2] त्वचः पुरस्तादिति ब्राह्मणानुकरणमात्रं भसदमित्यनेन गतार्थत्वात् । तां भसदं प्रतीचीमधस्तादुपसमस्येत्संधानं मांसभागेन सह मांसभागस्य कुर्यात् । न च पुरस्तादुपरिष्टात्प्रतीचीं भसदमिति संबन्धुं योग्यम् । उपसमस्यतीत्यनुपपन्नं स्यात्सं॰धानं मांसदेश एवान्यथा द्विगुणी कुर्यादित्येव ब्रूयात् । ब्राह्मणे प्रति त्वा पृथिवी वेत्त्वित्याह प्रतिष्ठित्या इति प्रतिष्ठितत्वमनेन कर्तव्यमुपरि समसने कथं सा तिष्ठेदप्रतिष्ठा स्यादतः पूर्वव्याख्यैव ।

**अधिषवणमसीत्यनुत्सृजन्कृष्णाजिनमुलूखलमधिवर्तयति ।**

कृष्णाजिनमन्वारब्धमेव कृष्णाजिनमधि उपरि उलूखलं वर्तमानं यथा भवति तथा करोति वर्तयति । त्वग्वेत्त्विति मन्त्रान्तः ।

**अग्नेस्तनूरसीत्यनुत्सृजन्नुलूखले हवि॰रावपति त्रिर्यजुषा तूष्णीं चतुर्थम् ।**

गृह्णामीत्यन्तः । उलूखलमननुत्सृजन्नित्यर्थात् । हविरावपति बिले निक्षिपति ।

१ छ. ट. ॰मूर्ध्वं कृ॰ । २ छ. ट. ॰देशा त्व॰ ।

शूर्पाद्धस्तेन त्रिरित्यादि स्पष्टम् । अग्नेरिति न देवतावाची किं तु प्रकृताग्निवाची वाऽऽहवनीयवाची वा ब्राह्मणे 'अग्नेर्वा एषा तनूर्यदोषधयः' इत्यग्निपोषकत्वेन संस्तवाद्देववीतये त्वा गृह्णामीति शेषस्यैव देवताभिरेवैनत्समर्धयतीति देवतार्थत्वप्रतिपादकत्वात् । तेन नाग्नीषोमयोस्तनूरिति मन्त्रान्तरं कल्प्यम् । अत एव यथादेवतमिति नोक्तम् ।

अद्रिरसि वानस्पत्य इति ॥ १६ ॥ मुसलमादत्ते ।

सुशमि शमिष्वेति मन्त्रान्तः ।

शाखान्तरीयं मन्त्रान्तरमाह—

ऊर्ध्वसूरसि[१] वानस्पत इति वाऽवरक्षो दिवः सपत्नं वध्यासमिति त्रिरवहन्त्यप-हता[२] यातुधाना अपहतोऽघश॰स इति वा ।

सकृन्मन्त्रोऽवघातस्त्रिः । ननु यथार्थमवघातो विधीयते तत्रित्वमयुक्तमतो मन्त्रस्य त्रिरुच्चारणविधिरिति चेत् । सत्यम् । तथाऽपि हविष्कृदेहीति प्रैषकालप्रदर्शनार्थं त्रिरवहत्य पश्चादवघ्नन्हविष्कृतमाह्वयतीति संबन्धार्थं, तेन सकृदवहत्यानन्तरं हविष्कृदाह्वानं मा भूदिति ।

हविष्कृदेहीति त्रिरवघ्नन्हविष्कृतमाह्वयति ।

त्रिभ्योऽवघातेभ्य उपरिष्टादवघ्नंस्त्रिराह्वयतीति त्रिष्फलीकर्तारं हविष्कृतं त्रिराह्वयतीति संबन्धः । हविष्कृतमित्येकवचनं हविःसंस्कारित्वोपाध्यभिप्रायं, ते तु नाना । तथा च ब्राह्मणम् 'य एव देवाना॰ हविष्कृतः । तान्ह्वयति' इति । बौधायनस्त्वेतव्द्याचष्टे हविष्कृदेहीति पर्जन्य एवैष उक्तो भवत्यथाप्युदाहरन्ति हविःसंस्कारिणमेवैतदाहेति । देवहविष्कारित्वेन पर्जन्यप्राप्तावपि तदाह्वानमदृष्टार्थं स्यात्सति दृष्टस्य संभवे तदन्याय्यमिति । अथाप्युदाहरन्ति याज्ञिका एवं वदन्ति यः प्रकृते हविःसंस्कारी तं प्रत्येवै( वे ) हीति प्रैषवचनम् । कुतः, एतद्वचनं पर्जन्योपमया संस्कर्तारमेवाऽऽहेत्यर्थमुक्तवान् । तथा च प्रकृते त्रिष्फली कर्तवा इति प्रैषोत्तरकालमवहनने पत्नी फलीकरणे चान्यो वा दासी पुनराग्नीध्रश्चावहनने कर्तारस्तानेकवचनेनाऽऽह्वयति । अवघ्नन्नवघातं कुर्वन् ।

अनवघ्नन्वा ।

अवघातात्पूर्वमेवाऽऽहूय पश्चादवरक्षइत्यन्यतरेणावघातस्त्रिरिति नास्ति कर्मान्तराभावात्तण्डुलप्रादुर्भावपर्यन्तम् । तदुक्तं भरद्वाजेन ' मुसलमादाय हविष्कृतमाह्वयति हविष्कृ-

---

१ घ. ढ. °र्ध्वसुर° । २ क. ख. ग. च. °हत्याप° ।

देहीति ततो वदन्त्यवहन्त्यवरक्षो दिव इति ' [ इति ] । तदवघातात्पूर्वमेवाऽऽह्वानमुक्तं ततोऽस्मिन्पक्षे त्रिरिति नास्ति किं तु अवरक्षो दिव इत्यवहन्त्येतावदेवार्थात्सिध्यति । अथ वा विरम्येति व्याख्याऽपि । अनवघ्नन्वा हविष्कृतमाह्वयतीत्युपक्रान्तत्वादवहननस्य मध्ये विरामविधानमिति । त्रिरवहत्यानवघ्नन्नवघातमकुर्वंस्त्रिराह्वयतीत्यन्वयः ।

आद्रवेति राजन्यस्याऽऽगहीति वैश्यस्य ।

वर्णविशिष्टयोर्यजमानयोः शाखान्तरीयौ विकल्पितौ, वर्णत्रयस्य रथकारनिषादयोश्च पूर्वोक्तः स्वशाखीयो नियतः । ब्राह्मणस्येति विशेषस्य सूत्रब्राह्मणयोरनभिधानात् । आपस्तम्बोऽप्याह—प्रथमं वा सर्वेषामिति । निषादरथकारयोरप्याधानादग्निहोत्रदर्शपूर्णमासौ च नियम्येते इति वक्ष्यमाणत्वात् ।

प्रादुर्भूतेषु तण्डुलेषूच्चैः समाजहीति संप्रेष्यति ।

उच्चैः समाहन्तवा इति ब्राह्मणोक्तो विकल्पेन तस्याधीतस्याऽऽनर्थक्यं मा भूदिति सर्वत्र ब्राह्मणोक्तानामविनियोगे द्रष्टव्यम् ।

अद्रिरसि श्लोककृदित्याग्नीध्रोऽश्मानमादत्ते ।

कुटरुशब्देनाऽऽसादितेऽप्यश्मानमिति वचनमद्रिरसीति लिङ्गेनावयवरूपाश्माभिधानेन शम्यायां शाखान्तरप्राप्तायां मन्त्रो मा भूदितिज्ञानार्थम् ।

कुटरुरसि मधुजिह्व इति वा कुक्कुटोऽसि मधुजिह्व इति वा ।

पूर्वेण विकल्पोऽश्मन्येवात्रापि स्पष्टलिङ्गात् ।

इषमावदोर्जमावदेति तेन दृषदुपले समाहन्ति ।

जेष्मेत्यन्त एक एव मन्त्र उत्तरादिना । तथैव बोधायनेनापि पठित एक एव । नानामन्त्रता यत्राभिप्रेता तत्र करोत्येव प्रयत्नान्तरमित्युक्तमेवेति । दृषदुपले इति दृषदौ समाहन्तीति च द्वितीया निर्देशाद्दृषदुपलयोः संस्कारः । तदुक्तं भरद्वाजेन–' द्रव्याभावे कर्मनिवृत्तिर्यथा चरौ समाहननमाप्यलेपनिनयनं च ' इति । अर्थवचनं तेनेति चेत् । उच्यते–कुटरुग्रहणमदृष्टार्थं मा भूदिति दृषदुपलयोः परस्परं च समाहननं मा भूदिति च । ब्राह्मणे हि पात्राणामेव परस्परं शब्दोत्पत्त्या भ्रातृव्यपराभव उक्तः । तथा च पात्राणां मध्ये दृषदुपले अपि तयोर्दृषदौ च समाहन्तीति साधनान्तरं न श्रूयते तदर्थं तेनेति शाखान्तरवशादित्यर्थः । तेन द्विर्दृषदि सकृदुपलायामित्येव सिद्धौ पृथग्दृषदुपले इति द्वितीयानिर्देशेन संस्कार्यत्वं तयोरेवेत्युक्तम् । ब्राह्मणमपि तयोरेव शब्दस्तावकमिति व्याख्यातं द्वितीयाश्रुतिबलात् ।

द्विर्दृषदि सकृदुपलायाम् ।

समाहन्तीत्यनुवर्तते । द्विर्दृषदं सकृदुपलामिति वक्तव्ये सप्तम्या निर्देश उत्तरार्थः ।

भिः संचारयन्नवकृत्वः संपादयति।

दृषदुपलयोरत्र सप्तम्या निर्देशेनात्र कर्मान्तरमध्याहर्तव्यमित्युक्तं भवति । तद्यत्र समाहन्तीत्यन्तो वाक्यार्थ एव कर्म। तथा च द्विर्दृषदि सकृदुपलायां समाहन्तीत्येत-भिरभ्यस्यन्नववारं संपादयति । समाहन्तीत्येतावदेवाभ्यासेन संचारयन्नवकृत्वः संपाद-यतीति। संचारयन्निति प्रागपवर्गमुदगपवर्गं वा संचारः क्रियायाः प्रदेशोत्तरे प्रदेशा-न्तरे करणेन भवति। तत्र दृषदि प्रथमं मन्त्रेण द्वितीयं तूष्णीमेकद्रव्यत्वादुपलायां सकृन्मन्त्रेणैव द्रव्यपृथक्त्वात्। एवं त्रिरिति षट्कृत्वो मन्त्रो नवकृत्वः समाहननम् ।

शम्यया वा तूष्णीꣳ शम्यामादत्ते ।

शम्यया समाहन्ति वेपमावदेतिमन्त्रेणैव। अत्र मन्त्रलिङ्गविरोधादप्राप्ते मन्त्रे तूष्णीं ग्रहणं कल्पान्तरे देवस्य त्वेत्यनेनाऽऽदानमुक्तं तन्मा भूदिति । तदाहाऽऽपस्तम्बः— 'सावित्रेण वा शम्यामादाय' इति।

वर्षवृद्धमसीति पुरस्तादुत्तरतो वा शूर्पमुपोहति ।

उलूखलमुप समीपमूहत्यानयति पुरोभाग उत्तरभागे वोलूखलमुखस्यैव संमुखम्।

वर्षवृद्धाः स्थेति पुरोडाश्यानभिमृशति ।

गतार्थम्।

प्रति त्वा वर्षवृद्धं वेत्वित्युद्वपति ।

उर्ध्वमानीय शूर्पे वपति पुरोडाश्याञ्छूर्पे प्रक्षिपति हस्तेन ।

परापूतꣳ रक्ष इत्युत्करे त्रिर्निष्पुनाति ।

उत्करप्रदेशस्योपरि शूर्पं धृत्वेत्यर्थः। शूर्पेण त्रिर्निर्झाटनेन पुनाति शोधयति तुषां-स्तण्डुलेभ्यो निर्गमयति शूर्प एव। सकृन्मन्त्रः। अरातय इत्यन्तः।

पराध्माता अमित्रा इति शूर्पात्तुषान्प्रध्वꣳसयति ।

शूर्पेण तेनोत्करे पातयति तुषान्निःसारणानामभ्यासो यावत्तुषनिर्गमनम्।

पुरोडाशकपालं तुषैः पूरयित्वा रक्षसां भागोऽसीत्यु-त्तरापरमवान्तरदेशमधस्तात्कृष्णाजिनस्योपवपति ।

उत्तरापरमवान्तरदेशं कृष्णाजिनस्यैवाधस्ताद्भागमुपलक्ष्य तुषान्निक्षिपति कपालेनैव यावन्तो गृह्यन्ते तावत एवोत्कराद्धस्तेन गृहीत्वा कपालं तैः पूरयित्वा पूरितांस्तुषानि-त्यर्थात्। हस्तेनेति बह्वृचब्राह्मणं चवर्थम्। अत्र मीमांसकैरुदाहृतं वाक्यं पुरोडाशक-पालेन तुषानुपवपतीति। अत्राविशेषेण सर्वतुषप्रतिपत्तिरुक्ता। तदनुसारेण चेत्पूरयित्वा पूरयित्वेत्यभ्यासो यावत्तुषसमाप्ति सकृन्मन्त्र इति ज्ञेयम्।

नान्वीक्षते ।

उपवापसमये परं च यावत्कृष्णाजिनं निर्गमयति ।

अवबाद्धं रक्ष इत्यवबाधते ।

हस्तेनावष्टभ्योत्तुषदेशं बाधते भावनैव रक्षसां बाधां भावयेदित्यर्थः ।

अप उपस्पृश्य ।

शौतमुदकस्पर्शनम् ।

अभ्युक्ष्य कपालं निदधाति ।

अद्भिरभ्युक्ष्य यथास्थानं स्थापयति ।

वायुर्व इति विविनक्ति ।

विविनक्तु मन्त्रान्तः । विवेचयति अनवहतान्व्रीहींस्तण्डुलांश्च ।

देवो व इति पात्र्यां तण्डुलान्प्रस्कन्दयति ॥ १७ ॥

प्रक्षिपतीति पात्र्यां संवपनार्थायाम् । प्रतिगृह्णात्वित्यन्तः । अत्र सामर्थ्यादनवहतान्व्रीहीनप्यवहत्य तूष्णीं रूपा(तुषा)न्निर्गमय[ति] । तण्डुलान्पात्र्यां स्कन्दयित्वा ततः प्रैषः ।

त्रिष्फली कर्तवा इति संप्रेष्यत्यत्र वाचं विसृजते ।

नात्र त्रिरवघाताभ्यासो विधीयते किं तु यथार्थोऽवघातसमुदाय एकं फलीकरणमेवं त्रिस्त्रीणि फलीकरणानि । तेषां त्रयाणां प्रत्येकं पृथक्पृथक्कर्तारि(रो) हविष्कृदेहीत्यनेन संस्कर्तृत्वमात्रविवक्षयैकत्वेनैवाऽऽहूता अपि । कर्तवा इत्यव्ययं कुरुतेत्यस्मिन्नर्थे व्याख्येयम् । तनो दृष्टार्थमाह्वानं स्यात् । फलं विशरणं विसर्गत(स्त)ण्डुलानां कोशलक्षणत्वगपसारणं त(य)त्फलं तत्कर्तवा इति प्रैषार्थः । अभूततद्भावे च्विर्दीर्घः । त्रिष्फलीकरणं त्रिवारं तण्डुलानामेव कणिकाकोशेभ्यः पृथक्करणेन शुद्धताकरणम् । अत्रैव वाचं विसृजते यदुक्तं हविष्कृता वाचं विसृजत इति तस्यार्थोऽत्र वाचं विसृजत इति न तु हविष्कृदाह्वानात्पूर्वम् । कात्यायनेनोक्तमनन्तरं वाऽनन्तरमेव वैखानसादिभिरप्युक्तं तथा मा भूदिति वक्तुमत्रेत्युक्तम् । अयमाशयः—हविष्कृतेति हविष्कृदेहीति तस्य न शब्दपदार्थको निर्देशोऽपि त्वर्थपदार्थकस्तत्र शब्दो लक्षणीयस्तेन च स्वोच्चारणमुच्चारणेन च कालस्तत्र वाग्विसर्गविधानमतो वरं हविष्कृताऽर्थेन हविःसंस्कारं कुर्वता कर्तुं प्रवृत्तेन त्रिष्फलीकरणेन हविर्भवति तत्कर्तैव हविष्कृदित्युच्यते । तत्र क्रियाऽप्युपाधित्वेन वाच्या तया च काललक्षणेति न लक्षणापरम्परेति । ततस्तस्मिन्सति वाग्विसर्गो युक्त इति ।

---

१ क. ग. च. छ. ट ठ. ड. कर्तव्यानिह । २ क. ग. च. ढ. ड. फलीकरणं ।

यजमानस्य पत्न्यवहन्ति यो वा कश्चन तद्दास्यपत्नी स्यात्साऽपि कतिपयकृत्वोऽवहत्यान्यस्मै प्रयच्छेत्सोऽत ऊर्ध्वमवहन्ति ।

अत्र द्वौ प्रेष्यौ दर्शयत्युत्तरसूत्र एकं, पूर्वयोस्तावत्फलीकरणप्रकारं व्यक्तिनियममनेनाऽऽह । तत्र पत्नी यो वा कश्चन तद्दासीति त्रयं विकल्पेनैकः कर्ता । अन्यस्मा इत्यनेनोक्त आग्नीध्रो द्वितीयः । यजमानपत्न्या एव प्रकृतत्वाद्यजमानग्रहणं यजमानस्य पत्न्यवहननाय वक्ष्यमाणा दास्यपि प्रकृतस्य यजमानस्यैवेति प्रदर्शनार्थम् । विकल्पार्थोऽपिशब्दः । दासी प्रसिद्धा । कीदृशी, या पत्नी न भवति या तु वर्णत्रयोत्पन्ना स्मार्ताग्निसाक्षिकं पत्नीत्वेनाङ्गीकृता पश्चाद्दास्यं प्राप्ता तादृशी न भवति पत्नीत्वयोग्या वा न भवति शूद्रजात्युत्पन्नेति यावत् । पत्युर्नो यज्ञसंयोग इति पाणिनिस्मरणान्न शूद्रजाया यज्ञसंयोगोऽस्ति । तस्मात्पत्नीत्वानर्हा शूद्रप्रजैवं । तेषां प्रथमावहनने विकल्पेन प्राप्तानां कतिपयकृत्वोऽवहननं नियम्यते नातितरामिति द्वितीयावहननेन पूर्णीभावो मा भूदिति तेषां मध्येऽन्यतरेण समुचितेनाग्नीधाऽवहननं द्वितीयं तत्तु यावत्सुफलीकृता भवन्ति तावत्कार्यमिति वक्तुं सोऽत ऊर्ध्वमवहन्तीत्युक्तम् । आध्वर्यवसंज्ञाया अत्यन्ताबाधार्थमन्यशब्देनाग्नीधो ग्रहणं तस्याप्यध्वर्युशब्देन सोमे व्यवहारस्य वक्ष्यमाणत्वात्[२] । एवं फलीकरणद्वये जाते तृतीयं फलीकरणमाह त्रिष्फली कर्तवा इति । संप्रेष्याऽत्र हविष्कृदेहीत्यनेन पत्नी । सैव प्रेष्या तस्या एव पत्नी त्रिष्फली करोतीति विधास्यमानत्वात् । कर्तवै कुरु फलीकरणं तण्डुलेभ्यः कणानां वियोगकरणम् ।

देवेभ्यः शुन्धध्वं देवेभ्यः शुम्भध्वं देवेभ्यः शुध्यध्वमिति पत्नी त्रिष्फली करोति सुफलीकृतान् ।

एवमवहननलक्षणफलीकरणद्वयेन सुफलीकृतांस्तण्डुलान् । पत्नीफलीकरणमिदं, तत्र प्रैषार्थे सिद्धे पुनस्त्रिरिति धर्ममात्रार्थं वचनं, मन्त्रस्य सकलस्यापि त्रिः कृत्वा फलीकरणं साध्यं, तन्मन्त्रेण सकृत्, द्विस्तूष्णीं, तदवघातत्रयं चैकमेव फलीकरणं, पूर्वाभ्यां सह त्रीणि फलीकरणानीति निर्णयः । पत्न्यामनालम्भुकायां तु स्वयमध्वर्युस्तृतीयमवहननं समन्त्रं करोति ।

निदधाति फलीकरणान् ।

विविक्तीकृतान्फलीकरणान् । कृत्यल्युटो बहुलमिति कर्मणि ल्युट्प्रत्ययः । 'अतिरिक्ताः फलीकरणाः' इति ब्राह्मणम् । अतिरिक्तास्तण्डुलेभ्यः पृथक्कृतास्तान्निदधाति पात्रान्तरे स्थापयति प्रज्ञातानित्यर्थः ।

---

१ क. ख. ग. छ. ट. ट. ड. °व । न ते° । २ क. ख. च. छ. ठ. ड. °प्रेष्यस°। ग. °प्रेष्येऽत्र ।

**प्रक्षाल्य तण्डुलान् ।**

शूर्पस्थांस्तण्डुलानुदकेन गतमलान्कृत्वेत्यर्थः ।

**त्रिष्फलीक्रियमाणानां यो न्यङ्गो अव-**
**शिष्यते । रक्षसां भागधेयमापस्तत्प्रवहता-**
**दितः स्वाहेत्यन्तर्वेदि प्रक्षालनं निनयति ।**

प्रक्षाल्यन्तेऽनेनोदकेन तन्निनयति प्रक्षिपति वेदिप्रदेशे शूर्पे प्रक्षालितानामुदकं पात्रान्तरे गृहीत्वा तन्निनयति । रक्षोभ्य इदम् । उभयोरुदकस्पर्शनं स्मृतिसिद्धमत्र न श्रौतं, तस्य तुषेष्वेव विधानादप उपस्पृशति मेध्यत्वायेति ब्राह्मणेन ।

**व्याख्यातः कृष्णाजिनकल्पः ।**

अवहननार्थमुक्तः कृष्णाजिनस्याऽऽदानादिविधिस्तेनाऽऽस्तरणान्तं पुनरपि कुर्यादि-त्यर्थः । कालदेशपृथक्त्वाभावेऽपि प्रयोजनपृथक्त्वादावृत्तिरिति भावः ।

**दिवः स्कम्भनिरसीति कृष्णाजिन**
**उदीचीनकुम्बाꣳ शम्यां निदधाति ।**

कृष्णाजिनमनुत्सृजन्नेवादित्यास्त्वग्वेत्त्वित्यन्तः । तत्र कृष्णाजिनस्य मध्य उदीचीनं कुम्बमूर्ध्वभागो यस्याः सा, युगबिले शम्या यदा प्रवेश्यते तत्र यदूर्ध्वं स्थूलमग्रं स्थाप्यते यथा बिलादधो न पतति स स्थूलभागं (गः) कुम्बमुदगग्रां शम्यां निधायेत्यर्थः ।

**धिषणाऽसि पर्वत्येति तस्यां दृषदमधिवर्तयति ।**

तस्यां शम्यायां प्रतिष्ठापयति । प्रति त्वा दिवः स्कम्भनिर्वेत्त्विति मन्त्रान्तः ।

**पश्चार्धेनाभिनिदधाति ।**

दृषदः पश्चिमेनार्धभागेन शम्यां छादयति ।

**धिषणाऽसि पार्वतेयीति दृषद्युपलाम् ।**

अधिवर्तयतीत्यनुवर्तते । पर्वतिर्वेत्त्वित्यन्तः ।

**अꣳशवः स्थ मधुमन्त इति तण्डुलानवेक्षते ।**

अवनत ईक्षते शूर्पस्थितान् ।

**देवस्य त्वेति दृषदि तण्डुलानधिवपति ।**

अधिवपामीति मन्त्रान्तः ।

**त्रिर्यजुषा तूष्णीं चतुर्थम् ।**

गतार्थम् ।

**प्राणाय त्वाऽपानाय त्वा व्यानाय त्वेति पिनष्टि ।**

सर्वमन्त्रपाठो विकल्पनिराकरणार्थः । सकृन्मन्त्रस्ततो यथार्थं पिनष्टि ।

अपि वा प्राणाय त्वेति प्राचीं प्रोह्यापानाय त्वेति
प्रतीचीं व्यानाय त्वेति मध्यदेशे व्यवधारयति ।

प्राचीमुपलामीषन्नयति । तथैव प्रतीचीं मध्यदेशे दृषदः स्थितां करोति तृतीयेन मन्त्रेण ।

दीर्घामन्विति प्राचीमन्ततः ।

धामित्यन्तः । मध्यदेशात्प्राचीमुपलां प्रोहतीति योग्यत्वाद्विप्रकृष्टमप्यनुकृष्यते ।

यथासुखमत ऊर्ध्वꣳ संततं पिनष्टि ।

पूर्वोक्तनियमाभावेनैवातः परं मध्ये त्वविरमन् ।

देवो व इति कृष्णाजिने पिष्टानि प्रस्कन्दयति ।

पातयति दृषदः सकाशादुपलयैवेति वक्तुं प्रस्कन्दयतीत्युक्तम् । गृह्णात्विति मन्त्रान्तः ।

अदब्धेन वश्चक्षुषाऽवेक्ष इत्यवेक्षते ।

अवनम्येक्षते पिष्टानि कृष्णाजिनस्थानि यानि प्रस्कन्दितानि ।

अव्यवकिरन्ती पिꣳषाणूनि कुरुतादिति संप्रेष्यति ।

असंवपन्तीत्यनेन विकल्पते मन्त्रः ।

प्रेष्यामाह—

पत्नी पिनष्टि दासी वा ।

उक्तार्थम् ।

सैतत्सर्वं करोति ।

यत्प्रैषेणोक्तं विशिष्टमव्यवकिरन्तीत्यादि तद्दृष्टार्थं प्रेषितम् । पिष्टानि दृषदः सकाशात्कृष्णाजिनाद्वा न व्यवकिरन्ती बहिर्भावमनापादयन्ती तथा पिष्टानि सूक्ष्माणि कुर्वीति यदुक्तं तत्सर्वं कुर्यात् । अनालम्भुकत्वादिना तयोरभावे प्रैषाभावेऽप्यग्नीदेव वा कुर्यादेवेति नियम्यते । अध्वर्योस्तस्मिन्काले कपालोपधाने व्यापृतत्वात् । प्रैषाभावो लिङ्गविरोधात्प्रकृतावनूहाच्च ।

अत्र मदन्तीरधिश्रयति ॥ १८ ॥

## इति हिरण्यकेशिसूत्रे प्रथमप्रश्ने पञ्चमः पटलः ॥ ५ ॥

---

मदन्तीरपोऽधिश्रयति गार्हपत्य इति वैखानसोक्तेर्गार्हपत्ये मदन्तीरपः । संस्कारनिमित्तोऽयं शब्दः । तथाऽधिश्रयणेन संस्कारे सत्यनन्तरं भविष्यत्संज्ञया व्यवहरति ।

---

१ क. ख. ग. च. 'वस्थापय' । २ क. ख. ग. च. तत्सर्वं ।

प्रणीताभिः संयौतीति वचनमापस्तम्बे दृष्टमिति ताभिर आनीय मदन्तीरधिश्रयतीति यदुच्यते सोऽर्थोऽस्मत्सूत्र एव स्फुटो भविष्यति । अत्र काले कल्पान्तरे तु कपालोपधानानन्तरमधिश्रयणं दृष्टं तन्मा भूदित्यत्रेत्युक्तम् । अत्राग्नावधिश्रयणं यत्र हविःश्रपणं तत्रैवेत्येके ।

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां प्रयोगवैजयन्त्यां महादेवकृतायां प्रथमप्रश्ने पञ्चमः पटलः ॥ ५ ॥

---

अथ षष्ठः पटलः ।

---

**आहवनीये गार्हपत्ये वा हवींषि श्रप्यन्ते पश्चादग्नेः ।**

तत्रेच्छया विकल्पः । तत्र वक्ष्यमाणं कपालोपधानं कार्यम् । श्रप्यन्ते हवींषीति बहुवचने श्रुत्यनुसारेण पर्वद्वयपुरोडाशापेक्षे । सांनाय्यं तु गार्हपत्य एव वचनात् । अग्नेरायतनस्य पाश्चात्येऽर्धभागे श्रप्यन्त इति पूर्वेणान्वयः ।

**यथोक्तमुपवेषमादत्ते ।**

धृष्टिरसीति पूर्वमुक्तं तत्स्मारयति यथेति । कालपृथक्त्वेन क्रियाभ्यासमन्त्रावृत्तिरे(त्ती ए)कद्रव्येऽपि दर्शितवान् ।

संनयतः प्रातरेव विकल्पेनाऽऽदाने मन्त्रान्तरमाह—

**अपहतꣳ रक्षो रक्षसः पार्ष्णिं दहाहिरसि बुध्निय इति वा तेन प्रत्यञ्चावङ्गारौ निर्वर्तयति ।**

तेनोपवेषेणाग्नेः सकाशादायतन एव द्वावङ्गारौ पृथक्करोति । अर्थसिद्धे तेनेति तेनैवाङ्गारकृत्यं न तु सव्याङ्गुल्या कात्यायनोक्तया ।

**अपाग्न इत्यन्यतरमुत्तरापरमवान्तरदेशं निरस्याप उपस्पृश्य ।**

क्रव्यादꣳ सेधेत्यन्तः । दक्षिणमङ्गारमिति वैखानसः । आयतनाद्धविर्वाय्व्यदिशि निरस्य श्रौतमुपस्पर्शनम् ।

**आ देवयजं वहेत्यवशिष्टमत्रस्थाप्य ।**

यत्र प्रदेशे कपालमुपधास्यति तत्रैव स्थापयित्वा । मन्त्रे बहुपदग्रहणेन मन्त्रसमाप्तिर्दर्शिता । निर्दग्धमिति शाखान्तरीयस्य च ध्रुवमसीत्यनन्तरमपठितस्य विनियोग इति भ्रमः स्यात्तत आ देवयजमित्यस्य पाठानुसारेणारातय इत्यन्तः स्याद्ध्रुवमसीत्युत्तरादिना स मा भूदिति अर्थक्रमेण पाठक्रमविच्छेदादित्यर्थः ।

ध्रुवमसीति तस्मिन्कपालमुपदधाति ।

अवस्थापितेऽङ्गार एकं कपालं स्थापयति । पर्यूहेति मन्त्रान्तः ।

निर्दग्धमिति तस्मिन्नङ्गारमधिवर्तयति ।

उपहिते कपालेऽन्यम् ।

धर्त्रमसीति तस्मात्पूर्वम् ।

अत्रैवमित्यनभिधानादुपदधातीत्येवाऽऽकृष्यते न पूर्वस्य धर्मान्तरमपि । अयमाशयः-एकमग्रे कपालमुपदधातीति श्रुतेस्तस्मिन्कपालमुपदधातीत्यत्र सूत्र एकवचनं कपालमित्यु-द्देश्यगतमपि विवक्षितं, तेन तस्मिन्नेकस्मिन्नेव प्रथममेकमेव कपालमुपदधातीति, तथा तस्मिन्नङ्गारमधिवर्तयतीत्यत्रापि तस्मिन्नित्येकवचनं विवक्षितं, तस्मिन्नेकस्मिन्नेव तस्मा-त्प्रथमात्पूर्वं द्वितीयमुपदधाति ।

धरुणमसीति तस्मात्पूर्वम् ।

द्वितीयात् ।

अष्टाकपालस्य द्वे मध्यमाद्दक्षिणे त्रीण्युत्तराणि ।

स्पष्टम् ।

तयोर्धर्मासीति दक्षिणपूर्वं मरुता९ शर्ध इति दक्षिणापरम् ।

तयोर्दक्षिणयोर्दक्षिणपूर्वमाग्नेयदिग्भागे दक्षिणापरं निर्ऋतिदिग्भागे ।

यत्रमस्याशा दृ९ह रायें दृ९ह पोषं दृ९ह
सजातानस्मै यजमानस्य पर्यूहेत्युत्तरापरम् ।

वायव्ये ।

विश्वाभ्यस्त्वाऽऽशाभ्योऽच्छिद्र९ सजा-
तवनस्याया उपदधामीत्युत्तरपूर्वम् ।

ईशान्ये । इदं द्वयमुत्तरेषां त्रयाणां व्यवस्थार्थम् ।

मध्यमस्य तृतीयस्याऽऽह—

चिदसीत्यवशिष्टमुत्तरतः ।

मध्यमात् । एतानि कपालान्यष्टावाग्नेयस्य पुरोडाशस्याङ्गतया विहितानि । तथा-चेयं संख्याऽप्याग्नेयार्था कपालानि च न तु कपालार्था गुणानां तु परार्थत्वादसंबन्ध इति न्यायात् । तेन विकृतौ यत्राऽऽग्नेयविकारा एकादशद्वादशकपालास्तत्राऽऽग्ने-योपधानधर्मेणैवोपधानं न तु संख्यासाम्येनाग्नीषोमीयैकादशकपालवदैन्द्राग्नद्वादश-कपालवद्वा ।

एकादशकपालस्य यथाऽष्टाकपालस्यैवं त्रीण्युपदधाति ।

अष्टाकपालयोगादुत्तरत एव । तदग्रे स्पष्टयिष्यति । उपवेषादानं सर्वार्थमेव कृतम् । पूर्व मन्त्रेण द्रव्यपृथक्त्वार्थपृथक्त्वयोरभावात्सर्वकपालोपधानार्थत्वस्य बुद्धिस्थत्वान्मध्ये त्यक्तस्य पुनरादाने प्राप्ते मन्त्रस्यानावृत्तिः । अङ्गारनिर्वर्तनाद्यावर्तते तस्योत्तरकपालयोगेऽनुपकारकत्वात् । एकादशकपाले द्वादशकपाले चैवमिति पूर्वातिदेशात्प्रथमस्य प्रथमत्वेन प्रथमधर्मप्राप्तेः । नचाङ्गारानिरसनमदृष्टार्थं तन्त्रमिति वाच्यम् । द्वावङ्गारौ हि निव(र्व)र्तनेन संहतौ संस्कृतौ तयोरेकस्य त्यागो वियोगकरणेन भवति । यस्माद्वियुक्तः सोऽस्य संस्कारं जनयति । ततस्तस्य त्यागः प्रतिपत्तिर्द्वितीयानिर्देशात् । दृष्टे संभवत्यदृष्टकल्पना न न्याय्येत्यावर्तते । तथैव ब्राह्मणे दृश्यते—'अपाग्नेऽग्निमामादं जहि निष्क्रव्याद‍ꣳ सेधाऽऽदेवयजं वहेत्याह । य एवाऽऽमात्क्रव्यात् । तमपहत्य । मेध्येऽग्नौ कपालमुपदधाति । निर्दग्ध‍ꣳ रक्षो निर्दग्धा अरातय इत्याह । रक्षा‍ꣳस्येव निर्दहति' इति । स्थितस्याङ्गारस्य मेध्यत्वं संस्कारोऽन्याङ्गारनिरसनेन श्रूयते । तथा तस्य संस्कारस्य प्रतिपत्त्याऽङ्गेन रक्षोनिर्दहनमेव जातमिति यथाऽष्टाकपालस्येत्यनेन दर्शितम् । अत्रैवमित्यन्तमेकवाक्यं त्रीण्युपदधातीत्यपरं, तत्र यानीति पदमध्याहर्तव्यं तेषामित्यग्रिमसूत्रे दर्शनात् । एवं चैवमित्यतिदेशस्त्रीणीत्यनेन न संबध्यते किंत्वेकादशकपालस्येत्यनेनैव । अत्र पूर्वतनमुपदधातीत्यनुवर्तनीयम् ।

तत्र विशेषमाह—

तेषां वर्षिष्ठं मध्यमं द्वे मध्यमात्पूर्वे ।

त्रिषु यन्मध्यमं तद्वर्षिष्ठं किंचिद्विस्तीर्णं तस्मान्मध्यमात्पूर्वमष्टाकपाल एकमेवात्र तु द्वयम् ।

अत्रान्तिमे मन्त्रमाह—

तयोश्चिदसीति पूर्वम् ।

उपदधातीत्यनुकर्षः ।

यथोक्तमवान्तरदेशेषु ।

आग्नेयनैर्ऋतवायव्यैशानदिग्भागेषु पूर्ववत् ।

चितः स्थेत्यवशिष्टान्युत्तरतः ।

पर्यूहेत्यन्तः । उत्तरतो मध्यमात्प्राङ्न्यायम् । अत्र मन्त्रे बहुवचनेऽपि नैकेनैव मन्त्रेण त्रयाणामुपधानम् । एकादशकपालस्येत्यवान्तरसंख्यया द्रव्यपृथक्त्वान्मन्त्रावृत्तिः । बहुवचनमितरेतरसापेक्षमुखे उपदधामीति द्विवचनवत् ।

---

१ क. ख. ग. छ. ट. ट. ड. °निवर्त° । २ क. ख. ग. च. छ. ट. ठ. ड. °स्थेति सर्वाण्यव ३ क. ग. च छ. ट. ठ. ड. °शिष्टमुत्त° ।

ऐन्द्राग्नस्योपधानमाह—

द्वादशकपालस्य यथैकादशकपालस्यैवम् ।

द्वादशमपि कपालं चितः स्थेत्यनेनैव ।

भृगूणामङ्गिरसां तपसा तप्यध्वमि-
ति वेदेन कपालेष्वङ्गारानध्यूहति ।

सर्वमन्त्रपाठो मन्त्रसमाप्त्यर्थस्तेन यानि घर्म इति मन्त्रः पृथगेवोत्कृष्यते पाठात् । कपालविमोचने विनियोक्ष्यमाणत्वात् । अन्यथाऽनेन सह पूर्वं एक एव मन्त्रः स्यात् । बहुवचनं तप्यध्वमिति व्यक्तं दर्शयितुं, तेन सर्वाण्यपि कपालान्यनेकयोगयुक्तानि सकृदेव मन्त्रेण संस्कुर्यादित्युक्तम् । अङ्गारग्रहणं समर्थेन केनचित्पात्रेण गृहीत्वा तान्वेदेन कपालेषु यथाऽधितिष्ठन्ति तथोहति प्रसारयतीति यावत् । अविरहन्नेदम् । तेनेनः परं योगप्रयुक्ता प्रतियोगं मन्त्रावृत्तिः कार्येतः पूर्वं तु नाऽऽवृत्तिः कपालत्वोपाधिना द्रव्यपृथक्त्वाभावादिति । आचार्येणापि तथैवाभिप्रेत्य कपालेष्वध्यूहतीत्यन्तं कपालशब्दप्रयोगेण व्यवहृतं दक्षिणस्मात्कपालयोगादपोह्योत्तरस्मादपोहतीति योगशब्दयुक्तं व्यवहृतमतः परं दृश्यतेऽनेन तेषामितरेतरसंयोगविशिष्टानामेव देशभेदेन पृथग्द्रव्यत्वा-द्रव्यपृथक्त्वेऽभ्यावर्तेत इति न्यायात्प्रतियोगं मन्त्रावृत्तिरिति सूत्रकारमतं तदपि ब्राह्मणानुसारेण । त्रीण्यग्रे कपालान्युपदधातीत्यादिनोपक्रम्याष्टाकपालपर्यन्तमुक्त्वा पुनरष्टौ नव दशैकादश द्वादशेति संख्ययैव विंशतिः पूरिता । तत्रावान्तरभेदाप्रतीतेरुपसंहारेऽपि देवतानामेवैनानि तपसा तपतीति बहुवचनेनैनानीत्यनेन चावान्तरभेदाभावो(वं) दर्शयितुं वदिष्यत्यनन्तरमेवैवमनुपूर्वं कर्माणि करोतीति । ननु कुत इयं व्यवस्थेति चेत् । उच्यते—यावत्पुरोडाशयोर्द्रव्यं संसृष्टं तावत्पुरोडाशद्रव्ययोर्द्रव्यपृथक्त्वाभावात्तदङ्गभूतेष्वपि कपालेषु योगयुक्तं कार्यं नो विभागेन नास्ति पिण्डविभागे प्रतिपिण्डस्यैवाङ्गत्वात्तत्प्रयुक्ता मन्त्रावृत्तिरित्याचार्याभिप्रायः । अत्र प्रातर्दोहः । उपहितेषु कपालेषु प्रातर्दोहमित्युक्तत्वाद्व्याख्यातस्तत्रैव ।

पात्रीं निष्टप्योपवातायाम् ।

निष्टपनं बिलभागे प्रसिद्ध्या श्रपणाग्नावेव निष्टपनेनोपवातायामुपतप्तायाम् । सम्यक्तप्तां कृत्वेति व्याचक्षते तच्चिन्त्यम् । उपवातशब्दस्य शीतलीकरणे रूढत्वात् । अत्र प्रायोगिकाः पात्रीं गार्हपत्येऽधिश्रित्य तस्यां समोप्य भर्जयन्ति । तदन्याय्यं विभागाभावाद्भर्जनेन पाकस्य । अन्तर्वेद्यपरेण वा गार्हपत्यमवस्थितायामिति कात्यायनोक्तेश्चास्माकं व्यवस्थया श्रपणाग्नेस्तथा संभवात् ।

---

१ ख. छ. ट. नो । २ ख. °ण्डयोगस्यै° ।

देवस्य त्वेति तिरःपवित्रं कृष्णाजिनात्पिष्टानि संवपति।

संवपामीत्यन्तेन न देवतानिर्देशो यथादेवतमित्यविधानात्। पवित्रं तिर्यगवधाय तस्यां पिष्टानि कृष्णाजिनादेव निक्षिपति।

त्रिर्यजुषा तूष्णीं चतुर्थम्।

देवस्य त्वेति मन्त्रोऽधिवपामीत्यन्तः संहितायां पठितः। स एवानुषक्तोऽत्र संवपामीत्येतच्छेषत्वेन ब्राह्मणेन व्याख्यातः सानुषङ्गस्य संहितापठितत्वं मत्वाऽत्र प्रतीकेनोपात्त उभयथापि देवतानिर्देशाभावेनैव पाठोऽतो यथादेवतमिति नोक्तम्। आपस्तम्बेन तु शाखान्तरीयमेव दृष्ट्वा यथादेवतमित्युक्तं तन्नेष्टमस्माकम्। यद्यपि ब्राह्मणे यथादेवतमिति दृश्यते सा स्तुतिर्न विधिः। किं तु (कुतः) प्रथमस्याग्नेर्मन्त्रब्राह्मणयोरनिर्देशात्। यथाऽग्नये जुष्टमित्यत्र निर्देशस्तन्निर्देशे स एवमेवानुपूर्वमिति विधिः।

संवपन्वाचं यच्छत्यभिवासयन्विसृजते।

भस्मना पुरोडाशमभिवासयन्। अत्र भस्मनाऽध्यूहतीति वक्ष्यति तथाऽपि संहिताब्राह्मणयोर्वेदेनाभिवासयतीति प्रयोगादभिवासयन्नित्युक्तम्।

हर्योस्त्वा वाराभ्यामुत्पुनामीत्युदगग्राभ्यां पवित्राभ्यां पिष्टानि त्रिरुत्पुनाति।

सकृन्मन्त्रः।

देवो व इति वा।

इदं पच्छ इत्याद्युक्तप्रकारेण।

स्रुवेण प्रणीतानामादाय वेदेनोपयम्य समाप इति पिष्टेष्वानयति।

अत्र प्रणीताभिर्हवींषि संयौतीति भरद्वाजेनोक्तत्वाऽप आनयतीत्याद्युक्तमतो हविष्पाकः प्रणीताभिरिति गम्यते। मीमांसका अपि प्रणीतानां दृष्टार्थत्वं वक्तुमिदमेव वाक्यं श्रुतिमुदाहरन्ति। प्रणीतानामिति प्रणीतानां संनन्दिनीरप इति संबन्धषष्ठ्याऽप इति कर्मार्थप्राप्तं यथाविहितं धर्ममात्रमेतत्। सुज्यध्वमिति मन्त्रान्तः।

यदि प्रणीता न विद्येरन्या एव काश्चापो यजुषोत्पूय ताभिः संनयेदित्यापदर्थवादः।

यजुषा देवो व इति आपदर्थवादः। प्रणीताभिर्विकल्पे प्राप्त आपदि प्रणीतास्वप्रणीतासु यथोपपन्नसहिते प्रधानमात्रेऽनुष्ठीयमानेऽपि तत्रापदर्थस्य वादोऽर्थस्य प्राप्तिविधिर्न प्रणीताभिर्विकल्प इत्यर्थः।

अद्भ्यः परिप्रजाताः स्थेति तप्ता आनयति।

पिष्टेषु तप्ता मदन्तीरित्यर्थः, आनयति।

समद्भिः पृच्यध्वमिति प्रदक्षिणमनुपरिप्लावयति ।

प्रदक्षिणमिति च पारिभाषिकमेवोक्तम् । समन्तत्वव्याख्यानाय परितः समन्तात्परितो बहिरेव स्यात्तदर्थमनुव्याप्येत्युक्तम् । समन्तात्प्लावयति यथा पिष्टान्याप्लवन्ति तथा करोति मन्त्रलिङ्गादद्भिः पृच्यध्वमिति विपरिणतं तप्ता इति पदं तृतीयान्तं तप्ताभिः सामर्थ्येन पिष्टानि कर्माणि । तदुक्तं भरद्वाजेन—तप्ताभिः पिष्टानीति । सूत्रे संनयेदित्येतत्कर्मतया सप्तम्यन्तस्य द्वितीयान्ततया विपरिणामात्तप्ताः पिष्टान्यानयतीति द्विकर्मकत्वेन संबन्धात्प्रकृते तान्येव ।

जनयत्यै त्वा संयौमीति संयौति जनयीते त्वेति वा ।

संयौति मिश्री करोति पिष्टान्यपश्च मेक्षणेनाऽऽलोडयति, यथा पिष्टानां पाको भवेत्प्रणीताभिर्हवींष्षि सयौतीति श्रुतेः । अत एव मदन्तीरधिश्रयति प्रणीता एव, प्रणीतानां श्रपणार्थत्वं यत्र पयःश्रपणार्थे श्रूयत इति सूत्रे स्फुटी करिष्यतेऽतोऽत्र प्रणीय तप्ता मदन्तीरानयति ।

मखस्य शिरोऽसीति पिण्डं करोति ।

स्पष्टम् ।

यथाभागं व्यावर्तेथामिति विभजति ॥ १९ ॥

पिण्डमित्यनुकर्षः । द्वेधा करोति ।

विभागे मन्त्रान्तरमाह—

देवो वाः सविता विभजतु भगो वाः सविता
विभजतु पूषा वाः सविता विभजतु वायुर्वाः
सविता विभजतु जनयत्यै त्वा विभजामीति वा ।

अत्र न्यायमते पञ्चैते मन्त्रास्तत्रेष्टमाचार्यस्येति गम्यतेऽन्त एवेतिकरणात् । एकस्मिन्पुरोडाशेऽर्थलुप्तो विभागः ।

समौ पिण्डौ कृत्वेदमग्नय इत्याग्नेयमभिमृशतीदममुष्मा इति यथादेवतमुत्तरम् ।

समप्रमाणौ पिण्डौ कृत्वाऽऽदौ समावेव च्छित्वा पश्चात्तथैव भागौ पिण्डरूपौ कृत्वेति त्वाप्रत्ययेनेदमुक्तं यत्र विभागस्तत्रैवाभिमृशति केवलविभागाभावान्नाभिमर्शनेन निर्देशो व्यावर्त्याभावात् । जनयत्यै त्वा संयौमीति बहुपाठेन मन्त्रसमाप्तिरुक्ता । तेनाग्नये त्वाऽग्नीषोमाभ्यामिति न पूर्वमन्त्रशेषोऽपि तु मन्त्रान्तरं, तदिदमग्नय इत्यनेन समानार्थं विकल्पते । उक्तं बौधायनेन—अग्नये त्वाऽग्नीषोमाभ्यामिति । तत्रापि समानो मन्त्रो दर्शितोऽमुष्मा अमुष्मा इति । तेन दर्शेऽग्नये त्वेन्द्राग्निभ्यामिति ज्ञेयम् ।

इदमहꣳ सेनाया अभीत्वर्यै मुखमपोहामीति वेदेन दक्षिणस्मात्कपालयोगादङ्गारानपोह्योत्तरस्मादपाहेति ।

कपालानां युक्तानामेककार्यसमवायिनां समुदायो योगस्तस्माद्दक्षिणस्मादादावपोह्योत्तरस्मात्पृथङ्मन्त्रेणापोहति निःसारयति । एतावत्पर्यन्तं तन्त्रेण कपालमात्रत्वोपाधौ संस्कारानुक्त्वा भस्मापोहनप्रभृति दक्षिणोत्तरयोगत्वोपाधिना यत्कार्यं पृथङ्निर्दिष्टं तत्रेदं मन्त्रलिङ्गमपि कारणं यन्मन्त्रे सेना नानाव्यक्तिसमुदाय एकप्रयोजनको दृष्टस्तस्तु मन्त्रवर्णेनैव समुदायस्य प्रकाशयत्वाद्दक्षिणोत्तरविभागौ विना तदसिद्धेरर्थाद्विभागोऽपि जात इति मत्वा तेनेदमुक्तं दक्षिणस्मादित्यादि ।

एवमनुपूर्वाण्येषां कर्माणि क्रियन्ते ।

यथा दक्षिणस्मात्कपालयोगादपोह्योत्तरस्मात्कपालयोगादपोहतीति देशभेदाद्द्रव्यभेदे समन्त्रकर्मावृत्त्याऽऽनुपूर्वीक्रम उक्त एवं दक्षिणोत्तरदेशभेदभिन्नानां हविषामपि समन्त्रकर्मावृत्त्या क्रमेण कर्माणि क्रियन्ते न तु स्वेच्छया । वर्तमाननिर्देशेन नेह विधिरपि तु न्यायप्राप्तमेवेत्युक्तम् । एषां पर्वद्वयसंबन्धिनां प्रकृतानां पुरोडाशानामेवेति भाति तथाऽपि सांनाय्येऽप्यासादनप्रभृति दक्षिणोत्तरभावापन्नयोः शृतदध्नोः पृथग्द्रव्यत्वप्रयुक्तमेव कार्यं मा भेरिति व्यवदानं यदवदानानीति, तथाऽन्यान्यप्यग्रिमाणि कार्याणि तयोरप्यावृत्त्या दक्षिणोत्तरक्रमेण च स्युरन्यथा तन्त्रसंभव उत्पत्तिक्रमो वा केन निवारितौ स्याताम् । तस्मात्सर्वहविषां ग्रहणम् ।

एवं पदार्थानां क्रमेणैव संस्कार्यत्वमुक्तमिदानीं तेषु प्रवृत्तानां सजातीयविजातीयकर्मणामपि किं सर्वाण्येकत्र पदार्थे समाप्यान्यत्र पदार्थे समापनीयानि किंवा सर्वपदार्थेषु एकमेकमेव समाप्यैवं संदेह उभयत्वयोर्व्यवस्थां दर्शयितुमुत्सर्गतस्तावत्पदार्थक्रमेणैककर्मण एव क्रममाह—

समानजातीयेनैकैकमनुसमेति कृत्स्नमेकैकमपवर्जयति ।

एकविधिविहितमेकप्रकारं कर्मैका कर्मव्यक्तिः समानार्थसंबन्धिनी क्रियमाणप्रकारत्वात्समानजातीया व्यक्तिर्नेनु[1] सैव व्यक्तिर्नहि पूर्वपदार्थे कृता नष्टोत्तरत्र संबद्धा कर्तुं शक्या, तस्माद्व्यक्तिभेदे जातिरवश्यं वाच्या, तस्यामभिव्यञ्जकं तु तत्तद्विधिविहितत्वमात्रं, तेन संस्कार्येषु पदार्थेषु मध्य एकमेकमेव पदार्थमनुक्रमेण सजातीयेनैकेनैव कर्मणाऽनुसमेत्यनन्तरं तथैव विजातीयेनापीति । समेति संबध्नाति । सोऽयं पदार्थानुसमय इति व्यपदिश्यते क्रमविशेषः । प्रथमप्रवृत्तं कर्म सकृच्छ्रुतसर्वपदार्थोद्देशेन तस्यासमाप्तौ वाक्यार्थासमाप्तेर्न वाक्यान्तरविहितस्य विजातीयस्य प्राप्तिः । यद्यपि

---

१ ट. °र्नैतु सै° ।

वोद्देश्य एकत्वं श्रूयेत तथाऽपि न विवक्षितमित्येकस्मिन्वाक्य एव सर्वपदार्थ-संस्काराकरणे वाक्यार्थो न समाप्तः स्यात् । विजातीये मध्ये कृते तु वाक्यं पुनः पुनरावर्तनीयं स्यादिति भावः । तत्र पदार्थसमुदायापन्ने पदार्थे पुनस्तथैव संदेहः किं समुदायगतामेकैकां व्यक्तिं संस्कृत्य तथैव द्वितीयामेवं क्रमोऽथ वा समुदायरूपं समाप्य पुनरन्यं तथैवेति । तत्राऽऽह—कृत्स्नमेकैकमपवर्जयति । अत्र सजातीयेनानु-समय उक्ते निर्वापे प्रथमस्यैकं मुष्टिं निरुप्य द्वितीयहविष एकं तथैव द्वितीयमिति तथा कपालोपधानेऽपि प्राप्तमिदमुच्यते कृत्स्नं पदार्थमेकैकमेवापवर्जयति समापयति कुतः, पदार्थसमाप्तौ पदार्थोद्देशेन विधीयमानं कर्म न समाप्तं चतुरो मुष्टीन्निर्वपतीति कपालान्यष्टावुपदधातीति तत्रैको मुष्टिरेकं वा कपालं न पदार्थः पदार्थावयवः स तादर्थ्येन विधीयते । एकेन धर्मेणावच्छिन्नो योऽङ्गतां गत उद्देश्यतां वा स एकं इत्युच्यते न तु व्यक्त्यैक्येनैवैकत्वं, तथा चतुर्मुष्टिपरिमित एवाङ्गं निर्वापो निर्वपतिना परिच्छिन्न इत्येक एव पदार्थस्तस्मिन्नव्याप्तेन तत्पदार्थोद्देशेन प्रवृत्ता क्रिया समाप्तेति न बहिरङ्गं पदार्थान्तरं गच्छति, तथैकस्मिन्योग आग्नेयोऽष्टाकपाल इति नानापदार्थात्मके सर्वमेकं पदार्थं समापयतीत्यर्थः । सजातीयविजातीयकर्मणामे-कपदार्थे करणं ततस्तथैव द्वितीयपदार्थे करणं काण्डानुवर्ततिः काण्डानुसमयो न च तथाऽयम् ।

एतदपवादेन काण्डानुसमयमाह—

संयुक्तानि त्वेकापवर्गाणि यथाऽवदानप्रदाने ।

संयुक्तानि नियतपौर्वापर्याणि सजातीयविजातीयानि तानि कर्माण्येकस्मिन्नेव पदार्थे समाप्तियोग्यानि । अत्र पदार्थानुसमये सति पौर्वापर्यविदकप्रमाणबाधः स्यादन्ते कृच्छ्रेत (त्स्न) स्यापि प्रमाणानुरोधेनाऽऽवृत्तिलक्षणो वाक्यभेदोऽङ्गीकृत इति भावः । कुतः, यतोऽवदानप्रदाने संयुक्ते । तत्र केचिच्चतुरवत्तं जुहोतीति संयुक्तत्वप्रापकमाहुः । तत्रावदानप्रदानयोः संयुक्तत्वेनोदाहरणत्वं न त्ववदानहोमयोरिति । कात्यायनस्तु ग्रहणसादनावदानेषु तु वचनात् । तत्सूत्रव्याख्याने च ग्रहणं सादनान्तमवदानं च प्रदानान्तमिति शाखान्तरीयवचनादिति व्याख्यातम् । वचनं च न सार्वत्रिकमस्ति सामर्थ्येनापि संयुक्तत्वदर्शनाद्वचनादित्यव्यापकं मत्वाऽयं हेतुर्नोक्त आचार्येण किंतु तुशब्देन पूर्वन्यायासंभव एवोक्तः । तत्र च हेतुः संयुक्तानीति, केनापि प्रमाणेन संयुक्तानि तानि सर्वाण्यप्येकापवर्गाणि प्रकृते तु वचनेन संयुक्तताऽन्यत्र यथासंभवे-न प्रकृत्वा द्विरवदानं ह्यवदानं न संभवेत्, किंतु सर्वपुरोडाशस्याऽऽग्नेयोऽष्टाकपाल

१ ट. 'तीयम' । २ ठ ड. 'द्विजाती' । ३ ट. 'च्छ्रत्तस्या' ।

इति योगेन देवतासंबन्धश्रवणात्। शृतस्य वेद्यां स्थितस्य च वषट्कारेण प्रदानसंभ-वादित्येवमवचनेनैवात्र काण्डानुसमय इति व्याख्येयं सूचितवत्सूत्रकारेण यथाऽवदानप्र-दाने इति संयुक्तत्वे सामर्थ्यं सिद्धत्वमदर्शयताऽग्रिमे चोदाहरणे प्रधानसंनिकर्ष इत्या-दिना दर्शनाच्च।

अर्थसिद्धसंयुक्तत्व उदाहरणमाह—

उद्वपनं निष्पवनं च सर्वत्र प्रधानसंनिपाते क्रियन्ते।[1]

चकारेणावहननप्रस्कन्दनादि गृह्यते तदपेक्षया क्रियन्त इति बहुवचनात्सर्वत्र विकृतौ सर्वेषु नानाबीजेषु प्रधानसंनिकर्षे प्रधानानां संस्कार्याणां बीजानां प्रत्येकं संनिकर्षे काण्डानुसमय इति यावत्। तस्मिन्सत्येवोद्वपनादीनि क्रियन्त इत्यर्थः। संस्कार्याणां बीजानामवघातादिना संस्कारो दृष्टतण्डुलीभावप्रयोजनकस्तत्रावघातमात्रे सति प्रयोज-नासिद्धेस्तदादि पूर्वपूर्वमुत्तरोत्तरस्य करणं स तण्डुलीभावप्रयोजनं साधयेन्नियतकाण्डानु-समय एवात्र न तु सजातीयमेकमवहननं सर्वबीजेषु, तत उद्वपनाद्येकैकं तथैवेति भावः। एवं च पदार्थानुसमय औत्सर्गिकस्तद्बाधकोऽन्य इति सिद्धम्।

मखस्य शिरोऽसीति दक्षिणं पिण्डमादाय घर्मोऽ-सि विश्वायुरिति दक्षिणे कपालयोगेऽधिश्रयति।

दक्षिणे कपालयोगे स्थापयितुं योग्यं दक्षिणमित्युक्तत्वात्। आग्नेयमिति नोक्तं देशभेदाप्रत्यायकत्वात्। तस्माद्देशभेदप्रत्यायिकया च भाविन्या संज्ञया व्यवहृतं, तेन विभवन्त्यपि कर्माणि देशभेदेन द्रव्यपृथक्त्वात्मन्त्राण्यावर्तन्त इति पूर्वोक्त एवमेतेषा-मित्यादिन्याये हेतुरुक्तः। तथा च पिण्डपुरोडाशशब्दाभ्यां क्रोडीकारेण कर्मविधानेऽ-पि द्रव्यपृथक्त्वमस्त्येव यथाऽऽज्यत्वादिना क्रोडीकृतेऽवयवपृथक्त्वम्।

अधिश्रयणे वैकल्पिकं मन्त्रान्तरमाह—

घर्मघर्मे[2] श्रयस्वेति वा।

अनेन वाऽधिश्रयति—

उक्तं विध्यन्तं हविरन्तरेऽतिदिशति—

एवमुत्तरम्।

पिण्डमित्यनुकर्षः। शेषं पूर्ववत्समन्त्रम्।

अनुन्नमनपूपाकृतिमश्वशफमात्रं कूर्मस्येव प्रतिकृतिं करोति।

पिण्डमित्यनुकृष्यते। कमठस्येवेषत्प्रतिकृतिं प्रतिमां करोति। तत्रापि कश्चित्कूर्मस्तुङ्गः कश्चिदपूपाकृतिरपूपवन्निम्नस्तदुभयविलक्षणो नात्युच्चो नातिनीच इत्यर्थः[3]। वैखानसो नोन्नमनतिनीचमित्याह। अश्वशफमात्रमिति तु परितो मानम्।

१ क. ख. ग. च. निकर्षे क्रि°। २ क. ख. ग. च. छ. ट. ठ. ण. °र्मेधिश्र°। ३ क. ग. च. छ. ट. ठ. ड. °र्थः। नो°।

शफः पादखुरः।

एवं मानकरणेनार्थात्प्रथनमुक्तं शाखान्तरे तत्रैव मन्त्रमाह—

उरु प्रथस्वेति प्रथयति।

पिण्डमेव विस्तारयति पूर्वरूपे। प्रथतामित्यन्तः।

सर्वाणि कपालान्यभिप्रथयति।

प्रथयतीति पूर्वानुवादः। अश्वशफमात्रकरणेनैव। अत्र न च मुष्टिपरिमितेन सावा-पेन धान्येन पुरोडाशः क्रियते। अत्राश्वशफमात्रता तन्वावापपूर्त्या संपादनीया। कपालयोगोऽपि तावानेव यथा तथा कार्यं किंचिदाकारं, तेन प्रथनमेवातुङ्गादिरूपेण कार्यं न पृथक्कर्मान्तरम्। अत एवाऽऽस्तम्बेन व्यत्ययेन सूत्रद्वयं पठितम्।

पात्र्यामप आनीय त्वचं गृह्णीष्वेति प्रद-क्षिणमनतिक्षारयँल्लेपेनानुपरिमार्ष्टि।

संयवनपात्र्यामप आनीयेतिगुणप्रधानविभक्त्योरविवक्षा तप्ते पयसि दध्यानयतीति-वत्। नो चेदपामसंस्कार्याणामानयनमदृष्टार्थमेव स्यात्। तस्मादद्भिः पात्रीमार्द्रां कुर्याल्ले-पादानार्थमित्यर्थः सिध्यति। तमार्द्रं लेपं गृहीत्वेत्यप्यत्रार्थाज्ज्ञेयमन्यथा लेपेनेत्यपि न संमतं स्यात्। तेन लेपेन लिम्पनेन पिण्डं सिद्धं करोति। प्रदक्षिणमिति समन्ततां वक्तुम्। अतिक्षरणमङ्गानां लेपकरणेन यथा न भवति तथाऽनुपरिमार्ष्टीत्येवमर्थमनति-क्षारयन्नित्युक्तम्। प्रतिपिण्डं समन्त्रं पुनर्लेपग्रहणेनैव। अत्र पात्रीप्रक्षालनं विधेयमव-शिष्टलेपप्रतिपत्त्यर्थं प्रक्षालनं पात्र्याः संस्कारार्थमुत्तरत्रोपयुक्ताया लिप्ताङ्गुलीप्रक्षालन-मपि तथैव कार्यमुभयप्रयोजनार्थं तयोर्लेपक्षालनयोरग्रे प्रतिपत्तिदर्शनात्। तत्राङ्गुलिप्र-क्षालनं कृत्वा निनयनमदृष्टार्थमेव स्यात्। तस्मात्पात्रीनिर्णेजनसमभिव्याहारादपि दृष्टार्थतैव।

अन्तरितꣳ रक्ष इत्युल्मुकेन त्रिः पर्यग्नि करोति।

अरातय इत्यन्तः। प्रत्येकं पिण्डे मन्त्रावृत्तिः पूर्वोक्तन्यायेन। अग्निं परितोऽग्निर्भ्रा-म्यते यस्यां क्रियायां तत्तथा। उल्मुकेन ज्वलता काष्ठेन परितः पिण्डस्याग्निज्वालां त्रिर्भ्रामयेदित्यर्थः। संस्कारोऽप्यदृष्टार्थः। सर्वाणि हवींषीत्यापस्तम्बवैखानसोक्तिवत्प्र-यत्नाधिक्याभावात्पिण्डमित्यनुवृत्तेश्च नास्मत्सूत्रकारास्मच्छाखाभिमतम्। 'घर्मो वा एषोऽशान्तः। अर्धमासेऽर्धमासे प्रवृज्यते। यत्पुरोडाशः' इत्युपक्रम्याम्यस्यार्थवादैः स्तुत्वा पुरोडाशमेवोपसंहरतीति ब्राह्मणविरोधाच्च शाखान्तरीयं नेष्टम्।

मन्त्रान्तरमाह—

परिवाजपतिरिति वा।

पाठाभावादपि प्रतीकोपादानेनर्चो ग्रहणम्।

देवस्त्वा सविता श्रपयत्विति दर्भैरभिज्वलयति ।

अधिनाक इत्यन्तः । ज्वलद्भिर्दर्भैरपि उपरि ज्वलयति ज्वालां करोति तत्पाकार्थम् । पूर्ववदेव रक्षसामपघातायेत्येव वाक्यशेषाद्धर्ममात्रं प्रतीयते तथाऽपि श्रपयत्विति मन्त्रलिङ्गाच्छ्रपयतीति वाक्यशेषाच्च दृष्टार्थता । तेन यथा श्रपणं स्यात्तथाऽभिज्वलयति ।

अग्निस्ते तनुवं माऽति धागित्युल्मुकैः परितपति ।

रक्षस्वेत्यन्तः । अनेकैरुल्मुकैः प्रतितपति प्रतितापयति । अन्तर्भूतणिजर्थः सकर्मको वा । मन्त्रः प्रतिपिण्डम् । प्रत्यभितोऽसंलग्नैस्तदभिमुखैरिति यावत् । माऽति धागग्ने हव्यं रक्षस्वेति मन्त्रलिङ्गाच्च ।

सं ब्रह्मणा पृच्यस्वेति वेदेन साङ्गारं भस्माभ्यूहति ।

पात्रेण गृहीत्वा वेदेन भस्माभिव्याप्य पिण्ड ऊहति प्रसारयति । प्रतितापो यथा न दहेत्तथा भस्मना साङ्गारेणाऽऽच्छादयतीत्यर्थः । एवं च दृष्टार्थता ।

ब्रह्म गृह्णीष्वेति वा ।

पूर्वेण विकल्पः ।

अविदहन्तः श्रपयतेति संप्रेष्यत्यत्र वाचं विसृजते ।

ब्राह्मणेऽविदहन्तः श्रपयतेति वाचं विसृजत इति दर्शनादयं वाग्विसर्गः प्रतिकरणमित्याभाति, तन्न संभवति । नियमाभावो हि विसर्गस्तस्याभावरूपस्य विधातुमशक्यत्वान्मन्त्रलिङ्गविरोधाच्च । तस्मादत्र क्रिया काचनाध्याहर्तव्या, मन्त्रलिङ्गाच्च प्रैषार्थताऽवगम्यते । न च प्रेष्याः प्रतीयन्ते, नाप्यन्येषामनन्तरं किंचित्पुरोडाशपाकानुगुणं कर्म विधीयते, नापि स्वस्य, तस्मादुच्चैरुच्चारणमात्रं प्रेष्यतीत्यनेनोच्यते । तस्माद्दर्भं दोहपवित्रे रज्जुं सर्वा पात्राणि शुन्धतेति संप्रेष्यतीतिवददृष्टार्थम् । आपस्तम्बेनाऽऽग्नीध्रो हवींषि सुशृतानि करोतीत्यभिधानात्तं प्रति प्रैषस्तन्मतेन संभाव्यते नात्र तथा बहुवचनानुपपत्तेश्च । वरमदृष्टार्थताऽत एव वैखानसो यथाब्राह्मणमेव विधत्ते तदपि प्रायेणाप्येतद्यजुरुक्त्वा वाचं विसृजत इत्यर्थोऽवगम्यते । ब्राह्मणमपि सार्थवादं न दृष्टं फलं किंचिदाह यज्ञमेव हवींष्यभिव्याहृत्य प्रतनुते पुरोरुचमविदाहाय शृत्यै करोतीति । तस्माददृष्टार्थमेवोच्चारणं नियमनिवृत्तिप्रसक्ताविदमुच्चैर्वदेदिति । तत एवाभिवासयन्वाचं विसृजत इति यदुक्तं तदपि न विरुध्यते । तेनाभिवासनानन्तरमेवाविदहन्ते(न्त इ)त्युच्चारणमङ्गारान्संबुध्याप्रैषदर्शनात्साङ्गारभस्माभ्यूहनं प्रत्येवाङ्गमिति पूर्वमभिवासनशब्देन साङ्गमेव ग्रहणमतो न व्यवधायकमिति सर्वं दर्शयितुमत्रेत्युक्तम् । योऽयमभिवासनोत्तरकालं विसर्ग उक्तः स एवास्मिन्काले पर्यवसन्न इत्यर्थः । तत्र भाष्यकारेणोक्तमविस्मरणायात्रेत्युक्तमिति तत्सूत्रकाराचातुरीसंपादकत्वादुपेक्ष्यम् ।

अङ्गुलिप्रक्षालनं पात्रीनिर्णेजनं चोल्मुकेनाभितप्य ।

पात्री निर्णिज्यतेऽनेनेति तथाऽङ्गुलीप्रक्षालनं पृथक्पृथक्पात्रयोः स्थापिते पृथक्पृथक्प्रताप्योल्मुकेन ज्वलता पात्रीनिर्णेजनमपि प्रक्षाल्य पात्रीं पात्रान्तर एव स्थितं भवति। प्रताप्य पृथक्त्वेति बौधायनोक्तेः पृथग्विभक्तिनिर्देशाच्चकाराच्च पृथक्प्रताप्य संसृज्येत्यर्थः । उल्मुकं तु श्रपणीयाग्नेरेव ।

अपरेणाऽऽहवनीयमपरेण वा गार्हपत्यꣳ स्फ्येनोदीचीस्तिस्रो रेखाः कृत्वैकताय स्वाहेति पश्चात्पश्चादसꣳस्पन्दयꣳस्त्रिर्निनयति ।

श्रपणार्थत्वेन सत्येव विकल्पेऽपरेणाग्निमित्येव वाच्ये गौरवं व्यवस्थार्थं यत्रापरेणाऽऽहवनीयं बर्हिस्तीर्णं तत्रापरेण गार्हपत्यं पशुपुरोडाशादौ नान्यत्रेति । उदीचीरुदगायतास्तिस्रो रेखाः प्रागपवर्गरेखाणामदृष्टार्थता मा भूदिति कृत्वेति क्त्वाप्रत्ययेनोत्तराङ्गतोक्ता ताभिः संस्कृत एव स्थले निनयति सूत्रान्तरे स्पष्टमेवोक्तम् । एकस्यामेकवारमेवं त्रिर्भवति । कथं तत्राऽऽह पश्चात्पश्चादिति वीप्सया तिसृषु रेखासु त्रिर्निनयनाभ्यासोऽर्थास्स्यात्पश्चात्पश्चात्पश्चिमेन पश्चिमेन पूर्वं पूर्वं न मेलयन् । अत्र पश्चात्स्पन्दनं न प्रतिषिध्यते किं तु पाश्चात्यनिनयनेन पूर्वस्य मेलनं प्रतिषिध्यते । एवं च प्राक्संस्थतोक्ता भवति, लेपस्य सर्वस्य प्रतिपत्तिः सकृन्मन्त्रेण द्विस्तूष्णीं च त्रित्वं तावतैव चरितार्थत्वात् । असंस्पन्दयन्निति पश्चात्पश्चान्निनीतेनातः प्रागपवर्गताऽऽपस्तम्बोक्ता सिद्धा भवति । अस्पन्दयन्नमिलयन्परस्परं निनयनम् । संनिधानादस्पन्दयन्नित्येवमुक्तम् । कात्यायनीये प्रत्यगसंस्पन्दमानमिति, तद्व्याख्यातं च कर्कोपाध्यायेन प्रत्यगिति प्रतिवचनान्न प्रागुदग्वाऽऽस्पन्दमानमिति समुपसर्गनिर्देशादसंगच्छन्न स्पन्दनमात्रप्रतिषेध इति। वैखानसेनापि पश्चादसंसृष्टं निनयतीत्युक्तम् । मन्त्रः सर्वोऽप्येक एवेतिकरणेनैकेनैव निर्देशात्प्रयत्नान्तराभावाच्चाऽऽपस्तम्बेन पृथक्प्रयत्नकरणात्तस्यैव तथेष्टं सत्याषाढस्य न । मन्त्रो हि निनयनाङ्गं नाभ्यासाङ्गमतः सकृदेव । न च यावन्निनीतं तावदेव संस्कृतं मन्त्रेणान्यनिनयनार्थं भवितव्यमेव मन्त्रेणेति द्रव्यपृथक्त्वेऽभ्यावर्तेत इति त्रीण्यपि निनयनानि सकलमन्त्रसाध्यान्येवेति वाच्यम् । मुष्टिमानेनैव बर्हिषः स्रुवपूरणेनेवाऽऽज्यस्यात्र पृथगर्थतासंपादकाभावादेकमेव द्रव्यमुपलक्षणम् । अथ देवताभेदात्स्वाहाकारभेदाच्च यत्र मन्त्रगणेन कर्म चोद्यते प्रतिमन्त्रं तत्र जुहुयादिति कर्मभेद इति चेन्न । प्रतिपत्तिकर्मत्वान्न दर्विहोमधर्मः । नाप्येतासां हविर्भाक्त्वं ते देवा आप्त्येष्वमृजतेति श्रुतेस्तासां न देवतात्वं किंत्वधिकरणमात्रं, निनयतिधातोरप्यदानार्थत्वान्मन्त्रे स्वाहा

कारः प्रक्षेपमात्रार्थो न तु दानार्थोऽपि । अत्र भाष्यकारेण पश्चात्पश्चादिति पश्चादपवर्गत्वेन व्याख्यातम् । अपवर्गवाची प्रतीचीनशब्दो न प्रयुक्तः पश्चाच्छब्दस्तु कथमन्यस्तोऽपवर्गं ब्रूयादपवर्गो हि त्रयाणामेकस्तत्र वीप्सा ह्यसंबद्धैव । नच पश्चात्पश्चोद्भाग इति व्याख्येति प्रथमेनासंबन्धात्किमपेक्षया प्रथमः पश्चाद्भवेत् । प्राचीनापवर्गताऽऽपस्तम्बादिभिः साक्षादेवोक्ता, सूत्रान्तराण्येतत्समानार्थानि मदुक्तप्रकारेणैव व्याख्यातानि, कथं भाष्यकारेण व्याख्यातं परिभाषाभावेन तद्विचार्यम् । मन्त्रः सर्वोऽपि बौधायनेनैक एवाङ्गीकृतो देवताश्चोक्ताः कात्यायनेनापि देवतार्थत्वे तु शेषनाशे येन केनाप्युदकेन कार्यं निनयनं देवतानिर्देशश्च प्रतिपत्तिमात्रत्वे तु न प्रतिनिधिर्निनयनलोप एवेति ज्ञेयम् ।

निनीय वाऽभितपति ।

द्वयमेकत्र कृत्वा निनीय पश्चाद्भूमिगतमुल्मुकेनाभितपति । एकतादिदेवतास्तु बौधायनेन व्याख्यातास्तासां नानात्वेऽपि ते देवा आप्येष्वमृजतेति बहुवचनेनैकशेषादुत्पन्नेन परस्परसापेक्षाणामेव देवतात्वं, तथा चैक एव मन्त्रस्तत्रापि पिता पितामहः प्रपितामह इत्येते त्रय इति पक्षेऽपि न प्राचीनावीतं तद्दर्शितमेव परिभाषायाम् ।

अथ वेदिकरणम् ।

अपरेणाऽऽहवनीयं यजमानमात्रीं वेदिं करोति ।

आहवनीयस्य पश्चिमरेखामारभ्य पश्चिमभागे वेदिं करोति । वेदिरिति संस्कारवचनः शब्दस्तेन वक्ष्यमाणसंस्कारैः स्थलं यजमानमात्रं संस्कुर्यात्सा वेदिर्भवतीत्यर्थः । अरत्निचतुष्टयं षण्णवत्यङ्गुलानीति यावत् । शुल्बोक्तप्रकारेण ।

यावदर्थां तिरश्चीम् ॥ २० ॥

करोतीत्यनुकर्षः । यावानर्थः प्रयोजनं यथा(या) सा यावदर्था, तिरश्ची तिर्यग्विस्तीर्णा यावता विस्तारेण हविषां सादनपर्याप्तं स्थलमपेक्षितं तावान्विस्तारः कार्यः । दैर्घ्यं तु यजमानपरिमाणमेव । इदं तस्मा इति याजमानम् । करणमन्त्रोऽयमनाशीर्मन्त्रत्वात्तेन न जपधर्मो मन्त्रान्तेन कर्मसंनिपात एव ।

वेदेन वेदिं विविदुः पृथिवीꣳ सा पप्रथे पृथिवी पार्थिवानि । गर्भं बिभर्ति भुवनेष्वन्तस्ततो यज्ञो जायते विश्वदानिरिति पुरस्तात्स्तम्बयजुषो वेदेन वेदिं त्रिः संमार्ष्टि ।

मन्त्रेणैकवारं सर्वां संमृज्य पुनस्तूष्णीं द्वितीयतृतीययोः पर्याययोः सर्वामेव यावता स्थलेन वेदिर्भवेत्तावत् स्थलं संमार्ष्टीत्युक्तं वेदेरव्याप्यजातत्वात् । पुरस्तात्स्तम्ब

१ ग. °श्चात्पश्चाद्भा° । २ ठ. ड गृहीत्वा ।

यजुष इति ब्राह्मणानुकरणं विकल्पानिरासार्थं, दृश्यते हि विकल्पः सूत्रान्तरे पुरस्तादुपरिष्टाद्वेति। स्तम्बयजुः पुरस्तात्स्तम्बयजुष इति दर्शनात्स्तम्बस्य यजुषा हरणं स्तम्बयजुः। अथवा स्तम्बस्य दर्भावयवस्य ह्रियमाणस्येयं संज्ञा। न चात्रावयवशो व्युत्पत्तिरपेक्षिता रूढत्वादश्ववालशब्दवत्। तत्र पुरस्तात्स्तम्बयजुष इति लक्षणया हरणं लक्ष्यं, यथा बर्हिषा पूर्णमासे व्रतमुपैतीति बर्हिराहरणं लक्ष्यते। चतुःशिखण्डेति याजमानम्।

पूर्वार्धाद्वेदेर्वितृतीयदेशेस्तम्बयजुर्हरति[२]।

स्तम्बेन यजुषा च संयुक्तः पांसुस्तथोक्तस्तं हरति। स्थानविधिरयम्। तत्स्थानमाह—पूर्वार्धादित्यादिना। करिष्यमाणा या वेदिर्यावद्गृहीतं शौल्बमानेन स्थलं तन्मध्ये पूर्वार्धादष्टाचत्वारिंशदङ्गुलपरिमिताद्वेदेर्वितृयीयदेशात्पूर्वार्धेऽपि वेदेर्विगतस्तृतीयो देशो भागः पौरस्त्यो द्वात्रिंशदङ्गुलानि यस्मात्स तथा। वेदेरित्येतत्पदं साकाङ्क्षमपि वितृतीयपदं नित्यमकाङ्क्षत्वात्समस्यते देशपदेन वेदिपदमुभय(?)पूर्वं पश्चाच्च संबध्यतेऽतो वेदेस्त्यक्तपौरस्त्यत्यक्तात्समीपे पूर्वार्धवेदितृतीयभागात्पूर्वार्धान्नतु पाश्चात्यत्यक्ततृतीयभागात्पश्चार्धात्तत्तु प्रोक्षण्यासादनस्थानं वक्ष्यते। द्वात्रिंशदङ्गुलपरिमितात्स्तम्बयजुर्हरेदित्यर्थः। नेदं स्तम्बयजुर्हरणं प्रधानकर्म किंतु गुणकर्म ब्राह्मणे वेदिसंस्कारत्वावगमात्। वेद्याः सकाशात्सतृणपांसुहरणेन तस्याः क्रूरतापगमेन दृष्टः संस्कारो जायते। स्तम्बयजुर्हरणेन वेदिं संस्कुर्यादिति वाक्यार्थो भवति।

देवस्य त्वेति स्फ्यमादाय।

आदद इति मन्त्रशेषस्य संहितायां पठितस्य पूर्वतनेनाभ्रिवपनशेषेणेहानुषक्तेन सह ब्राह्मणव्याख्यातपठितस्य विनियोगोऽयमिति ज्ञापयितुं प्रतीकोपादान एवं पूर्वं संवपामीत्यादावपि ज्ञेयम्।

इन्द्रस्य बाहुर[३]सीत्यभिमन्त्रयते।

स्पष्टम्।

सहस्रभृष्टिः शततेजा इति तस्य दर्भेणाग्रꣳ सꣳश्यति।

तिग्मतेजा इत्यन्तः। स्फ्यस्याग्रप्रदेशं सम्यक्प्रकारेण श्यति तनू करोति तीक्ष्णी करोतीति यावत्। धर्ममात्रमिदं न तु दर्भेण तीक्ष्णी भवति। तेन परितोऽग्रभागमूर्ध्वमुन्मार्ष्टीत्येतावदेवोक्तं मन्त्रब्राह्मणानुसारेण।

पृथिव्यै वर्मासीति प्रागग्रमुदगग्रं वा दर्भं निदधाति।

पूर्वप्रकृतमेव बौधायने दृष्टत्वात्। वितृतीयभागे पूर्वार्धे वेदेरित्यर्थः।

---

१ ट. यजुषो। २ ज. झ. ञ. 'र्धार्धे वेदे'। ३ क ख. ग. घ. 'रसिदाक्षिण इत्यभिमन्त्र्य। स्प'।

**पृथिवि देवयजनीति तस्मिन्स्फ्येन प्रहरति ।**

तस्मिन्दर्भे यथा छिन्नो भवति स्फ्याग्रेणैव तस्यैव संस्कृतत्वात् । मा हिꣳसिषमिति मन्त्रान्तः । यो मा हृदेति याजमानम् ।

**अपहतोऽररुः पृथिव्या इति स्फ्येन सतृणा[1]न्पाꣳसूनपादत्तेऽपाररुं वध्यासमिति वा ।**

अपहतोऽररुः पृथिव्या इत्येतावानेव मन्त्रः । तृणं छेदस्तेन सह खातस्य पांसुं मृदं स्फ्येन स्वीकृत्य न हस्तेन, हस्तेन साहाय्यमात्रं[2] कर्म शक्येऽर्थे केवलेन स्फ्येन ।

**व्रजं गच्छ गोस्थानमिति हरति ।**

स्फ्येनैव वेदेर्बहिरुत्करमिति शेषः ।

**वर्षतु ते द्यौरिति वेदिं प्रैत्यवेक्षते**
**वर्षतु ते पर्जन्य इति यजमानम् ।**

प्रतीक्षत इति पूर्वानुकर्षः ।

**नमो दिवे नमः पृथिव्या इत्युत्तरत**
**उत्तानौ हस्तौ कृत्वाऽऽग्नीध्र उपविशति ।**

उत्करमभिग्रहीतुमुत्तानौ करौ संहतप्रसारिताङ्गुलिकाविति यावत् ।

**प्रक्रमे वेदेर्बधानेति तस्मा उपनिवपति ।**

मामौगिति मन्त्रान्तः । उपनिवपत्यध्वर्युः । आग्नीध्रस्यानन्तरं पुनर्ग्रहणात्तस्मा इति निर्देशादनधिकारः । किमुपनिवपति प्रकृतमुपात्तं स्फ्येन सतृणं पांसुमित्यनुकृष्यते सामर्थ्यात् । कुत्रेत्यपेक्षायामुक्तं प्रक्रमे वेदेः । वेदेरिति पञ्चमी, तस्या उत्तरत इत्याकृष्यते पूर्वतनं कियत्यध्वनि प्रक्रमे पदद्वयेऽतीत इत्यर्थः । किमुक्तं भवति । एतदुक्तं वेदेः पूर्वार्धाद्द्वितृतीयदेशात्स्तम्बयजुराहरणं कृतं तत उत्तरतो वेदेर्बहिर्द्विपदमतिक्रम्यावस्थिते स्थले निवपतीति । अयमेवार्थो विस्पष्टीकृत आपस्तम्बेन—'बधान देव सवितरित्युत्तरतः पुरस्ताद्द्वितृतीयदेश उदग्द्विपदे परिमिते वा वेदेर्निवपति' इति । वेदेरुत्तरतः पुरस्ताद्भागे वितृतीयदेशे वेदेः सकाशाद्द्विपदे तत्समीपस्थल उदङ्मुखो भूत्वा निवपतीत्यन्वयेन व्याख्यातृभिर्दर्शितोऽर्थः । तस्मा आग्नीध्राय मन्त्रार्थमुपदिशन् ।

---

१ क. ख. घ. च. °तृणं पाꣳसुमुपा° । २ क. ख. ग. च. छ. ट. ठ. °त्रं कार्थम (म् ।) र्थ° । ३ क. ख. ग. ग. ढ. प्रतीक्ष° । ४ क. ख. ग. च. करौ । ५ ट. °पदप° ।

कस्मादेवमिति चेत्[१]। उच्यते—बधान देव सवितरिति मध्यमपुरुषेणोपदिश्यमानस्य कर्ता संबोध्यमानमा( आ ? )ग्नीध्रो यतोऽवबाढो दुरस्युरिति प्रतिवक्ता कर्तारमात्मानमावेदयति । तस्मादवबाधनमस्मा उपदिश्यन्नुत्करे निवपति । नो चेत्तस्मा इत्यनर्थकं स्यादुपेति च ।

**स उत्करो भवति ।**

तत्स्थलमुत्करशब्दवाच्यं यत्र निवपति । उत्किरत्यस्मिन्सतृणं पांसुमित्युत्कर इत्यवयवानुसंधानक्रियानिमित्तत्वेऽपि रूढ एवायं शब्द इति दर्शयितुं स इत्युक्तं स एवेत्यर्थः । अयमुत्करप्रदेशः सिद्धो भवति ।

**अवबाढो दुरस्युरित्याग्नीध्र उत्करमभिगृह्णात्यञ्जलिना ।**

उत्करदेशमभिगृह्णाति च्छादयति तमतो मामौगिति मन्त्रलिङ्गात् । व्याख्यातं च ब्राह्मणेन—इत्याहानिर्मुक्त्या इति । यथोत्करे निहितो भ्रातृव्यो न मुच्यते तथा न्युब्जेनाञ्जलिना गृह्णातीति सिद्धोऽर्थः । अत्र भाष्यकृतोक्तमाग्नीध्रस्याञ्जलौ निवपतीति तत्तु सूत्रान्तराभिप्रायेण वैखानसीये तथोक्तेः । परं तु तादृगर्थस्यास्मत्सूत्रादप्रतीतेः सूत्रासंगतत्वादापस्तम्बेनापि कृतव्याख्यासमानार्थतया स्फुटतरमभिधानादुपेक्ष्यमिति मन्यन्तेऽन्ये । आपस्तम्बे हि निवपनपर्यन्तं पूर्वमाग्नीध्रस्याधिकार एव न दर्शितः 'न्युप्तमाग्नीध्रोऽञ्जलिनाऽभिगृह्णाति' इति । अस्मदाचार्यस्य तथैवेष्टम् । यत्पुनः पूर्वमेवोत्तानौ करौ कृत्वाऽऽग्नीध्र उपविशतीति तत्र नाञ्जलिकरणमुक्तमपि भ्रातृव्यस्याञ्जलिना करिष्यमाणेनावबाधनाय । संनद्धेन स्थातव्यमञ्जलिकरणे यथा विलम्बो न भवेत्तथा सन्नद्धे सति भ्रातृव्यस्तम्बयजुषा न्युप्तमात्र एवानिर्मुक्तयेऽभिगृह्यत इति मन्त्रब्राह्मणार्थोऽभिप्रेत इति दर्शितम् । यः कश्चिदतर्कितो दुष्टं निरोद्धुमिच्छति स आयतनहस्त एवाऽऽदौ तिष्ठन्पश्चात्समीपस्थं गृह्णातीति प्रसिद्धिरनुगृहीता च भवति ।

**परिगृह्याऽऽस्ते ।**

अञ्जलिना त्यक्ताङ्गुष्ठसंधानेन हि परितो ग्रहणं नान्यथेति ।

**एवं द्वितीयꣳ हरत्येवं तृतीयम् ।**

अत्र प्रहरतीत्यनेन वेदिसंस्कारेण प्रधानभूतेनाऽऽदानादि पूर्वमङ्गं प्रति परिगृह्याऽऽस्त इत्यन्तमतिदिष्टमेवैवमेवमिति पुनः परस्परमन्त्रे वैलक्षण्यकथनार्थं, तेन नात्र प्रथम एव पर्याय( ये ) मन्त्रोऽपि तु त्रिष्वपि त्रिर्यजुषेति श्रुतेः ।

विशेषमाह—

**मा वः शिवा ओषधयो मूलꣳ हिꣳसिषमिति द्वितीयं प्रहरति ।**

अत्र पृथिवि देवयजनीत्यस्य स्थानेऽयं मन्त्रः । पृथिव्यै वर्मासीति तन्त्रं विभुत्वात् ।

---

१ क. ग. च. छ. ट. °स्परे मन्त्रवै° । ठ. ड. °स्परम° ।

अपहतोऽररुः पृथिव्यै देवयजन्या इति द्वितीयमपादत्ते ।

व्रजं गच्छेत्यादित्रयं पूर्ववत् । न पुनराग्नीध्रस्योपवेशनमुत्तानहस्तकरणं तयोः परिग्रहे व्यापृतत्वात् । बधानेति पूर्ववत् ।

अथाऽऽग्नीध्रः—

अवबाढा देवयजन्या यातुधाना इति द्वितीयमभि गृह्णाति ।

द्वितीयमिति क्रियाविशेषणं पूर्ववदञ्जलिना पुनः परिगृह्याऽऽस्त इति तु समानं चतुर्थपर्यन्तम् ।

अध्वर्युः—

द्रप्सस्ते दिवं मा स्कानिति तृतीयं प्रहरति ।

स्पष्टम् ।

अपहतोऽररुः पृथिव्या अदेवयजन इति तृतीयमपादत्ते ।

व्रजं गच्छेति वर्षतु त इति द्वयं बधानेति पूर्ववत् ।

आग्नीध्रः—

अवबाढोऽघशꣳस इति तृतीयमभिगृह्णाति ।

उक्तम् ।

अध्वर्युः—

तूष्णीं चतुर्थम् ।

अपादानहरणावेक्षणद्वयनिवपनानि तूष्णीमेव ।

मात्र प्रहरणमित्याह—

सर्वं दर्भꣳ हरति ।

अवशिष्टं सर्वम् ।

आग्नीध्रः—

अररुस्ते दिवं मा स्कानिति चतुर्थमभिगृह्णाति ।

नात्र परिग्रहः । आस्त इति निवर्तते । अग्रेऽभिग्रहणाभावात् ।

स्फ्येन वेदिं परिगृह्णाति ।

अध्वर्योरधिकारः । अग्रे करिष्यमाणस्य प्रतिज्ञामात्रं परिग्रहशब्दार्थप्रदर्शनार्थम् । अग्रिमेण कर्मणा वेदिदेशः परिगृहीतः । परितो गृहीतः परिच्छिन्नो दर्शपूर्णमासाङ्गत्वेन कृत इति यावत् ।

वसवस्त्वा परिगृह्णन्त्विति दक्षिणतः प्राचीं लेखां लिखति ।

स्फ्येनेति पूर्ववत् । दक्षिणतो दक्षिणपार्श्वे संनामानुसारेण प्राचीं दक्षिणां श्रोणिमा-

रभ्य दक्षिणांसपर्यन्तं प्राक्समाप्तिं रेखां करोति । प्राचीमित्यर्थसिद्धेऽपि वचनं पूर्वं परिगृह्णातीत्युक्तं ततः सामन्तप्रतीत्या प्रदक्षिणमित्यापतति पारिभाषिकं तन्निवृत्त्यर्थम्। गायत्रेण छन्दसेति मन्त्रान्तः ।

रुद्रास्त्वेति पश्चादुदीचीम् ।

लेखां लिखतीति पूर्ववत् । त्रैष्टुभेन छन्दसेत्यन्तः । सर्वत्र मन्त्रानुसारेणोदीचीमिति स्पष्टार्थकथनं संधानकरणे दक्षिणापवर्गशङ्कानिरासार्थम् ।

आदित्यास्त्वेत्युत्तरतः प्राचीम् ।

पूर्ववज्ज्ञेयम् । रुद्रास्त्वेति क्रियमाणे याजमानं बृहस्पते परिगृहाणेति ।

प्राञ्चौ वेद्यꣳसावुन्नयत्यभित आहवनीयं प्रतीची श्रोणी अभिगार्हपत्यं मध्ये संनता भवति॥२१॥

एतत्सर्वं शुल्बे द्रष्टव्यं व्याख्यानम् । वेदिं परिगृह्णातीति प्राप्ते सामन्तेऽपि प्राञ्चौ वेद्यंसावुन्नयत्यभित आहवनीयमिति वाक्येऽतिस्पष्टा प्रागपवर्गतांऽसयोरुक्ता, तदर्थं प्राचीं लेखां लिखति तया प्राञ्चौ वेद्यंसौ भवत इत्यर्थः । तथैव प्रतीची श्रोणी इत्य- स्यापि संपादनाय पश्चादुदीचीमित्युक्तमिति भावः । अत्रांसयोरुन्नयनदर्शनान्मध्यादे- वोन्नयनं कार्यमिति दक्षिणोत्तरपरिग्रहयोर्मध्यादारम्भ इति भाष्यकृन्मतम् । तत्परितो- ग्रहणविरोधि कथं युक्तम् । मध्ये संनतां संकीर्णाम् ।

इमां नराः कृणुत वेदिमेत्य वसुमतीꣳ रुद्रवतीमा- दित्यवतीं वर्ष्मन्दिवो नाभा पृथिव्या यथाऽयं यजमानो न रिष्यादेत देवेभ्यो जुष्टाम- दित्या उपस्थ इमां देवा अजुषन्त सर्वे- रायस्पोषा यजमानं विशन्त्विति संप्रेष्यति ।

अत्र प्रेष्यतीति वदति न च प्रेष्यं निर्दिशति तथाऽप्युक्तप्रकारेण कात्यायनभार- द्वाजोक्तिभ्यामाग्नीध्रप्रैषो वाऽऽत्मप्रैषो वेति वक्तुं शक्यं तथाऽपि किमत्र प्रेषितेन कार्यम् । इमां नराः कृणुत वेदिमेत्येत्येतावदेव शक्यार्थे प्रतीयतेऽन्यत्सर्वं स्तुति- मात्रं न नरैः कर्तुं शक्यमिति प्रैषकार्यानुपपत्तिरित्यदृष्टार्थे प्रैषधर्मेण मन्त्रजपमात्रं कर्तव्यमित्येव युक्तम् । गां दोहपवित्रे इतिवत् । तथैवाऽऽहबौधायनः—'जपतीमां नराः' इत्यादि ।

अपहतोऽररुः पृथिव्या आ देवयजं वहेति स्फ्येनोत्तमां त्वचमुद्धृत्योत्करे निवपति ।

वेदेरुपरि त्वचं मृदम् ।

**देवस्य सवितुः सव इति खनति देवस्य सवितुः सवे कर्म कृण्वन्तो मानुषा मा वः शिवा ओषधयो मूलꣳ हिꣳसिषमिति वा ।**

वेधस इति पूर्वस्यान्तः । प्रागपवर्गः स्फ्येनैव ।

**अङ्गुलां त्र्यङ्गुलां चतुरङ्गुलाꣳ सीतामात्रीꣳ रथवर्त्ममात्रीं यावत्पार्ष्णये श्वेतं तावतीं वा ।**

खननपरिमाणं निम्नताया द्व्यङ्गुलादि । सीता सीरस्य खनिः, रथस्य चक्रखनिर्वर्त्म । यावत्पार्ष्णये षष्ठ्यर्थे चतुर्थी । पादस्य पश्चाद्भागः पार्ष्णिस्तस्या यावान्भागः श्वेतस्तलसमीपे श्वेतं गुणवचनत्वान्नपुंसकतया(ता)तावतीं वा । खनेदिति सर्वत्र संबध्यते ।

**नैता मात्रा अतिखनति ।**

द्व्यङ्गुलादिपरिमाणं मात्रा मानानि एता मात्रा अतिक्रम्य न खनेत्, अधिकं न खनेदित्यर्थः । ननु कुतोऽधिकताप्राप्तिः सत्सु विधिष्विति चेत् । सत्यं, न्यूनताया अप्यनुज्ञानार्थमिदमुच्यतेऽत एव ज्ञापकात्, एताभ्यो मात्राभ्यो न्यूनता वरं भवतु समता वा परं त्वधिकता मा भूदित्यर्थः ।

**दक्षिणतो वर्षीयसीं पुरीषवतीं प्राचीमुदीचीं प्रवणां करोति ।**

ब्राह्मणानुकरणमेतदर्थवादस्मरणाय । तत्र प्रतीचीनं दक्षिणमिध्यमिति दिग्द्वयप्रवणतानिन्दाप्रदर्शनार्थं तेन प्रयोजनं वक्ष्यते । दक्षिणभागे किंचिदुन्नतां, वृद्धस्य वर्षीयादेशः, पुरीषवतीमुत्कीर्णा मृत्पुरीषं तद्वतीं, खननेन मृद्यथोपर्यागच्छेत्तथा खनेन्नतु स्थलस्य वेधमात्रेण खनेत् । प्राचीमुदीचीमीशानभागस्तेन प्रवणां निम्नां, प्रागुदक्प्रवणामिति वक्तव्ये गुरुनिर्देशेन प्रत्येकमप्यन्वयो यथा स्यात्तेन प्राचीं प्रवणामुदीचीं प्रवणां प्राचीमुदीचीं प्रवणामिति विकल्पत्रयं, तृतीयस्य संभवार्थं वाशब्दो नोक्तो विरोधाद्विकल्पः स्वयमेव भविष्यतीति दर्शयितुम् । अत एवाऽऽपस्तम्बः—'प्राक्प्रवणां प्रागुदक्प्रवणां वा ' इति ।

**यन्मूलमतिशेते स्फ्येन तच्छिनत्ति ।**

मूलमोषधीनामतिरिच्यते तत्स्फ्येन छिनत्ति ।

**यत्पुरीषमतिरिच्यत उत्करं तद्गमयति ।**

प्रवणताकरणे समीकरणे च यत्पुरीषमतिरिक्तं तन्न प्रदेशान्तरं नयेदपि तु तद्बहिरुत्कर एव त्याज्यमित्यर्थः ।

**आहार्यपुरीषां पशुकामस्य ।**

पशून्कामयते यो यजमानस्तस्य दर्शपूर्णमासयोः सकृदाहार्यपुरीषां वेदिमध्वर्युः कुर्यात् । अन्यतो मृदमानीय वेदिमध्ये निनयेत्साऽऽहार्यपुरीषा ।

तत्प्रकारमाह—

यत्प्राक्खननात्तत्कृत्वा मन्त्रेण पुरीषं खात्वा हरति ।

स्थलान्तरे देवस्य सवितुः सव इति खात्वा तत्पुरीषमखातायां वेद्यामाहरेदित्यर्थः । यजमानेन पशुकामो वेदिमाहार्यपुरीषां करिष्य इति कृते संकल्पे खननेन पुरीषमाह-स्याऽऽहार्यपुरीषां कुर्यात् ।

अत्र पौर्णमास्यां वेदिं करोति ।

सिद्धे सत्यारम्भो नियमायेति न्यायात्पौर्णमास्यामत्रैव वेदिं करोत्यमावास्यायां त्वत्र पूर्वेद्युर्वेति फलति । एतज्ज्ञापयितुमेव पूर्वं नोक्तं वेदकरणानन्तरं बर्हिराहरणात्पूर्वं वा तत्राभिधानेन तत्रैवामावास्यायां वेदिः स्यान्नात्रापि तदर्थमेवोक्तं तत्रैतत्कृत्वोपवस-त्यमावास्यायामितिकर्तव्यत्वेनोक्तमेव कृत्वेति तत्र वेदिकरणस्यानभिधानात्तत्कार्यमिति तत्रैव विवृतं ज्ञेयम् । तावदेव कृत्वेत्यस्मिन्पक्षे सत्येवेदमारभ्यते यं(?)विकल्पद्वयम् ।

पूर्वेद्युरमावास्यायाम् ।

करोतीत्यनुवर्तते । तत्र वेदं कृत्वा वेदिं करोतीति श्रुतेर्वेदेन विना वेदेः कर्तुमशक्य-त्वाद्यथास्थानस्थितं वेदमपेक्ष्यानन्तरमेव करोति स्थानविशेषोऽत एव नोक्तोऽस्मिन्पक्षे सामर्थ्यादेव तत्सिद्धेरिति भावः ।

पक्षान्तरमाह—

पुरस्ताद्बर्हिष आहरणात् ।

अत्र पक्षे वेदं स्थानादपकृष्य सामर्थ्येन पूर्वं कृत्वा पश्चाद्वेदिं तथा बर्हिरिध्मस्त-तोऽन्तर्वेदीत्यादिशाखापवित्रकरणादि पूर्ववत् । पक्षद्वयभेदकवाशब्दाभावेऽपि प्रमाणमु-पन्यस्तं न विस्मरणीयम् ।

पूर्वेद्युर्वेदिकरण उत्तरपरिग्राहे ब्रह्मण आमन्त्रणानुज्ञापक्षे कथं वेदिः स्यादत आह—

यत्प्रागुत्तरस्मात्परिग्राहात्तत्पूर्वेद्युः

करोति सह वोत्तरेण परिग्राहेण ।

अन्यदुत्तरपरिग्राहप्रभृत्याप्यलेपनिनयनानन्तरं विकृतिविशेषे सद्यस्काले पूर्वव्रतब्रह्मके कर्मण्यामिक्षादौ सह वेत्ययं पक्षः । अथ वा विनैवाऽऽमन्त्रणानुज्ञाभ्यामुत्तरपरिग्राहः ।

प्रकृतमाह—

ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामीत्यामन्त्र्य परिगृह्णाति ।

प्रणव उक्ते करोतीत्युक्तमेव ।

विपरीतमेके समामनन्ति मन्त्रैः पूर्वं परिग्राहं यजुर्भिरुत्तरम् ।

यैर्मन्त्रैर्वसवस्त्वेत्यादिभिः पूर्वपरिग्राहोऽस्मच्छाखायामुक्तस्तैरुत्तरपरिग्राहं समाम-नन्ति यजुर्भिर्ऋतमसीत्यादिभिरुत्तरपरिग्राहो वक्ष्यतेऽन्यैः शाखिभिस्तैः पूर्वपरिग्राह

१ क. ग. च. छ. ट. ठ. ड. °ह—प्रागु° । २ क. ग. च. ठ. ड. °न्य उत्त° ।

इति विपरीतम् । यद्यप्युभये मन्त्रास्तथाऽपि यजुःशब्देनोत्तरेषां व्यवहारो ब्राह्मणेऽस्ति यथायजुरिति, तेनैव शब्देनोक्तेषु यजुष्षु कृतो मन्त्रशब्दः सामान्यवाच्यपि द्विपादबद्धत्वेन त्वृक्परतया वसवस्त्वेत्यादिषु प्रयुक्तो विशेषपरः । अत्राऽऽहुरग्रे विकृतिषु यत्रानन्नावेव पूर्वपरिग्राहो गृह्यते तत्र तदुच्चारणयैव क्रमो ग्राह्य इति । अन्यथा वसवस्त्वेत्यादिमन्त्रविनियोजकब्राह्मणवाक्यशेषो विरुध्येत । तथाहि—तेऽग्निना प्राञ्चोऽजयन्वसुभिर्दक्षिणा रुद्रैः प्रत्यञ्च आदित्यैरुदञ्च इति दिक्क्रमे मन्त्रसंबन्धार्थमयमर्थवादः, पुरस्तादग्निनैव जय इत्युक्तं तदग्निवति विहारे पशुवरुणप्रघासादौ विरुध्येतात उक्तं विपरीतमिति, यजुषां ब्राह्मणलिङ्गयोः पूर्वपरिग्राहेऽविरोधेन शाखान्तरीयक्रमो ग्राह्य इत्यर्थः । अनेन मननत्राणधर्मत्वेन मन्त्रशब्दप्रयोजनमप्युक्तं ते वसवस्त्वेति दक्षिणतः पर्यगृह्णन्निति मन्त्रैरेव भ्रातृव्येभ्यस्त्राणस्य ब्राह्मणेऽभिधानात्ते मन्त्रा उत्तरपरिग्रहार्था अन्यशाखिनामिति । तदिदमसमञ्जसम् । पूर्वपरिग्राहो हि पृथिव्या भ्रातृव्येभ्यः प्राप्तये जातो मन्त्रैस्तस्या अप्राप्तौ यजुर्भिः परिच्छेदनमात्रार्थैर्मन्त्रकार्यं कर्तुमशक्यमेवेति पुनर्विरोधस्तदवस्थ इति नार्थवादेन विरोधः संपादनीयः । तस्मात्प्रकृतिषु समविकल्प एवेति युक्तं तथा विकृतिष्वपि ।

ऋतमसीति दक्षिणत ऋतसदनमसीति पश्चादृतश्रीरसीत्युत्तरतः ।

परिगृह्णातीत्या ( त्यनु ) वर्तते । अयं स्वशाखाक्रमः । परिग्राहशब्दौ यौगिकयौ संज्ञे ।

धा असि स्वधा असीति स्फ्येन प्रतीचीः संमार्ष्टि ।

धासीत्यन्तः । वेदिमिति शेषः । प्रत्यगपवर्गां समी करोति । अत्र भूमिर्भूत्वेति धानमानम् ।

पुरा क्रूरस्येत्यभिमन्त्रय ।

वेदिमिति शेषः । यजन्त इति मन्त्रान्तः ।

पश्चार्धे वेदेर्वितृतीयदेशे स्फ्यं तिर्यञ्चः स्तब्ध्वा प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचश्च संमृड्ढि पत्नीः संनह्याऽऽज्येनोदेहीति संप्रेष्यति ।

पश्चार्धं पूर्वार्धेन व्याख्यातम् । वितृतीयभागोऽपि न्यूनः पाश्चात्य एव पश्चार्धस्य कार्यः पश्चार्धशब्दसामर्थ्यात् । प्रथमे तृतीयभागानन्तरमेव स्फ्यं मध्यमे भागे वा स्थितमुदगग्रं हस्तेन स्थले स्थिरं धृत्वा संप्रेष्यति । यजुर्वेदेनाध्वर्युरिति परिभाषितत्वाद्वासादनादिकं सर्वमध्वर्युणैव कार्यम् । संप्रैषोऽपि, न चान्यस्य प्रेष्यस्य वचनमस्ति

येन वचनलक्षणा इतर इति प्राप्नुयात् । न हि निर्देशोऽस्ति लिङ्गेन ब्राह्मणेन वा यथाऽग्नीदग्नीन्विहरेति यथा वाऽऽग्नीध्रं संप्रेष्यतीति । नापि संभवः प्राप्तकाल-तयाऽऽत्मानं प्रत्येव प्रैषेण संस्कारजनकत्वसंभवात् । आत्मानं प्रत्येव प्रैषदर्शनं लिङ्गानि चोपपादितानि न विस्मर्तव्यानि ।

नाऽऽचार्यस्येष्टमन्येन कार्यमित्यन्यसूत्रतः ।
दृष्ट्वा प्रायोगिका आहुरग्नीत्कर्मेति कौशलात् ॥
उपेक्ष्यमेतत्पूर्वोक्तन्यायैः सूत्रान्तरैस्तथा ।
विरोधादेवमन्यत्र ज्ञेयः प्रैषस्य निर्णयः ॥

इध्माबर्हिरितीध्मस्य प्रथमनिर्देशोऽजाद्यदन्तत्वेन क्रमनियमार्थो दक्षिणमिध्ममुत्तरं बर्हिरिति क्रमविधानात् । अनेकपत्निकस्यापि पत्नीं संनह्येत्यविकृतम् । न हि प्रकृतावूहोऽस्तीति वक्ष्यत्याचार्यः । मन्त्रस्य सर्वप्रकृत्यर्थत्वेनाविशेषेण प्राप्तस्य पत्नीपदेन जात्याऽपि नानापत्नीप्रत्यायनसंभवान्न बाधोऽपि प्रातिपदिकमविरुद्धमेक-वचनमुद्देश्यगतमविवक्षितं च ।

तत्र प्रोक्षण्यासादनप्रकारमाह—

अग्निहोत्रहवण्यां पवित्रान्तर्हितायामप आनी-
योदञ्चꣳ स्फ्यमपकृष्यान्तर्वेदि धारयन्स्फ्यस्य
वर्त्मन्नुपनिनीयतत्सधः स्थेति स्फ्यपदे सादयति ।

यत्राग्निहोत्रहवणी तिष्ठत्यत्रैव तस्यां पवित्रे अन्तर्धायाप आनीय तत्र गमनाय स्फ्यं स्तब्धस्थाने विहायाप आनीयोदगपवर्गं तिर्यञ्चमेव स्फ्यमपकृष्य वर्त्म कुर्वन्निरो-त्तरतः किंचिदपनीय तं वामहस्तेन धारयन्नन्तर्वेद्यां दक्षिणेनाग्निहोत्रहवणीमादाय तद्गता अपः किंचित्पूर्वकृते स्फ्यवर्त्मनि निनीय स्रावयित्वाऽसंस्पृष्टा[1] उपनिनीयेत्या-पस्तम्बोक्तेः स्फ्येनासंस्पृष्टा[2] निनीय प्रैषावसरे तिर्यक्स्फ्यस्तम्भनस्थानं स्फ्यस्य पदं तत्राऽऽसादयति मन्त्रेण ।

यं द्विष्यात्तं ध्यायेत् ।

यं यजमानो द्वेष्टि तमध्वर्युर्ध्यायेत्तस्य स्वरूपेण तच्छब्देन वा मनसा ध्यानं कुर्यादारादुपकारकमिदम् । यद्यपि यं द्विष्यात्तं ध्यायेदिति ब्राह्मणे शुचैवैनमर्पयतीति वाक्यशेषस्तथाऽपि सा (सोऽ)र्थवाद एव नत्वाभिचारिकत्वमाहेत्येवं तस्यार्थ-वादस्यापाठेन दर्शितम् । यथा कामपदाभावे फलपदमर्थवाद एवमभिचरन्निति-पदाभावेऽपि वैरिप्रतिकूलार्थप्रत्यायकपदमप्यर्थवाद एव न तु वैर्यनिष्टप्रयोजन-

१ क. ट. °संसृष्टा । २ क. °संसृष्टा ।

त्वायेति सर्वत्र ज्ञेयम् । शत्रोरभावे पाप्मैव शत्रुः प्रतिकूलत्वात्पाप्मानमेव भ्रातृव्यम॰ पहन्तीति लिङ्गाच्च ।

शतभृष्टिरसि वानस्पत्यो द्विषतो
वध इत्युत्करे स्फ्यमुदस्यति ।

उत्करप्रदेशे स्फ्यं त्यजति किंचिद्दूरत एवोर्ध्वं मुञ्चति यथा मुक्त उत्करे पतति तथोदस्यति ।

पुरस्तात्प्रत्यञ्च स्थविमत उपोहति ।

स्फ्यमुत्करे निरस्तमादायोत्करस्य पूर्वदिश्युत्कराभिमुखं स्थूलप्रदेशान्मुष्टिप्रदेशे धृत्वा कर्षति ।

नानवनिज्य हस्तौ पात्राणि परा॰
हृण्यान्न वेदिं परिमृशत्यास्तरणात् ।

हस्तावप्रक्षाल्य पात्राणि न संस्पृशेन्न च वेदिमास्तरणात्प्रक्षाल्यापि हस्तौ स्तरणा॰ त्पूर्वं वेदिं न स्पृशे[1]दिति सामर्थ्यात् । अन्यथा स्तरणात्पूर्वमेव प्रक्षालनं विधायानेकानि कर्माणि विहितानि वेदिस्तरणमिति कः प्रसङ्गोऽप्रक्षालितहस्तस्य स्तरणात्पूर्वं वेदिसंस्पर्शे ।

हस्ताववनेनिक्ते स्फ्यं प्रक्षालयति नाग्रं परिमृशति ।

पूर्वं धातुद्वयमेकार्थं तथाऽपि भिन्नगौ श्रुत्यनुकरणार्थौ स्फ्यप्रक्षालनसमये नाग्र॰ मागं हस्तेन स्पृशति प्रक्षालनप्रतिषेधो नाग्रस्य किंतु स्पर्शनमात्रप्रतिषेधः । अन्यथाऽ॰ ग्रवर्जं स्फ्यं प्रक्षालयतीत्येव लाघवेन ब्रूयात् । अनेनेतरभागप्रक्षालनं नोदकधारामा॰ त्रेण कार्यमपि तु हस्तेनापि मलापकर्षणमपि कार्यमित्यर्थः ।

उत्तरेण प्रणीता इध्माबर्हिरुपसादयति
दक्षिणमिध्ममुत्तरं बर्हिः ॥ २२ ॥

इति हिरण्यकेशिसूत्रे प्रथमप्रश्ने षष्ठः पटलः ॥ ६ ॥

---

प्रथममिध्माबर्हिरिति समस्तग्रहणं सहोभे आनीय दक्षिणोत्तरभावेन हस्तद्वये॰ नाऽऽसादयति सहैवेति गम्यते ।

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां प्रयोगवैजयन्त्यां महादेव॰
कृतायां प्रथमप्रश्ने षष्ठः पटलः ॥ ६ ॥

---

[1] ख. 'नि तत्र कः ।

अथ सप्तमः पटलः ।

---

**वेदप्रान्तैः स्रुवꣳ स्रुचश्च सह संमार्ष्टि ।**

वेदस्य परिवासिता अग्रभागाः प्रान्तास्तैर्बौधायनोक्तपक्षानङ्गीकार उक्तस्तत्रैकैकपदार्थस्य संमार्गप्रोक्षणनिष्टपनादिना काण्डानुसमय उक्तः । स्वयं तु पदार्थानुसमयं दर्शयितुं सहेत्याह । प्राशित्रसहभावोऽपि प्रत्युक्तः । न ह्येषां सह संमार्गः संभवति प्रातिस्विकनियतधर्मत्वात् । वक्ष्यमाणस्य प्रतिज्ञेयं, संमार्गस्य प्रकरणे यावदुक्तं तावत्तदङ्गमिति ज्ञापनेन यत्र संमार्गस्तत्रैते धर्मा इति नियम उक्तः ।

**प्रतिविभज्याप्रतिविभज्य वा ।**

वेदप्रान्तानिति द्वितीयान्तत्वेन परिणतमनुवर्तनीयम् । यावन्ति पात्राणि संमार्जनीयानि तावतो विभागान्कृत्वा तेनैकैकेन संमार्ग एकैकस्य सहाग्नौ प्रहरणमन्ते सर्वेषां पशुबन्धेऽयमेव पक्षः प्रहरणं त्वनेकश इति विशेषः । अविभज्य वेति समुदितैः संमार्ग इत्यर्थः ।

**उत्तानास्तिरश्चीर्वाऽपि वा द्वे उत्ताने उपभृतं तिरश्चीम् ।**

स्रुचामेवायं धर्मः संमार्गसमय उत्तानास्तिस्रः पार्श्वबिला वा जुहूध्रुवे उत्ताने । अपि वेति समुदायो वार्थे ।

**अनिशिताः स्थ सपत्नक्षयणीरित्यभिमन्त्र्य ।**

स्रुवादिचतुष्टयं, स्रुचां भूयस्त्वात्स्त्रीलिङ्गेन मन्त्रनिर्देशः । सकृन्मन्त्रः ।

**घृताचीरेताग्निर्वो ह्वयति देवयज्याया इत्यादाय ।**

चतुष्टयं तन्त्रेण संभवाद्धस्तद्वयेन । बौधायनवैखानसोक्ता दक्षिणेन स्रुवं जुहूपभृतौ सव्येन ध्रुवामिति व्यवस्था न विरुध्यते ।

**प्रत्युष्टमित्याहवनीये गार्हपत्ये वा निष्टपति ।**

निष्टपामीत्यन्तः । तन्त्रेण न्यञ्चीर्न्युब्जास्तपति, सकर्मकस्य रूपं किंचितसाः करोतीत्यर्थः ।

**गोष्ठं मा निर्मृक्षमिति स्रुवमग्रैरन्तरतोऽभ्याकारꣳ सर्वतो बिलमभि संमार्ष्टि मूलैर्दण्डम् ।**

संमार्ज्मीति मन्त्रान्तः । स्रुवं संमार्ष्टीत्यन्वयः । अग्रैरन्तरतः परिवासनदर्भाणां त्रेधाऽवयवा अग्रमध्यमूलानि । स्रुवे तु मध्यवर्जं विनियोगः । अन्तरतः सप्तम्यर्थे तसिल् । बिलावकाश उत्कीर्णेऽग्रैः । कथमभ्याकारम् । आभीक्ष्ण्ये णमुल् । पुनःपुनरित्यर्थः । पुनरग्रैः, कुत्र, सर्वतो बिलमभि । सर्वतो बिलस्य बहिर्भागेषु बिलमभिमुखं

---

१ क. ग. घ. ट. ठ ङ. °भृति ति° ।

पार्श्वभागे संमार्गमेकैकमारभ्य बिलावकाश एव समाप्तिः कार्येति भावः। बिलावकाशमेव पुनः पुनरन्यत्र सकृदेव संमार्ष्टि। यदीष्टं सर्वत्रापि पौनःपुन्यं भवेत्तदा स्रुवमभ्याकारमिति पठेदविशेषेण स्रुवसंबन्धार्थम्। तस्मादन्तरत इत्येव संबन्धोऽभ्याकारमित्येतस्य। एवं च दृष्टार्थताऽभ्यासस्य स्यादन्तरतो रजोनिर्मार्जनं पौनःपुन्येनैव नान्यथा भवति तत्र न संख्यानियमोऽपि विवक्षितः। अदृष्टार्थत्वे तु त्रित्वविवक्षा स्यात्तदा त्रिरित्येव ब्रूयाल्लाघवादतो दृष्टप्रयोजनोऽभ्यासोऽवकाशसंमार्ग इति स्थितमन्यत्र सकृदेव। दृष्टार्थत्वाच्च सर्वावयवव्याप्त्यर्थमभ्यासः कार्य एव नत्वेकत्रेति च सिद्धम्। मूलैर्दण्डं स्रुवस्य दण्डं परिवासनमूलैः प्रागपवर्गं मूलमारभ्य कण्ठपर्यन्तं सकृत्संमार्ष्टि बिलस्य तु मध्ये बहिश्च पूर्वमेव जातत्वात्। अत्र स्रुवमेकमेव द्रव्यं प्रकृत्य विहिते संमार्गे प्रथमतः सकृदेव मन्त्रो यत्रैकस्मिन्द्रव्ये विचेष्टापृथक्त्वेनार्थो निष्पद्यते सकृदेव[तत्र] मन्त्रं ब्रूयादिति परिभाषितत्वात्। न च तदपवादो द्रव्यपृथक्त्वेऽभ्यावर्तेत इति प्रवर्तते, स्रुवस्य संसर्गिद्रव्यत्वाभावात्। संसर्गिद्रव्यं हि बर्हिराज्यादि जात्या क्रोडीकारेणैकद्रव्यत्वाद्व्याख्यातं तत्रैवात्राविस्मरणाय विवृतं पुनः। स्रुचामपि मूलमारभ्यैव दण्डस्य पात्रपर्यन्तं प्रागपवर्गं संमार्गः कार्यः सर्वसूत्रेषु प्रकारान्तरस्यादृष्टचरत्वात्। यद्यपि केचन व्याख्यातारो ब्राह्मणे लिङ्गप्रदर्शनेन दण्डमधस्तात्प्रत्यगपवर्गमुपरिष्टात्प्रागपवर्गं संमार्ष्टीति व्याचक्षते तदन्ये नात्यन्तमनुमन्यन्ते, प्राङ्न्यायोदङ्न्याययोर्बाधकस्य प्रमाणस्याभावात्। यद्यपि ब्राह्मणं तस्मादरत्नौ प्राञ्च्युपरिष्टाल्लोमानि प्रत्यञ्च्यधस्तादिति लिङ्गमुपपादयन्ति तदपि न, यतोऽयं जुहूसंमार्गे पात्रस्योपरिष्टादधस्ताच्च संमार्गौ क्रमेण प्राचीमभ्याकारमिति तथाऽधस्तात्प्रतीचीमिति प्रागपवर्गप्रत्यगपवर्गौ विहिताविति तयोस्तथात्वोपपादनायार्थवादो न तु स्रुग्दण्डेषु प्रत्यगपवर्गप्रागपवर्गताप्रतिपादनायार्थवादस्तत्प्रकारस्याविधानात्, अन्यार्थादर्थवादादन्यत्र विधिकल्पने प्रमाणाभावान्न्यायविरोधाच्चेत्यास्तां तावत्। अरत्न्युपमानेन दण्डे प्राप्तिरित्यपि न। बाहुमात्रीषु स्रुक्षु त्वरत्नेः पात्रस्थानत्वात्। अरत्निमात्रत्वेऽपि पात्रमरत्नेरुत्तरार्धमात्रमिति संभवत्येव। प्राग्लोमप्रत्यग्लोमारत्निसाम्यं पात्रस्यापीत्यलमतिप्रयासेन। भाष्येऽप्येवं प्रागपवर्गता न बाधितैव।

**वाचं प्राणमिति जुहूं प्राचीमग्रैरन्तरतोऽभ्याकारं प्रतीचीं मध्यैर्बाह्यतो मूलैर्दण्डम्।**

अत्र मन्त्रवाक्ये क्रियापदाभावादिषे त्वादिमन्त्रवत्क्रिया लक्षणीयाऽथवाऽनुषङ्गो वा कार्यः। तत्रानुषङ्गस्य श्रौतत्वात्स एव युक्तः। तत्र पूर्वतनस्यायोग्यत्वादाग्रिम एवानुकृष्यते स्त्रीलिङ्गकर्मकः। स च मा निर्मृक्षं वाजिनीं त्वा सपत्नसाहीꣳ संमार्ज्मीति। चक्षुः श्रोत्रमित्यत्राप्ययमेव ज्ञेयः। संमार्ष्टीति पूर्वस्मादनुवृत्तेन जुहूमित्यन्वयः।

अन्तरतः प्राचीमभ्याकारमग्रैः प्रागपवर्गां बिलमारभ्याग्रपर्यन्तं व्याख्यातमन्यत् । प्रतीचीं बाह्यतो मध्यैः पात्रमेव बाह्यतस्तस्यैवान्तरत इति प्रकृतत्वात् । संमार्गदर्भमध्यभागैः प्रतीचीमग्रादारभ्य पात्रदण्डसंधिपर्यन्तं मूलैर्दण्डमिति प्राग्वत्प्रागपवर्गमेव ।

**चक्षुः श्रोत्रमित्युपभृतं प्रतीचीमग्रैरन्तरतोऽभ्याकारं प्राचीं मध्यैर्बाह्यतो मूलैर्दण्डम् ।**

अग्रादारभ्य प्रतीचीं संधिमारभ्याग्रपर्यन्तं प्राचीं व्याख्यातमन्यत् ।

**प्रजां योनिमिति ध्रुवां यथा स्रुवम् ।**

संमार्गाग्रैर्बिलान्तरतोऽग्रैरेव बहिरपि दण्डसंधिमारभ्य पृष्ठतोऽग्रपर्यन्तमानीय प्रणाल्याऽऽनीय बिल एवापवर्गः । एवं दक्षिणपार्श्वोत्तरपार्श्वयोरपि बिल एवापवर्गः, मूलैर्दण्डं पूर्ववत् । नात्र दर्भमध्यविनियोगः । एवं च बिले सर्वत्राभ्यासो नियतोऽन्यत्र धर्ममात्रं सकृन्मन्त्रः प्रतिपात्रमिति संक्षेपः ।

**न संमृष्टां चासंमृष्टां च सꣳसृजति ।**

अत्र स्रुङ्मात्रे संमृष्टासंमृष्टसंसर्गप्रतिषेधेऽपि सर्वपात्रविषयत्वेनाऽऽपस्तम्बेनोक्तेन संमृष्टान्यसंमृष्टैरिति विधानात्तथाऽस्माकमपि ज्ञेयम् । संसर्गे पुनर्निष्टपनं संमार्ग इति कल्पान्तरेषु सर्वप्रायश्चित्तं स्वसूत्रे ।

**निष्टपति यथा पुरस्तात् ।**

निष्टपनस्याऽऽदानपूर्वकत्वाद्धृताचीरेतेत्यादाय प्रत्युष्टमिति निष्टपति ।

**अन्नाद्यं प्रजां पुष्टिं मा निर्मृक्षं वाजि त्वा सपत्नसाहꣳ संमार्ज्मीति प्राशित्रहरणꣳ सर्वतो बिलमभि संमार्ष्टि मूलैर्दण्डम् ।**

तूष्णीके आदाननिष्टपने मन्त्रलिङ्गस्य बहुवचनस्य विरोधात् । यत्र यत्र पात्रसंमार्गस्तत्र तत्र पूर्वपश्चिमाङ्गानीति दर्शितं मन्त्रमात्रसाध्यमभिमन्त्रणं निवर्ततेऽभिवर्जं[1] लिङ्गविरोधात् । अग्रैरन्तरतोऽभ्याकारमिति पूर्ववदनुक्तत्वान्नास्त्येव । यदि तथा स्यात्तदा स्रुववदिति लाघवेन वदेत् । तस्मादग्रैः पृष्ठत आनीय बिलेऽपवर्गः, पार्श्वयोरपि ध्रुवावदेवान्तरतोऽभ्याकारमितिवर्जम् । मूलैर्दण्डं पूर्ववत् । अत्राऽऽपस्तम्बोक्तो विशेषो ग्राह्योऽस्मत्सूत्रेऽनभिधानात्प्रोक्ष्याग्रेणोत्करं दर्भेषु सादयति जघनेन वेति । बौधायनेनाप्यग्रेणोत्करं तृणेषु सादयित्वेत्युक्तं, स्रुचः प्राशित्रहरणं निष्टप्योत्तरतो वेदिश्रोण्यां निदधातीति वैखानसेनोक्तं, ततस्तु प्रोक्षणं कृताकृतं क्वाप्यासादनं त्ववश्यंभावि ।

१ ख. °ते निवर्तेति° ।

**दिवः शिल्पमवततं पृथिव्याः ककुभिः श्रितम् ।**
**तेन वयꣳ सहस्रवल्शेन सपत्नं नाशयामसि स्वाहेति**
**संमार्गानभ्युक्ष्याग्नावादधाति यतरस्मिन्संमार्ष्टि ।**

स्रुक्संमार्जनानीत्येव विशेषोपादानं कृतं तथाऽपि विभक्तानि स्रुवप्राशित्रसंमार्जनान्येकीकृत्याऽऽदधाति । विभागाभावे तु तच्छब्दोपलक्षितानि सर्वाण्यपि अभ्युक्ष्याद्भिर्यत्राग्नौ संमार्गस्तत्राऽऽदधाति । यतरस्मिन्निति सामीप्यसप्तमी नह्यग्नौ पात्रसंमार्गोऽस्ति । तूष्णीमभ्युक्ष्य मन्त्रेणाऽऽदधाति प्रधानार्थत्वान्मन्त्रस्य । प्राजापत्यर्चेति ब्राह्मणेन विधानात्प्राजापत्यो वै वेद इत्यर्थवादाच्च प्रजापतय इदमिति याजमानमिति, तन्न, प्रजापतेर्मन्त्रलिङ्गादप्रतीतेर्नात्र देवतानिर्देशः प्रतिपत्तिधर्मत्वाच्च । अत्र बौधायनः—अथैतां पत्नीमन्तरेण वेद्युत्करमभि प्रपाद्येति प्रविष्टा पत्नी । आपस्तम्बः—अपरेण गार्हपत्यमूर्ध्वज्ञुमित्यादि । बौधायनो जघनेन दक्षिणेन गार्हपत्यमुपवेश्येति । तस्मात्क्रमविरोधि ग्राह्यम् ।

**आशासाना सौमनसमिति मौञ्जेन योक्त्रेणान्यतरतः-**
**पाशेन पत्नीꣳ संनह्यत्यूर्ध्वज्ञुरासीना तिष्ठन्ती वा ।**

सुकृतायकमिति मन्त्रान्तः । मुञ्जतृणैर्निर्मितं मौञ्जं, योज्यते नह्यते येन रज्जुविशेषेण मूलेऽग्रे वा कृतपाशेन पत्नी संनह्यते बध्यते, ऊर्ध्वे जानुनी यस्याः सोपविष्टेति विशिष्ट एकः पक्षो द्वितीयस्तु स्थिताऽनुपविष्टैव । अत्र पत्नीति प्रथमा कर्तरि तदा संनह्यत इत्यात्मनेपदं कर्तर्येव, कर्म त्वध्याहार्यमात्मानमिति, तदा पत्नीं संनह्य(ह्यती)ति परस्मैपदं पत्नीमिति द्वितीयाविभक्तिश्च विरुध्यते । अथ संनह्यत इति कर्मणि प्रत्ययस्तदाऽऽशासानेत्यादिसमानाधिकरण उत्तमपुरुषो विरुध्येत । आध्वर्यवं त्वनुगृहीतं, लिङ्गं तु 'आशासाना सौमनसमित्याह । मेध्यामेवैनां केवलीं कृत्वा । आशिषा समर्धयति'। इति ब्राह्मणं, मन्त्रार्थभूतफलसंपादनमृत्विक्कार्यमेवेति गमयति ब्राह्मणे । तदर्थमुत्तमपुरुषानुगुण्याय मन्त्रप्रयोगः पत्न्या ऋत्विक्कर्तृत्वनिर्वाहाय प्रयोजककर्तृत्वमृत्विज इति । तदेवं न्यायेन सिध्यतीति मत्वाऽनेन ब्राह्मणानुकरणेन सूत्रं रचितमाचार्येण । आपस्तम्बस्तु वाचयतीत्येकेषामित्युक्तवान् । भाष्यकृता तु मन्त्रपाठः पत्न्या उक्तः संनहनमृत्विजा तदाऽपि समर्धयतीति न समञ्जसम् । अन्यः कर्ताऽन्येन करणमन्त्रोच्चारणमित्यपि न समञ्जसम् । तस्मादापस्तम्बोक्तशाखान्तरीयो विशेषविधिरेव युक्तो वाचयतीति । ऋत्विग्मन्त्रेण वाचनद्वारा संनह्यति मन्त्रेण वाचितेन करणभूतेन स्मृतिस्तया संनहनं साक्षादनेनर्त्विजा संनह्य सुकृतायेति पत्न्युक्तेनर्त्विक्पत्नीसंनहनसंबन्धप्रतिपाद-

१ क. ख. ग. च. छ. ट. ठ. ण. 'ति स्रुक्संमार्जनान्यभ्यु°।

नात्। पत्नीमपि तेनैव प्रयत्नेन वाचयति, तेन न सूत्रब्राह्मणे विरुध्येते अपि तूपस्कृते इत्यलं पक्षान्तरैः।

न वासोऽभि संनह्येत्।

वस्त्रमभिलक्षीकृत्योपरि न संनह्येत्। स्त्रीसंनहनं यद्यपि परिहितवस्त्रस्योपरि न प्राप्नोत्येव तथाऽपि शाखान्तरीयविशेषविधिना प्राप्तप्रतिषेधाद्विकल्पः। आपस्तम्बेन तु विकल्प एव दर्शितः। संनह्येदिति परस्मैपदं प्रयोजककर्तृसापेक्षम्।

पूषा ते ग्रन्थिं ग्रथ्नात्वित्युत्तरतो नाभे-
र्निष्टर्क्यं ग्रन्थिं कृत्वा स ते मा
स्थादिति दक्षिणतो नाभेः परिकर्षति।

पूषेति नाभेरुत्तरभागे ग्रन्थिं कृत्वा, निष्टर्क्यमिति व्याख्यातं शिखाग्रन्थिकरणवत्तन्न विस्मरणीयम्। तं ग्रन्थिं स त इति नाभेर्दक्षिणभागे परिकर्षणेनाऽऽनयति। पत्नीसंस्कारत्वादनेकाहिताग्निपत्नीः प्रत्यावर्तते संनहनमेकत्वस्याविवक्षितत्वात्प्रतिप्रधानमावर्तते।

अग्ने गृहपत उप मा ह्वयस्वेति
॥२१॥तिष्ठन्ती गार्हपत्यमुपतिष्ठते।

यदाऽऽसीना संनद्धा तदोत्थायोपतिष्ठते। न चोपतिष्ठत इत्यत एवोत्थानं सिद्धमिति वाच्यम्। उपान्मन्त्रकरण इत्यात्मनेपदविधानात्तत्रोपोत्थानं धातुप्रत्यययोरर्थः किंतु मन्त्रकरणमञ्जलिकरणपूर्वकं विनयेनाऽऽशीर्याञ्चा। तदुक्तमाहिताग्नेराशीर्यदग्निमुपतिष्ठत इति। तस्मादुपस्थानादन्यदुत्थानं विधत्ते। यथोत्तरामाहुतिमुपोत्थाय कवातियेङ्क्त्वाऽऽहवनीयमुपतिष्ठत इत्यस्त्यासीनाया अप्युपस्थितिः। इदमारादुपकारकं कर्मापि प्रतिपत्न्यावर्तते। परार्थान्येकेन क्रियेरन्निति न प्रवर्तते तस्य न्यायस्य परार्थकर्मविषयत्वात्। अथ सकृत्कृतमपूर्वमुत्पादयेदिति न प्रतिपत्न्यावृत्तिरिति तथाऽप्युपस्थानं कामनाप्रार्थनं तद्धोक्तृसंस्कारत्वेन प्रतिपत्न्याशीर्मन्त्रा आवर्तन्त इत्यपि सिद्धम्।

देवानां पत्नीरुप मा ह्वयध्वमित्यपरेण गार्हपत्यं देवपत्नीः।

उपतिष्ठत इत्यनुवृत्तिः। गार्हपत्यस्यापरदेशमवस्थिता देवपत्नीरित्यनुसंधायोपतिष्ठत इत्यर्थः। देवपत्नीनां तत्स्थानमिति ब्राह्मणे दर्शनात्। इदमपि प्रतिपत्नि।

पत्नि पत्न्येष ते लोको नमस्ते अस्तु
मा मा हिꣳसीरिति तमेव देशं मेक्षते।

गार्हपत्यापरदेशमेव प्रेक्षते न तु पूर्वं, मन्त्रशेषोऽयं कल्पान्तरोक्तवदिदमपि प्रधानकर्म, द्वितीयाविभक्तिस्तु श्रूयमाणा तथायुक्तं चानीप्सितमिति सूत्रेण विहिता, तेन संस्कार्यत्वं बोधयति कर्तुः क्रिययाऽऽप्तुमिष्टतमत्वाभावात्। एवमुपस्थानादौ सर्वत्र

द्वितीयामात्रेण न संस्कारकर्मत्वावगतिः । देशप्रेक्षणेनाऽऽत्मनेऽनिष्टपरिहारमर्थयतेऽतः प्रतिपत्तिः ।

इन्द्राणीवाविधवा भूयासमदितिरिव सुपुत्रा ।
अस्थूरि त्वा गार्हपत्योपनिषदे सुप्रजास्त्वायेति
दक्षिणतःपश्चाद्गार्हपत्यस्योदीच्युपविशति ।

गार्हपत्यस्य दक्षिणपश्चाद्भागयोरन्तराले नैर्ऋत्यां दिशि उदङ्मुख्युपविशति । यथाप्रदेशं मुख्यपत्न्युपवेशनम् । समीप इतरासां तामेव दिशमवलम्ब्य व्यवधानेनाऽऽत्मसंस्कारोऽयमाशीर्मन्त्रत्वात् ।

एवꣳ संनद्धाऽऽविमोक्षादन्वास्ते ।

एवंप्रकारेण संनद्धैवाऽऽस्ते संनहनविमोक्षपर्यन्तं विमोकमभिव्याप्येत्यर्थः ।

सुप्रजसस्त्वा वयमित्यासीना जपति ।

अदाभ्यमिति मन्त्रान्तः ।

मम पुत्राः शत्रुहणोऽथो मे दुहिता विराट् ।
उताहमस्मि संजया पत्युर्मे श्लोक उत्तम इति च ।

जपतीति संबध्यते । चकारः समुच्चयार्थः । आस्त इत्यनेनैवोपविष्टा जपतीति सिद्धेऽपि यदासीनेत्याह तज्ज्ञापयते मन्त्रेणोपविश्यानुव्रता भूत्वाऽऽस्त इति नोपवेशननियमोऽयं किं त्वनुव्रतभवननियमेन संततवृत्तिमात्रमास्त इत्यस्यार्थ इति तेन निरुद्धोत्थानायाविहारे यथासुखं तिष्ठतीत्यापि लभ्यते । उपवेशनं जपाङ्गमवश्यं कार्यं जपात्पूर्वमात्मसंस्कारो जपस्त्वाशीर्मन्त्रोच्चारणं जप आरादुपकारक इत्यावर्तन्ते त्रयोऽपि प्रतिपत्तिः । एते मन्त्रा आधानात्पूर्वं पितुः पत्युर्वा सकाशादधीत्य प्रयोज्याः ।

पूषा ते बिलं विष्यत्विति सर्पिर्धानस्य गर्गरस्य बिलं विष्यति पूषाऽसीति वा ।

पत्न्यधिकारो निवृत्तः । स्त्रीलिङ्गपदसमभिव्याहारेण निर्देशादन्य इति न्यायेनाधिनोऽध्वर्युकर्तृत्वोत्सर्गस्तादृक्पदाभावादनुवर्तते पुनः । सर्पिर्धीयतेऽवस्थाप्यते यस्मिन्स सर्पिर्धानस्तत्पात्रं गर्गरशब्दवाच्यं विशिष्यते तस्य मुखं पूर्वमेव वस्त्रादिना पिधाय विहारं प्रत्यानीय स्थापयति । तदैव वा पिधानेन संस्कारः सर्पिषः कार्योऽन्यथोद्घाटनलक्षणसंस्कारासंभवप्रसङ्गात् । बिलं पात्रमुखं विष्यत्युद्घाटयतीति यावत् ।

अन्यस्मिन्पात्रे निषिच्य यावन्निर्वप्स्यन्भवति ।[1]

अत्र समासान्तर्गतोऽपि सर्पिःशब्द उत्कृष्यानुवर्तनीयोऽध्याहारस्य लाक्षणिकत्वेन जघन्यत्वात् । गर्गरादन्यत्र पात्रे सर्पिर्निक्षिप्य यागपर्याप्तात्किंचिदधिकं प्रभूतमिति

१ क. ग. घ. ङ. ट. ठ. ड. न विद्ग° ।

निर्वापे वक्ष्यमाणत्वात् । आज्यस्थाल्यां यागाय पर्याप्तं प्रभूतं निर्वापेण ग्रहीष्यन्भवति तावदादावेव पात्रे तूष्णीं गृह्णातीत्यर्थः ।

इदं विष्णुर्विचक्रम इति दक्षिणाग्नावधिश्रित्य[1] ।

स्पष्टम् ।

अदितिरस्यनाच्छिन्नपवित्रेत्याज्यस्थालीमादाय महीनां पयोऽसीति तस्यां पवित्रान्तर्हितायां प्रभूतमाज्यं निर्वपति ।

आसादनस्थानादादाय स्वीकृत्य तस्यां गृहीतायां पवित्रं तूष्णीमन्तर्धायानन्तरं तस्यामाज्यं प्रभूतं निर्वपति निर्वापेण कर्मणा यागार्थं स्वी करोति । पूर्वं सर्पिःशब्देन प्रस्तुतेष्वाज्यशब्दप्रयोगो जातिशब्दत्वख्यापनार्थः । तेन यदसर्पत्तत्सर्पिरभवदित्यादि शब्दनिर्वचनं न यौगिकत्वख्यापनार्थमपि तु स्तुतिरित्युक्तं भवति । प्रभूतमधिकम्[2] । महीनामित्यस्यान्तः[3] संहितायां निर्वपामीति । ब्राह्मणे देवयज्याया इत्यधिकं पठितमतो मन्त्रद्वयं विकल्पेन ज्ञेयम् । पाठद्वयबलात्प्रत्यभिज्ञाविच्छेदः । समानार्थत्वात्प्रकरण स्थानसंज्ञाभिर्विना ब्राह्मणं संहितामन्त्रस्य विनियोगः । न च समानबलत्वाभावादविकल्पः । आनर्थक्येन समानबलता ज्ञेया । अथवा ब्राह्मणान्तरे तावत एव विनियोगात्समानबलता । महीनां पयोऽसीति संबुध्यमानमाज्यं गव्यमेवेति गम्यते । महीति शब्दो गवीरितः । यथा गोः कर्णे जपे महि विश्रुत्येतानि ते अघ्निये नामानीति मन्त्रे । तत्प्रतिनिधित्वेन माहिषमाजमन्यद्वा गृह्यते तदा नोह इति वक्ष्यते ।

इषे त्वेति दक्षिणार्धे गार्हपत्यस्या[4]ङ्गारेष्वधिश्रयति ।

आज्यमित्यनुवृत्तिः । तस्य दक्षिणेऽर्धेऽङ्गारेषु न भस्मनि न ज्वालासु । अधि उपरि स्थापनं विलापनार्थम् ।

ऊर्जे[6] त्वेत्युपादाय वेदेनोपयम्य पत्न्या उपहरति ।

वेदेनाऽऽज्यस्थालीमुपयम्य वेदसहकृतेन हस्तेन धृत्वा तेन सहैवाऽऽज्यस्थालीं पत्न्या हस्तयोर्निदधाति । मन्त्रेणोपादानं त्वेति द्वितीयान्तेन कर्म[7]पात्रप्रकाशनाद्वेद स्त्न्योरप्रकाशकत्वादङ्गभूतेनोपादानकर्मणा संबध्यते मन्त्रो न प्रधानकर्मणोपहरणेना योग्यत्वात् । वेदेनोपयमनमुपहरणाङ्गं पत्न्यामनधिकारिण्यामुपहरणाभावान्नोपयमनम् ।

महीनां पयोऽसीति[8] तरसा निमील्यानुच्छ्वसन्त्यवेक्षते ।

सुप्रजास्त्वायेति मन्त्रान्तः । मन्त्रेणावेक्षणं तल्लिङ्गत्वादन्यत्तूष्णीं तदुपहृतमेव सा यस्या उपहृतं सैव तथा चान्यस्यै पुनरुपहरति साऽपि तथैव । ननु तदिति द्वि-

१ ङ. ज झ. ञ. ढ. °धिश्रयति । २ क. ग. च. °म् । निर्वपामीति मन्त्रान्तः । ३ ट. ड. °मितिमन्त्रान्तः । ४ क. ग. च. छ. ज. घ. ञ. ट. ट. ड. ढ. °स्वाधि° । ५ ख. आयतनस्य । ६ घ. ङ. ज. झ. ञ. ढ. त्वेत्युपा° । ७ ठ. °र्मणात्र । ८ घ. ङ. झ. ढ. °मील्यैवानु ।

यानिर्दिष्टमाज्यं संस्कार्यं परार्थान्येकेनैव क्रियेरन्निति कथमन्याऽप्यवेक्षत इति चेत् । उच्यते—द्वितीयेप्सितानीप्सितयोः समाना न निर्णयहेतुः । भूतभाव्युपयोगस्तु यथाऽऽज्य एवं पत्न्यामपि । तस्मादत्र लिङ्गैः पत्न्या एवावेक्षणलक्षणः संस्कार इति । तथा हि मन्त्रे तावत्सुप्रजास्त्वायेति फलस्तुतेः पत्नीसंस्कारस्तथा मिथुनत्वायेति च वाक्यशेषात् । अमेध्यं वा एतत्करोति यत्पत्न्यवेक्षते गार्हपत्येऽधिश्रयति मेध्यत्वायेति वाक्यशेषे कथं निन्दा स्याद्यद्याज्यावेक्षणमाज्यसंस्कारस्तस्मात्पत्नीसंस्कारत्वात्सर्वाभिरवेक्षणम् । बौधायनेनाप्युक्तमथैता आज्यमवेक्षयतीति । चक्षुषी निमील्येति पत्नीसंस्कार एव निमील्य पुनरुन्मील्यावेक्षतेऽन्यथा विरोधः स्यात् । वैखानसेन स्पष्टमुक्तं निमील्य वीक्ष्यानुच्छ्वसन्त्यवेक्षते । वीक्ष्येति चक्षुरुन्मीलनमविवक्षितम् । पत्नीसंस्कारत्वेन प्रतिपत्न्यावर्तते । अयं संस्कारः कर्तुर्नापि तु भोक्तुस्तेनैतादृशाः संस्कारा अपि प्रधानस्याऽऽरादुपकारका एव पर्यवस्यन्ति दीक्षणीयावत् । अत एव महापितृयज्ञेऽपि पत्नी गृहेष्वासीनैवाऽऽज्यमवेक्षत इत्येवं वदिष्यति । नान्वास्ते न संयाजयन्तीति कर्तृत्वप्रतिषेधात् । आरादुपकारकत्वाच्च वरुणप्रघासेषु कृत्स्नं तन्त्रमुभयत्र विहारद्वयेऽप्याज्यमवेक्षते ।

तेजोऽसीति गार्हपत्येऽधिश्रयति ।

अत्र केचिदाहुः—यदाऽनालम्भुकत्वादिना पत्नी नावेक्षते तदा न गार्हपत्येऽधिश्रयणं, यतः पत्न्याऽवेक्षितममेध्यं भवतीति मेध्यत्वाय गार्हपत्येऽधिश्रयणमुक्तमिति ।

तेजसे त्वेत्युपादाय[1] तेजोऽनु प्रेहीति[2] हरति ।

आहवनीयेऽधिश्रयणार्थं हरति । उपादाय गार्हपत्यात् । अत्र भाष्यकारेणोक्तं दक्षिणेन ब्रह्मयजमानौ नीत्वा हरतीति । तत्रायमभिप्रायः—आज्येनोदेहीति प्रैषदर्शनादाज्यनिर्वपणान्तं कर्मैकं सर्पिर्निषेचनादि । तत्रोत्तरतउपचारो विहार इति चेदुत्तरतो हरेत्तदाऽऽहवनीयादानीयाऽऽसादने प्रत्यगपवर्गता स्यात्सा मा भूदिति तथोक्तं तथा प्रादक्षिण्यं प्रागपवर्गता च परिभाषासिद्धे अबाधिते स्याताम् ।

अग्निस्ते तेजो मा विनैदित्याहवनीयेऽधिश्रयत्यग्निस्ते तेजो मा विनैद्यज्ञे यज्ञꣳ सꣳसादयामि यज्ञे यज्ञः प्रतिष्ठित इति वा ।

स्पष्टार्थम् ।

अग्नेर्जिह्वाऽसीत्युत्तरेण प्रोक्षणीः स्फ्यस्य वर्त्मन्सादयति ।

भवेति मन्त्रान्तः । आहवनीयाद्यथेतं प्रत्येत्य सादयति, वर्त्मन्निति वर्त्मनीत्यर्थे सुपां लुगिति लुक्, प्रोक्षणीपात्रस्योत्तरतः ।

---

१ घ. ङ. ञ. 'त्वेत्युपा' । २ ङ. ति । अपा' ।

आज्यमसीत्याज्यमवेक्षते ।

अध्वर्युरेव । याजमानसूत्राद्यजमानोऽपि । मक्षीयेति मन्त्रान्तः ।

उपरिष्टाद्वोत्पवनात् ।

अवेक्षत इत्यनुवर्तते । उत्पूय पश्चाद्वा । अत्र ब्राह्मणे निमील्यावेक्षेतेति सार्थ- वादमुक्तं, तथैवाऽऽपस्तम्बादिभिरप्युक्तम् । आचार्येण तु पत्न्यवेक्षत इति व्याख्यातं तदत्रापि भविष्यतीति नोक्तं, तत्र तु शाखान्तरीयत्वाद्व्याख्यातं, तेन यत्र यत्राऽऽज्य- मवेक्षत इति तत्रैतौ धर्मौ निमील्यानुच्छ्वसन्निति शाखान्तरीयौ ज्ञेयौ । तेन याज- मानेऽपि सिद्धिः । अयमाज्यसंस्कारो द्वितीयया भाव्युपयोगादर्थवादाच्च । अर्थवादो (दे) हि ' ईश्वरो वा एषोऽन्धो भवितोः । यदाज्यमवेक्षते ' इति निन्दित्वा ' निमी- ल्यावेक्षेत । दाधाराऽऽत्मन्चक्षुः । ' इति विहिताज्यसंस्कारार्थं चक्षुषो व्यापारेण व्ययो भवेदतो व्ययप्रतिसमाधानं निमीलनेनोक्तम् । न हि यत्र संस्कारस्तत्र वैगुण्यं कुर्यादत एवात्राऽऽज्यावेक्षणेन पत्नीसंस्कारे जन्ये विषयभूतमाज्यममेध्यमभूद्यतोऽन्यस्य मेध्यतां संपादितैवत् । अतः प्रवसति यजमानेऽध्वर्युणा पुनराज्यावेक्षणं कार्यमेव ।

शुक्रमसि ज्योतिरसि तेजोऽसीत्युदगग्राभ्यां पवित्राभ्यां पुनराहारमाज्यं त्रिरुत्पुनाति ।

सकलमन्त्रपाठस्तु समुच्चयार्थो ब्राह्मणे तथैव समुच्चयपाठप्रदर्शनात्तदनुसारिपाठेन मतान्तरमपि निरस्तम् । यदाहाऽऽपस्तम्बः—शुक्रमसीति प्रथमं ज्योतिरसीति द्वितीयं तेजोऽसीति तृतीयमिति, तन्नेष्टम् । समुच्चयपक्षस्तु स्पष्टं वैखानसेनोक्तः । शुक्रमसीति त्रिभिरित्युक्तं न च प्रत्येकमित्युक्तम् । अत्र हि त्रिरुत्पवनं समन्त्रमेवेष्टं त्रिर्यजुषेति ब्राह्मणे विधानात् । ननु स्वेनानुक्ते यत्रैकस्मिन्द्रव्ये विचेष्टापृथक्त्वेनार्थो निष्पद्यते सकृदेव तत्र मन्त्रं ब्रूयादिति प्राप्नुयादिति चेत् । न । तस्य न्यायस्यानन्तरिताभ्यास विषयत्वात् । अत्र तु पुनराहारेण विजातीयेनान्तरितत्वात्पूर्वपठितमन्त्रेण जनितायाः स्मृतेर्विच्छेदात्पुनः पुनर्मन्त्रेण भाव्यमिति न्यायेन पूर्वन्यायबाधो भविष्यति । ब्राह्मणं तु तस्यैव न्यायस्यानुवाद इति तदपि नोक्तम् । ब्राह्मणे समुच्चयस्तु ' शुक्रमसि ज्योतिरसि तेजोऽसीत्याह । रूपमेवास्यैतन्महिमानं व्याचष्टे । त्रिर्यजुषा । त्रय इमे लोकाः । एषां लोकानामाप्त्यै । त्रिः । ज्यावृद्धि यज्ञः । अथो मेध्यत्वाय । इति । समुच्चयपाठोऽस्येति यजुषेत्येकवचने च समुच्चयं प्रतिपादयन्ति त्रिर्यजुषेत्य नुवादोऽप्यर्थवादान्वयायार्थवादेन चादृष्टसंस्कारत्वावगतिः प्रयोजनमन्यथाऽऽज्य गतमलापकर्षणमात्रेण दृष्टे संभवत्यदृष्टकल्पना न न्याय्येति प्राप्नुयात्तन्मा भूदेव

१ क. ग. ठ. °तवान् । अ° । २ ग. ठ. ड. °ठो यद्यपि य° । ३ ख. °भेन च ।

लोकाममाप्त्यै मेध्यत्वायेति द्वाभ्यां प्रयोजनस्य दर्शितत्वाददृष्टसंस्कारताऽनुवाद-प्रयोजनमिति सर्वमवदातं, भाष्यमप्येवं योज्यम् । एतैः समुदितैर्मन्त्रैः प्रतिमन्त्रं त्रयात्मकमिति पुनराहृत्याऽऽहृत्योत्पुनाति । एवमत्र क्रमः—आज्यस्थाल्यां पवित्रे पश्चाद्भागमारभ्य प्राग्भागं नीत्वा पुनः पश्चाद्भागमानीय ततो मन्त्रेणोत्पुनाति । पुनर्द्वि-रेवमेव । न च प्रत्यगपवर्गत्वमन्याय्यमिति वाच्यम् । श्रुत्यैव प्रत्यगपवर्गता विहितोत्स-र्गस्य बाधिका भवेत् । ब्राह्मणे ' पुनराहारम् । एवमिव हि प्राणापानौ संचरतः ' इति पवित्रयोः प्राणापानरूपयोः संचार उक्तः । प्राणो हि प्रागपवर्गं संचरति तस्य मुखनासिकनिरोधेन निरोधो यतोऽपानः प्रत्यगपवर्गं तस्य निरोधोऽपानद्वारलिङ्ग-निरोधो यतो दृश्यते तस्मात्प्राणापानगतिभ्यां क्रमिकाभ्यां पुनराहारे प्रत्यगपवर्गता न निवार्येति । पुनराहारमिति णमुल्प्रत्ययान्तम् । पुनराहारोऽङ्गमुत्पवनस्य मन्त्रोऽपि तेन न पुनराहारे मन्त्रसंबन्धः । तूष्णीमेव कृत्वा मन्त्रेणोत्पवनम् । उभयोत्पवन-संबन्धि याजमानमद्भिराज्यमित्यादि ।

**देवो व इति त्रिः प्रोक्षणीः ॥ २४ ॥**

उत्पुनातीति संबध्यते । पच्छो गायत्रियेति ब्राह्मणे स्पष्टमुक्तं ज्ञेयम् । पुनराहार-मिति नानुवर्तते त्रिरित्यनुवर्तयितुं शक्ये पुनस्त्रिरित्यभिधानात्त्रिरेव न पुनराहार-मित्यर्थः ।

**आपो रेफतपिमीतमध्वासमङ्क्तानिष-**
**दस्थायामभ्रहृणीयमाना इति वा ।**

प्रोक्षण्युत्पवने वैकल्पिकः ।

**अन्तर्वेद्याज्यानि गृह्णाति ।**

स्रुचं वेदिमध्ये धारयित्वा गृह्णातीत्यर्थः । धर्मान्वक्तुं प्रतिज्ञामात्रम् ।

**स्रुवेणानिष्कासिना ।**

गृह्णातीत्यनुवृत्तिः । निष्कास' शेषोऽस्तीति निष्कासी तथा न भवति तेन पूर्वनि-ष्कासरहितेनेत्यर्थः ।

**वेदेनोपयम्य ।**

स्रुचमिति शेषः । वामेन सवेदां स्रुचं धारयन्दक्षिणेन स्रुवमित्यर्थप्राप्तम् । बौधाय-नेन तथोक्तं ' वेदे प्रतिष्ठाप्य गृह्णीते ' इति ।

**चतुः पञ्च वा जुह्वां गृह्णात्यष्टौ दश**
**वोपभृति यथा जुह्वामेवं ध्रुवायाम् ।**

व्यवस्थया पक्षद्वयमेव सर्वाणि चतुर्गृहीतान्येव पञ्चगृहीतान्येव वा । षोडशान्या-

ज्यानि विंशानि वा। षोडशानीति स्वयं वदति स्वब्राह्मणानुसारेण। दशगृहीतमुप-भृति पञ्चगृहीतमितरयोरित्येके समामनन्तीत्यापस्तम्बः।

**भूयो जुह्वामल्पिष्ठमुपभृति भूयिष्ठं ध्रुवायाम्।**

गृह्णातीत्यनुवर्तते। भूयो भूयिष्ठमिति समानार्थमतिशयेन बह्वित्यर्थः। अतिशयेना-ल्पमल्पिष्ठम्। अल्पिष्ठमुपभृतीत्येतावताऽन्ययोर्बहु सिध्यत्येवेतरयोर्वा भूयिष्ठमित्यपीष्ट-सिद्धौ गुरुनिर्देशस्तारतम्यस्यात्यन्तातिशयार्थम्।

**उपबिलꣳ स्थाल्या जुहूं धारयमाणो मध्यदेश उपभृति भूमौ प्रतिष्ठितायां ध्रुवायाꣳ षोडशान्याज्यानि गृह्णाति।**

आज्यस्थाल्या बिलेन सममुपबिलं जुहूं धारयमाणो गृह्णाति। जुह्वामिति विपरि-णामेन पूरणीयम्। स्थाल्या मध्यदेशे धारयमाण इति संबन्ध उपभृतमिति विपरि-णामः। भूमौ प्रतिष्ठितायामत्र न विपरिणामापेक्षा। काम्यौ पक्षौ वक्तुमुक्तं षोडशा-नीति, नो चेद्विंशपक्षेऽपि ह्रासेन काम्यसप्तदशत्वस्य तन्मा भूदिति षाडशपक्षे काम्यै-कविंशत्वं विंशपक्षेऽपि नित्याबाधेनैकविंशत्वस्य काम्यस्य संभवोऽर्थादुक्तः।

***सप्तदशानि पशुकामः कुर्वीतैकविꣳशानि प्रतिष्ठाकामः।**

आज्यग्रहणकाले पशुकामः सप्तदशान्याज्यानि करिष्ये तथा प्रतिष्ठाकाम एक-विंशानि करिष्य इति कुर्वीतेति धातुप्रत्ययानुसारेण संकल्पे यजमानेन कृतेऽध्वर्यु-र्गृह्णाति।

एवं परिभाष्य प्रयोगक्रममाह—

**शुक्रं त्वा शुक्रायामित्येतैर्जुह्वां गृह्णाति पञ्चानां त्वा वातानामिति चोत्तरैरुपभृति ध्रुवायां च।**

शुक्रं त्वेति त्रिषु मध्यमे धाम्ने धाम्न इत्यनुषङ्गः, संहितायामाध्वर्यवपठितास्त्रयः, याजमाने त्रयोदश, तेषां लिङ्गेनाऽऽध्वर्यवे विनियोगः समानः। याजमाने प्रथम-स्याऽऽवृत्तिः। याजमाने षोडशपक्षे मन्त्रविभागोऽयम्। द्रव्यपृथक्त्वेऽभ्यावर्तेत इत्य-त्राऽऽज्यान्युदाहृतानि, सर्वाणि ग्रहणानि समन्त्राण्येवेति स्थिते जुह्वां ग्रहणे शुक्रं त्वेति मन्त्र इतिकरणेनाऽऽदिप्रदिष्टः सर्वोऽपि यदैक एव तदा तस्य त्रिरावृत्तिः प्रसज्येत। तदर्थमुक्तमेतैरिति बहुत्वम्। ननु तथाऽप्येकशेषादेकत्वमेवेति चेन्न। एतैरिति व्यर्थं स्यात्। आचार्यः पुनरेकमन्त्राणि कर्माणीति परिभाष्य कथं ब्रूयादेतैरिति बहुवचनं, यत्र मन्त्रसमुदायो मन्त्रो विवक्षितस्तत्र मन्त्रैकत्वमेव साधितं तदधिकप्रयत्नाद्बहुवचन-विरोधाच्च नानामन्त्रता। अत एव पूर्वमुभयत्र हेत्वभाव एकमन्त्रतैव व्याख्याता। क्वचित्तस्यैवाभ्यासोऽपि। तत्र तत्र यथाकथंचिद्भाष्यमप्यनुगुणीकृतं क्वचित्परिहृतं

---

* इदं सूत्रं व्याख्यापुस्तकेषु न विद्यते।

च। पञ्चानां त्वा वातानामित्यस्मादुत्तरैः पञ्चानां त्वर्तूनामित्यादिभिरुपभृत्यष्टभिर्ध्रुवायां चतुर्भिरधिकस्तस्यामेव सप्तदशत्वे ज्ञेयः कामाय त्वेति काम्ये लिङ्गात्। आपस्तम्बेनापि पशुकामस्य पञ्चगृहीतं ध्रुवायामित्युक्तम्।

इदानीं विंशैकविंशयोः पक्षयोर्मन्त्रविभागमाह—

यद्यल्पीयाꣳसो मन्त्राः स्युस्तेषामर्धैरुपभृति गृह्णीयादर्धैरितरयोर्यदि भूयाꣳसोऽवशिष्टा विकल्पार्थाः।

विंशेषु तथैवैकविंशेषु वाऽल्पायांसो मन्त्रास्तेषां चतुर्धा विभक्तानां मध्यमभागद्वयमर्धास्तैरुपभृति ग्रहणमाद्यन्तभागद्वयमर्धास्तैः प्रथमभागस्थैर्जुह्वां चतुर्थभागस्थैर्ध्रुवायां प्रथमप्रथमावृत्त्या संख्यापूरणम्। तथा च षोडशाज्यपक्षे यस्यां ये विनियुक्तास्ते तथैव ग्राह्या इत्यर्थः। वक्ष्यमाणमन्त्रैस्त्रिभिः संख्यापूरणमिति वदिष्यति। तथा च विंशतिर्मन्त्राः। षोडशाज्यपक्षे कथं विनियोग इत्यत आह—अवशिष्टाश्चत्वारो विकल्पेन पूर्वैः सह ग्राह्या इति भावः।

शुक्रमसि ज्योतिरसि धामासि प्रियं देवानामनाधृष्टं देवयजनं देववीतये त्वा गृह्णामीति वा संख्याः पूरयति धामासीति वा सर्वासु।

शुक्रमसीत्यादयस्त्रयो मन्त्राः। प्रियं देवानामित्याद्यनुषङ्गः। त्रयाणां गृह्णामीत्यन्तः। षोडशपक्षे विकल्पार्था अपरत्र संख्यापूरणाय। धामासीत्यादिगृह्णामीत्यन्तो वैक एव संख्यापूरणार्थः। तदयमर्थः—शुक्रं त्वेति त्रिः पञ्चानामित्येकेन च जुह्वां चतुर्गृहीते शुक्रमसि० प्रियं०गृह्णामीति पञ्चानां त्वर्तूनां० पञ्चानां त्वा दिशां० पञ्चानां त्वा पञ्चजनानां० चरोस्त्वेति चतुर्गृहीते ज्योतिरसि० प्रियं० गृह्णामीति पञ्चमम्। ब्रह्मणस्त्वा तेजसे० क्षत्रस्य० विशे त्वा० सुवीर्याय त्वा गृह्णामीति पुनरुपभृत्येव चतुर्गृहीते धामासि० प्रियं०मीति पञ्चमम्। उपभृति द्वे चतुर्गृहीते गृह्येते इति न्यायविसिद्धान्तस्तदर्थं चतुर्गृहीतस्य पञ्चगृहीते क्रियमाणे संख्यापूरणं नत्वष्टगृहीतस्य। यत्त्वष्टौ दश वेति वचनं तत्फलतो ग्रहणमात्राङ्गं न तु होमाङ्गं, चतुरवत्तं जुहोतीति प्रधानसंख्यानुरोधायेति साधितं तैरेव तेन विधिविभागतः। तथा ध्रुवायां सुप्रजास्त्वाय०रायस्पोषा० ब्रह्म० भूर० गृह्णामीति चतुर्गृहीते नित्येषु विंशेषु धामासीत्यनेनैव पञ्चमं काम्यैकविंशेषु कामाय त्वेति पञ्चमं धामासीत्यादिना षष्ठम्। धामासीति वेतिपक्षे पूर्वयोर्विकल्पार्थत्वं धामासीति गृह्णामीत्यन्तेन चतुर्णां चतुर्गृहीतानां पञ्चमं पञ्चममनेनैव गृह्णाति। एकविंशेषु विंशं कामाय त्वेत्यादिना धामासीत्येकविंशमिति सर्वेऽव्यवस्था ज्ञेया। इयं च व्यवस्थाऽर्धैरुपभृतीतिसूत्रानुरोधात्सर्वास्वित्येतत्सूत्रपदाच्च सर्वासु स्रुक्षु संख्यापूरणमन्यथा कथं स्यात्। यजमानं तु पञ्चानां त्वा वातानामिति चतुरवत्तनीयः सप्तदशेषु(शसु)

कामाय त्वेति विंशेषु धामावृत्तिश्चरोरस्त्वेति द्विः सुवीर्यायेति द्विः, भूरस्माकमिति द्विः, एकविंशेषु कामाय त्वेत्यस्यैव द्विरावृत्तिर्न भूरस्माकमित्येतस्येति ज्ञेयम् ।

अन्यत्रोत्करादाज्यानि सादयित्वाऽपोद्धृत्याऽऽज्यस्थालीं प्रोक्षणीरभिमन्त्र्य ब्रह्माणमामन्त्र्य ।

वेदितः सकाशादाज्यस्थालीं सवेदामपोद्धृत्यान्यत्र स्थापयित्वा प्रोक्षणीरापो देवीरित्यभिमन्त्र्य ब्रह्मन्प्रोक्षिष्यामीति ब्रह्माणमामन्त्र्य प्रसूते सति ।

कृष्णोऽसीति विषायेध्मं त्रिः प्रोक्षति ।

अग्नये त्वा स्वाहेत्यन्तः । विमुच्येध्मं मन्त्रेण प्रोक्षति ।

वेदिरसीति वेदम् ।

प्रोक्षति त्रिरिति च ।

बर्हिरसीति बर्हिः ।

स्वाहेत्युभयोरन्तः पूर्ववत् ।

त्रिरेकैकम्[1] ।

पूर्वानुवृत्तौ सत्यां त्रिरेकैकमित्युत्तरत्रानुवृत्तिर्मा भूदिति पुनर्वचनम् ।

अन्तर्वेदि पुरोग्रन्थि बर्हिरासाद्य दिवे त्वेत्यग्राणि प्रोक्षत्यन्तरिक्षाय त्वेति मध्यानि पृथिव्यै त्वेति मूलानि ।

पुरोभागे पूर्वदिग्ग्रन्थिर्यस्य तद्बर्हिः सन्नद्धमेव वेद्या मध्य ऊर्ध्वाग्रमासाद्य तस्याग्रमध्यमूलानि क्रमेण सकृत्सकृत्तावद्भिरेव मन्त्रैः प्रोक्षति ।

स्रुच्यग्राण्युपपाद्य मूलान्युपपाययति ।

बर्हिष इत्यर्थात् । अग्निहोत्रहवण्यां स्रुचि पूर्वावशिष्टोदकायामग्रभागान्मूलभागांश्च क्रमेण तूष्णीमुप समीपं नीत्वोदकं पिबन्तीवेत्येवं संपादयति । मूलाग्रसंस्कारोऽयं द्वितीयानिर्देशात् । पाययतीति वचनात्सोदकायां, तत्तु पूर्वशेषमुदकशेषं मूलेषूपासिञ्चतीति कात्यायनः । तन्नाशेऽन्येनोदकेन ।

पोषाय व इति सहस्रुचा पुरस्तात्प्रत्यञ्चं ग्रन्थिं प्रत्युक्षति ।

स्रुचाऽग्निहोत्रहवण्या सोदकया सह वर्तत इति सहस्रुग्घस्तस्तेन हस्तेन पुरस्तात्पूर्वभागे ग्रन्थेरेव विद्यमानेन प्रत्यगपवर्गं ग्रन्थिं प्रत्युक्षति समीपस्थेन हस्तेनोक्षति प्रोक्षतीत्यर्थः । ग्रन्थिं प्रत्युपरिष्टात्स्रुच्यग्रावहितेन हस्तेनोदकमङ्गुल्यग्रैः स्रावयतीति फलितोऽर्थः ।

---

१ ग. ङ. ढ. त्रिस्त्रिरे° ।

स्वधा पितृभ्य इति प्रोक्षण्यवशेषं निन-
यति दक्षिणस्याः श्रोणेः संततमोत्तरस्याः ।

गच्छतेति मन्त्रान्तः । दक्षिणस्या वेदिश्रोणेः सकाशमारभ्योत्तरस्याः श्रोणेः पर्यन्तं प्रोक्षणीनामवशिष्टमुदकं पातयति। पितृभ्यो बर्हिषज्य इदमिति यजमानं, स्मार्त उभयोरुदकस्पर्शः । अवशेषमित्यनेनावशिष्टे स्कन्ने निनयनलोप इति न्यायविदः । तत्रोदकमन्यत्प्रतिनिधित्वेन गृहीत्वा देवताभ्यो निनयेदिति सूत्रकृतां मतम् ।

पूषा ते ग्रन्थिं विष्यत्विति बर्हिषो ग्रन्थिं विष्यति ।

विष्यति मुञ्चति ।

विष्णोस्तूपोऽसीति पुरस्तात्प्रस्तरं गृह्णाति ।

प्रागतरं पुरस्ताद्भागे बर्हिषः सकाशान्निर्गमयन्प्रस्तरं गृह्णाति हस्तेन । एतदेवाऽऽप-स्तम्बेन स्पष्टमुक्तमाहवनीयं प्रतिकर्षन्निवेति ।

नावाञ्चं निरायच्छति ।

अवाञ्चं पश्चादपवर्गं न बर्हिषः सकाशान्निर्गमयति ।

नोर्ध्वमुद्यौति ।

ऊर्ध्वं नोपयच्छति ।

न विधुनोति ।

हस्तेन सह न विधुनोति ।

न विकम्पयति ।

कम्पनं हस्ते स्थित एव प्रस्तरस्यैतन्न करोति ।

कर्षन्निवापयच्छति ।

बर्हिषः सकाशाच्छनैरेव वेद्यां कर्षन्निवपन्पृथक्करोति ।

यजमाने प्राणापानौ दधामीति प्रस्तरे पवित्रे अपिसृज्य ।

स्थापयित्वा ।

प्राणापानाभ्यां त्वा सतनुं करोमीति ब्रह्मणे प्रयच्छति ।

अग्रेणाऽऽहवनीयं प्रयच्छति ।

ब्रह्मा यजमानाय ॥ २९ ॥

इति हिरण्यकेशिसूत्रे प्रथमप्रश्ने सप्तमः पटलः ॥ ७ ॥

---

१ क. ख. ग. छ. ट. निनीय । २ ख. ङ. ेरस्य त ।

प्रयच्छतीत्यनुवृत्तिः । यजमानो धारयन्नास्त इति याजमाने वक्ष्यति ।

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां प्रयोगवैजयन्त्यां महादेवकृतायां प्रथमप्रश्ने सप्तमः पटलः ॥ ७ ॥

---

अथाष्टमः पटलः ।

---

बर्हिषा वेदि॰ स्तृणाति ।

वेदेर्हविराधारत्वेन श्रवणाद्बर्हिषस्तत्संस्कारार्थत्वेनोपादानान्मन्त्रस्य बर्हिरर्थत्वेन पर्यवसानाच्चेतः परं यदुच्यतेऽङ्गजातं तेनानुष्ठितेनार्थाद्वेदेः स्तरणमेव भवति, तत्तूष्णीमेवेति वक्तुमिदं सूत्रम् । बर्हिःशब्दो यद्यपि न संस्कारवचनस्तथाऽपि संस्कृतस्यान्यत्राविनियोगाद्ध्रुवसदनमारभ इत्यादिलिङ्गाच्च प्रकृतमेव बर्हिर्नापूर्वम् । तेन वेदिमाच्छादयति ।

कथमित्यपेक्षिते पूर्वाङ्गान्या (ण्या) ह—

तृणैरन्तर्धायाक्ष्णया शुल्ब॰ स्तृणाति ।

तृणैर्दर्भैरन्तर्हितां कृत्वा तस्यां शुल्बं बर्हिःसंनहनं तस्यैव द्वितीयया प्रतिपाद्यत्वान्नापूर्वं कृत्वा स्तृणाति वितनोति । वेदेर्दक्षिणपार्श्वेऽक्ष्णया निर्ऋतिदिशि मूलमीशान्येऽग्रम् । अनुवृत्तस्य स्तृणातेराच्छादनार्थत्वाच्छुल्बमित्यनेनासंबन्धमाशङ्क्य पुनः स्तृणातीति धात्वन्तरमेव प्रयुक्तम् ।

दक्षिणं वेद्यन्तमित्येकेषाम् ।

तृणैरन्तर्धाय तत्र प्रागग्रमुदगग्रं वा शुल्बं स्तृणातीत्यन्वयः ।

देवबर्हिरूर्णाम्रदसं त्वा स्तृणामीत्यग्रैर्मूलान्याच्छादयन्बहुलमनतिदृश्नं प्रागपवर्गं वा त्रिधातु पञ्चधातु वा ।

स्तृणातीत्यनुवर्तते । बर्हिरिति विपरिणामेनाध्याहारेण च विशेष्यं ज्ञेयं मन्त्रे देवबर्हिरितिदर्शनाच्च । बर्हिः स्तृणाति प्रजा वा इति ब्राह्मणे च स्पष्टं द्वितीयान्तबर्हिःशब्दस्य दृष्टत्वाच्च । त्रयो धातवो विभागा अवयवा यस्मिन्बर्हिषि तत्तथा । तथा पञ्चधातु बर्हिर्निधनरूपेण संनद्धं, निधनानि त्रिप्रभृति विषमाणि चतुष्प्रभृति समानि वा तद्रूपं बर्हिर्यदा स्तृणाति तानि यदि त्रीणि पञ्च वा स्युस्तदा तान्येव धातवो यदा चत्वारि स्युस्तदा चतुर्थं त्रिष्वेव मेलयित्वा त्रिधातु करोति । यदा षट्प्रभृति निधनानि

---

१ क. ख. ग. च. छ. ठ. ड. ढ. 'णैर्दर्भैरन्त°। २ घ. ङ. ज. झ. ञ. ड. ढ. °लान्यभिच्छा° ।

स्युस्तदाऽधिकानि त्रिपु पञ्चसु वा मेलयित्वा त्रिधातु पञ्चधातु वा करोति । तत्रैकै-कमेव धातुं बर्हिः स्तृणाति । वेदेः प्रत्यग्भागमारभ्य प्राग्भागपर्यन्तं विपरीतं वोभयत्रापि पुरोऽवस्थितानि मूलानि पश्चादवस्थितैरग्रैर्धातूनामाच्छादयन्स्तृणातीत्यन्वयः । नाति-श्लक्ष्णमनतिदृश्यं दृष्टं यथा भवति तथा स्तृणाति । तदेव पुनर्विशेषितं बहुलमितिनिबि-डतरं स्तृणाति सर्वथा यथा वेदिर्न दृश्यते । प्रागपवर्गमित्यनेनोदगपवर्गमात्रं व्यावर्तितं प्रत्यगपवर्गता तु पूर्वमप्राप्ता विकल्पेन विधीयते ।

**धातौ धातौ मन्त्रमावर्तयति ।**

बर्हिषा वेदिं स्तृणातीत्यधिकाराद्वेदेरेकत्वादनावृत्तौ प्राप्तायामिदमाह । तत्र बर्हिषः स्तीर्यमाणत्वेऽपि न तस्यैव सूत्रेण संस्कार इत्युक्तम् । तथा बर्हिषः संसृष्टद्रव्य-स्यैकत्वेन द्रव्यपृथक्त्वेनाप्राप्तावपि निधनोपाधिना द्रव्यपृथक्त्वं मा भूदपि तर्हि धातूपाधिनैवेति नियमार्थमुक्तं धातूपाधिना स्तीर्यमाणत्वादिति भावः । तथाचोर्णम्र-दसमिति मन्त्रेण बर्हिरेव विस्तीर्णं करोति बर्हिः स्तृणातीति श्रुतेः । एवंचार्थाद्बर्हिषा स्तीर्यमाणेनापि वेदिराच्छादिता भवति तत्र न मन्त्रः । तदेवोक्तं बर्हिषा वेदिं स्तृणा-तीति श्रुत्यन्तरेण । स्तृणात्योरर्थद्वयं याजमाने विस्पष्टयिष्यते । ऊर्णाम्रदिस्यादिमन्त्रैर्लिङ्ग-विनियुक्तैरनुमन्त्रयते बर्हिः स्तीर्यमाणं वेदिं स्तीर्यमाणां स्तीर्णामिति निर्देशेन । न ह्यसति तयोरर्थभेदे बर्हिः स्तीर्यमाणमिति संभवति तेन बर्हिस्तृणातीत्ययं विततनार्थ इति दर्शयति । तथा वेदिं स्तीर्यमाणां, स्तीर्णामिति तु बर्हिषा स्तृणातीत्ययमाच्छादयती-त्येवमर्थ इति दर्शयतीति निश्चिनुमः । ऊर्णाम्रदिस्यादि याजमानम् ।

**अनूयाजार्थे उल्मुके उदू(दु)ह्याऽऽहवनीयं कल्प-यित्वा प्रत्यादाय प्रस्तरं परिधीन्परिदधाति ।**

धारयन्प्रस्तरमिति वाक्यात् । त्वाप्रत्ययेन च परिधानाङ्गता । उल्मुके ज्वलन्ती पूर्वस्यां दिश्यायतन एवानूयाजार्थमिति संकल्प्य पृथक्कुर्यादित्यर्थः । प्राची उल्मुके इति वाजसनेयकविधानात् ।

काष्ठैराहवनीयं कल्पयित्वा समृद्धं कृत्वा यजमानहस्तात्प्रस्तरं प्रत्यादाय तं धारयन्नेव परिदधातीति यदुक्तं तदाह—

**गन्धर्वोऽसीत्यपरेणाऽऽहवनीयं बर्हिष्युदगग्रं मध्यममि-न्द्रस्य बाहुरसीति दक्षिणार्ध्यꣳ संस्पृष्टं मध्यमेनाभ्यग्रं मित्रावरुणौ त्वेत्युत्तरार्ध्यꣳ संस्पृष्टं मध्यमेनाग्रम् ।**

ईडित इति सर्वत्र मन्त्रान्तः । आहवनीयायतनसमीपे पश्चात्स्तीर्ण एव बर्हिषि परि-दधातीति पूर्वानुवृत्तिः । अभ्यग्रमाहवनीयायतनादधिकाग्रमपि आहवनीयमभि अभिमुख-

१ ठ. ड. °न पृ । २ ठ. ड. °भूदिति त° । ३ ख. °णातेर° ।

मस्याग्रं मध्यमेन परिधिना संस्पर्शमात्रं कार्यं नोत्तराधरभावनियमः। उत्तरार्ध(र्ध्य)स्य तु परिधेरवाग्रत्वमेव मतं, न्यूनत्वेन स्थितमाहवनीयायतनादग्रं यस्य सोऽवाग्रस्तं तथा परिदधाति मूलं मध्यमपरिधिसंस्पृष्टं पश्चादेवाधिकमायतनात्कृत्वाऽग्रं तु यथाऽऽयतना· दवमं भवेत्तथा विधेयं स्पष्टमन्यत्। ध्रुवोऽसीत्यादि याजमानम्।

**सूर्यस्त्वा पुरस्तात्पात्वित्याहवनीय+मभिमृश्य।**

अभिशस्त्या इति मन्त्रान्तः। अयं परिधिसहचरितो विधिर्वाक्यशेषाच्च परिध्यभा· वासु विकृतिषु नास्ति बौधायनेनोक्तं सूर्येण पुरस्तात्परिदधातीति।

**ऊर्ध्वे आघारसमिधावादधाति वीतिहोत्रं त्वा कव इति दक्षिणां तूष्णीमुत्तरा१ समिदस्यायुषे त्वेति वा।**

अध्वर इत्यन्तः। उत्तरस्यामायुषे त्वेति तूष्णीमिति विकल्पः। तथैवाऽऽप· स्तम्बेऽपि ऊर्ध्वे ऊर्ध्वाग्रे आयतन एवाऽऽघारसमिधावाघारयोराधारभूते समिधौ यथाऽऽघारयोः क्रियमाणयोस्तयोः संस्पर्शो भवेद्दक्षिणोत्तरभावस्तु तयोरेव परस्परा· पेक्षया। अत्राऽऽघारयोर्विकल्पेन नानाप्रकारता तदनुसारेण यत्र कुत्रापि दक्षिणोत्तर· भावेन स्थाप्येते समिधौ।

**समावनन्तर्गर्भौ दर्भौ बर्हिषो विधृती करोति।**

बर्हिष इति पञ्चमी बर्हिषः सकाशाद्विधृतिनामके(कौ) दर्भौ करोति समौ पूर्वमेव न च्छेदनेन, न विद्यतेऽन्तर्गर्भो गर्भभूता सूचिर्ययोस्तौ। मध्यमाद्बर्हिष इति बौधायनो जैमिनिन्यायश्च।

**विशो यन्त्रे स्थ इति मध्ये वेदेर्बर्हिष्युदीचीनाग्रे निदधाति।**

मध्ये वेदेरित्युक्ते साक्षाद्वेदिसंबन्ध इतिप्रतीतिनिवारणार्थं बर्हिषीत्युक्तम्। स्पष्ट· मन्यत्। विच्छिनद्मीति याजमानम्।

**वसूना१ रुद्राणामिति तयोः प्रस्तर१ सादयति।**

सदसि सीदेति मन्त्रान्तः। तयोर्विधृत्योरयं प्रस्तर इत्यादि याजमानं स्रुवान्ते· ष्वपि ज्ञेयम्।

**जुहूरसीति प्रस्तरे जुहू१ समं मूलैर्दण्डम्।**

असीत्यनुषङ्गो ध्रुवाऽसीत्यस्माद्दर्शितो ब्राह्मणे, तथैव सूत्रेऽपि दर्शितः। प्रिये सदसि सीदेति मन्त्रान्तः। प्रस्तरस्य मूलैः समो यथा जुह्वा दण्डो भवति तथा सादयतीत्यर्थः।

---

+ सूत्रपुस्तकेषु 'अभिमन्त्र्य' इति पाठः।

---

१ ट. सूर्यस्त्वा पु॰।

उपभृदसीत्युत्तरामुपभृतमधस्ताद्विधृत्योः प्रतिकृष्टतराम् ।

पूर्ववदनुषङ्गः । प्रतीचीनं कृष्टं जुहूमूलान्मूलमतिशयेन यस्याः सा तादृशीं सादयति । स्पष्टमन्यत् ।

ध्रुवाऽसीत्युत्तरां ध्रुवामुपरिष्टाद्विधृत्योः प्रतिकृष्टतरामसꣳस्पृष्टाꣳ सादयति ।

उपभृता संसर्गरहितम् । स्पष्टम् ।

ऋषभोऽसि शाक्करो वषट्कारस्य त्वा मात्रायाꣳ सादयामीति दक्षिणेन जुहूꣳ स्रुवꣳ सादयति ध्रुवां वोत्तरेणर्षभोऽसि शाक्करो घृताचीनाꣳ सूनुः प्रियेण नाम्ना प्रिये सदसि सीदेति वा ॥ २६ ॥

गतार्थम् । यथावकाशं स्थालीमपि सादयति ।

एता असदन्नित्यभिमन्त्रयते ।

स्रुचां प्रकृतत्वान्मन्त्रे स्त्रीलिङ्गत्वाच्च स्रुचामभिमन्त्रणं स्रुववर्जानां कर्मकरणो मन्त्रः स्रुववर्जं स्रुच इत्यापस्तम्बेन स्पष्टमुक्तम् ।

विष्णूनि स्थ वैष्णवानि धामानि प्राजापत्यानीत्याज्यानि ।

अभिमन्त्रयत इति पूर्वस्मात् ।

उत्तरविध्यर्थं परिभाषामारचयति—

स्रुवेण गार्हपत्यदक्षिणाग्न्योराज्यार्थानाज्यस्थाल्याः करोति जुह्वा ध्रुवाया आहवनीये ।

करोतीति शेषः । गार्हपत्यदक्षिणाग्न्योः संबन्धेन यान्याज्येन प्रयोजनानि त आज्यार्थास्तानाज्यस्थाल्या एताऽऽज्येन तथा स्रुवेण य आज्यार्थास्तैरपि चाऽऽज्यस्थालीगतेनैव करोतीति नियम्यते । आहवनीये जुह्वेति परिभाषितस्य विशिष्टस्यानुवादः । य आज्यार्थास्तान्ध्रुवाया एव सकाशाद्ध्रौवमिति नियम्यते । अयमाशयः—सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यमिति वाक्यशेषादुत्सर्गे सति नान्तर्वेदिगृहीतस्य प्रतीचीनं हरतीति श्रुतिरापस्तम्बेन दर्शिता । ततस्तु दक्षिणाग्निगार्हपत्ययोर्ध्रौवस्य नेतुमशक्यत्वात्स्थाल्या इत्युक्तमिति स्रुवेणेति भिन्नो नियमः । तेन द्वयोरग्न्योर्होमा जुह्वा क्रियमाणा अपि स्थाल्या एव स्रुवेण हविष्प्रत्यभिवारणप्रस्तरबर्हिःसमञ्जनप्राशित्रयजमानभागेडापर्वाञ्जनाज्येडापार्वणहोमसंबन्ध्याज्यमाज्यस्थाल्या एव । तत्र जुह्वाऽऽहवनीय आहुतयो हूयन्त इति परिभाषात एव सिद्धं, तत्सर्वार्थमुक्तं तन्त्रेण क्वचि-

१ घ. ङ. ज. झ. ञ. ढ. °स्पृष्टाः सा° ।

द्रव्यस्याऽऽहुतयः। अत्र दर्शपूर्णमासप्रकरणे तु तदर्थं ध्रौवमाज्यं नियम्यतेऽर्थशब्देन चोपस्तरणादिकमपि ध्रुवाया नियम्यते। कात्यायनादयस्तूपस्तरणाभिधारणे आज्यस्याल्य एवेति वक्ष्यति(न्ति) तन्नेष्टमाचार्यस्येत्युक्तम्। कुतः, यत उपस्तरणाभिधारणे जुह्वाऽऽहवनीय एव प्रयोजनभावं भजेते अवदानाहुतेः पूर्वं पश्चाचेति वक्ष्यति। प्रथमाघारे तु यद्यप्यनेन न प्राप्तिस्तथाऽपि वचनेन भविष्यति। एवमन्यदपि ज्ञेयम्। नैमित्तिकप्रायश्चित्तं तु गार्हपत्यदक्षिणाग्न्योर्जुह्वैव समारुणया येषां स्रुवेणेति वचनं तेषामेव तथेति ज्ञेयम्। अत्र बौधायनः—प्रत्यादत्ते दक्षिणेनाऽऽज्यस्थालीं सस्रुवां सव्येन पात्रीं वेदमिति।

इदमह॑ सेनाया अभीत्वर्यै मुखमपोहामीति वेदेन दक्षिणस्मात्पुरोडाशादङ्गारानपोह्योत्तरस्मादपोहति।

स्यपा क्रम उक्तः सांनाय्यनिवृत्त्यर्थस्तेनाभिमन्त्रणोपस्तरणयोरपि।

सूर्य ज्योतिर्विभाहि महत इन्द्रियायेत्यभिमन्त्रयते स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामीति पात्र्या-मुपस्तीर्याऽऽप्यायतां घृतयोनिरग्निर्हव्याऽनुमन्यताम्। खमङ्क्ष्व त्वचमङ्क्ष्व सुरूपं त्वा वसुविदं पशूनां तेजसाऽ-ग्नये जुष्टमभिधारयामीत्याग्नेयमभिधारयति तूष्णीमुत्तरम्।

पात्र्यामिति सप्तम्याऽधिकरणत्वमात्रमुक्तं न संस्कार्यत्वं, तेन स्योनं त इत्येक-वचनेनैकस्यैव पुरोडाशस्यार्थ उपस्तरणमुपस्तीर्येति स्यपा प्रतिपुरोडाशम्। अग्नये जुष्टमिति लिङ्गादाग्नेयमित्युक्तम्। प्रकृतावूहाभावादभिधारणस्य सर्वहविरर्थत्वेन श्रूयमाणत्वाच्च तूष्णीमुत्तरमिति निर्देशात्पुरोडाशमेव। अत्र मन्त्रेण दक्षिणं तूष्णीमुत्त-रमिति वक्तव्येऽपि लिङ्गप्रदर्शनार्थमाग्नेयमित्युक्तम्। अनेन दक्षिणोत्तरदेशभेदः स्मारितः।

द्वितीयं सांनाय्यं चेत्तत्राऽऽह—

यस्त आत्मा पशुषु प्रविष्टो देवानां विष्ठामनु यो वितस्थे। आत्मन्वान्सोम घृतवान्हि भूत्वा देवान्गच्छ सुवर्विन्द यजमानाय मह्यमिति शृतम्।

प्रातर्दोहम्। सांनाय्यधर्मेषूक्तत्वात्प्राप्तिर्मन्त्रस्य। अभिधारयतीत्यनुवर्तते।

आर्द्रः प्रथस्नुर्भुवनस्य गोपाः शृत उत्स्नाति जनिता मतीनामिति पुरोडाशमुद्वासयत्यभिन्दन्नपर्यावर्तयन्।

मध्ये शृतमिति व्यवधानेऽनुवृत्त्यसंभवात्पुरोडाशमित्युक्तम्। कपालयोगादुत्कृष्या-न्यत्र स्थापयति कस्मिंश्चित्पात्रे, दक्षिणेन हस्तेन भस्मपरिमार्जनं पुरोडाशस्य क्रियते

यदा तदा तत्र स्थापनं न संभवति तस्मादादत्त इति नोक्तं, वामेन विना विधानं सुतरां न संभवति । यथा न भिद्यते यथा च न पर्यावर्तेत तथा संपादयन्नुद्वासयति ।

**वेदेन भस्म परिमृज्य ।**

पुरोडाशलग्नं भस्म परिमृज्य परितोऽपगमय्य ।

**तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुम-नस्यमान इत्युपस्तीर्णे पात्र्यां निदधाति ।**

प्रकृतत्वात्पुरोडाशमेव । पात्र्यामुपस्तीर्णे घृतेऽदृष्टार्थत्वनिवारणायोपस्तीर्ण इत्युक्तं, सदनं घृतमेव स्योनं ते सदनं करोमीति मन्त्रलिङ्गात्तस्मिन्सीदेत्यस्त्रीलिङ्गनिर्देशाच्च न पात्र्या अधिकरणता। अत एव न पात्रीसंस्कारार्थमुपस्तरणं। किं तु पात्र्यां यदुपस्तीर्णमाज्यं तत्र निदधाति स्थापयति । उद्वासनप्रभृतिकाण्डानुसमयेन कार्यं तथैव द्वितीये ग्रहणं सादनान्तमिति कात्यायनेनोक्तं वचनादिति च । यवमयः पुरोडाशस्तदा व्रीहीणामिति लिङ्गविरोधान्न मन्त्रस्तूष्णीमेव विधानं तथा वैखानसेन स्पष्टमुक्तम् । व्रीहिप्रतिनिधियवमयेऽस्त्येव मन्त्रः । एवं विकृतिष्वपि ज्ञेयम् । यदि द्वितीयं श्रां तदा नोपस्तरणं द्वितीयमभिघार्य द्य इत्युद्वासयति । सायंदोहेन सहैव व्याख्यातम् ।

**इरा भूतिः पृथिव्यै रसो मोत्क्रमीदित्येकैक-कशः कपालान्यभिघार्य संख्यायोद्वासयति ।**

काण्डानुसमयार्थमेकैकश इत्युक्तम् । संख्यायोद्वासयतीति श्रुतौ पौर्वापर्यमुक्तं क्त्वाप्रत्ययार्थेन ल्यपा । तत्रैव शाखान्तरीयमुपसंहृतं ल्यपैवाभिघार्येति । एकमभिघार्य तदेव संख्यायोद्वासयतीत्येवमन्यत् । त्वाश्रुतिकृतः काण्डानुसमयो दर्शितः । अन्यथै-कैकश इत्यनर्थकं बहुवचनात्तैनैकप्रातिपदिकैनैकद्रव्यता प्रतीयते । तथाऽपि कपालानां संख्यायोद्वासयतीति संख्यानेनोद्वासनमुक्तं संख्यापयतीत्येतस्य ल्यपोद्धाटनं साधनमा-अपप्रधानात् । उद्वासनमन्त्रविधानार्थं संख्यायेत्युक्तं संख्याशब्देन मन्त्रेण स तु वैखा-नसेनोक्त एकं द्वे त्रिणीत्यादिभिरिति । ततस्तु प्रत्येकमेव संख्यामन्त्रो भिन्नस्तेनोद्वासनं वैकन च संख्याय सर्वाणि पश्चादुद्वासनं भवति, ल्यपोऽनर्थकत्वमापद्येत तथैकैकश इति संख्यायोद्वासयतीत्यनेनापि संबध्यते न त्वेकमित्यदृष्टार्थं गणनं ल्यपा संख्यायैकैकश उद्वासयतीति साधनतया दृष्टार्थत्वमा(त्वा)पादनात् । यद्यपि कपालानीत्येकद्रव्यत्वेन सकृन्मन्त्रो भवेत्तथाऽपि वचनादभिघारणमपि ल्यपोद्वासनाङ्गमेवेत्युक्त्वैकैकश इत्यनेन यदुद्वास्यते कपालं तदेवाभिघार्येति संयुक्तत्वं प्रदर्शितम् । तथा च प्रथमस्योद्वासनेन द्वितीयमभिघारणं व्यवहितमिति कृत्वा पुनर्द्वितीयस्याभिघारणं मन्त्रेणैव कार्यमिति

१ घ. ख. ङ. ज. झ. ञ. ड. ढ. °स्य प्रतृ° । २ ख. व । उदस्तरणस्याद° । ३ क. ग. घ. छ. ठ. ड. °ति इ° । ४ क. ग. च. छ. ठ. ड. °पनम् । तेनै° ।

दर्शितम्। तथा चाभिघारणमुद्वासनं च प्रतिकपालं काण्डानुसमयेन। अत्र केचिद्व्याख्यातारो वदन्ति—एकं द्वे त्रीणीति संख्या न प्रत्येककपालनिष्ठेति प्रथमं द्वितीयं तृतीयमित्यादिप्रकारेण संख्योच्चारणमिति। तन्न। प्रथमापेक्षया द्वितीये द्वित्वेऽपि यथैकमिषे विष्णुस्त्वाऽन्वेत्वित्यादिभिर्द्वितीयादिष्वपि प्राधान्यमेवमत्रापि।

देवस्त्वा सविता मध्वाऽनक्त्विति पुरोडाशमनक्ति।

पुरोडाशग्रहणं सांनाय्यनिवृत्त्यर्थमेकवचनं मन्त्रावृत्त्यर्थम्। अनक्ति स्निग्धी करोति। तथा चेदमञ्जनमलंकारशब्देनानुवदिष्यति।

कथमनक्तीत्यत्रैव विशिनष्टि—

स्वक्तमकूर्मपृषन्तमपरिवर्गमणिकाषमुपरिष्टादभ्यज्य स्रुवेण हस्तेनाधस्तादुपानक्ति।

पुरोडाशमित्यनुकृष्यते। स्रुवेणेति सामर्थ्यसिद्धेऽपि हस्तेनेत्यस्योपरिष्टादभ्यज्येत्यनेन संबन्धनिराकरणार्थं पुनरुक्तं स्रुवेणेत्यर्थः। उपरिष्टादिति अधस्तात्तलभागमात्रं विना सर्वमभ्यज्य स्रवदाज्येन स्रुवेण म्रष्टं कृत्वा स्वक्तं सुष्ठु बहुघृतेनाक्तम्। अभ्यज्येत्येतत्प्रत्येकं संबध्यते। तत्र प्रकृत्यर्थोऽनुवादोऽणिकाषमित्यन्तैरभ्यञ्जनस्य सिद्धत्वात्प्रकृत्यनुग्रहार्थं पाकं पचतीतिवत्। तेन कृत्वेत्यमुमर्थमाहाभ्यज्येति पदं स्वक्तं कृत्वेत्ययमर्थः संपन्नोऽप्राप्तत्वाद्विधिरनुमेयः। एवमनुक्ते स्वक्तादिपदानि प्राप्तानुवादीन्येव स्युः। न च पूर्वमनक्तीत्येतावतैतत्सर्वं प्राप्नोति। ततस्तु प्राप्तत्वात्स्वक्तादिक्रिया भावनालक्षणेन प्रयत्नेन यथा संबध्येत तथा कृते विधिमात्रानुमानं पश्चाद्भविष्यति। न चाभ्यज्येत्येतद्धयवचनं धात्वन्तरावरुद्धं स्वक्तादिपदैः क्रियोपसर्जनद्रव्यवचनैरन्वेतुमर्हति। तस्मादभ्यज्येति धातुः पूर्वानुवादीति सिद्धम्। अथवा स्वक्तमिति क्रियाविशेषणं सदनक्तीत्यनेन संबन्धनीयं, तेन सम्यगञ्जनं घृतधारया कृत्वा पश्चान्म्रक्षणं स्रुवेण घर्षणं तत्राकूर्मपृषन्तमित्यादि। पुनः पुरोडाशं कथंभूतं कृत्वेत्यपेक्षायामकूर्मपृषन्तमित्यादि पदत्रयं संबध्यते, न विद्यन्ते कूर्मस्येव पृषन्तो बिन्दवो यस्मिन्यथा कूर्मे बिन्दवः सन्ति तथा स्रुवेण स्वञ्जने क्रियमाणे प्रदेशे घृतबिन्दवो यथा न भवन्ति तादृशमक्तं कृत्वाऽपरिवर्गं परिवर्गस्त्यागः प्रदेशे प्रदेशे तथा न समस्तमित्यर्थः। अथवाऽपरित्यजन्न परित्यजन्नित्यर्थः। मध्ये स्रुवस्य पुरोडाशस्य वियोगो न कार्यो यावदभ्यञ्जनसमाप्ति। तथाऽणिकाषं न विद्यते निकाषो निकर्षणं घर्षणं स्रुवेण यत्र, णमुलन्तेऽपि स एवार्थो नेर्णत्वं छान्दसम्। एवंप्रकारम॰

१ ट. 'भान्तेन॰'।

यज्ञमुपरिष्टात्स्रुवेण कृत्वा पश्चात्स्रुवेण हस्त आज्यमानीयेति वैखानसवचनाद्धस्त आज्यं गृहीत्वाऽधस्ताद्भाग उपलिम्पति । अनक्तीत्युच्यमान आज्यपतनमात्रं स्यात्तन्न भवत्यनुत्ताने पुरोडाशे, तस्मात्पुरोडाशस्याधस्तात्समीपं हस्तं नीत्वेति वक्तुमुपेत्युक्त-पर्यावर्तयन्नित्यर्थः । यदाग्नेयोऽष्टाकपाल इत्यस्य संनिधौ श्रुतमुपरिष्टादभ्यज्याधस्ता-पानक्तीत्येतच्छाखान्तरेणोपबृंह्य तौ समानविधानावित्यनेन पुरोडाशान्तरेऽपि प्राप्त-मेति पुरोडाशमित्युक्तमनुवर्तितं पुरोडाशब्राह्मणत्वात्सांनाय्ये न प्राप्तिरिति दर्शयि-तुम् । अतः परं पुरोडाशाद्यासादनमेवोच्यते । तत्तु न ज्ञायते पात्र्यां नीत्वा सादन-मथवा हविरेव गृहीत्वा नीत्वा सादनीयमिति, तदर्थमुक्तं बौधायनवैखानसाभ्यां पात्र्या॰ सर्वाणि हवीꣳषि संस्पृश्येति, तदस्माकमप्यविरुद्धम् ।

प्रियेण नाम्ना प्रियꣳ सद आसीदतामित्यपरेण स्रुचः पुरोडाशावासादयति दक्षिणमाग्नेयमुत्तरमितरम् ।

स्रुचां पश्चाद्भागे बर्हिष्येवाऽऽसादयति । मन्त्रस्य लोट्प्रथमपुरुषद्विवचनान्ते-नाऽऽसीदतामिति क्रियापदेन युक्तत्वात्सकृदेव मन्त्रः सहैवाऽऽसादनं हस्तद्वयेन गृहीत्वा दक्षिणोत्तरभागयोरिति प्राप्नोति । तन्न । अनुपूर्वमेषां कर्माणीति परिभाषितत्वात् । किंच लाघवेन दक्षिणोत्तरौ पुरोडाशावासादयतीति वक्तव्ये गुरूपदेशेन दक्षिण-माग्नेयमासाद्य पश्चादितरमुत्तरमासादयतीति द्रव्यपृथक्त्वेऽभ्यावर्तेत इत्यावृत्तिर्म-न्त्रस्य दर्शिता देशभेदस्फुटीकरणेन । द्विवचनं तु परस्परापेक्षमुपधानमन्त्रवत् । यथैकस्मिन्पुरोडाशे न मन्त्रस्तूष्णीमेवाऽऽसादनं न प्रकृतावूहो विकृतावपि केवलैक-पुरोडाशायां न मन्त्रो नाप्यूहश्च । दक्षिणमुत्तरं चेत्येतावता सिद्धेऽप्याग्नेयमितरमिति च गुरुनिर्देशो देवतोपलक्षणेन यत्राऽऽग्नेयविकारा अनेके तत्रापीतरस्याग्नीषोमीय-विकारस्यैन्द्राग्नस्य चाभावान्न मन्त्रः । तथा च नाग्नीषोमीयाणामैन्द्राग्नानां वा केवलानां नानादैवतपुरोडाशसंयुक्तत्वाभावेऽपि मन्त्र इति सूत्रकृतोऽभिमतं, ततस्तु नाना-दैवतविकारपुरोडाशासु विकृतिषु बहुवचनेनोहो भवति सीदन्त्विति । उत्तरविकारे एकस्मिन्द्वयोर्वा यथार्थमूहः । यदपि पात्र्या सहाऽऽसादनं कुर्वन्ति तत्तु विधानाभावा-न्न्यायविरोधाल्लिङ्गविरोधाच्चोपेक्ष्यम् । तथा हि पुरोडाशावासादयतीति साक्षादा-सादनकर्मता पुरोडाशयोरेव श्रूयते तत्र लक्षणाश्रयणे प्रमाणाभावाद्दक्षिणोत्तर-विधानं तु पूर्वापरभावश्च पात्र्यां पूर्वं निहितयोस्तया सहाऽऽसादनं कथं स्यात्, स्तीर्णाया वेदेरेव हविराधारत्वस्य न्यायसमयसिद्धत्वात् । न च पात्रीं प्रत्याधारत्वे हविराधारत्वं संभवति । सांनाय्यादीनामगत्या व्यवधानेऽपि ये[न]नाव्यवधानं तेन व्यवहितेऽपि[3] भवतीति न दोषः । देवसदनमारभ इति तथोर्णाम्रदुप्रथमानꣳ स्योनं

१ ख. दर्शितम् । २ ख. ग. छ. ट. ड. नानाग्नि॰ । ३ क. ग. च. ट. ड. ॰ति दो॰ ।

देवेभ्यो जुष्ट१ सदनाय बर्हिरित्यपि लिङ्गं बर्हिष एव सदनत्वं ब्रवीति। मृदुत्वं च कुत्रोपयुज्येत पात्रीं प्रत्याधारत्वे। न च स्योनं ते सदनमिति पात्र्यामुपस्तीर्णस्यापि सदनतेति वाच्यम्। निधानमात्रं प्रत्येव सा सदनता संवपनार्थमुत्पन्नायाः पात्र्याः प्रसङ्गेन। बर्हिषस्तु हविराधारत्वेनैवोत्पत्तेः साक्षादाश्रयैतेत्यलमतिप्रसङ्गेन।

**मध्ये वेदेः सांनाय्यकुम्भ्यौ संधाय व्यूहति दक्षिणस्या२ श्रोण्या२ शृतमुत्तरस्यां दधि।**

वेद्यां द्वे कुम्भ्यौ परस्परं स्पर्शयित्वा पश्चादेकैकां क्रमेण व्यूहति पृथक्पृथक्स्थापयति, तदेवाऽऽसादनं शब्दान्तरेणोक्तम्। तथैवोक्तं स्पष्टमापस्तम्बेन। अन्यथा ह्यासन्नानीति याजमानेऽनुवादो न युक्तः स्यात्। यज्ञोऽसीत्यादि याजमानम्।

**अयं वेदः पृथिवीमन्वविन्दद्गुहा सतीं गहने गह्वरेषु। स विन्दतु यजमानाय लोकमच्छिद्रं यज्ञं भूरिकर्मा करोत्वित्यग्रेण ध्रुवां वेदं निधाय।**

ध्रुवामग्रेणेत्येनबन्यतरस्यामदूरेऽपञ्चम्या इत्यदूरेऽग्रात्पुरत एनपा द्वितीयेति द्वितीया। स्पष्टमन्यत्।

**वेद्यन्तान्परिस्तीर्य।**

वेद्या अवयवान्प्रान्ते विद्यमानान्परितः परिभोजनीयदर्भैराच्छाद्य प्रदक्षिणमुदगपवर्गम्।

**होतृषदनं कल्पयति कल्पयति॥ २७॥**

**इति हिरण्यकेशिसूत्रे प्रथमप्रश्नेऽष्टमः पटलः॥ ८॥**

---

## इति हिरण्यकेशिसूत्रे प्रथमः प्रश्नः॥ १॥

---

होता निषीदत्यस्मिंस्तद्धोतृषदनं दर्भमयमासनं तत्कल्पयति समर्थमासनयोग्यं करोति। होतृस्थानं वेद्या उत्तरश्रोणेरुत्तरतो होतृप्रत्ययं तत्र प्रागग्रमुदगग्रं वा करोतीत्यर्थः। द्विरुक्तिः प्रश्नसमाप्त्यर्था याज्ञिकप्रसिद्ध्या च प्रश्नपटलव्यवहारसिद्ध्यर्था। होतरेहीत्यामन्त्रितो होतेति बाह्वृच्ये दर्शनाद्वैखानसेन होतरेहीति होतारमामन्त्रयत इति सूत्रितत्वाच्च कार्यं स च यदि पृच्छेत्—अध्वर्यो देवता आचक्ष्व तासामानुपूर्व्यमुच्चैरुपांशुतां चेति। तस्येदं प्रतिवचनम्—पौर्णमास्यामग्निरग्नीषोमौ, अग्नीषोमौ च देवताः। अग्निर्विष्णुरग्नीषोमौ च देवता इति वा। अग्निः प्रजापतिरग्निषोमौ च देवता इति वा। उपांशु प्रथमावग्नीषोमावुपांशु विष्णुः प्रजापतिरिति वा। असोमयाजिनो

१ ख. °यणमित्य°।

ाह्मणस्य तृतीयस्य हविषो लोपः । तदनुरूपमानुपूर्व्यमुच्चैरुपांशुत्वं च । अमावास्याया-
ाग्निरिन्द्रश्च देवते अग्निर्महेन्द्रश्चेति वा । अग्निरिन्द्राग्नी च देवते त्य(अ)संनयत इति ।

इति सत्याषाढहिरण्यकेशिसूत्रस्य व्याख्यायां प्रयोगवैजयन्त्यां
महादेवकृतायां प्रथमप्रश्नेऽष्टमः पटलः ॥ ८ ॥

सत्याषाढीयसूत्रस्य व्याख्यायां प्रथमोऽधुना ।
प्रश्नः समाप्तो गूढार्थः परिभाषासमन्वितः ॥ १ ॥

---

इति हिरण्यकेशिसूत्रव्याख्यायां प्रथमः प्रश्नः ॥ १ ॥

---

अथ द्वितीयप्रश्ने प्रथमः पटलः ।

---

**अग्नये समिध्यमानायानुब्रूहीति संप्रेष्यति
समिध्यमानायानुब्रूहीति वाऽग्नये देवे-
भ्यः समिध्यमानाय होतरनुब्रूहीति वा ।**

त्रितयान्यतमेन प्रैषमन्त्रेण होतारं संप्रेष्यति । नात्राऽऽत्मसंस्कारार्थः प्रैषोऽनुवच-
स्य होतृकर्तृकत्वात् । होतरि प्रविश्य स्थिते वेदिश्रोण्यां संप्रैषकालः । एकां समिध-
ादाय संप्रैष इति सूत्रान्तरे दर्शितमिति[1] भाष्यकृतोक्तम् । उक्तं च कात्यायनेनेध्मा-
समिधमादाय संप्रेष्यतीति । सर्वथा तथैव युक्तमेतदन्यथा समिध्यमानायेति वर्तमानता
यपदेशः कथं स्यात् । अत्र चित्तिः स्रुगित्यादि याजमानम् ।

**आसीनः प्रणवे प्रणवे समिधमादधाति ।**

अत्राऽऽसीनग्रहणादन्यत्रानियमो दर्शपूर्णमासकर्मस्विति सिद्धम् । होत्रा सामिधेनी-
ामन्ते प्रणव उच्चार्यमाण एवैकैकां समिधमादधाति । आहवनीयाग्नाविति सामर्थ्या-
ग्नये समिध्यमानायेति प्रैषेऽग्नेराहवनीयस्य ग्रहणं मुख्यत्वाच्च परिधिसंधिमन्वव-
त्येति सर्वाणीध्मकाष्ठानि संस्पर्शयतीति[3] लिङ्गाच्च ।

एवं चैकादशसु समित्सु निहितासु—

**समिद्धो अग्न आहुतेत्यस्यामुत्तमायां वाऽनू-
याजसमिधमवशिष्य सर्वमिध्ममादधाति ।**

अत्रैकां समिधमनूयाजार्थं प्रज्ञातां निधाय समिद्धो अग्न इत्यस्यामनूच्यमानाया-
ृच्येव न प्रणवे सर्वमवशिष्टम् । अत एवोक्तमापस्तम्बेन सर्वमिध्मशेषमादधातीति ।
र्वमिध्मं समिच्चतुष्टयम् । अथवोत्तमायामत्रापि पूर्ववत्समिच्चतुष्टयम् । इति द्वौ पक्षौ ।

---

१ ख. छ. ट. दर्शनमि° । २ ख. ट. °येत्यादिप्रै° । ३ क. ग. च. छ. ट. ठ. °ति च लि° ।
घ. ङ. ज. झ. ञ. ढ. °तेत्येतस्या° ।

तृतीयं पक्षमाह—

प्रतिसामिधेनीर्वा ।

द्वादश्यां पञ्चदश्यां वा न सर्वमिध्ममादधाति किं तु तथा प्रणवचतुष्टयेऽप्येके-कामेवाऽऽदधातीति वक्तुमुक्तं सामिधेनीं सामिधेनीं प्रति पूर्ववदेवोक्तं प्रणवे प्रणव इत्यभिप्रायेण काष्ठवृद्धिं वक्ष्यति तत्राप्ययमेव प्रकारः । अग्नये समिध्यमानायेति संस्कारोऽतो न च समिन्धनं देवतार्थं तेन नोद्देशत्यागौ देवतासंप्रदानाप्रतीतेश्च स्वाहा-कारवषट्कारयोरभावात् । समिद्धो अग्निराहुत इति देवा इति च याजमानम् ।

वेदेनाऽऽहवनीयं त्रिरुपवाजयति ।

उपवाजयति संधूनोति । धर्ममात्रमेतत्रत्वग्नेः प्रज्वालनं त्रिर्धूननेन भवति । तस्मादवभृथेऽपि भवति । एतदोढासु देवतासु कार्यं विकृतावनुवदिष्यत्योढासु देवता-स्विति । ततो ज्ञायतेऽत्र काले प्रकृतावपि प्राप्तमिति । अवभृथे चोदकेऽपि वक्ष्यत्यतो ज्ञायते धर्ममात्रमदृष्टार्थमिति ।

स्रुवेण ध्रुवाया आज्यमादाय वेदेनोपयम्यो-त्तरं परिधिसंधिमन्ववहृत्य स्रुवं प्रजापतये मनवे स्वाहेति मनसा ध्यायन्दक्षिणाप्राञ्चमृजुं दीर्घꣳ संततं ज्योतिष्मत्याघारयति तिर्यञ्चं वा सर्वाणीध्मकाष्ठानि सꣳस्पर्शयति ।

आसीन इत्यनुवर्तनीयम् । आसीनोऽन्यमाघारमिति श्रुतेः। आहवनीये जुहोति परि-भाषितत्वात्तदर्थं स्रुवेणेत्युक्तम् । ध्रुवाया इति । स्रुवेण होम आज्यस्थाल्या इति परि-भाषया प्राप्तौ तु ध्रुवाया इत्युक्तम् । आदाय गृहीत्वा वेदेनोपयम्योपभृत्स्थानीयेन । उत्तरं वायव्यकोणस्थं परिध्योः संधिदेशेनाऽऽयतने प्रवेश्य स्रुवमेव न वेदं ततो मनसा मन्त्रमुच्चारयंस्तदर्थं ध्यायन्नाघारयति धारामायतने मुञ्चति । कथं, दक्षिणाप्राञ्चं दक्षिणाप्राच्योरन्तरालमाग्नेयीं प्रति समाप्तमृजुमकुटिलं दीर्घं न केवलं समित्प्रदेशेऽनन्त-रमपि धारां मुञ्चेदित्यर्थः । संततमविच्छिन्नं ज्योतिष्मति ज्वालायुक्तेऽग्नौ । तिर्यञ्चं वा । किंचिदायतने प्रवेश्योत्तरदिगारभ्य तिर्यगायतने दक्षिणां दिशं प्रत्यञ्चति समाप्नोति तादृशमाघारमिति नामधेयं पुंलिङ्गं विशेष्यमनुसंधेयं, स्रुवेणाऽऽघारमाघारयतीति ब्राह्मणे दर्शनात् । सर्वाणि काष्ठानि संस्पर्शयत्याघारमिति शेषः ।

---

१ क. ग. च. छ. ट. ठ. °धेनीं वा । वा । २ ख. ° भाषिताज्यस्थालीनिवृत्त्यर्थम् ।

**स्रुवेणाऽऽज्यस्थाल्या आज्यमादायाऽऽप्यायतां ध्रुवा घृतेनेति ध्रुवामाप्याययति ।**

पूर्वं गृहीतेनाऽऽज्येन न्यूनां जातां पुनः समी करोत्याप्यायतामिति मन्त्रेण प्रक्षिप्तेनाऽऽज्येन स्रुवगतेन ।

**सर्वत्रैवम् ।**

यत्र यत्र ध्रुवाया आज्यं गृह्यते तत्र तत्र प्रतिग्रहणं समन्त्रमनन्तरमेवाऽऽप्यायनमेवमेव कार्यं यावन्नाऽऽप्यायितं तावदन्यत्र ग्राह्यमित्यर्थः ।

**अग्नीत्परिधीꣳश्चाग्निं च त्रिस्त्रिः संमृड्ढीति संप्रेष्यति ।**

अग्निमग्नीत्त्रिस्त्रिः संमृड्ढीति ब्राह्मणोक्तेन विकल्पः । अग्निशब्देन समीपलक्षणया परिधयो गृह्यन्ते । अजहल्लक्षणया चाग्निरपि गृह्यते । वीप्साऽग्निमात्रे युक्ता । ततो ब्राह्मणशेषे परिधीन्संमार्ष्टीति दर्शनाच्छाखान्तरीयवदेवार्थो व्याख्येयः ।

**इध्मसंनहनानि स्फ्य उपसंगृह्याऽऽग्नीध्रः प्रदक्षिणमनुपरिक्रामन्परिधीन्संमार्ष्टि मध्यममुदञ्चं प्राञ्चावितरौ ।**

इध्मस्य संनहनानि बन्धनशुल्बानि बहुवचनं तस्य धातवोऽनेके तानुद्धृत्यैकत्र कृत्वा स्फ्येन सह धृत्वा मिलितैः संमार्गः कार्य इत्यर्थः । प्रदक्षिणमनुपरिक्रामन्नित्युत्तरतः स्थितः प्राङ्मुख एव, मध्यममुदञ्चमिति प्राचीनत्वव्यावृत्त्यर्थं, संमृज्य ततोऽग्रेणाऽऽहवनीयं गत्वा दक्षिणत उदङ्मुखो दक्षिणार्ध्यं संमृज्यापरेणाऽऽगत्योत्तरार्ध्यं संमृज्य यथेतं प्रत्येति ।

**अग्ने वाजजिद्वाजं त्वा सरिष्यन्तं वाजं जेष्यन्तं वाजजितं वाजजित्यायै संमार्ज्म्यग्निमन्नादमन्नाद्यायेति त्रिरग्निम् ।**

संप्रैषे वीप्सयैव परिधिविषयोऽभ्यासः सिध्यतीति परिध्यर्थे सूत्रकृता नोक्तः । अग्निमित्यनेन वीप्सासंबन्धायोग्यतामाशङ्क्य स्वब्राह्मणे यथोऽऽधारे शब्देन लक्षितसमुदितपदार्थानां त्रिस्त्रिरिति वीप्सा संबध्यत एवमत्र शाखान्तरीयेऽपि परिध्यग्निसमुदाये वीप्सासंबन्धो व्याख्यातुं शक्यत इत्यभिप्रायेणाग्निसंमार्ग एव त्रिरित्युक्तम् । मन्त्रेण सकृत्तूष्णीं द्विः परिधींस्तूष्णीमेव त्रिस्त्रिरिति ।

उत्तरविध्यर्थं परिभाषामारचयति—

**सर्वास्वाहुतिषूपभृता जुहूमुपदधाति मुखतोऽभिहृत्योपभृति जुहूमवदधाति होष्यꣳस्तेनैव**

---

१ ख. अतो । २ ख. °थाऽग्निश° । ३ क. ग. च. छ. ट. ठ. 'भृज्जु° । घ. ज. झ. ञ. °भृति जु° । ४ क. ग. ङ. च. छ ज. झ. ञ. ट. ठ. ढ. °पधारयति । ५ क. ग. च. ट. °हूमुपधा° छ. ठ. °हूमुपद° ।

**प्रत्यवहरति न सꣳशिञ्जयति नाभिं प्रति स्रुचौ धारयते ॥ १ ॥ समं प्राणैरित्येकेषाम् ।**

सर्वासु दार्शपौर्णमासिकदर्विहोमतदन्यासु आहुतिषु कर्तव्यासु गृहीतां जुहूमुप-भृता साञ्जनभूतयोरादधाति संवृणोति तेनोप समीपे संवरणार्थं भ्रियत इत्युपभृदित्य-र्थोऽपि दर्शितः । तत्र विशेषमाह–मुखतो न पार्श्वत उपभृतोऽग्रभागेन(ण) जुहूमुप-भृदभिमुखीं नीत्वोपभृत्यधिकरणेऽवदधाति स्थापयति यावदाहुतिप्रक्षेपायोद्गृह्यत आयतनोपरि नयनात्पूर्वमिति यावत् । ततो होष्यन्होमार्थमायतनोपरि नेष्यंस्तेनैव मुखभागेनैव प्रत्यवहरति होमार्थमायतनप्रदेशं प्रत्यवहरति नयति न तु मुखभागाद-न्येन प्रदेशेनोपभृतो जुहूं विश्लेषयतीत्यर्थः । शिञ्जति शब्दं करोति शिञ्जयति शब्दं कारयति तथा न । परस्परघर्षणेन शब्दं नोत्पादयेदित्यर्थः । यावदुभयोर्मेलनं तावन्नाभिसंमिते जुहूपभृतौ धारयते प्राणैः श्वासैर्वा संमितेऽध्वर्योरेव ।

**अपरेणाऽऽहवनीयं दक्षिणेन दक्षिणाऽतिक्रामति सव्येनो-दङ्ङपि वा सव्येन दक्षिणाऽतिक्रामति दक्षिणेनोदङ् ।**

होमार्थे दक्षिणाऽतिक्रमणे प्राप्ते येन पादेन दक्षिणाऽति प्रक्रामति तदन्येनोदङ्-ङित्येतावत्फलत आहवनीयस्य पश्चाद्देशेऽतिक्रम एतन्नियम्यते ।

एवं परिभाष्याऽऽघारं प्रकृतमाह—

**आघारमाघारयिष्यन्भुवनमसीत्यग्रेण जुहूपभृतौ देवेभ्यः प्राचीनमञ्जलिं करोति सप्रथा नमो देवेभ्य इति वा ।**

नम इति पूर्वस्यान्तः । देवेभ्य इति मन्त्रस्याग्निप्रकाशकत्वाल्लक्षणया देवपरतां व्याख्येयेत्यर्थः । अग्नेः सर्वदेवात्मत्वाल्लक्षणा यथोपदिष्टमिति परिभाषितत्वात् । स्पष्टम् ।

**स्वधा पितृभ्य इति दक्षिणा ।**

अञ्जलिमिति पूर्वतनम् । अपामुपस्पर्शनं स्मार्तम् । आघारमाघारयिष्यन्निति वच-नादञ्जलिद्वयकरणमाघारस्याङ्गमुक्तम् । आघार इति कर्मनाम द्वयोरप्याघारणयो-र्न्यायविद्भिः साधितम् । उपसत्स्वाघाराभावान्नाञ्जलिकरणम् ।

**जुह्वेहीति जुहूमादत्त उपभृदेहीत्युपभृतम् ।**

आदत्त इति पूर्ववत् । देवयज्याया इति मन्त्रयोरन्तः ।

१ क. °सु दर्श° । २ ख. °र्शपूर्ण° । ३ क. ग. च. °था च प° । ४ ख. °दिष्टं ब्राह्मणवन्त इति । ५ क. ग. घ. ङ. च. छ. ज. झ. ञ. ट. ढ. दक्षिणाम् ।

**सुयमे मेऽद्य घृताची भूयास्तꣳ स्वावृतौ सूपावृतावित्युपभृति जुहूमवदधाति ।**

पूर्वोक्ते जुह्वाधाने पारिभाषिके मन्त्रमात्रविधिरत्रोच्यते ।

**अग्नाविष्णू इत्यनवक्लिन्दन्प्रस्तरं दक्षिणाऽतिक्रामति ।**

अत्याक्रमणसमये पद्भ्यां प्रस्तरं नावक्लिन्दयेन्न मर्दयेत्स्पर्शमात्रे न दोषः ।

**विष्णोः स्थानमसीत्यवतिष्ठते ।**

आहवनीयाभिमुखो दक्षिणतोऽवस्थानं मन्त्रेण कुर्यात् । वीर्याणीति मन्त्रान्तः ।

**यत्रेन्द्रस्तिष्ठन्वीर्यमकरोत्तत्तिष्ठन्वीर्यं क्रियासमिति वा ।**

विकल्पः पूर्वेण ।

**अन्तर्वेदि दक्षिणं पादमवघ्नन्सव्यं कृत्वा ।**

अन्तर्वेद्यां दक्षिणं पादं कृत्वा स्थापयित्वा *तमवजिघ्रति स्पृशति सव्यो वामः पादः, दक्षिणं पादं समवस्थाप्य दक्षिणस्य पार्ष्णिं सव्यस्य प्रपदेन स्पृष्टेति यावत् । थैवोक्तं वैखानसेन ।

**दक्षिणं परिधिसंधिमन्ववहृत्य स्रुचम् ।**

जुहूमत्र पूर्ववत्प्रवेश्य द्वौ परिधिसंधी । तयोरुत्तरदक्षिणभावाद्दक्षिणमायतननैर्ऋतभागस्थम् ।

**समारभ्येत्याघारयति ।**

मन्त्रेण सहभावविधाननिराकरणमनेन क्रियते ।

**उच्छुष्मो अग्न इति वा ।**

स्वाहान्तः पूर्वो मन्त्रः । उत्तरस्तु सुवीर्यायेत्यन्तः । अत्र होमत्वेनानुवादात्स्वाहाकारान्तताऽपि, पूर्वाघारे प्रजापतिर्देवता मनोऽसीति याजमानम् । द्वितीय इन्द्रो देवता प्रथममन्त्रस्य वैखानस ऐन्द्रमाघारमित्याह । द्वितीयस्याग्निरनुमन्त्रणं वागसीति पूर्वाघारो मानसोऽयं तु वाचिक इति वाक्स्तुतिरैन्द्री वै वागिति न देवतास्तुतिः ।

**प्राञ्चमुदञ्चमृजुं दीर्घꣳ संततं ज्योतिष्मत्याघारयति ।**

प्राञ्चमुदञ्चमीशान्यभिमुखम् । ऋजुमित्यादिपुनर्वचनं पूर्ववदित्येतावता सिद्धे क्रियते तज्ज्ञापयत्याचार्योऽत्र मतान्तर आघारो नेष्टो होम एवेष्टः सँ पक्षो मा भूत्किं त्वाघारमेवात्राप्यृजुत्वादिगुणविशिष्टं कुर्यादिति । तथोक्तमापस्तम्बेन—'अपि वा

* सर्वपुस्तकेषु अवजिघ्रतीति विद्यते परं तु अवहन्तीत्यपेक्षितमिति प्रतिभाति ।

१ क. ग. च. छ. ट. यत्र । २ क. ग. च. छ. ट. ठ. 'नुवादेप्यपि तस्मात्स्वा' । ३ क. ग. च. छ. ट. ड. स मा ।

नाऽऽघारयेत्पूर्वार्धे मध्ये पश्चार्धे वा जुहुयात्' इति। तथा यजमानेनान्वारम्भोऽपि धर्मः प्रत्याख्यातः। ननु कथं ब्राह्मणे दृष्टा सूत्रान्तरे व्याख्यातः प्रत्याख्यात इति चेत्। उच्यते-आघारमाघार्यमाणमनु समारभ्यैतस्मिन्काले देवाः सुवर्गं लोकमायन्सा- क्षादेव यजमानः सुवर्गं लोकमेतीति ब्राह्मणे मन्त्रगतस्य समारभ्येत्यस्य पदस्यार्थं व्याख्ययाऽर्थवादो न तु यजमानेनान्वारम्भः कार्य इत्यर्थो भवति। तस्मादत्राऽऽचार्य- स्यान्वारम्भविधिर्नेष्ट इति भाष्यकारेण प्रपञ्चितम्।

तिर्यञ्चं वा।

एतदपि पूर्ववद्व्याख्येयं; दक्षिणमारभ्योत्तरपर्यन्तं कुर्यादित्यर्थः।

सर्वाणीध्मकाष्ठानि सꣳस्पर्शयति।

गतार्थम्।

हुत्वाऽनुप्राणिति।

अत्र हुत्वेत्यनुवादेऽपि नायं दर्विहोमः संस्कारकर्मत्वात्प्रधानकर्म हि दर्विहोम इति स्थापयिष्यते, तथाऽपि स्वाहाकारेण दानरूपताऽप्यस्ति, तेनादृष्टार्थत्वेन होमोऽयं भवन्संस्कारोऽपीत्यर्थः। यज्जुह्वां प्रयाजेभ्यस्तदिति प्रयाजार्थत्वेनावगतस्य चाऽऽघारकरणेऽपादानभूतस्य संस्कारः प्रयाजार्थ इति न्यायः। प्रथमाघारः प्रधान- कर्मैव ज्ञेयम्। तस्माद्यत्र प्रयाजा न सन्ति नास्ति तत्र द्वितीयाघार इति सिद्धम्। अनुप्राणिति होमावसरे श्वासमनुरुध्य हुत्वा मुञ्चेदित्यर्थः।

ऊर्ध्वमाघारयेत्स्वर्गकामस्य न्यञ्चं वृष्टिकामस्य।

कामविशिष्टस्य यजमानस्योर्ध्वमाघारयेत्प्रारम्भे स्रुचं जुहूं निम्नत्वेन धृत्वा समाप्ति- पर्यन्तमुच्चोच्चतरत्वेनेति स्वर्गकामस्योर्ध्वत्वमुक्तम्। वृष्टिकामस्य न्यञ्चमादावूर्ध्वं समाप्ता- वधस्तान्नयनेन द्रष्टव्यम्। अविशेषादुभयत्राऽऽघारयोः।

द्वेष्यस्य न्यञ्चं विच्छिनत्ति वा।

निन्दार्थवादोऽयं प्रतिषेधार्थो विना कामं कदाचिदपि न्यञ्चं नाऽऽघारयेद्विच्छेदं सर्वदा न कुर्यादित्यर्थः।

यं कामयेत प्रमायुकः स्यादिति जिह्मं तस्याऽऽघारयेत्।

अयमपि निन्दार्थवादः पूर्ववत्प्रतिषेधार्थः।

बृहद्भा इति स्रुचमुद्गृह्णाति[३]।

जुहूमुद्गृह्णाति धारासमाप्त्यनन्तरमुच्चां नयति।

---

१ च. °था याजमानेऽन्वा°। २ क. ग. च. छ. ट. ठ. °र्ध्वमु°। ३ क. ख. ग. ङ. च. झ. ज. ञ. ट. ठ. ढ. 'ति हुत्वा स्रु'।

**पाहि माऽग्न इत्यसꣳस्पर्शयन्स्रुचावत्याक्रामति ।**

जुहूपभृतोः परस्परमसंसर्गं संपादयन्नुत्तरतोऽतिक्रामति । सुचरिते भजेति मन्त्रान्तः ।

**समक्तमग्निना घृतꣳ समक्तꣳ हविषा हविः ।**
**समन्तरिक्षमर्चिषेति जुह्वा ध्रुवां त्रिः समनक्ति ।**

जुहूगताज्येन तथैव ध्रुवां समनक्ति सकृन्मन्त्रेण द्विस्तूष्णीम् । अत्र कर्मत्वेन ध्रुवायास्तदाज्यस्य संस्कृतिः ।

**मखस्य शिरोऽसीति वा ।**

विकल्पः पूर्वमन्त्रेण । ज्योतिरङ्गामित्यन्तः ।

**उन्नीतꣳ राय इति स्रुवेण ध्रुवाया आज्यमादाय**
**सुवीराय स्वाहेति जुहूं प्रत्यभिघारयति ।**

स्रुवगतेनाऽऽज्येन जुहूसंस्कारः ।

**यज्ञेन यज्ञः संतत इति जुह्वा ध्रुवाम् ।**[1]

प्रत्यभिघारयतीति पूर्वानुवृत्तिः । ध्रुवासंस्कारः । समञ्जनं बिन्दुमात्रप्रक्षेपेण, प्रत्यभिघारणं तु किंचिद्धाराकरणेनेति भेदेनोपादानं धात्वोः ।

**सादयित्वा स्रुचौ ।**

यथास्थानम् ।

**प्रवरं प्रवृणीते ।**

प्रतिज्ञामात्रमधिकारार्थम् । प्रवरो नामर्षिनाम्ना वंशनिष्ठं सामान्यं तत्कीर्तनं प्रवरणम् । तदितिकर्तव्यतां तावदाह—

**इध्मसंनहनानि स्फ्य उपसंगृह्य वेदेश्च तृण-**
**मत्यन्तमध्वर्युः प्रवरायावतिष्ठते ॥ २ ॥**

इध्मसंनहनानि शुल्वमुद्ग्रथ्य कृतानि तृणानि तानि स्फ्ये श्लेषयित्वा वेदेस्तृणं च श्लेषयित्वा । तत्कीदृशम्—अत्यन्तं वेदेरन्तो मध्यस्तस्मादपगतं विश्लिष्टं तादृशं न भवति तदत्यन्तं तस्य बर्हिष एकं तृणं मूलदेशेन वेद्या लग्नमेव स्फ्ये श्लेषयित्वेति यावत् । अध्वर्युग्रहणं विशिष्टान्वारम्भकर्तृत्वार्थम् । अध्वर्युरेव नाऽऽग्नीध्र उपसंगृह्णातीत्यर्थः । अथ वा होतुरप्यग्रे वक्ष्यते[3] तत्र नैते धर्मा इति । प्रवराय प्रवरं वक्तुमवतिष्ठतेऽवस्थितो भवेन्नाऽऽस्त इत्यर्थः । वेदिसमीपेऽथवोत्तरत उत्कर इति भारद्वाजबौधायनौ । तेनोत्करस्योत्तरदेशे वेदेर्वा स्थितौ दक्षिणामुखावित्यपि गम्यते । प्राङ्मुखप्रत्य-

---

१ क. ग. च. छ. ट. ठ. °नं तु बिं° । २ क. ग. च. छ. ट. ठ. प्रवरं । ३ ख. °तेऽत्रैते ।

ङ्मुखभावेनावस्थितयोरध्वर्य्वाग्नीध्रयोर्होतुः सहान्वारम्भणं हौत्रोक्तं विरुध्येत । दक्षिणा-मुखौ भूत्वा स्फ्यमूर्ध्वाग्रं संनहनैस्तृणेन च श्लेषयित्वोपसंगृह्योति[1] उपसंगृह्णन्नवति-ष्ठतेऽध्वर्युर्दक्षिणामुखः ।

प्रवरणाङ्गं जपमाह—

**क इदमध्वर्युर्भविष्यति स इदमध्वर्युर्भविष्यति यज्ञो यज्ञस्य विष्णोः स्थाने तिष्ठामि वागार्त्विज्यं करोतु मन आर्त्विज्यं करोतु वाचं प्रपद्ये भूर्भुवः सुवरित्यध्वर्युर्जपति ।**

स्पष्टम् ।

**तान्याग्नीध्रोऽन्वारभ्य पश्चादवतिष्ठते ।**

तानीति स्फ्येध्मसंनहनवेदितृणानि । नपुंसकमनपुंसकेनेति नपुंसकत्वम् । पश्चाद-ध्वर्योः । 'पश्चादवस्थायाऽऽग्नीध्रः' इति वैखानसः ।

**क इदमग्नीद्भविष्यति स इदमग्नीद्भविष्यतीति मन्त्र॰ संनमति ।**

नायमूहो मन्त्रेऽपि तु लाघवेन समानो मन्त्रोऽग्नीत्पदवानध्वर्युपदस्थाने पाठित इति दर्शितम् ।

उभयोः प्रवरणाङ्गे सहैव जपे सत्याह—

**ब्रह्मन्प्रवरायाऽऽश्रावयिष्यामीत्यामन्त्रयते ।**

ब्रह्माणमित्यर्थात् । प्रवरं यजमानस्य वक्तुमथवा प्रवरणं प्रवरक्रिया[2] तस्यै तां प्रवरणक्रियां कर्तुमाश्रावयिष्यामि आग्नीध्रमनुमोदयितुं[3] प्रेरयिष्यामीति तदर्थश्रावणेनेति यावत् ।

ब्रह्मणा चौ(चो)माश्रावयेति प्रसूते सत्याह—

**आश्रावयोश्रावयेति[4] वाऽऽश्रावयति[5] ।**

ओश्रावयेति पदच्छेदः पररूपमोकारस्य । द्वयोरन्यतरेणैवानुमोदयितुं प्रेरयति, आग्नीध्रमित्यर्थात् ।

नाऽऽत्मसंस्कारमात्रं[6] तदेवाऽऽह—

**अस्तु श्रौषडित्याग्नीध्रः प्रत्याश्रावयति ।**

प्रतिमोदनं श्रावयतीत्यर्थः । कथं, श्रौषडनुमतिरस्त्विति । अत्र पाणिनिस्मृत्या

---

१ ख. 'यित्वाऽत्रोप॰ । २ क. ग. च. छ. ठ. 'वरणक्रि॰ । ३ क ग. च. छ. ट. ठ. ॰मोदितुं । ४ घ. ङ. ज. झ. ञ. ढ. 'वयोमाश्रावये॰ । ५ ङ. 'ति । त्रयाणामन्यतमेनानु॰ । ६ क. च. ट. नात्र सं॰ ।

प्लुतः । 'ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः' । प्लुत इत्यनुवर्तते । आदेर्वर्णस्य ब्रू प्रे श्रौ वौ आ इत्येवंरूपस्य प्लुतो भवति । तथा 'अग्नीत्प्रेषणे परस्य च' इति, आश्रावयेति चाग्नीत्प्रेषणं तत्राऽऽदेर्वर्णस्य परस्य च वर्णस्य प्लुतिः । तेनाऽऽकारस्य प्लुतिः, श्रा, इत्यस्य चेति ज्ञेयम् । अग्नीद्ग्रहणाद्ब्रह्मणा प्रसवे क्रियमाण ओमाश्रावयेत्यत्र प्लुतिर्न भवेत् ।

**एवमाश्रुतप्रत्याश्रुते भवतः ।**

सर्वत्रेति शेषः । यत्र यत्राऽऽश्रावणप्रत्याश्रावणे दर्शपूर्णमासयोरुच्येते तत्र सर्वत्रैवं प्रकृते प्रवरप्रकरण उक्ते अपि ये सर्वदर्शपूर्णमासार्थत्वेन याजमान उक्ते ते एव प्रवरार्थमुक्ते अपि सर्वार्थे ज्ञेये इति भावः ।

विशेषमाह—

**उत्करे दक्षिणामुखस्तिष्ठन्नाग्नीध्रः स्फ्यं धारयन्प्रत्याश्रावयत्यन्येष्वाश्रावणेषु प्रवरात् ।**

प्रवरविषयादन्येष्वाश्रावणेषु अध्वर्युणा कृतेषु सत्सु उत्कर इत्यादिविशेषणविशिष्ट आग्नीध्रः प्रत्याश्रावयतीति संबन्धः । अत्र्न्मसंनहनसहितस्यैव स्फ्यस्य ग्रहणम् । अत एवोक्तमापस्तम्बेन—स्फ्यं संमार्गांश्च धारयन्निति । इध्मसंनहनानि[1] परिध्यग्निसंमार्जनार्थतयोक्तानि ।

प्रकृतमाह—

**प्रत्याश्राविते प्रवरं प्रवृणीते ।**

गतम् ।

कथं तत्राऽऽह—

**अग्निर्देवो होता देवान्यक्षद्विद्वाꣳश्चिकित्वान्मनुष्वद्भरतवदमुवदमुवदिति यथा यजमानस्याऽऽर्षेयं सह परेण त्रीननन्तरान् ।**

प्रवृणीत इत्यनुवर्तते । अत्र प्रवरेऽमुवदिति वीप्सया प्रवरिणामृषीणां नामधेयानि वदति[2] । त्रीनिति परिच्छिद्य ग्राह्याण्युक्तानि । ब्रह्मण्वदा च वक्षदिति वक्ष्यते, तेन बहून्परेण[3] सह त्रीनेव वृणीतेऽनन्तरानव्यवहितान् ।

तत्र विश्वासाय श्रुतिं प्रमाणयति—

**इत ऊर्ध्वान्मन्त्रकृतोऽध्वर्युर्वृणीते यथर्षि मन्त्रकृतो वृणीत इति विज्ञायते ।**

यजमानस्य प्रवरगणे ये मन्त्रकृत ऋषयः श्रूयन्ते तानूर्ध्वानितः प्रथमोत्पन्नप्रवरिणमृषिमारभ्येत्यर्थः । तथाहि कौशिके यजमाने मनुष्वद्भरतवदित्युक्त्वा कुशिकवद-

---

१ क. ग. च. छ. ट. ठ. °हनैः प° । २ क. ग. च. छ. ट. ठ. वदन्ति । ३ क. ग. च. ठ. °हूनप° ।

घमर्षणवद्विश्वामित्रवदिति वदेत्। ततो ब्रह्मण्वदा च वक्षदित्यादि। अध्वर्युग्रहणमग्नी-न्निवृत्त्यर्थम्।

होतृप्रवरे प्रसङ्गादाह—

**अमुतोऽर्वाञ्चो होतेति विज्ञायते।**

अमुतस्तृतीयादर्वाञ्चः, अर्वागञ्चन्तीत्यर्वाञ्चस्तानर्वाञ्चो विपरीतान्पश्चादुत्पन्नप्रभृती-न्पूर्वपूर्वान्।

**पुरोहितस्य प्रवरेण राजा प्रवृणीते।**

राज्ञोऽध्वर्युर्होता वा स्वस्याऽऽर्षेयाभावात्।

तत्रापि श्रुतिं प्रमाणयति—

**पुरोहितस्याऽऽर्षेयेणाऽऽवेदयेदिति राज्ञो विज्ञायते निषा-दरथकाराश्च यमृषिमनुब्रुवते तेन तेषां प्रवरं प्रवृणीते।**

तेषामप्याधानमग्निहोत्रं दर्शपूर्णमासौ च वक्ष्यत्याचार्यः, तदर्थमिदमुक्तम्। तेषां पुरोहितोऽपि नास्ति यमृषिमनुब्रुवते वंशोत्पादकत्वेन।

**तथा ब्राह्मणानां राजार्पितानां राज्ञां वा ब्राह्मणार्पितानाम्।**

अर्पकप्रवरेणेत्यर्थः।

**द्विगोत्रस्य त्रीꣳस्त्रीनेकैकस्माद्गोत्रादुपलक्षयेत्।**

उपलक्षयेदुच्चारयेत्।

**+ तथा[१]ऽसंप्रज्ञातबन्धोः पुरोहितप्रवरेणाऽऽचार्यप्रवरेण वा।**

न ज्ञायन्ते बन्धवो वंश्या यस्य तस्येत्यर्थः।

**कृत्स्नमेकेषां प्रवरं प्रतिषिध्य मनुवदि[२]त्येव विदधाति।**

एकेषां शाखिनां ब्राह्मणं सर्वं प्रवरं प्रतिषिध्याविशेषेण मनुवदित्येव ब्रूयादिति विदधाति। वक्ष्यति प्रवराध्याये मानव्यो हि प्रजा इति।

**ब्रह्मण्वदा च वक्षद्ब्राह्मणा अस्य यज्ञस्य प्रावितार इति प्रवरशेषः।**

पूर्वोक्ते सर्वत्रायं शेषो ज्ञेयः।

**असाविति होतुरुपाꣳशु नाम गृह्णाति।**

प्रवर उच्चैस्त्वाधिकारात्प्रथमैकवचनान्तं होतुर्नाम गृह्णाति।

**मानुष इत्युच्चैः।**

स्पष्टम्।

**सीदति होता।**

---

+ घ. ज. झ. ञ. ढ. पुस्तकेषु अथासंप्रज्ञातेति पाठः।

---

१ ख. 'थाऽज्ञा'। २ ख. घ. ङ. ज. झ. ञ. ढ. 'त्येतद्विद'।

एतत्तु पूर्वकृतान्वारम्भविमोकार्थमुक्तं विमुक्तेऽध्वर्यौ ।

**वेद्यां तृणमपिसृजति ॥ ३ ॥**

अध्वर्युर्वेद्यां तृणमारम्भणार्थं स्फ्येन सह धृतं यथास्थितमेव करोति ।

**इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां प्रयोगवैजयन्त्यां महादेवकृतायां द्वितीयप्रश्ने प्रथमः पटलः ॥ १ ॥**

---

अथ द्वितीयः पटलः ।

---

**आज्यभागयोरावापे स्विष्टकृति पत्नीसंयाजेषु च याज्यापुरोनुवाक्ये याज्यैव प्रयाजानूयाजेषु ।**

चकारः प्रत्येकं संबध्यते । याज्या[पुरो]नुवाक्ये इति प्रतियागं द्वयमित्यभिप्रायेण । आवापो नामाऽऽवृत्त्या क्रियमाणानि प्रधानानि तन्त्रवर्जितान्यावापः प्रत्येकमोप्यमानत्वात्तन्त्रप्रतिकूलत्वेनाऽऽवापशब्दप्रयोगात्तन्त्रावापाविति । किमर्थमिदं, यागानां संप्रैषविशेषव्यवस्थार्थम् । भाष्यकृता व्युत्पन्नो व्याख्यातः प्रधानयागवाच्येव । स्पष्टमितरत् । याज्यैव प्रयाजानूयाजेषु पुरोनुवाक्यापरिसंख्यार्थमेवेति ।

**उभयीष्वाश्रुतप्रत्याश्रुते याज्यासंप्रैषश्च ।**

उभयीषु याज्यापुरोनुवाक्यायुक्तासु केवलासु चाऽऽश्रावणप्रत्याश्रावणे याज्यासंप्रैषश्चेत्येतत्परिभाष्यते ।

**अनपव्याहरन्तः प्रचरन्ति ।**

अवदन्तो यथा भवन्ति ते तथा ।

एतदेव प्रपञ्चयति—

**सोऽध्वर्युर्नापव्याहरेत्पुराऽऽश्रावणादाश्राविते८ग्नीन्नापव्याहरेत्पुरा प्रत्याश्रावणात्प्रत्याश्राविते८ध्वर्युर्नापव्याहरेत्पुरा यजेति वचनाद्यजेत्युक्ते होता नापव्याहरेत्पुरा वषट्कारात् ।**

स प्रथमः । एषु स्थानेषु यदि वदेयुस्तदा पुनराश्रावणादि कुर्युर्व्याहृतीश्च जपेयुरिति प्रायश्चित्तमापस्तम्बोक्तं ज्ञेयम् ।

**उत्तरतः पुरोनुवाक्यामवदास्यन्नवद्यन्नवत्ते वा संप्रेष्यति ।**

उत्तरतो वेदेः स्थितोऽवदानं करिष्यन्नारम्भात्पूर्वमारम्भेण सह वा संप्रैष्यति अवत्तेऽवदाने गृहीते वा साभिघारणे तस्याप्यवत्तत्वेन परिगणनात् । पुरोनुवाक्यां वक्तुमित्यर्थः ।

कथं संप्रेष्यति तत्राऽऽह—

**अमुष्मा अनुब्रूहीति यथादेवतम् ।**

अमुष्मा इति चतुर्थ्यन्तेन देवतानाम्ना संप्रेष्यति यथादेवतं या यत्र देवता तस्या नाम्ना ।

**दक्षिणतो याज्यामत्याक्रम्याऽऽश्राव्य प्रत्याश्राविते्ऽमुं यजेति यथादेवतꣳ संप्रेष्यति ।**

अत्याक्रम्य दक्षिणतः स्थित आश्राव्याऽऽग्नीध्रेण प्रत्याश्राविते सति यथादेवतममुं यजेति याज्यां संप्रेष्यतीत्यन्वयः । अमुमिति द्वितीयान्तं देवतानाम गृहीत्वाऽग्निमिति ततो यजेति संप्रेष्यति ।

**वषट्कारे वषट्कृते वा जुहोति याज्यापुरोनुवाक्यावतीषु चतुरवत्तं पञ्चावत्तं वा ।**

वषट्कृते सह वषट्कारेण वेति श्रुतेर्वषट्कारे प्रदानार्थे क्रियमाणे तेन सहैवाथवा वषट्कारे कृते वाऽऽहुतिं जुहोति प्रक्षिपति जुह्वाऽऽहवनीय इत्यर्थः । अत्र जुहोतिना दानं न विधीयते वषट्कारेण प्रदीयमानस्य प्रत्तस्य[वा] पुनर्दानायोगात् । प्रक्षेपमात्रं होमभक्तिर्जुहोतेर्वाच्या । अत्र प्रयाजानुयाजेषु प्रत्येकं विभागाभावाद्वक्ष्यमाणं चतुर्गृहीतं पञ्चगृहीतं च न संभवतीति तदर्थमिदं सूत्रं सामान्येन कृतमग्रिमं तु विशेषेण पृथगेव कृतं(त) [मिति] विशेषः ।

**पञ्चावत्तं जमदग्नीनां चतुरवत्तमितरेषां गोत्राणाम् ।**

जुहोतीति पूर्वसूत्रादनुवृत्तिः । याज्यापुरोनुवाक्यावतीष्वित्यत्राऽऽहुतिष्विति शेषो योग्यत्वात् । आहुतयो होमक्रियास्तिस्र आहुतीर्जुहोत्याहुतिपरिमाणं वेति दर्शनात् । पुरोनुवाक्यायुक्तवषट्का[1]रा[2]न्तयाज्यया क्रियमाणत्वाद्याज्यापुरोनुवाक्यावत्य आहुतयो भवन्ति । तासु क्रियमाणासु सतीषु यद्वषट्कारोपलक्षितं जुहोति तच्चतुरवत्तं पञ्चावत्तं वा जुहोतीत्यन्वयः । पूर्वं[3] चतुष्पञ्च[4] वाऽवत्तं संपादितमेव जुहोति नान्यथेति गम्यते । यैर्द्याहुतयो होतव्यानि द्रव्याणि, जुह्वाऽऽहवनीय आहुतयो हूयन्त इति दर्शनात् । तासुं[5] च पूर्वं च याज्यानुवाक्यावत्त्वं ज्ञेयम् । तासु प्रसक्तासु सतीषु यज्जुहोति तच्चतुरवत्तं पञ्चावत्तं वा [6]कृत्वा जुहोति । पूर्वमेव तथाऽवत्तं सज्जुहोतीति नियम्यते । अथ वाऽऽहुतिषु हो[7]तव्येषु(व्यासु) द्रव्यरूपासु किंविशिष्टासु याज्यापुरोनुवाक्यावतीषु

१ ख. वा । २ क. ग. च. ठ. °कारोऽत्र याज्योपलक्षिका क्रि° । ३ छ. ट. °राऽत्र याज्योपलक्षिका क्रि° । ४ च. °ष्पञ्चाव° । ५ ख. यदाऽऽहु° । ६ ख. °सु पूर्ववद्याज्यापुरोनु° । ७ च. द्रव्येषु

ताभ्यां दीयमानत्वेन तद्वतीषु देवतातीलक्षणयागेषु याज्यापुरोनुवाक्यावतीषु पूर्वं याज्या-पुरोनुवाक्यावतीषु ताभ्यां दीयमानावित्यर्थः । आज्यभागयोरित्यादिना यागेषु च याज्यादेवताविधानात् । तासु प्रसक्तासु देवत्य(त)योश्चतुरवत्तं पञ्चावत्तं सदेव जुहोति दीयमानं चतुरवत्तं पञ्चावत्तं वा कृत्वैव पश्चाज्जुहोतीत्यर्थः । अवदानानि(नां) देवतार्थत्वे लिङ्गं वक्ष्यति हि अङ्गुष्ठपर्वमात्राणि दैवतान्यवदानानि । देवतायै यागे च संबद्धानि देवतायास्तानि दैवतान्यवदानान्यवदीयमानान्यङ्गुष्ठपर्वमात्राणीति विवक्षितत्वात् । न चैवमवदानमात्रार्थत्वं यागस्येति । आज्यभागाभ्यां प्रचार उक्तस्तथा हवींष्यभिघार-यतीत्यनुवृत्तौ यदनुपूर्वाणि प्रदीयन्त इत्यभिधास्यमानत्वाद्धविषामेव प्रदेयत्व इन्द्र-स्यापि प्रतिहविः प्रत्यभिघारयतीत्यत्र । यागो हि सकलपुरोडाशसांनाय्यसाध्य उत्पत्तिविधौ तथा श्रवणात् । यागश्च देवतोद्देशेनोत्पादितस्य सकलस्यापि द्रव्यस्य स्रुच्यवदानमेको भागोऽन्यश्च वेद्यां स्थितो याज्यानुवाक्याभ्यां वषट्कारा-न्ताभ्यां भागद्वयमपि दीयते, तत्रैकस्य भागस्यावदानरूपस्यैव होमेन प्रतिपत्तिस्तस्यैव चतुरवत्तं पञ्चावत्तं वाऽन्यस्य वेद्यामवस्थितस्य भागस्य स्विष्टकृदादिना प्रतिपत्तिः श्रुत्यन्तरे चतुरवत्तं पञ्चावत्तं वेति तद्व्यवस्थापितमितरेषां जमदग्नीनां च यजमानानाम-ध्वर्युर्जुहोतीत्यर्थः । इदं चोक्तं वक्ष्यमाणं च धर्मजातं पुरोडाशाज्यसांनाय्यहविस्त्रयं साधारणमेव । जामदग्न्यो जामदग्न्यौ जमदग्नय इति बहुत्वे प्रत्ययस्य लुक् । गोत्र-गोत्रिणोरभेदाद्गोत्राणामित्युक्तम् ।

अप्यजामदग्न्यो जामदग्न्यमामन्त्र्य पञ्चावत्तं कुर्वीत ।

अजामदग्न्योऽपि जामदग्न्यं पृष्ट्वा जामदग्न्य पञ्चावत्तं करिष्यामीति पश्चात्पञ्चावत्तं कुर्यादित्यर्थः ।

अङ्गुष्ठपर्वमात्राणि दैवतान्यवदानानि भवन्ति ।

अङ्गुष्ठपर्वमात्रं हस्तस्याङ्गुष्ठस्य मध्यसंधेरूर्ध्वं काण्डं पर्व तत्प्रमाणानि पर्वमात्राणि यावन्ति दैवतान्याज्यसांनाय्ययोरपि तावतां परिमाणम् ।

उत्तराण्युत्तराणि स्थवीयांसि ।

सामान्यविधिरयं श्रौतः ।

तं व्याचष्टे—

दैवतेभ्यः सौविष्टकृतानि सौविष्टकृतेभ्य
ऐडानि तथा चातुर्धाकरणिकानि ।

दैवतेभ्योऽवदानेभ्यः स्थवीयांसीति पूर्वेणापि संबन्धः । एवमुत्तरत्रापि स्विष्टकृ-

---

१ ख. ट. ˚ताभ्यती˚ । २ क. ग. च. छ. ट. ठ. ˚नुष्ठावदानानि प्र˚ ।

त्संबन्धीनि तथा । अत्र न स्वाभ्यामिति सूत्रेणैजागमाद्रूपसिद्धिः । ऐडानि चातुर्धाकर-णिकानि समान्येव ।

**मांसमंहिताभ्यामङ्गुलीभ्यामङ्गुष्ठेन च पुरोडाश-स्यावद्यति स्रुवेणाऽऽज्यसांनाय्ययोर्मेक्षणेन चरूणाम् ।**

अवद्यतीत्यनुवर्तते । चरौ हस्तावदाने चोदकप्राप्ते मेक्षणेनेति तत्सामर्थ्यादित्युक्तम्। श्रुतिर्हि स्रुवेणावद्यति हस्तेनावद्यति मेक्षणेनावद्यति स्वधितिनाऽवद्यतीत्यविशिष्टा सा नियमिता सामर्थ्येन हस्तेनेत्येतस्य शास्त्रान्तरवशान्मांससंहिताभ्यामङ्गुलीभ्यामङ्गुष्ठेन चेति विशेषपर्यवसानेन विधिर्दर्शितः । अत्र सामर्थ्यस्य व्यवस्थापकत्वेन वपायाः सांनाय्यविकारत्वेऽपि हस्तेनैवावदानमोषधिविकारचरुयवाग्वोर्मेक्षणेन स्रुवेण वेति दर्शि-तम् । मांससंहिते संलग्ने सर्वाङ्गुलीनां तथात्वादुभयतो मांसेन लग्ने इत्यर्थसिद्धे मध्यमे द्वे । अत एव वैखानसेनानामिकामध्यमाभ्यामित्युक्तम् ।

**मध्यात्पुरोडाशस्यावदाय पूर्वार्धादवद्यति पश्चार्धात्तृतीयं पञ्चावत्तिनः ।**

अत्र स्थाननियममात्रं पुरोडाशविषयं वक्ष्यमाणधर्मा आज्यसांनाय्ययोस्तु मध्यादि-विभागेऽपि तदभावः । प्रथममवदानं पुरोडाशस्योपरि मध्यप्रदेशादवदाय स्रुचि स्थाप-यित्वा ततः पूर्वार्धात्पुरोडाशस्य पूर्वो योऽर्धो भागोऽसौ पूर्वार्धस्तस्माद्यत्र कुत्रचिदव-द्यति पूर्वार्धाव्यभिचारेण तदपि स्रुच्यवधाय जामदग्न्यस्य तदनुमतस्य वा पञ्चावत्तिन-स्तृतीयमवदानं पश्चार्धात्पूर्वार्धवद्व्याख्या । अत्र विशेषमाहाऽऽपस्तम्बः—'मध्यादङ्गुष्ठ-पर्वमात्रमवदानं तिरश्चीनमवद्यति पूर्वार्धाद्द्वितीयमनूचीनम्' इति । वैखानसेनोक्तं तत्प-श्चार्धात्तृतीयमिति, द्वितीयवत्तृतीयम् । दक्षिणप्रदेशे हस्तं नीत्वाऽङ्गुल्यङ्गुष्ठाग्राण्युदङ्-मुखानि तैः कृत्वा दक्षिणोत्तरं दैर्घ्येण कृतमवदानं तिरश्चीनं पूर्वाभिमुखाङ्गुल्यग्रैरवत्तम-नूचीनम् । असंभिन्दन्निति विशेषान्तरमुक्तमापस्तम्बेन । संभेदो मध्ये द्वयोर्मर्यादार्थ इति कात्यायनमतिस्तन्नेष्टमित्यसंभेदः संश्लेष उक्तः । संश्लेषात्पूर्वावदानप्रदेशादवदान-योरर्थात्संश्लिष्टप्रदेशे परमवदानं कुर्यादित्यर्थः । अस्मदाचार्येण तु यत्रासंभिन्दन्नवद्य-तीत्युच्यते तत्रैव नियमोऽन्यत्र न नियम इति तथोक्तम् ।

तृतीयं पश्चार्धादित्युक्तं तस्यापवादमाह—

**आनुजावरस्य जघन्यमवदानं प्रथमम् ।**

प्राप्ते प्राथम्यमात्रं नियम्यतेऽन्यथाऽवदानमात्रस्य प्राप्तत्वाद्विशिष्टविध्यसंभवाज्जघ-न्यत्वप्रथमत्वयोर्गुणयोः परस्परासंबद्धयोर्विधाने वाक्यभेदः स्यात्तस्मात्प्राप्तमवदानं जघन्यमनन्तरं कृतं प्रथमापेक्षया जघन्यं पूर्वकृतात्पश्चात्कृतत्वाच्च तत्र प्राथम्यं निय-म्यते । आनुजावरशब्दस्तु प्रजापतिरिन्द्रमसृजताऽऽनुजावरमित्यादौ समानानां श्रेष्ठे

दृश्यते । तत्रानुमन्ता समानानां स आनुजावर इति व्युत्पादयन्ति केचित् । अथवाऽनुसाम्येन जाता अनुजा एव आनुजास्तेषां वरमथवा पश्चाद्गामिनो येभ्यो इति यावत्तेषां श्रेष्ठः स आनुजावर इति नानार्थवादानुसारेण कल्प्यम् । केचिदयं काम्यः कल्प इत्याहुरर्थवादेभ्यो यो राजन्य आनुजावरः स्यादित्यादौ तथा दर्शनादिति तन्नाऽऽचार्येणेष्टं, जघन्यमित्यनूद्य प्रथमत्वं विधीयते, यदि कामार्थमपूर्वं विधानं तदा जघनात्प्रथममवदानमिति विशिष्टं विधीयेत । न चोत्तरसूत्रमेतदर्थं भवत्यत एव वैखानसेन नियमविधानं कृतमवदायेत्यादि, कामपद एवमिति । तस्मात्प्रकृत्याऽऽनुजावरस्य यजमानस्य विशेषविधिर्नित्य एव ।

अवदाय पूर्वार्धे स्रुचो निदध्यात्प्रथमं जघन्यं पश्चार्धे ।

प्रथममवदानं यन्मध्यादवत्तं तत्स्रुवः पूर्वार्धे बिलस्य पूर्वस्मिन्नर्धभाग एव निदध्याज्जघन्यमनन्तरमवत्तं तद्द्वितीयं तृतीयं च वा तत्पश्चार्धे स्रुच इत्युभयत्र संबन्धः । तदुक्तं स्पष्टं वैखानसेन—पूर्वार्धे स्रुचो निधाय प्रथमं पश्चार्धे जघन्यमिति । तेनाऽऽनुजावरपक्ष एव मोक्तो येन जघन्यपदेनाऽऽनुजावरविषयताशङ्का स्यात् । आनुजावरस्यापि तथैवावत्तं प्रथमं पूर्वार्धे न्यस्य जघन्यं पश्चादवत्तत्वात्तत्पश्चार्धे इत्यपि संभवात् । ननु कथमानुजावरस्य पञ्चावत्तिनो द्वितीयतृतीयावदानक्रमः । उच्यते—पश्चार्धाद्यदा प्रथमं द्वितीयं तु पूर्वार्धात्तृतीयं मध्यादिति । अत एवाऽऽनुजावरस्य चतुरवत्तिन उत्क्रमापत्तस्तेनाऽऽनुजावरस्य पूर्वार्धात्प्रथममवदानमवदाय पूर्वार्धे स्रुचो निदध्यान्मध्यादपरमवदाय पश्चार्धे स्रुच इत्युक्तम्(ति) । एवं चास्मत्सूत्रे तथा व्याख्यातुं शक्यं यच्चतुरवत्तिनो जघन्यं यदवदानं द्वितीयमित्यर्थः, तत्प्रथमं चतुरवत्तिन आनुजावरस्य तथैव पञ्चावत्तिन आनुजावरस्य यद्यज्जघन्यं यस्माद्यस्मादनन्तरं कृतं तत्तस्मात्तस्मात्पूर्वं पूर्वं कर्तव्यं, तेन मध्यमवदानात्प्रकृतौ जघन्यं तत्तस्मात्पूर्वम् ।

पूर्वपूर्वाण्यवद्येज्ज्येष्ठस्य ज्यैष्ठिनेयस्य ॥ ४ ॥ पुरोधाकामस्य वा ।

पूर्वं पूर्वभागस्थं पूर्वं प्रथमं येषामवदानानां तानि पूर्वपूर्वाणि ज्येष्ठस्य प्रथमोत्पन्नस्य तथैव ज्यैष्ठिनेयस्य ज्येष्ठा भार्या तस्याः पुत्रस्य तादृशस्य यजमानस्य पञ्चावत्तिनश्चेत्पूर्वभागात्प्रथमं द्वितीयं मध्यात्तृतीयं तु पश्चार्धाच्चतुरवत्तिनस्तु ज्येष्ठस्य ज्यैष्ठिनेयस्य तृतीयं नास्ति । तृतीयापेक्षया च द्वितीयं मध्यस्थं भवत्येव पूर्वभागस्थं तृतीयापेक्षया च प्रथमं च कर्तुं शक्यमिति नित्यविधिरयम् । पुरोधा पौरोहित्यं तत्कामस्य काम्यम् ।

अपरपूर्वाणि कनिष्ठस्य कानिष्ठिनेयस्याऽऽनुजावरस्य वा ।

---

१ ख. ट. याम्या । २ ख. ट. र्थे नित्य ए ।

अपरं पश्चिमभागस्थं तत्पूर्वं प्रथमं येषामिति । पूर्ववदेवान्यत्सर्वम् । आनुज्ञावस्य विकल्पः । पूर्वकल्पेनात्र चतुरवत्तिनो नास्ति पूर्वार्धात्तृतीयमिति पूर्ववदेव व्यवस्था ।

**पुरोडाशसांनाय्ययोरुपस्तरणाभिघारणे आज्ये-नोपस्तीर्य हविषोऽवदायाऽऽज्येनाभिघारयेत् ।**

अत्र याज्यानुवाक्यावतीषु चतुरवत्तमित्युक्तमवदाने तु द्वे उक्ते तत्र कथं चतुरवत्तं तथा पञ्चावत्तमपि तद्दर्शयत्यनेन । पुरोडाशसांनाय्यग्रहणादाज्यस्य चतुरवदानेन चतुरवत्तं भवति[1] । तयोश्चतुरवत्तमुपस्तरणाभिघारणाभ्यामेव कर्तव्यम् । श्रूयते हि वाजसनेयके 'स आज्यस्योपस्तीर्य द्विर्हविषोऽवदायाथोपरिष्टादाज्यस्याभिघारयति[2] । सैषाऽऽज्येन मिश्राऽऽहुतिर्हूयते' इति । सूत्रे हविर्मात्रस्य यद्यप्यवदानमात्रमुक्तं तथाऽपि पुरोडाशसांनाय्ययोरित्युक्तत्वादाज्यहविषो[3] यागस्य याज्यापुरोनुवाक्यावतीषु नोपस्तरणाभिघारणे । तत्राऽऽज्येनैव चतुरवत्तं पञ्चावत्तं वा संपाद्य जुहोतीत्यर्थादेव सिद्धम् । आज्यं चात्र ध्रुवाया एवाऽऽहवनीयार्थाज्यत्वात् । न च स्रुवेणाऽऽज्यस्थाल्या एव प्रदेयद्रव्यसंस्कारत्वेनोपक्षीणत्वादिति वाच्यम् । प्रदेयद्रव्यत्वेऽपि पुरोडाशाहुतिं जुहोत्याज्यं हुत्वाऽवदानं जुहोत्याज्येनान्ततोऽन्ववस्रावयतीत्याहवनीयगामित्वमप्युक्तम् ।

**स्रुच्युपस्तीर्य मा भेर्मा संविक्था मा त्वा हिꣳसिषं मा ते तेजोऽपक्रमीत् । भरतमुद्धरे मनुषिञ्चावदानानि ते प्रत्यवदास्यामि नमस्ते अस्तु मा मा हिꣳसीरित्यवदास्यन्हविरभिमृशति ।**

स्रुच्युपस्तीर्येत्यधिकरणं विधीयते, उपस्तीर्येत्यनुवादः । हविरवदास्यन्हविरभिमृशतीत्युभयत्र संबन्धः[4] । करणमन्त्रोऽयं बदति अत्रापि हविरिति स्विष्टकृति प्रत्यभिमर्शनं मा भूदिति ।

**अवदायाभिघार्य यदवदानानि तेऽवद्यन्विलोमाकार्षमात्मनः । आज्येन प्रत्यनज्म्येनत्तत्त आप्यायतां पुनरिति हविः प्रत्यभिघारयति ।**

अत्र पूर्वानुवादः क्रमार्थः । प्रत्यभिघारणमाप्यायनमाज्यस्थाल्या आज्येनानाहवनीयाज्यार्थत्वात्पुरोडाशसांनाय्ययोर्वेदिस्थयोरेव हविषोः संस्कारः क्रियते न त्वाहवनीयगामित्वेनोत्तराहुत्यर्थम् । ननु नेदं हविस्तच्छेषोऽयं ह्यवदानस्य यागार्थत्वेन गृहीत-

---

१ ख. °ति । पुरोडाशसांनाय्ययोस्तु चतु° । २ क. ग. च. छ. ठ. ठ. °क्तं किं तु विजातीयस्यैवेति । सैषाऽऽज्येन मिश्राऽऽहुतिरिति वचनान्नाऽऽज्यस्याऽऽज्यमिश्रणं पु° । ३ क. ग. च. छ. ट. ठ. °क्तमाज्य° । ४ ख. °न्धः । अ° ।

स्यात् । एवं तर्हि ज्ञापयत्याचार्यो न ह्यवदानमात्रेण यागोऽपि तु सकलपुरोडाशेनैव ततस्तु याज्यया स्रुग्गते वेदिगते च द्रव्ये वषट्कारेण दत्ते पश्चात्सर्वोऽपि शेष एवेति तस्मात्प्रत्यभिमर्शनं प्रत्यभिघारणं च न स्विष्टकृतीति । ननु श्रूयते वाजसनेयके तस्मा-द्यस्य कस्य च हविषोऽवद्यति पुनरेव तदभिघारयति स्विष्टकृत एव तदाप्याययतीति स्विष्टकृदर्थत्वश्रवणाद्ध्रुवेदाहवनीयाज्यार्थत्वमिति चेत् । न । सा प्रत्यभिघारणस्तुतिः पुनरेव तदभिघारयतीत्यस्य विधेर्हविर्दीदमानं वेदिस्थमपि तेन संस्कृतं नाऽऽहवनीय-गामि तद्धि व्ययितं कथं स्विष्टकृतेऽवदेयमतः प्रत्यभिघारणेन व्ययितस्याऽऽप्यायने सति स्विष्टकृदवदानयोग्यतासंपादनेन स्तुतिः प्रत्यभिघारणविधेरेव । व्याख्यातमेतन्मी-मांसापारदृश्वभिर्वार्तिकाचार्यैः सर्वस्य पुरोडाशस्य यागाङ्गत्वं न ह्यवदानमात्रस्येति । स्रुच्युपस्तीर्येति क्त्वाप्रत्ययेन मा भेरित्यभिमर्शनस्योत्तरकालतोक्ता, तेनोपांशुयाज उपस्तरणाभावाद्ध्रौवस्य नाभिमर्शनम् ।

अवदायावदाय प्रस्तरबर्हिः समनक्तीति विज्ञायते ।

अवदाय चतुरवत्तं तस्यैव पदार्थत्वात्तदसमाप्तौ नान्यारम्भः । वीप्सा तु सर्व-हविषां सकृदन्ते मा भूत्प्रतिचतुरवत्तं यथा स्यादिति साज्येन स्रुवेण [इति] वैखानसः । धर्ममात्रमेतदिति वक्तुं विज्ञायत इत्युक्तम् ।

अपिदधदिवाप्रक्ष्णन्पुरोडाशाहुतिं जुहोत्याज्यं हुत्वाऽवदानं जुहोत्याज्येनान्ततोऽन्ववस्रावयति ।

पुरोडाशाहुतिं जुहोति तामेवापिदधदिवेषत्पिहितां कुर्वन्स्रुचः पुष्करेण तामेवाप्रक्ष्णन्न-विशीर्णयंस्तत्रैव विशेषमाहाऽऽज्यं हुत्वोपस्तरणाभिघारणाज्यमादावाहुतिस्थाने मुखेन स्रावयित्वा तदुपर्यवदानद्वयं पार्श्वेनोत्तरेण हुत्वाऽपिदधदित्यस्य सामर्थ्यात्पार्श्वेनेति गम्यते, मुखेनेतरा इति विशेषविधेः पुरोडाशाहुतीः पार्श्वेनैव हुत्वाऽन्ततोऽनन्तरमेव हुतावदानमवशिष्टेनाऽऽज्येन मुखेनैवावस्रावयति श्रोतद्भूतप्लुतं करोति । उक्तं भाग-वते—श्रोतद्भूतप्लुतमदन्हुतभुङ्मुखेनेति । आज्यसांनाय्ययोर्हविषोर्यागे नैतत्संभवति आज्यं हुत्वाऽवदानं जुहोतीति । तस्य पृथग्भावाच्चतुरवत्तं पञ्चावत्तं वा जुहोतीत्यैता-वानेव सामान्यविधिः ।

मुखेनेतराः स्रावयति ।

इतरा आहुतीराज्यसांनाय्ययोः, दर्विहोमाहुतिग्रहणार्थं स्रावणयोग्या यवाग्वाद्याहु-तिरपि मुखेन मांसं पार्श्वेनेत्याहुः । अत एवाऽऽपस्तम्बेनोक्तं सर्वाणि द्रव्याणि स्रुङ्मु-खेन(ण) जुहोतीति । तदिदमितरा इति बहुवचनेन सूचितम् ।

---

१ घ. ङ. ज. झ. ञ. ढ. 'हुतीर्जुहो' । २ क. ग. च. छ. ट. ठ. 'थगभावा' । ३ क. ग. च. छ. ट. 'र्धे स्रुवेण ।

पूर्वां पूर्वाꣳ सꣳहितामावापाहुतिं जुहोति ।

पूर्वां पूर्वां पूर्वभागे पूर्वभागे प्राक्संस्थमित्यर्थः । संहितां परस्परसंश्लिष्टामुत्तरामावापाहुतिमावापाहुतिं प्रधानाहुतिम् ।

स्रुच्यमाघारमनुजुहोति ।

द्वितीयाघाररेखामनुलक्षीकृत्य जुहोति । अग्नीषोमावन्तरा देवता इति ब्राह्मणं स्पष्टत्वाज्ज्ञायत इत्युपेक्षितमापस्तम्बेन तु तथैवोक्तम् । तथाऽऽघारसंभेदेन देवाहुतीः प्रतिपादयतीति प्रवेशयतीत्याद्युक्तम् । तदस्माकमविरुद्धम् । एवं च यदा तिर्यञ्चावाघारौ तदाऽऽज्यभागयोर्मध्ये कार्यौ प्रधानाहुत्यनुग्रहायेत्यपि ज्ञेयम् ।

एवं परिभाष्य प्रकृतमाह—

प्रवरं प्रवृत्य घृतवतीमध्वर्यो स्रुचमास्यस्वेत्युच्यमाने जुहूपभृतावादाय सकृदतिक्रान्तः पञ्च प्रयाजान्यजत्यभिक्रामं समानत्र वा तिष्ठन् ।

यजति जुहोति तथैवाऽऽपस्तम्बादिभिरभिधानात् । एवं तर्हि यजतीत्येव समिधो यजतीत्याद्युत्पत्तिवाक्येषु दृश्यते, नचात्र हौत्रसंज्ञाऽस्ति, तत्राऽऽध्वर्यव एव यजतीति दर्शनादाश्रावणयजेतिप्रैषकर्तृत्वाच्चोदकेऽध्वर्योरेव यजतीति प्रयुज्यते यागकर्तुः प्रेरकत्वेन तद्द्वाराऽध्वर्युरेव यजति । सर्वत्र चाऽऽध्वर्यवे यजुर्वेदे यजतयो बहुधा श्रूयन्ते । तत्र ते साङ्गकर्मणो विधायकास्तत्र ब्रह्मणा स्वसंज्ञया ब्रह्मत्वं यथा क्रियत एवं होत्रा च हौत्रं क्रियते । याज्यापुरोनुवाक्यानां हौत्रसमाख्यानादवशिष्टान्यङ्गानि ततोऽध्वर्युरेव करोतीति सोऽपि जहल्लक्षणया यजतीत्युच्यते । यदा विशेषकर्मविधानं तदा तत्तद्धातुभिरेव विधानमध्वर्योस्तर्हि श्रुतौ चाभिक्रामं जुहोतीति विद्यमाने किमर्थं यजतिप्रयोगो लक्षणया कृत इति चेत् । न । पञ्चेति संख्यया भेदोऽनु(नू (?) )दितः स तु यजत्यभ्यासकृतः, स तु न होमेषु किं तु यागेष्वेव । प्रयाजानिति नामधेयमपि यागानामेवोत्पत्तिविधौ यागाश्च प्रत्येकं समिधो यजतीत्यादिसंज्ञास्तन्निमित्तभूता याज्या प्रतिपाद्या देवता अपि यागेष्वेव न होमेष्विति दर्शितम् । जुहोतीत्युक्ते सर्वमिदमसंबद्धमेव स्यात् । किंचाभिक्रामं जुहोतीत्ययं दर्शपूर्णमासप्रकरणे श्रूयमाणो दर्शपूर्णमासप्रकरणगतसर्वहोमैः संबध्यमानः कथं प्रयाजमात्रतया संकोचमर्हति, न ह्यभिक्रामं प्रयाजाञ्जुहोतीति वाक्यमस्त्येवं शङ्कानिरासार्थं यजतिप्रयोगः । पूर्वे पश्चाच्च यजतियुक्तप्रयाजवाक्यसद्भावात्संदंशपतितो होमोऽवान्तरप्रकरणेन प्रयाजशेषतया गृहीत इति पञ्च प्रयाजान्यजत्यभि-

---

१ घ. ङ. ज. झ. ञ. ढ. 'हुतीर्जुहो° ।

क्रामं समानत्र वा तिष्ठन्निति यजिना गृहीतं पश्चादाध्वर्यवसमाख्यानादध्वर्युकर्तृके-ष्वङ्गेषु होमेष्ववान्तरवाक्यबलादङ्गावतारन्यायेन च होमेष्वेवावतरतीति दर्शितम्। तथा च कुतोऽभिक्रम्याभिक्रम्य जुहोतीति केन वा समानस्थाने स्थित्वा जुहोतीति शाखान्तरीयेऽप्याकाङ्क्षा पूरिता यानि प्रयाजाद्यान्यध्वर्युकर्तृकाणि तेषां स्थाना-दिति तेन च समानत्रेति च तत्राऽऽश्रावणं यजेति प्रैषस्तयोः स्थानादभिक्राममिति णमुल्, अभिक्रम्याभिक्रम्येति, तथा तेन स्थानेन समानस्थाने तिष्ठन्निति चाध्वर्युकर्तृ-कता सिध्यति, तथैवार्थो निषेध्यत्वेन विधेयत्वेन च सोमे दर्शितः शब्दार्थः। यतो मन्येतानभिक्रम्य होष्यामीति तत्तिष्ठन्नाश्रावयेदिति तस्मात्समानत्र तिष्ठता होतव्यं प्रतिष्ठित्या इति, तथा यदभिक्रम्य जुहुयात्प्रतिष्ठाया इयादिति च प्रतिषेध्यत्वेन चोक्तं, तेन समानार्थतयाऽत्रापि तदेव व्याख्यानम्। ननु न विधान्तरमस्ति यत्परिसंख्य-याऽभिक्रमणानभिक्रमणे विधीयेते अन्यतरस्य नित्यप्राप्तत्वात्। उच्यते—पञ्चस्वप्य-न्यतरन्नियम्यते तथाचार्थवद्भवति पञ्चाप्यभिक्रम्याभिक्रम्याथ वा समानत्र तिष्ठन्नेव पञ्चापीत्ययमेवार्थः पञ्चेति संख्यया दर्शितोऽन्यथा बहुवचनेनैव सर्वधर्मसिद्धिः। तथा च सवषट्कारेषु होमेषु सर्वत्रान्यत्र विना सोमं न नियमोऽभिक्रमणानभिक्रम-णयोरित्यप्यर्थात्सिध्यति। प्रवरं प्रवृत्येत्यसंनिहितस्मरणार्थमुक्तम्। आदावेवाभिक्रान्तो न तु पुरोनुवाक्याप्रैषो व्यवधायकोऽस्ति। पुनः प्रत्याक्रमणमपि तत एव नास्तीति वक्तुं सकृदित्युक्तम्।

## द्वेष्यस्यावक्रामन् (सू)।

यजतीत्यन्वयः। निन्दार्थवादोऽयं निषेधार्थः। न हि यजमानोऽध्वर्योर्भवति द्वेष्योऽवक्रम्याऽऽश्रावणस्थानात्पश्चाद्गत्वा न जुहोतीत्यर्थः। पृथिवी होतेति याज-मानम्।

## समिधो यजेति प्रथमं प्रयाजं संप्रेष्यति यज यजेत्युत्तरान्।

प्रथमं प्रयाजमिति सप्तम्यर्थे द्वितीया। अत एव कात्यायनः—समिधो यजेति पञ्च प्रयाजान्समिद्धतम इति। समिद्धतमः प्रथमः प्रयाजः। तथा श्रुतिः—समिधहो(द्धो)-मेन समृद्ध आहुत इति। समिद्धतमत्वं प्रथमस्य तथा च संप्रैषः पञ्चानामप्यर्थ इत्युक्तं स्यात्। भरद्वाजेन प्रथम इति चोक्तम्। तन्त्रेणायं पञ्चानां प्रैषः समिच्छब्देन लिङ्ग-समवायेन प्राणभृत इतिवत्। अत्र वचनान्नामधेयेनैव प्रैषः। अन्यत्र यजनीयां देवता-मुद्दिश्यैव प्रैषो यथाऽग्निं यज सोमं यजेति। अतस्तु विकृतौ समिच्छब्देन याज्यायां पशौ देवताश्रवणाभावेऽपि प्राकृतनामधेयेन विकृतौ प्रवृत्तेन समिद्भ्यः प्रेष्येत्युपपद्यते। प्रयाजग्रहणं न कर्तव्यमधिकरणादेव प्राप्तेः। कर्तव्यं प्रत्येकं संज्ञा यथा स्यात्। हो-

---

१ ख. °धिकारादे°।

तारमित्यर्थात्। यज यजेत्येवं वीप्सा सर्वापेक्षया प्रतिप्रयाजं यजेति संप्रेष्यति। नन्वत्र समिध इति कर्मनामधेयं समिधो यजतीत्युत्पत्तिविधौ श्रुतं न संप्रैषेण संबध्यतेऽतो देवता एता देवता हि यष्टव्यत्वेन प्रतिपाद्याः प्रैषे तथैवान्यत्र दर्शनात्। यदि देवता एता याज्यावगतास्तदा यदुच्यते-ऋतवो वै प्रयाजा ऋतूनेव प्रीणातीत्यादिदेवताप्रतिपादनं तत्तदा विरुध्यते। ऋतुदेवत्याः प्रयाजा भवन्तीति बौधायनोक्तमपि विरुध्येत। तथा निरुक्तकारेणापि यदुक्तमाग्नेया वै प्रयाजा आग्नेया अनुयाजा इति ब्राह्मणमित्यादिना नानाब्राह्मणैर्नानादेवतात्वमाशङ्क्योक्तमाग्नेया इति तु स्थितिरितरद्भक्तिमात्रमिति निर्णीतं तदपि विरुध्येत। अत्रोच्यते—समिच्छब्देन कर्माभिधानमेव, उत्तरानिति समभिव्याहारात्। न ह्युत्तरशब्देन देवतोपस्थितिर्भवति। विशेषणं ह्युत्तरशब्दः। तस्य सापेक्षस्य विशेष्यं नोपलभ्यतेऽतोऽनुवृत्तं प्रयाजमित्येव संबध्यते परिणतं प्रयाजानिति। अत्राप्युत्तरेषु प्रयाजेष्वित्यर्थः। समिध इत्येतद्द्वितीयान्तं यजेत्यनेन संबध्यते समिधो यजति दर्शपूर्णमासौ यजत इतिवत्। देवतानिर्णयस्तु—अत्र तद्धितेन चतुर्थ्या वा देवताप्रतीतिस्तु नास्त्येव, मन्त्रवर्णादेव देवतानिर्णयः। तत्र याज्या एवान्तरङ्गा बहिरङ्गं याजमानं वसन्तमृतूनां प्रीणामीत्यादि। नामापि देवतानिमित्तं समिदादि याज्यादेवता एवानुसरति। तत्रापि समिदादिशब्दवाच्या एव देवताः। मीमांसका अपि ह्यभ्यासाधिकरणादौ मन्त्रवर्णसिद्धदेवतानुवादि नामधेयमित्याहुर्नवमस्य द्वितीयपादेऽपि। याज्यासु सर्वत्राग्निरपि श्रूयते समिधो अग्न आज्यस्य व्यन्त्वित्यादौ तथाऽपि न नाम्ना नापि व्यन्त्वित्यनेन चाग्निशब्दः संबध्यते। सामानाधिकरण्येन समिदादिशब्दाः श्रूयन्ते। उत्पत्तिवाक्ये च समिदादिशब्दा एव देवतानिमित्तानि नामधेयानि श्रूयन्ते। नाग्निशब्दोऽप्यग्निदेवतानिमित्तं नामधेयं प्रैषेऽपि समिच्छब्द एव। ततस्तु समिदादिशब्दैरेवोद्देश इति सूत्रकृतोऽभिप्रायः। कुतः, यतो याज्यासु व्यन्त्विति बहुवचनप्रथमपुरुषौ नाग्निशब्दान्वयिनाविति। हेऽग्ने ते तनुवः समिध इत्यन्वयः। निरुक्तमप्याग्नेयत्वं वदन्न शब्दमन्यथयति किंतु समिदादिशब्दप्रतिपाद्या देवताऽग्निरित्येव, तदप्युक्तं तेनैव प्रयाजान्मे अनुयाजांश्चेत्यनयर्चाऽग्निना भागा अर्थितास्ते भागास्तव प्रयाजा इत्यनयर्चा तस्मै ते प्रयाजानुयाजा भागत्वेन देवैर्दत्ता इति प्रयाजानुयाजदेवता अग्निरूपेण ध्येया इति प्रतिपादितम्। तत्रैवोक्तं किमर्थमिदमुच्यत इत्याशङ्क्य यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट्करिष्यन्निति परिहारे सप्रयोजनतोक्ता। अत्राऽऽशङ्काभिप्रायः—याज्याभिर्देवता प्रतिपादिता सा ये शब्देन यत्र प्राप्ता सा तेन शब्देनैव देवतात्वं लभते न शब्दान्तरेण। ततस्तु नाना ब्राह्मणोदाहरणैरनेकदेवतत्वप्राप्तिस्तन्निराकरणमाग्नेया वै प्रयाजा आग्नेया अनुयाजा इति निर्णयोऽपि निरर्थकोऽनुष्ठानशब्दयोर्भेदाभावादिति। उत्तराभिप्रायस्तु शब्दा-

देऽपि याज्यासु देवताध्यानं श्रुतिप्राप्तं कुत्र का देवता तैस्तैः शब्दैः प्रतिपाद्येति यावन्न ज्ञायते तावन्न ध्यानं कर्तुं शक्यमित्यस्ति देवतानिर्णयप्रयोजनमिति। ततस्तु बौधायनमतेऽपि समिदादिशब्दवाच्या ऋतव इत्येव निर्णयो न तु वसन्तादिशब्दैरुद्देशः कार्य इति। ननु पञ्चमप्रयाजे तु संनिपत्योपकारकं वक्ष्यमाणदेवतासंस्कारकत्वं, तत्र स्वाहाकारो नामधेयं तत्र कथं देवतानिमित्तता नामधेयस्याग्नेर्वा कथं ते शब्दाः प्रतिपादका इति च। उच्यते—स्वाहाकारो मन्त्ररूपस्वाहेत्ययंशब्दः। तस्य निरुक्तं स्वाहेति सुष्ठु आहेति वा स्वा वागाहेति वा स्वं प्राहेति वा स्वाहुतं हविर्जुहोतीति वेति। व्याख्यातं च तद्भाष्ये तात्पर्यं सुष्ठु आहेत्येवमादि। तत्स्वाहाकारस्य जन्मेति ब्राह्मणम्। स्वाहा क्रियते याभ्यस्ताः स्वाहाकारा देवता अग्निं स्वाहा सोमं स्वाहेत्याद्या द्वितीयानिर्दिष्टा एता एव देवता आज्यपा अतः स्वाहाकारशब्देन देवतासामान्यवाचिना पञ्चमप्रयाजोऽपि स्वाहाकारः। अत्र लिङ्गं स्वाहाकृतीभ्यः प्रेष्येति पशौ। ततस्तु विकृतिषु याज्याशब्दैरेव त्यागो ध्यानमाप्रीसूक्ते निरुक्त एव दर्शितं तत्तथैव प्रत्येकं ज्ञेयम्। वसन्तादिशब्दैर्दैवलक्षकैर्यथा प्रकृतावनुमन्त्रणमेवं तैरेव शब्दैर्लक्षकैरेव विकृतिष्वप्यनुमन्त्रणमिति नोहः। अनुयाजेषु तु याज्यागतैर्देवबर्हिरादिशब्दैरेवोद्देशोऽनुमन्त्रणं च बर्हिषोऽहमित्यादि कर्मसमवेतार्थप्रकाशकैरेवं प्रकृतौ दर्शनात्तथैवोहेन याज्यादेवता अनुमन्त्रणे प्रतिपाद्या इति निर्णयः। येऽग्निशब्देनोद्दिशन्ति तेषां मते क्रियमाण ऊहोऽनुयाजेष्वनुमन्त्रणे त्वप्रामाणिक एव भवेत्। कुतः। न बर्हिषोऽहं देवयज्ययेत्यनुमन्त्रणं समवेतार्थप्रतिपादकमभिधयाऽथ लक्षणया तर्हि प्रयाजैरेव समः समाधिरित्यलमतिप्रसङ्गेन विरांकुर्वन्तु न्यायविदः।

समिधः पुरस्ताद्यजति तनूनपातं दक्षिणत इडः
पश्चादर्धमौपभृतस्य जुह्वामानीय बर्हिरुत्तरतो
यजति स्वाहाकारं मध्येऽपरेण वाऽऽघारसंभेदं
पूर्वं पूर्वं[१] संहितं[१] समानत्र वा सर्वान्।

समिद्यागे पुरस्ताज्जुहोति मध्यात्पुरस्तादित्यादि ज्ञेयम्। अपरेण वाऽऽघारसंभेदमिति पूर्वं पूर्वं संहितं पश्चार्धे पूर्वं पूर्वमिति पश्चिमेन पश्चिमेन संहितं प्राचो यजतीत्युक्तः संनिवेशविकल्पः। तथैवोक्तं वैखानसेनापरेणाऽऽघारसंभेदं प्राचो वेति। आघारयोर्यत्र प्रदेशे संधानं तत्र मध्यदेशस्तमपरेण तस्य पश्चात्संभेदस्य समीपे समानत्रैकस्मिन्नेव स्थाने तत्रैव संनिवेशविकल्पः। प्रतिदिशं संततं प्राचीनं समानत्र वेति त्रयः पक्षास्तत्र सर्वेष्वपि पक्षेषु अर्धमौपभृतस्य जुह्वामानीय बर्हिर्यजतीति। आनीय बर्हिरिति बर्हिरेवाऽऽनीतेन यजतीत्युक्तं तेन जुहूगतेनाऽऽज्येनाग-

१ क. ग. च. ट. °स्याभे वा क्र°।

श्चतुर्थः पञ्चमश्चौपभृताज्येन । तथा च ब्राह्मणं(णे) समानयत उपभृतस्तेजो वा आज्यं प्रजा बर्हिः प्रजास्वेव तेजो दधातीति बर्हिरर्थत्वेनैव समानीतस्य संस्तवात्। इदं वचनं कालमात्रविधानमिति केचिदाहुस्तन्निरस्तं ब्राह्मणेन प्रदर्शितेन । अनेनैवा- भिप्रायेण भाष्यकृताऽपि व्याख्यातम् । प्रयोजनं तु अपबर्हिषः प्रयाजान्यत्र यजति तत्र प्रथमं चतुर्गृहीतं नास्त्युपभृति ब्रह्मणस्त्वेत्यादिचतुर्गृहीतमेकमेव तथा पश्चावपि प्रथममन्त्रैरेवोपभृति गृह्णीयात् ।

प्रत्याक्रम्य प्रयाजशेषेण हवींष्यभिघारयति ।

सति शेषे । तस्मिन्नसति नाभिघारणं तस्य शेषप्रतिपत्तिरूपत्वात् । ननु हवींष्यभि घारयतीति द्वितीयाश्रवणाद्धविषां संस्कार्यत्वाच्छेषं कृत्वा हविरभिघारणं कार्यं तत्राः प्रतिनिधिनाऽऽज्यान्तरेणाभिघारणमिति चेत् । न । साधितमेतन्न्यायविद्भिर्यच्छेषप्रतिप त्तिरियमिति । तदेवाऽऽचार्येणापि शेषशब्देन सिद्धवदनुवादेन दर्शितं यदयं प्रयाज शेषं कुर्यादिति न ब्रूते । तेन पश्चादौ यावद्धव्योत्पत्ति प्रयाजशेषं न पात्रान्तरे स्थाप नीयमिति प्रयोजनं च तैरेव साधितं, तस्मादेव केवलप्रतिपत्तिरूपत्वात्सूत्रकाराणामपि मते प्रतिनिधिर्नास्ति । द्वितीया तथायुक्तं चानीप्सितमिति भविष्यति ।

यदनुपूर्वाणि प्रदीयन्ते ।

यदनुपूर्वमेषां तानि तथा यत्क्रमविशिष्टानि दीयन्ते । अत्र परार्थान्येकेन क्रियेर न्निति प्रयाजशेषप्रतिपत्तिरेकस्मिन्नेव भवेद्धविषि कपालेनैकेनैव तुषप्रतिपत्तिरित्याश- ङ्कयोक्तं यदनुपूर्वाणीति । प्रयाजशेषेण हवींष्यभिघारयतीति बहुवचनं श्रूयत उपादे- यानि च हवींषि हविःषु शेषं प्रतिपादयेदिति । तस्माद्बहुवचनं विवक्षितमिति । एता- वदत्र हविःशब्देनाङ्गप्रधानहवींषि वषट्कारप्रदानानि गृह्यन्ते । तेनोत्पत्स्यमानहवि- षोऽपि प्रतिपत्तिः कालान्तरेऽपि कार्येति न सिध्यति, प्रतिपत्तिकाले सिद्धैरेव कार्या न तु प्रतिपत्तिर्द्रव्यस्याङ्गभूतस्योत्पत्स्यमानस्य समयपर्यन्तं विप्रकर्षं सहते, सिद्धैरेवाङ्गः प्रधानहविर्भिः सिद्धत्वात् ।

तदानुपूर्व्यमेवाऽऽह—

ध्रुवामभिघार्याऽऽग्नेयमभिघारयत्युपभृतमन्ततः ।

अङ्गप्रधानग्रहणे प्रधानमेव गृह्यत इति न्यायादङ्गहविषां ग्रहणं न स्यादित्याश- ङ्कयोक्तं ध्रुवामित्यादि । हविषां यागाङ्गत्वात्सर्वेषामङ्गत्वमविशिष्टम् । तानि च नात्रो- द्देश्यानि किं तु विधेयानीति भावः । विकृतिष्वनाज्यभागासु न ध्रुवाभिघारणम् ध्रुवामाग्नेयमग्नीषोमीयम्। ध्रुवामाग्नेयमैन्द्राग्नं शृतं दधि चेति मध्ये यथासंभवं ज्ञेयानि

१ ख. °भृतेनाऽऽज्ये° ।

उपांशुयाजार्थत्वेऽपि ध्रौवस्यं न पुनरभिघारणम् । प्रत्येकं ग्रहणात्पूर्वं तस्यैकत्वादसंस्कार्यत्वाच्च । नाऽऽवृतिः प्रतिपत्तेः । अन्तत इति यावन्ति मध्ये संभवन्ति तावतां कृत्वेति दर्शितम् ।

आज्यभागाभ्यामाज्यहविर्भ्यां प्रचरति ।

आज्यभागाविति द्वयोः कर्मणोर्नामधेयम्, आज्यं भागो भागधेयं ययोस्तौ, तथाऽपि रूढिः, सरस्वत्याज्यभागेति योग एवेति ज्ञेयम् । आज्यद्रव्योत्पत्तिविधिस्तु सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यमिति दर्शयितुमुक्तमाज्यहविर्भ्यामिति, आज्य हविर्ययोस्तौ तथा (ताभ्यां), प्रचरति अनुतिष्ठते(ति)। यजतीति वक्तव्ये साङ्गे यज्यर्थे प्रचरतिः प्रयुक्तः । अत्र चतुरवत्तं पञ्चावत्तं वा विहितमाज्यं, याज्यापुरोनुवाक्यावतीभ्विति वचनान्नोपस्तरणाभिघारणे पुरोडाशसांनाय्ययोरिति तयोर्विधानात् । ततस्तु स्रुच्युपस्तीर्य मा भेरित्यभिमृश्य तथाऽवदायाभिघार्य हविः प्रत्यभिघारयतीत्यन्तं पुरोडाशसांनाय्ययोरेव ।

तौ प्रबाहुग्ज्योतिष्मेत्युत्तरार्धेऽग्नये जुहोति दक्षिणार्धे सोमाय ।

प्रबाहुक्समौ सज्वाले । उत्तरो भाग आयतनस्योत्तरार्धस्तथैव दक्षिणार्धे इत्यपि ज्ञेयम् । उत्तरार्धपूर्वार्धे दक्षिणार्धपूर्वार्धे इति बौधायनापस्तम्बाभ्यामुक्तम् । गृह्येऽस्ययमपि तथैव वक्ष्यति । श्रुतिस्तु पूर्वार्धे जुहोतीत्युपक्रम्योत्तरार्धेऽग्नये जुहोति दक्षिणार्धे सोमायेति स्पष्टैवास्ति । तथाऽपि तिर्यञ्चावाघारौ यदा तदाऽऽघारस्य स्रुचयस्य प्रधानाहुतीः प्रत्यधिकरणताऽऽघारौ च मध्ये तयोः प्रान्ते दक्षिणार्धपूर्वार्धमात्र एवाऽऽज्यभागहोमे सति वक्ष्यमाणं तावन्तरेणेति युज्यते । तस्मादाघारानुरोधेनैवाऽऽज्यभागयोः स्थानं नियतमिति वक्तुं दक्षिणार्धपूर्वार्धे इत्याद्युक्तम् ।

तावन्तरेणेतरा जुहोति ॥ ९ ॥

ज्योतिष्मतीत्यनुकर्षः । इतरा आहुतीरिति शेषः । आज्यभागाभ्यामितरास्ताः प्रधानानुयाजाहुतिभ्यस्तासां नियतस्थानत्वादत्र दर्विहोमाहुतयो नियम्यन्ते । अत्र विशेषश्रुतिराथर्वणिकी—'यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने । तदाऽऽज्यभागावन्तरेणाऽऽहुतीः प्रतिपादयेत् ' इति । तथैवाऽऽपस्तम्बेनाप्युक्तम् ।

आज्यभागौ प्रति स्रुचावादत्त न निदधात्या स्विष्टकृतः ।

प्रति लक्षीकृत्य पूर्वकाले पूर्वं घृतवतीमध्वर्यो स्रुचमास्यस्वेत्यत्र गृहीतयोर्निधानेऽनुक्तेऽपि पुनरादत्त इति वचनेनानुवादो मध्ये निधानप्रतिषेधार्थः । पूर्वं गृहीतयोरर्थप्राप्ते निधानेऽपि न दोष इदानीं गृहीतयोर्मध्ये निधाने प्रायश्चित्तमर्थे स्याचमनादौ प्राप्तेऽ-

१ च. ट. °स्य पु° । २ घ. ङ ज. झ ञ ढ. ष्मती जुहोत्य° । ३ क. ख ग. च छ. ट. °नं न नि° । ४ घ. ङ. ज झ. ञ ढ. यजति । ५ घ ङ ज. झ. ञ. ढ. प्रवृत्ति ।

न्यस्य हस्ते दत्त्वा गन्तव्यमेतत्स्विष्टकृतः समाप्तिपर्यन्तं ज्ञेयम् । भारद्वाजेन प्रयाजे- भ्योऽनन्तरं सादनमुक्तमाज्यभागौ प्रत्यादानं [च] तत्रेष्टमाचार्यस्य मध्ये सादन- स्यादृष्टार्थत्वापत्तेर्न्यायविरोधादित्याहुस्तत्र, जुहूपभृतावादाय प्रयाजान्यजतीति स्वपा प्रयाजाङ्गतोक्ता । तत्र आज्यभागौ प्रति स्रुचावादत्त इति वचनादाज्यभागार्थं पुनरादा- नमर्थसिद्धम् । पूर्वं निधानमेवेष्टमाचार्यस्य ।

प्रचर्याऽऽग्नेयेन पुरोडाशेनाऽऽज्यहविषोपांशुयाजेन प्रचरति ।

चतुरवत्तेन पञ्चावत्तेन वा ध्रौवाज्येन प्रचर्येतिल्यपा पूर्वकालत्वमात्रमुक्तमाग्नेय- पुरोडाशस्य । तत्र क्रमः—आज्यभागावारभ्य दक्षिणेन जुहूं सव्येनोपभृतमादायाग्नयेऽ- नुब्रूहीति संप्रेष्य ध्रुवायाः स्रुवेणावदायाऽऽप्याय्य स्थालीगतेनैव प्रस्तरबर्हिरङ्क्त्वा स्रुवेण प्रत्याक्रम्याऽऽश्राव्य प्रत्याश्राविते्ऽग्निं यजेति संप्रेष्य सह वषट्कारेण वषट्कृते वाऽऽघा- राद्बहिरुत्तरार्धपूर्वार्धे तिरश्चोराघारयोस्तूत्तरे जुहोति । यथेतं प्रत्येत्य सोमायानुब्रूहीति प्रेष्य चतुरवदायातिक्रम्याऽऽश्रावणादि सोमं यजेत्यादि पूर्ववद्दक्षिणार्धपूर्वार्धे जुहोत्याघाराद्बहिराघारयोस्तिरश्चोर्दक्षिणे वा । अग्निः सोमश्च देवते अग्नीषोमयोरहं देवयज्यया चक्षुष्मान्भूयासमिति याजमानम् । अग्निर्होतेति च । यथेतं प्रत्येत्य स्रुच्यु- पस्तीर्याऽऽप्याय्य मा भेरिति पुरोडाशमाग्नेयमभिमृश्याग्नयेऽनुब्रूहि द्विस्त्रिर्वा व्यवस्थित- मवदाय स्रुचि प्रथमं पूर्वार्धे द्वितीयमवदानं पश्चार्धेऽवधायाभिघार्य यदवदानानीति प्रत्यभिघार्य प्रस्तरमाप्याय्य बर्हिरङ्क्त्वाऽत्याक्रम्याऽऽश्राव्य प्रत्याश्राविते्ऽग्निं यजेति संप्रेष्याऽऽज्यमाहुतिदेशे स्रुङ्मुखेन(ण) स्रावयित्वा वषट्कारेण सह वषट्कृते वा जुहोति । अग्रेणाऽऽघारसंभेदं जुहूं प्रवेश्य तत्पूर्वं स्रुच्याघाररेखायां स्रुक्पार्श्वेन स्रुक्पुष्क- रेणापिदधदिवाविशीर्णयन्नवदानं हुत्वाऽवशिष्टेनाऽऽज्येनाग्निस्थमवदानं स्रुङ्मुखेन(ण) श्चोतयति । अग्निर्देवताऽग्नेरहमिति याजमानम् । यथेतं प्रत्येत्याऽऽज्यहविष्केणोपांशु- याजनामकेन यागेन प्रचरति, नात्र मा भेः प्रजापतयेऽनुब्रूहीति यथादेवतम् । चतु- ष्पञ्च वाऽवदायाऽऽप्याय्य प्रस्तरं बर्हिरङ्क्त्वाऽत्याक्रम्याऽऽश्रावणादि प्रजापतिं यजे- त्यादि वषट्कारे वषट्कृते वा संभेदेन प्रवेश्य चाऽऽग्नेयेन संहात (तां) पूर्वभाग ईशान्य उदग्भागे वा स्रुच्याघाररेखायां जुहूमुखेन जुहोति । नात्राऽऽज्यं हुत्वाऽऽज्येनान्त- तोऽन्ववस्रावयतीति । नापिदधदित्यादि । प्रजापतिरग्नीषोमौ विष्णुर्वा देवता दब्धिरसीति सर्वत्र याजमानम् ।

तस्योच्चैराश्रुतप्रत्याश्रुते याज्यापुरोनुवाक्यासंप्रैषो वषट्कारश्च ।

उपांशुयाज इति संज्ञया सर्वत्रोपांशुत्वप्राप्तौ सामर्थ्येन संज्ञाबाधात्तस्योच्चैरित्या द्युक्तमाश्रावणादीनां परप्रत्यायनार्थत्वादित्यर्थः ।

---

१ क 'स्तत्र जु' । २ ड. 'वदाया' ।

तर्हि कुत्र संज्ञयोपांशुत्वं तत्राऽऽह—

उपांशु देवतादेशनम् ।

प्रजापतये प्रजापतिं ये यजामहे प्रजापतिमित्युपांशु । परप्रत्यायनार्थानामपि शास्त्रेण नियम उपांशुत्वस्य । याज्यापुरोनुवाक्ययोरपि देवतादेशनरूपत्वेनोपांशुता । अथवा तयोरुपांशुत्वस्याबाधात्संज्ञयैवोपांशुत्वं यागस्य साक्षादुत्पादकत्वेन दृष्टार्थतयाऽङ्गत्वात्तयोः ।

यथेतं प्रत्येत्य—

यथादेवतमुत्तरेण पुरोडाशेन प्रचरति ।

यद्यस्ति तर्हि प्रचरति पुरोडाशेनासोमयाजिनोऽस्ति पक्षेऽग्नीषोमीयः पौर्णमास्यां संनयतो नास्त्यैन्द्राग्नोऽमावास्यायाम् । अग्नीषोमीये सति स्रुच्युपस्तीर्याऽऽप्याय्य मा भेरवदाय प्रथममवदानं स्रुचि पूर्वार्धे द्वितीयादि पश्चार्धे पुष्करे निधायाभिघार्याऽऽप्याय्य प्रस्तरबर्हिरङ्क्त्वाऽत्याक्रम्याऽऽश्रावणादि अग्नीषोमाभ्यामनुब्रूहि वषट्कारेण वषट्कृते वोपांशुयाजाहुतिस्थानेन संलग्नामपिदधदिवाप्रक्षणञ्जुहोति प्राग्भाग ईशान्य उदग्भागे वा । अग्नीषोमौ देवता, अग्नीषोमयोरिति याजमानम् । अमावास्यायां नास्त्युपांशुयाज आग्नेयानन्तरमसंनयत ऐन्द्राग्नः । आग्नेयेन प्रचर्य यथेतं प्रत्येत्य स्रुच्युपस्तीर्याऽऽप्याय्य मा भेः । इन्द्राग्निभ्यामनुब्रूहि प्रथममवदानं स्रुचि पूर्वार्धे द्वितीयादि पश्चार्धे निधायाभिघार्याऽऽप्याय्य प्रस्तरबर्हिरङ्क्त्वाऽत्याक्रम्याऽऽश्रावणादि श्रावयित्वा वषट्कारेण वषट्कृते वाऽऽग्नेयेन संलग्नां पूर्वभाग ईशान्य उदग्भागे वाऽपिदधदिवाप्रक्षणञ्जुहोति । इन्द्राग्नी देवता । इन्द्राग्नियोरिति याजमानम् ।

संनयतस्तु—

समवदाय सांनाय्याभ्यां प्रचरति द्विः शृतस्यावद्यति द्विर्दध्नस्त्रिः पञ्चावत्तिनः ।

समवदाय शृतदध्नोरेकत्रावदानं समवदानं द्विवचनेन प्रत्येकं प्रधानत्वेऽपि सह प्रचार इत्युक्तम् । पुनर्द्विस्त्रिरिति वचनेनावदानयोरेवाऽऽवृत्तिरुपस्तरणाभिघारणे तु तन्त्रेणेति ज्ञापितम् । पुनर्विधानात्तावदेव प्रयोगः पुरोडाशसांनाय्ययोरुपस्तरणेत्यादिविधानात्स्रुच्युपस्तीर्याऽऽप्याय्येन्द्राय महेन्द्राय वाऽनुब्रूहीति मा भेरित्यावर्तते प्रदेशादात् । द्विस्त्रिर्वाऽवदायाभिघार्याऽऽप्याय्य प्रस्तरबर्हिरङ्क्त्वा यदवदानानि द्विरेतन्तं पदार्थानुसमयेनैवोत्तरत्र तन्त्रमत्याक्रम्याऽऽश्रावणादि । इन्द्रं महेन्द्रं वेति यथाधिकारं प्रेष्य संभेदेन स्रुचं प्रवेश्य नापिदधदिवेत्यादिनाऽपि पूर्वमपरं चाऽऽज्यावस्रावणं ज्वलं स्रुङ्मुखेनो(णो)पांशुयाजस्थाने जुहोति सांनाय्याहुतिम् । इन्द्रो महेन्द्रो वा देवता । न्द्रस्येति महेन्द्रस्येति वा याजमानम् ।

यथेतं प्रत्येत्य—

समवदाय स्विष्टकृता प्रचरति ।

एकत्रावदानं समवदानं स्विष्टकृत्संज्ञको यागः प्रधानहविःप्रतिपत्तिरूपतया दृष्टार्थत्वेन देवतोद्देशेन दानरूपत्वाददृष्टार्थत्वेन च द्व्यात्मकः । पुरोडाशसांनाय्ययाग-त्वादुपस्तरणादि । न मा भेरिति हविःशेषत्वात् ।

यदनुपूर्वाणि प्रदीयन्ते सर्वेभ्य उत्तरार्धेभ्यः सकृत्सकृदवद्यति ।

यद्यथाऽनु पूर्वं पूर्वमनतिक्रम्य विद्यन्ते तानि तथा, यथाऽनुपूर्वाणि प्रदीयन्ते प्रधान-देवताभ्यस्तथाऽनुपूर्वेभ्यः सर्वेभ्यो हविःशेषेभ्यः सकृत्सकृदुत्तरार्धेभ्योऽवद्यति, प्रदी-यन्ते प्रत्तानीत्यर्थः । सकृदवदायाङ्गुष्ठपूर्वाधिकं यथायोग्यं हस्तेन स्रुवेण च ।

द्विः पञ्चावत्तिनः ।

पूर्वधर्मनिवृत्त्यर्थं सकृद्द्विरित्युक्तम् ।

द्विरभिघारयति न हविःशेषान्प्रत्यभिघारयति ।

पूर्वं सकृत्प्राप्ताभिघारणे विशेषविधिः प्रत्यभिघारणाभावो न्यायेन प्रदर्शितस्तं न्यायं प्रदर्शयितुं प्रतिषेधो हविःशेषग्रहणेन दर्शितः । नेदं हविः किं तु वषट्कारद-त्तस्य शेषोऽतो न हविरभिघारणप्राप्तिरिति तात्पर्यम् । वषट्कारेण प्रदानं स्विष्टकृत्य-प्यस्तीति हविष्ट्वमाशङ्क्योक्तं नेति, प्रत्तस्यैव विधिबलाद्दानेऽपि शेषप्रतिपत्तिरेव । स्विष्टकृदिति चोक्तं नात्र ध्रौवस्य स्विष्टकृदर्थमवदानं, यान्यनुपूर्वं प्रदीयन्ते तेषामिति नियमाद्ध्रौवस्याद्यापि न हविःशेषत्वम् । तस्य सर्वयागार्थत्वेन यावद्गृहीतं तावदेव तदर्थं न तु निर्वापसमये वा ध्रुवायां ग्रहणसमये वा पृथक्पृथग्देवतानिर्दे-शोऽस्ति । येनोत्पत्तिविप्रवे[1]कैकार्थत्वं स्यात् । तस्माद्यावद्गृहीतं तावदेव वषट्कारेण दत्तं न तु ध्रुवागतमपि यथा वेदिगतमपि पुरोडाशसांनाय्यहविर्वषट्कारेण दीयते । कुतः—ध्रौवस्य सर्वयागार्थत्वादेकस्मिन्यागे दातुमशक्यत्वात् । न्यायविद्भिश्च साधितं नोपांशुयाजार्थस्य स्विष्टकृदवदानमिति ।

उत्तरार्धपूर्वार्धेऽसंसक्तामितराभिराहुतिभिर्जुहोति ।

पूर्वमुत्तरार्धदक्षिणार्धशब्दाभ्यामाज्यभागहोमस्थानमुक्तं, तत्रैतस्य स्थानं मा भूदिति वक्तुमुत्तरार्धपूर्वार्ध इत्युक्तम् । तेन तावन्तरेणेतरा जुहोतीत्युक्तत्वात्किंचिदुत्तर आग्नेय आज्यभागस्तस्मात्किंचिद्दक्षिणतोऽसंसृष्टामाघारप्रधानाहुतिभिः स्विष्टकृदाहुतिं जुहोतीत्युक्तम् । संनयतो दर्शे पुरोडाशस्यावदानं प्रथमं ततो मुख्यत्वेन स्रुक्पार्श्वेन होमे प्राप्ते शृतदध्नोर्द्वित्वेन भूयस्त्वं मुख्यत्वाद्बलीय इति स्रुङ्मुखेनै(णै)व होमः । अग्नेः स्विष्टकृत इदं न ममाग्नेः स्विष्टकृतोऽहमिति याजमानम् । ननु कथमग्निः स्विष्टकृदेव

१ क. ग. च. छ. ट. ठ. प्रतिशेषो । २ क. ग. च. ठ. °वेकैका° ।

देवता यथा पञ्चमे प्रयाजे यक्ष्यमाणदेवतासंस्कारेऽपि ता एव देवता एवमिष्टदेवतासंस्कारेऽपि स्विष्टकृति ता अपि न कुतो देवता इति चेत्। न। पञ्चमे प्रयाजे मन्त्रवर्णाद्देवताविधिः, अत्र तु तस्मा एतद्भागधेयं प्रायच्छन्यदग्नये स्विष्टकृतेऽवद्यन्तीत्यादिनोत्पत्तिविधानादग्निः स्विष्टकृद्देवता मन्त्रेण देवतासंस्कारो द्रव्यप्रतिपत्तिर्वषट्कारेण प्रदानमग्नये स्विष्टकृत एवेति त्रिरूपता स्यात्।

यदाहुः—'मन्त्रेण देवसंस्कारः प्रक्षेपाद्द्रव्यसंस्कृतिः।
या(त्या)गादपूर्वमुत्पन्नं प्रधानापूर्वगामि तत्'॥ इति।

**प्रत्याक्रम्य स्रुचमद्भिः पूरयित्वा वैश्वानरे हविरिदं जुहोमि साहस्रमुत्सꣳ शतधारमेतम्। तस्मिन्नेष पितरं पितामहं प्रपितामहꣳ स्वर्गे लोकेबिभरत्पिन्वमान इति मध्यमं परिधिं प्रदक्षिणमनु परिषिञ्चति॥६॥**

जुहूपूरणं संस्कार इति भाष्यकृत्। धर्ममात्रमित्यन्ये। पित्रे पितामहाय प्रपितामहायेदम्। स्मार्त उदकस्पर्शः पित्र्यत्वात्। प्रक्षालनप्रतिपत्तिर्धर्ममात्रं वा परिध्यभावेऽपि कर्तव्यं परिधिमनु परिधिदेशमनु, कर्मप्रवचनीययोगे द्वितीया। ततस्तु न परिधेः संस्कारः। अत एवोक्तमापस्तम्बेनान्तःपरिधि निनयतीति, बौधायनेन संक्षालनमन्तःपरिधीति॥६॥

**इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैजयन्त्यां द्वितीयप्रश्ने द्वितीयः पटलः॥२॥**

---

अथ द्वितीयप्रश्ने तृतीयः पटलः।

---

**सादयित्वा स्रुचावाग्नेयं प्राञ्चं विरुज्याङ्गुष्ठेनोपमध्यमया चाङ्गुल्याऽऽग्नेयो यवमात्रादाव्याधात्कृत्यतामिदम्। मा रूरुपाम यज्ञस्य शुद्धꣳ स्विष्टमिदꣳ हविरित्यनुमृश्य यवमात्रं पिप्पलमात्रं वा प्राशित्रमवद्यति।**

अवसरप्राप्तमनुवदति—सादयित्वेति। आग्नेयं पुरोडाशं विरुज्य यत्रावदास्यति तत्र प्रदेशे किंचिदपसार्य, कथं, प्राञ्चं, पुंलिङ्गनिर्देशाद्यद्यपि न क्रियाविशेषणं किंतु पुरोडाशविशेषणं तथाऽपि फलतः क्रियाविशेषणम्। अपसारणं प्राचीनं कार्यमित्यर्थः। अङ्गुष्ठेनानामिकया च विरुग्णे प्रदेशेऽनुमृश्यान्तरङ्गुष्ठाङ्गुल्यौ गमयित्वोदरे मन्त्रेणावद्यति। मध्यादित्यापस्तम्बः। यवो धान्यं तत्प्रमाणं पिप्पलं फलं तदश्वत्थस्यै-

---

१ ख. छ. ट. तदाहुः।

वेति केचिद्व्याचक्षते, तत्र यवमात्रादितिमन्त्रलिङ्गविरोधात्तूष्णीमेवावदानमिति च। भारद्वाजवचनात्तु व्रीहिप्रमाणं पिप्पलमात्रमित्यन्ये व्याचक्षते, तत्रास्त्येव मन्त्रः। प्राशित्रमिति नामावदानस्य ।

अविरुज्योत्तरस्मात् ।

उत्तरस्माद्धविष इति केचिदाहुरतः सांनाय्यादपि प्राशित्रमिच्छन्ति । उक्तं च भरद्वाजेनैवमुत्तरेषामिति । उत्तरशब्दोऽप्युत्तरकालं दीयमानहविर्वाचकस्तेनाऽऽमिक्षायाः पशोरपि च प्राशित्रमिच्छन्ति नाऽऽज्यात्सर्वाण्यपि शेषकार्याणि न ध्रौवादिति न्याय-निर्णय इत्युक्तमेव । अन्ये तूत्तरदेशस्थितं हविस्तत्तु पुरोडाश एवेति व्याचक्षते । किं च, आग्नेयशब्देन देवतानिमित्तेन प्रत्यभिज्ञानाद्देवताशब्देनैवोत्तरस्मादिति प्रत्यभिज्ञा युक्ता, न च सांनाय्ये देवताशब्देन व्यवहारोऽस्त्यतोऽग्नीषोमीय ऐन्द्राग्नो वा गृह्यते । वैखान-सेनोत्तरस्मात्पुरोडाशादित्येवोक्तम् । पशौ च प्राशित्रपात्रप्रयोगाभावात्पशुपुरोडाशे दर्शनादपि न सांनाय्ये प्राशित्रम् । द्वितीयस्यावदाने पृथग्द्रव्यत्वान्मन्त्रावृत्तिरङ्गुलि-नियमः प्रमाणं चास्ति, विरुज्येति नास्त्यनुमृश्येत्यस्त्येव ।

प्राशित्रहरणमुपस्तीर्यावदायाभिघारयति ।

ह्रियतेऽनेनेति हरणं पात्रमुक्तमेवोपस्तीर्येत्ययमेकः क्रमो दर्शितः ।

*उपस्तृणीयादभि च घारयेदित्येकेषाम् ।

चकारो विकल्पार्थः । उपस्तृणीयाद्वाऽभिघारयेद्वेति परिसंख्याऽन्यतरस्य । तदुक्त-मापस्तम्बेनोपस्तीर्य नाभिघारयत्येतद्वा विपरीतमिति । स्थाल्या एवाऽऽज्यमुपस्तरणार्थ-माहवनीयाज्यार्थान्यत्वात् । एवमिडादाववदानेऽपि द्रष्टव्यम् ।

आग्नेयात्प्राशित्रमवद्यतीत्येकेषाम् ।

आग्नेयादेव नान्यस्मादिति परिसंख्या ।

तन्निधाय ।

प्राशित्रहरणं निधाय । कुत्रेत्यपेक्षायामुक्तं( +भाष्यकृता—अग्रेणाऽऽहवनीयं ब्रह्म-यजमानावाहवनीयं चान्तरेण नीत्वाऽपरेणाऽऽहवनीयं निदधात्येवं च सति व्यवायो न स्यादिति सूत्रान्तरस्थम् । तदिदं ) यजमानेनेडान्वारम्भणार्थमागम्यते तदाऽवत्तस्य प्राशि-त्रस्य स्रुक्समीपेऽवस्थाने व्यवायो ब्रह्मप्राशित्रयोर्यजमानेन स्यादिति व्यवायनिवार-णार्थमुक्तं बौधायनेन जघनेन प्रणीताः स्थापयित्वेति ।

इडापात्रमुपस्तीर्येडा[1] समवद्यति चतुरवत्तां पञ्चा-वत्तां वा स्विष्टकृताऽऽनुपूर्व्यं[2] व्याख्यातम् ।

---

* सूत्रपुस्तकेषु अपि वोपेति पाठः । + धनुश्चिह्नान्तर्गतं ख. पुस्तक एवोपलब्धम् ।

---

१ घ. ङ. झ. ञ. °त्र उप° । २ ख. घ. ङ. च. छ. ट. °पूर्वं व्या° ।

स्थालीगताज्येनेडापात्रमुपस्तीर्य, इडा देवता तदर्थमवदानमपीडा ना(ता,मेकत्राव-द्यति । याज्यानुवाक्यावतीषु चतुरवत्तं पञ्चावत्तमित्यभिधानान्नेडायां प्राप्तिरिति तस्या-मपूर्वविधानं चतुरवत्तां पञ्चावत्तामिति,व्यवस्थितो विकल्पः स्विष्टकृतेति, तद्यथा स्विष्ट-कृत्सर्वेभ्योऽपि हविःशेषेभ्योऽवदानानुपूर्व्याऽवत्तमेवमिडावदानमपि हविःशेषप्रतिपत्ति-रूपत्वात्तथैव सर्वप्रधानद्रव्येभ्योऽवद्यति । इडा सर्वाऽप्येकं द्रव्यमिडामित्यभिधानात्स-र्वेभ्योऽपि हविर्भ्यः प्रथममेकं समवदानं, तत्र सकृन्मन्त्र इडाद्रव्यस्य मनुनेतिमन्त्रलि-ङ्गादेकत्वप्रतीतेः । एवं च द्वितीयमपि सर्वेभ्य एकं तत्र पुनः सकृन्मन्त्रो यजमानभा-गावदानेन कर्मणा व्यवधानादेवमस्यापि द्वितीयावदानस्य पृथग्द्रव्यतया न (?) मन्त्रवत्ता । ततोऽभिघारणं चतुरवत्तायां पञ्चावत्तायां तूष्णीं तृतीयमव्यवधानान्मन्त्राभावः ।

तामिडामिमां कथमवद्यति तत्र मन्त्रमाह—

**मनुना दृष्टां घृतपदीं मित्रावरुणसमीरिताम् । दक्षि-णार्धात्संभिन्दन्नवद्याम्येकतोमुखामिति दक्षि-णार्धात्पुरोडाशस्य पूर्वमिडावदानमवद्यति ।**

ततः सर्वहविरिडावदानमन्त्रः । मन्त्रे दृष्टामित्यादिविशेषणानी[3]डायामेव [4]संबध्यन्ते । अत्रावद्यतीति पुनर्वचनं समुपसर्गत्यागेनैकेनेडावदानेन संबन्धो दक्षिणार्धादित्यादिविशे-षणैर्यथा स्यात् । वस्तुगत्या मन्त्रेणैतेनैव संबध्यते । इडासमवदाने तस्यैव प्राथम्यात् । सकृदेव मन्त्रविधानमिडाया यत्तत्प्रथमावदान एव पर्यवस्यति । ननु तर्हीदं मन्त्रविनियो-गेनैकमेकस्तं(व) वाक्यमिति । न । तदा द्वितीये पुनस्तत्पुरोडाशप्रभृतिक्रियमाणेऽवदाने मन्त्रो न स्यात्पूर्वेण विशिष्टेनैव संबन्धाद्वितीयोऽङ्ग(ये स)मवदाने संभेदमवद्यतीति विधीयमान एकमिच्छन्नतिदेशाच्च (?) । मन्त्रगतसर्वविशेषणानि (?) प्रथमावदाने नपुंसकत्वेन निर्दिष्ट वा सर्व (?) दित्युक्तम् । वैखानसेन स्पष्टमुक्तम्—' इडापात्र-मुपस्तीर्य मनुना दृष्टामिति चतुरवत्तां पञ्चावत्तां वा सर्वेभ्यो हविर्भ्यः स्विष्टकृद्वत्प्रभृता-मिडां समवद्यति दक्षिणार्धात्पुरोडाशस्य पूर्वमवदानं संभेदाद्वितीयमेवं सर्वस्य हविषः ' इति । आपस्तम्बेनापि तथैवोक्तम् । सर्वार्थ एव मन्त्रः । एवं ' सर्वेषां हविषामिडां समवद्यति ' इति भरद्वाजः । य (त)त्तु दक्षिणार्धात्पुरोडाशस्य पूर्वमिति भिन्नमेव वाक्यं युक्तमित्यभ्युपगन्तव्यम् । पूर्वं प्रथमम् । पूर्वग्रहणं दक्षिणार्धाद्वितीयं मा भूदिति । तस्य संभेदस्थाननियमात्प्रथमस्य दक्षिणार्धादवदानेनेडाद्रव्यस्यैकत्वाद्दक्षि-णार्धादिति युक्तम् ।

---

१ ट. °नादव° । २ ख. छ. ट. °यालम° । ३ क. ग. च. छ. ठ. °षणैर्यथा स्यान्निरङ्गाया° । ट. °षणैर्य° । ४ क. ग. च. ठ. संवध्यते ।

पूर्वार्धादणुमिव दीर्घं यजमानभागम् ।

समवद्यतीत्यनुकर्षः । पुरोडाशस्येत्यपि । पूर्वार्धादीषदणुं तनु(नुं) दीर्घं च यजमानस्य भागं चतुरवत्तादिधर्मरहितमेव, पुरोडाशयोस्तु सहैवावद्यति, सूत्रान्तरोक्तं भाष्ये व्याख्यातं तत्वास्मत्सूत्रे दृश्यते । नहि पारिभाषिकं सर्वत्रावदानं चतुरवत्तं पञ्चावत्तं वा प्राप्नोति, येनोपस्तरणाभिघारणे प्राप्नुतः, पुरोडाशस्येत्यनु[कर्ष]सामर्थ्यात् ।

तमाज्येन संतर्प्य[१] ध्रुवाया उपोह्य ।

स्थालीगतेनाऽऽज्येन तृप्तं कृत्वा । सकर्मको धातुस्तृप इति प्रयुक्तोऽन्यथा संतर्प्ये-(तृप्ये) ति स्यात् । ध्रुवायाः समीप *ऊह्य गमयित्वा । ध्रुवाया अग्रेण निधायेति वैखानसः । अग्रेण ध्रुवामिति बौधायनः । बर्हिषि कस्मिंश्चित्पात्र इत्यर्थः ।

संभेदमवद्यति ।

द्वितीयमिति शेषः । संभेदो व्यवधायकोऽवदानानां प्रदेशस्तमेवावद्यति । दक्षिणार्धा-त्पूर्वमैडावदानं पूर्वार्धाद्यजमानभागस्तयोर्मध्ये योऽयं संभेदोऽवकाशस्तमेव प्रदेशमव-द्यति । असंभिन्दन्निति मन्त्रविशेषणमुपपन्नं भवति । इतरावदानैः संश्लेषेणावदीय-मानत्वात् ।

पश्चार्धात्तृतीयं पञ्चावत्तायाः[४] ।

पश्चा[र्धा]दिति, भागे दक्षिणार्ध एवैडाया इति शेषः । पञ्चावत्ताया इति । भाष्यकृता पुरोडाशयोः सह यजमानभागमवद्यतीत्युक्तं, तत्तु पुरोडाशस्यैकस्यैकस्या-वदानसमाप्तौ द्वितीयस्यापि प्रथमावदानेनैकत्रैवेति व्याख्येयम् ।

अभिघार्य होत्र इडामादधाति ।

स्थाल्या आज्येन बहुतरेणेडामभिघार्य होतुर्हस्ते प्रयच्छति । सुरूपवर्षवर्ण इत्यादि याजमानम् ।

प्राचीं वा प्रोहति ।

प्रदाने विकल्पः । प्राचीमिडां वेद्यां प्रोहति प्रवाहयतीत्यर्थः ।

यदा होत्रे प्रत्ता तत्र पक्षे—

अनुत्सृजन्नेव होतेडयाऽध्वर्युं परिगृह्णाति यदि होत्रे प्रत्ता भवति ।

यदि होत्रे प्रत्तेडा तदा तामत्यजन्नेव होता प्रत्तेडयाऽध्वर्युं परितो गृह्णाति, याजुषे

---

* ऊह्येति स्थान ऊहयित्वेति युक्तम् ।

---

१ ट. °भा° । २ क. ख. ग. च. छ. ट. ठ. आज्येन । ३ क. ख. ग. घ. छ. ज. ट. ड. संतृप्य । ४ घ. ङ. ज. झ. ञ. पञ्चावत्तायाम् । ढ. पञ्चावत्तायाश्च ।

हौत्रेऽङ्गुलिपर्वाञ्जनार्थमध्वर्युमावर्तमानं परितो गृह्णाति बहिरिडां धृत्वा गन्तुमवकाशं प्रयच्छतीत्यर्थः ।

पक्षद्वयेऽपि विधिमाह—

अग्रेण होतारं दक्षिणाऽतिक्रम्य पश्चात्प्रा-
ङासीनो होतुरङ्गुलिपर्वणी अनक्ति ।

स्रुवेणाऽऽज्यमादाय होतुरग्रदेशेन दक्षिणां गत्वा प्रदक्षिणां कृत्वा प्रदक्षिणमावृत्य पश्चात्प्राङ्मुख आसीन एव होतुरङ्गुलिपर्वणी तर्जन्याः प्राथम्यादस्या एव पर्वणी द्वे तेन स्रुवेणानक्ति । स्रुवेणानक्तीत्यापस्तम्बः । प्रदेशिन्यङ्गुलावनक्ति पर्वणोरिति वैखानसः । होतृसंस्कारोऽञ्जनम् ।

क्रममाह—

पूर्वमग्रेऽथापरम् ।

पूर्वं मूलपर्वाग्रे प्रथममङ्क्त्वाऽपरमधस्तनं मूलपर्व । पर्वशब्देनात्र संधी उच्येते । काण्डात्काण्डादिति पर्वापरपर्यायः काण्डशब्दो हि संधिवाच्यपि । तयोरेव द्वित्वमङ्गुष्ठपर्वमात्रमत्र संहितमिति विशेषो यावदिद(दुत्तम)मङ्गुलिकाण्डमित्यपि दर्शनात् ।

अङ्क्त्वा—

तत्सोऽवघ्रायाप उपस्पृशति ।

स होता, तदक्तमाज्यम् । श्रौत उदकस्पर्शः । हौत्रविधानं याजुर्वैदिकत्वात् ।

यथेतं प्रत्येत्य पुरस्तात्प्रत्यङ्ङासीनो दक्षिणे
होतुः[2] पाणाविडाया अवान्तरेडामवद्यति ।

पूर्वं न प्रत्ता चेदिडां तदा प्रत्येत्य होतुर्हस्ते प्रयच्छति । ततो होतुः पुरस्तात्प्रत्यङ्मुख आसीनो होतुर्हस्ते दक्षिण इडायाः सकाशात् । स्पष्टमन्यत् ।

प्रकारमाह—

लेपादुपस्तृणाति ।

होतुः पाणाविडापात्रगतेनाऽऽज्यलेपेन स्रुवेण गृहीतेनोपस्तृणाति ।

स्वयं[1] होता मध्यतो द्विरादत्तेऽध्वर्युर्वाऽन्यतरत् ।

ततो होतेडापात्रात्स्वयमेव द्विरादत्तेऽथवाऽध्वर्युरेकमवदायापरं होताऽऽदत्ते विपरीतं वा । इडापात्रमध्यात् ।

लेपेना[3]भिघारयति ।

स्पष्टम् ।

उपह्वयते होता ।

---

१ ख. ज. मसं° । २ क. ख. ग. च. छ. ट. ठ. होतृपा° । ३ ङ. ञ. झ. ञ. ठ. °पेन चाभि°

होतृधर्मविधिर्याजुषत्वेन हौत्रे वक्ष्यमाणे युज्यते, बाह्वृच्ये तु तदुक्त एव। इड देवतामुपाह्वानेनाभिमुखीं करोतीत्यर्थः। अत्रेड एहीत्यादि याजमानम्।

**इडामुपहूयमानामध्वर्युराग्नीध्रः ॥ ७ ॥ यजमानश्चान्वारभन्ते।**

इडामिति पूर्वमुभयत्र संबध्यते। पात्रं हस्तेन स्पृष्ट्वाऽऽस्ते यावदुपहवसमाप्ति। यजमानोऽपरेणाऽऽहवनीयमुत्तरत आगत्य प्रदक्षिणमावृत्यान्वारभते। परिगणना ब्रह्मणो व्यावृत्त्यर्था, सूत्रान्तरे तस्याप्यन्वारम्भविधानात्।

**दैव्या अध्वर्यव उपहूता इत्युच्यमान उपहूतः पशुमानसानीति जपति।**

अध्वर्युर्जपति तदधिकारात्। याजमाने यजमानस्य वक्ष्यति जपम्।

**उपहूतायामग्रेणाऽऽहवनीयं ब्रह्मणे प्राशित्रं परिहरति।**

पात्रेण सहाध्वर्युः प्राशित्रं प्राशित्रावदानं पात्रेण नयति। पूर्वं परिहरणं यदुक्तं भाष्यकारेणाव्यवायाय तत्सूत्रान्तराभिप्रायेण व्याख्येयम्। उपहूतायामिति साक्षादत्र कालविधानात्।

**तस्मिन्प्राशिते।**

ब्रह्मणा प्राशित्राख्येऽवदाने देवस्य त्वेत्यादिविधिना प्राशिते सति।

**इडाऽसि स्योनाऽसि स्योनकृत्सा नो रायस्पोषे सुप्रजास्त्वेधाः। मुखस्य त्वा द्युम्नाय सुरभ्यास्यत्वाय त्वाऽश्नामीत्युपहूतामृत्विजः प्राश्नन्ति यजमानपञ्चमाः[1]।**

उपहूतामिडां सर्वेऽपि चत्वारो यजमानः पञ्चमो येषां ते तथा। ब्रह्माऽप्यपरेणैत्य प्राश्नाति।

**वाग्यता भवन्त्यामार्जनात्।**

भक्षणप्रभृति सर्वे।

**मनो ज्योतिर्जुषतामित्यन्तर्वेदि पवित्रवति मार्जयन्ते।**

मादयन्तामिति मन्त्रान्तः। वेदेरन्तर्मध्येऽन्तर्वेदि तत्र स्थित्वा पवित्रमपिसृष्टं विद्यते यस्मिन्प्रस्तरे स पवित्रवांस्तत्र समीपे स्थित्वेत्यर्थः। तत्समीपता बहिरपि स्थितस्य संभवति तदर्थमन्तर्वेदीत्युक्तम्। मार्जनं मन्त्रान्ते शिरसि प्रोक्षणमद्भिः। ततो यथेच्छं विसर्गः। ब्रह्मा यथेतमागत्य मार्जयित्वा स्वसदन आस्ते।

**आग्नेयं चतुर्धा विरुज्य बर्हिषदं करोति।**

आग्नेयं पुरोडाशं नाग्नीषोमीयं नैन्द्राग्नं वा न सांनाय्यम्। चतुर्धा चतुर्भागं सर्वमपि विरुज्य भित्त्वा बर्हिषि सीदतीति तथा। बर्हिःशब्दस्य षकारलोपश्छान्दसः।

---

1 घ. ङ. ज. झ. ञ. यजमानः पञ्चमः।

चतुर्धा कृत्वा बर्हिषि स्थापयन्त्य(त्य,न्तिमं भागं स्थूलम् । तत्र याजमानं ब्रह्म पिन्वस्वेत्यादि ।

**तस्मिन्नादिश्यमान इदं यजमानस्येति यजमानभागमादिशति ।**

तस्मिन्निति चतुर्धा कृत आग्नेये यजमानेनेदं ब्रह्मण इत्यादिनाऽऽदिश्यमानेऽध्वर्युर्यजमानभागं पूर्वमवदाय ध्रुवासमीपे स्थितमादिशत्ययं यजमानस्येति । तस्मिन्नादिश्यमान इति वचनं यदि काललक्षणार्थं तदा यत्राऽऽग्नेयो वा तद्विकारो वा नास्ति विकृतौ तत्रापि चतुर्धाकरणाभावेऽपि केवलस्य यजमानभागस्यैव व्यादेशनमदृष्टार्थं, यदा व्यादिश्यमानानामनेकत्वात्कालस्येति ज्ञातुमशक्यत्वाद्व्यादेशनं तदा तु केवले यजमानभागे विकृतौ नास्त्येवाऽऽदेशनमिति दृष्टार्थत्वं, तस्मिन्संभवति नास्त्यदृष्टकल्पनेति भाष्यकृन्मतं तत्र पूर्वमेवाध्वर्युणा यजमानभागत्वेनावत्तत्वात्कथं संदेह इत्यदृष्टार्थतैव न्याय्येति व्युत्पादयन्त्यन्ये ।

**आदिष्टस्य स्थविष्ठमग्नीधे षडवत्तं संपादयति ।**

यजमानेनान्तिमो भागः स्थूल एवाऽऽदेशनीयोऽग्नीधे तमेव षडवत्तं संपादयति । तदाह—

**उपस्तीर्यावदायाभिघारयत्येवं पुनरवद्यति ।**

कस्मिंश्चिच्चतुर्धाकरणिके पात्रे स्थाल्याज्येनोपस्तीर्याऽऽग्नीध्रभागं सकृदवदायाभिघार्य पुनरुपस्तरणपूर्वकमभिघारणान्तं द्वितीयं भागं सर्वमवद्यतीत्येवं षडवत्तं संपद्यत इत्यर्थः ।

**दिवो भागोऽस्यग्नेराग्नीध्रमस्यग्नेः शामित्रमस्यग्नेस्त्वाऽऽस्येन प्राश्नामि नमस्ते अस्तु मा मा हिꣳसीरित्याग्नीध्रः प्राश्नाति ।**

स्वभागम् ।

**वेदेन ब्रह्मयजमानभागौ परिहरति ।**

पात्रसहितौ भागौ पृथग्वा पात्राभ्यामादायेत्यादि वैखानसः । परि परितो हरति प्रापयति हरतेर्द्विकर्मकत्वात् । ब्रह्मयजमानयोः समीपे स्थापयेदित्यर्थः ।

**अन्येन पात्रेण होत्रेऽन्येनाध्वर्यवे ।**

यैः पात्रैर्ब्रह्मयजमानाग्नीध्रेभ्यः परिहृतं तेभ्योऽन्याभ्याम् । अध्वर्युरेवाध्वर्यवे परिहरति ।

**पृथिव्यै भागोऽसीति होता प्राश्नात्यन्तरिक्षस्य भागोऽसीत्यध्वर्युर्दिवो भागोऽसीति ब्रह्मा ।**

---

१ घ. ङ. ज. झ. ञ. ढ. °स्मिन्व्यादि° । २ घ. ङ. ज. झ. ञ. ढ. व्यादिष्टस्य । ३ च. पात्राहि' ।

स्पष्टम् ।

**महानपरिमितोऽन्वाहार्यो दक्षिणाग्नावोदनः पक्वस्तमभिघार्यानभिघार्यं वाऽन्तर्वेद्यासादयति ।**

दक्षिणाग्नेः सकाशादुत्तरत आसादयति । महान्भूयान्सर्वर्त्विक्पर्याप्त्यधिकः । अपरिमितः प्रसृत्यादिभिस्तण्डुलान्परिगणितान्स्थाल्यां नाऽऽदध्यात् । अन्वाहार्यनामको दक्षिणाग्नौ पक्वः पूर्वमेवाधिश्रितः पक्वः । स्पष्टमन्यत् । नात्र तस्य भक्षणं तस्य पारिक्रयत्वेन दत्तस्य प्रतिपत्तिर्न यज्ञाङ्गम् । अत्र ब्रह्मत्वे याजमाने ब्रह्मन्नित्यादि ।

**दक्षिणसद्भ्य उपहर्तवा इति संप्रेष्यति ।**

दक्षिणे सीदन्तीति तेभ्य ऋत्विग्भ्य उपहरेति यजमानं संप्रेष्यति तस्यैवोपहरणलक्षणदानकर्तृत्वात् ।

**दक्षिणत एतेति यजमानेनोच्यमाने यथासंप्रैषं कुर्वन्ति ।**

दक्षिणत एतेत्यृत्विजः संप्रेष्यति । यजमानेनोच्यमान ऋत्विजः प्रैषार्थं दक्षिणत आगमनमग्रेणाऽऽहवनीयं कुर्युः । यजमानो दक्षिणतः स्थितेभ्य ऋत्विग्भ्यो ब्राह्मणा अयं व ओदन इत्योदनं व्युधृतं निर्दिशति । आग्नीध्रो दक्षिणां प्रतिग्रहीष्यन्नित्यादिना देवस्य त्वेत्यादि प्रतिगृह्णामि राजा त्वा व० ब्रह्मण ओदनं० सः प्रतिगृह्णात्विति प्रतिगृह्णाति । अथ तथैव ब्रह्मा होता स्वसूत्रानुसारेण । अथाध्वर्युरेतामेवाऽऽवृतमिति दर्शनाच्चतुर्धाकरणप्रदानक्रमोऽत्र द्रष्टव्यः ।

**अन्वाहार्यं प्रतिगृह्य प्रत्यायन्ति ।**

अन्वाहार्यस्य स्वं भागं दक्षिणां प्रतिग्रहीष्यन्नित्यादिविधिः । क इदं कस्मा इति प्रत्येकं प्रतिग्रहमन्त्रेण प्रतिगृह्य प्रत्यायन्ति पुनरुत्तरत आगच्छन्ति । ब्रह्मा यथेतमुत्तरत आगत्य दक्षिणतो गत्वा विधिना प्रतिगृह्य तथैव गत्वा स्वासन उपविशति ।

**हविःशेषानुद्वास्य ।**

वेद्या बहिरुत्तरतः कृत्वा यथासंख्यं शेषान्बहुवचनं पर्वद्वयहविःशेषाभिप्रायम् । अकृत उद्वासने कर्मोत्तरारम्भे ततं म आप इत्याहवनीये जुहोतीति सूत्रान्तरात् ।

**अनूयाजार्थे उल्मुके अपिसृज्य ।**

अग्नौ मेलयित्वोद्धृते उल्मुके ।

**ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीत्परिधींश्चाग्निं च सकृत्सकृत्संमृड्ढीति संप्रेष्यति ।**

ब्राह्मणपाठेन विकल्पोऽग्निमग्नीत्सकृत्सकृदित्यनेन गतार्थम् ।

**एषा ते अग्ने समित्तया वर्धस्व चाऽऽ च प्यायस्व । वर्धतां च ते यज्ञपतिरा च**

प्यायतां स्वाहेत्याधीध्रः समिधमाधा-
यास्फ्यैरिध्मसंनहनैरपरिक्रामन्परिधीन्सं-
मार्ष्टि मध्यममुदञ्चं प्राञ्चावितरौ ।

आयतन आधानं न दर्विहोमोऽपूर्वोऽयं स्वाहान्तमन्त्राभावादग्नेः संस्कारोऽयमनूयाजाङ्गः । प्रदक्षिणमपरिक्रामंस्तत्रैव स्थित इत्यर्थः । गतार्थमन्यत् । एषा ते अग्न इति याजमानम् ।

अग्ने वाजजिद्वाजं त्वा ससृवांसमिति मन्त्रं संनमति ।

पठति । ध्यायेति मन्त्रान्तः । अग्निसंमार्गे पूर्वं विनियुक्तो मन्त्रोऽत्राग्निसंमार्गे ससृवांसमिति पाठेनेत्यर्थः ।

यो भूतानामधिपती रुद्रस्तन्तिचरो वृषा । पशूनस्माकं मा हिंसीरे-
तदस्तु हुतं तव स्वाहेति संमार्गानभ्युक्ष्याऽऽहवनीये[1] प्रहरति ।

आहवनीयग्रहणं पूर्वसंमार्गाणामिवैतेषां गार्हपत्ये प्रहरणं मा भूदिति, उत्करादावपि मन्त्रो मा भूदिति च प्रयोजनम् । स्वाहान्तमन्त्राद्दानरूपता प्रतिपत्तिश्चोपयुक्तत्वात् । भूतानामधिपती रुद्रो देवता । वेदिर्बर्हिरिति याजमानं विशिष्टं न रौद्रमिति केचित्तत्रोदकोपस्पर्शनं नेति ते वदन्ति ।

प्रतिपत्त्यन्तरमाह—

उत्करे शालायां बलजायां वोदस्येत् ।

उत्करः प्रसिद्धः । शालायामग्निशालायाम् । तस्यामेव शालाग्नौ वेति केचित् । बलजा धान्यानां राशिस्तत्र । भाष्यकारेण तु शालाऽत्र प्रविष्टजनं गृहं, बलजा तत्र पृष्ठवंशस्योपरि बद्धानि[2] काष्ठानि तेष्वे(ष्वित्ये)के, तेषां काष्ठानां बन्धनरज्जुस्तस्यामित्यन्ये [इत्युक्तम्] ।

परोगोष्ठं वा हरेत्परोगव्यूतिं[3] वा[4] ॥ ८ ॥

## इति हिरण्यकेशिसूत्रे द्वितीयप्रश्ने तृतीयः पटलः ॥ ३ ॥

---

परो गोष्ठात्प्रदेशः परोगोष्ठस्तत्र, परोगव्यूतेर्वा देशस्तत्र वेत्यर्थः ॥

इति हिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैजयन्त्यां द्वितीयप्रश्ने तृतीयः पटलः ॥ ३ ॥

---

अथ द्वितीयप्रश्ने चतुर्थः पटलः ।

---

महाहविरिति याजमाने—

---

१ घ. ङ. ज. झ. ञ. ढ. °येऽनुप्र° । २ ख. छ. ट. °नि यानि का° । ३ घ. ज. झ. ञ. ढ. °व्यूतिमित्येकेषाम् । ४ ङ. वेत्येकेषाम् ।

**यदुपभृत्याज्यं तज्जुह्वामानीय तेन सकृदतिक्रान्तस्त्रीननूयाजान्यजति ।**

व्याख्यातम् ।

**देवान्यजेति प्रथममनूयाजꣳ संप्रेष्यति यज यजेत्युत्तरौ ।**

अनूयाजसंप्रैषे प्राप्ते देवान्यजेति बहुवचनेन प्रथमेऽनूयाजे होतारं संप्रेष्यतीत्यर्थः । कालक्षणेयं सर्वानुयाजार्थमत्रैव संप्रैषप्रदर्शनार्थम् । कथं, देवानिति त्रयाणां समान-देवताविशेषणेन निर्देशात्पुनः प्रैषः केवल एतद्द्वयोः ।

**अग्रेणाऽऽघारसंभेदं पश्चात्पश्चात्समिधि जुहोति ।**

अनूयाजसमिध्येव प्रथमं प्राग्भागे जुहोति । ततः पश्चाद्द्वितीयम् । अङ्गिरसो मेति याजमानम् । ततः पश्चात्समिध्येव तृतीयं त्रयोऽप्याघारसंभेदात्प्राग्भाग एव ।

तत्र विशेषमाह—

**प्राञ्चमुत्तमं दीर्घꣳ संततं तेनेतरावनुसंभिनत्ति ।**

इतरौ द्वितीयप्रथमौ तेन तृतीयेन तृतीयस्य होमधारयाऽनुसंभिनत्ति मध्येऽनुसंश्लेषयेदित्यर्थः ।

स्पष्टमन्यत् ।

**प्रत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा ।**

स्पष्टार्थम् ।

**वाजवतीभ्यां व्यूहति ।**

वाजवतीभ्यामृग्भ्यां व्यूहनपर्यन्तं करोतीत्यर्थः ।

तदेवाऽऽह—

**वाजस्य मा प्रसवेनेति दक्षिणेनोत्तानेन सप्रस्तरां जुहूमुद्गृह्णात्यथा सपत्नाꣳ इन्द्रो म इति नीचा सव्येनोपभृतं निगृह्णात्युद्ग्राभं चेति जुहूमुद्गृह्णाति निग्राभं चेत्युपभृतं निगृह्णाति ब्रह्म देवा अवीवृधन्निति दक्षिणेनोत्तानेन प्राचीं जुहूं प्रोहत्यथा सपत्नानिन्द्राग्नी म इति नीचा सव्येनोपभृतं प्रतीचीं बहिर्वेदि निरस्यति ।**

प्रथमेऽर्धर्चे मन्त्रौ ततस्त्रयस्तावत एव मन्त्रा अथा सपत्नानित्यर्धर्चमन्त्रः । दक्षिणेन हस्तेनोत्तानेनोपरितलेनाधस्ताज्जुहूप्रस्तरयोः कृतेन प्रस्तर आसादितां जुहूं प्रस्तरेण सहोर्ध्वमुन्नयति । नीचा हस्तेन वामेनोपभृतमुपरिष्टाद्धस्तं कृत्वा गृहीत्वा तां निगृह्णाति बर्हिषा श्लेषयति किंचिद्दृढमिव, पुनरपि तथैव क्रमेणोद्ग्राभं च निग्राभं चेत्येताभ्याम् । प्राचीं जुहूं प्राचीं दिशं प्रति प्रागग्रां प्रोहत्यतिवाहयति वेद्यामेव । बहिर्वेद्युपभृतमेव निरस्यति त्यजति ।

"उपभृति मन्त्रान्तरमाह—

**देवस्त्वꣳ सविता प्रतिनुदतु योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति वा ।**

एतामृचमेव याजमानम् ।

**अभ्युक्ष्योपभृतमाहृत्य जुह्वा परिधीननक्ति ।**

आहृत्य दक्षिणेनैवाऽऽज्यलेपवत्या जुह्वा ।

**वसुभ्यस्त्वेति मध्यमꣳ रुद्रेभ्यस्त्वेति दक्षिणार्ध्यमादित्ये-भ्यस्त्वेत्युत्तरार्ध्यं वसुरसि वसुवनिरसि वसुधेयोऽसीति वा ।**

एकेनेतिकरणेन विनियोगेऽपि पूर्वेषां मन्त्राणां क्रमेण त्रयाणामेते वैकल्पिका मन्त्राः । स्पष्टमन्यत् । वसून्देवानित्यादि याजमानम् । रुद्रेभ्य इत्यत्रोभयोरुदकस्पर्शनं रौद्रत्वाविशेषान्नान्येषु रुद्रशब्दपर्यायकर्मसु विधानाभावादिति वदन्ति । तन्न । रुद्रदेवते कर्मण्येवैवम् । अयं तु परिधिसंस्कार एवेत्यतो नोदकस्पर्श इति ज्ञेयम् ।

**अन्यत्र प्रस्तराज्जुहूꣳ सादयित्वा संजानाथां द्यावा-पृथिवी मित्रावरुणौ त्वा वृष्ट्याऽवतामिति विधृतीभ्यां प्रस्तरꣳ समुल्लिप्य बर्हिषि विधृती अपिसृज्य ।**

विधृतीभ्यां सह प्रस्तरं समुल्लिप्योदूर्ध्वं * लिप्य समुत्खाय विधृती अवनाय ।

**स्रुक्षु प्रस्तरमनक्त्यक्तꣳ रिहाणा इति जुह्वामग्राणि वियन्तु वय इत्युपभृति मध्यानि प्रजां योनिमिति ध्रुवायां मूलानि ।**

मा निर्मृक्षमिति तृतीयस्यान्तः ।

**एवं पुनरनक्ति ।**

अनक्तीति पूर्वेणापि संबध्यते ।

**तृतीये ध्रुवायामादितो मूलान्युपभृति मध्यानि जुह्वामन्ततोऽग्राणि ।**

विपरीतं तृतीयपक्ष इत्येव वक्तव्ये गुरुनिर्देशेन यावन्निर्दिष्टं तावदेव विपरीतं मन्त्रास्तु ये यत्रोक्तास्ते तथैव प्रथमवदिति दर्शितम् । अग्रमध्यमूलानि प्रस्तरस्य । समङ्क्तामिति याजमानम् ।

**दिव्यङ्क्ष्वान्तरिक्षेऽङ्क्ष्व पृथिव्यामङ्क्ष्वेति वा ।**

अक्तꣳ रिहाणा एतेषामेते वैकल्पिकाः ।

**आयुषे त्वेत्यक्तस्य तृणमपादाय प्रज्ञातं निधाय ।**

अक्तस्य प्रस्तरस्यैकां दर्भनाडीं मन्त्रेणाऽऽदाय तूष्णीं प्रज्ञातं निदधाति । प्रज्ञातमिति यत्नेनोत्तरकार्यार्थं स्थापयतीत्यर्थः ।

**प्रस्तरꣳ शाखां चाऽऽदाय ।**

---

* लिप्त्वेत्यपेक्षितम् ।

दर्शे संनयतो विषये शाखामित्युक्तं न तु काचिदपूर्वा शाखा विधीयते प्रस्तरेण सह प्रतिपत्त्यर्थं दोहशाखाया एव प्रत्यभिज्ञानात्। शाखापवित्रं न तस्य पवित्रस्यान्या प्रतिपत्तिरस्ति।

**उत्तरं परिधिसंधिमन्ववहृत्य।**

प्रवेशयित्वा प्रस्तरं यद्यस्ति शाखा तया सहेत्यर्थः।

ततः कृत्यमाह—

**आश्राव्य प्रत्याश्राविते ॥ ९ ॥**

नात्र दक्षिणातिक्रमो याज्यास्वेव तथा विधानात्। उपविश्यैवाऽऽश्राव्य आसीन इति वैखानसोक्तेरुत्करस्थेनैवाग्नीधा प्रत्याश्राविते, तस्य प्रत्याश्रावणं प्रवरादन्यत्रोत्कर एवेत्युक्तम्।

**इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहीति संप्रेष्यति सूक्तवाकꣳ होता प्रतिपद्यते।**

प्रतिपद्यते प्रारभते। तत्र मध्येऽध्वर्योर्होतृकर्मणा संबन्धनार्थं होतेत्युक्तम्। अपिप्रेडिति याजमानम्।

**आप्यायन्तामाप ओषधय इत्यध्वर्युः प्रस्तरꣳ शाखां चानु प्रहरति।**

अनुलक्षीकृत्य सूक्तवाकम्। सत्यां शाखायां तां च। अध्वर्युग्रहणं होतेत्यनुवृत्तिर्मा भूदितिप्रदर्शनार्थम्। मेरयेति मन्त्रान्तः। अत्र जैमिनिमतं सूक्तवाक आज्यभागादिभिरिष्टदेवताः समवेता यथापाठमिति, तथा सूक्तवाकेन प्रस्तरं प्रहरतीति तृतीया कारकविभक्तिः प्रस्तरप्रहरणं प्रत्यङ्गत्वमावेदयति। दृष्टद्वाराऽङ्गत्वे मन्त्राणामेवं स्थिते सूक्तवाकेन प्रस्तरप्रहरणं प्रकाश्यमेकवाक्यत्वार्थं च देवताप्रस्तरप्रहरणसंबन्धोऽपि प्रकाश्यः। स तु विना होमं यागं वा न भवति। प्रकृते तयोरश्रवणात्प्रहरतिरेव यागं लक्षयेत्स्वार्थात्यागेनैव निर्वपतिरिव। ततस्तु प्रहरणमुपयुक्तप्रस्तरस्य प्रतिपत्तिरनुमितयागस्य चाङ्गयागः सूक्तवाकसाधनकः। अजहल्लक्षणानिर्वाहाय प्रहरतिरपि निर्वपतिवद्यागस्याङ्गं, प्रस्तरस्य संप्रदेयस्य द्रव्यस्याग्नाववस्थापनं निर्वापमिवाऽऽह। तत्र प्रहरणे प्रतिपत्तिलक्षणे सहभावः शाखायाः सह शाखया प्रस्तरं प्रहरतीति प्रहरणं प्रतिपत्तिर्यथोपयुक्तस्य प्रस्तरस्येवोपयुक्तायाः शाखाया अपीति नासंनयतोऽपि शाखाग्रहणमिति तृतीयचतुर्थषष्ठाध्यायेषु प्रमेयं निष्पन्नं तात्पर्येण प्रदर्शितम्। तत्र न स्वाहाकार इति वदत्यापस्तम्बः। तमप्रसक्तप्रतिषेधमाशङ्क्य व्याख्यातारो भूषणं बभूवुः। यज्जैमिनिमतेन प्राप्तिमाशङ्क्योक्तवानिति, तदतिमन्दम् जैमिनिमतमेवानेनोपबृंहितम्। कथं, सूक्तवाकेन निष्पन्नस्य यागस्य शेषभूतेयं न प्रतिपत्तिः। येन मन्त्रेण स्वाहाकारान्तेन प्रहरणं स्यात्, किंतु पूर्वभाव्यङ्गं यागी-

यस्य द्रव्यस्य निर्वापवदिति, तेन न स्वाहाकारः । ततस्तु जातवेदो वपयेत्यत्र स्वाहाकारः सिद्धस्तन्मतेन । अस्मदाचार्यमते तु दर्विहोमेष्वेव स्वाहाकारो नान्यत्रेति । मन्त्रवर्णस्तु यागद्रव्यत्वेन दिवं गच्छ वृष्टिं प्रेरय तत ओषधय आप्यायन्तामिति स्तुतिः । भगवता हिरण्यकेशिना त्वाशङ्काऽपि न कृता न परिहारः । स्पष्टं प्रहरतीतिवत्प्रहरतेरुक्तप्रकारेण स्वार्थमात्रपरत्वान्न प्रस्तरप्रहरणं होमोऽतोऽस्वाहाकार एव मन्त्र इति सिद्धम् । यद्यपि जैमिनिमतमाश्रित्य भाष्यकृतोक्तं स्वाहाकारान्तो मन्त्र इति तदपि चिन्त्यम् । कथं जैमिनिमतेऽप्येतस्मिन्मन्त्रे स्वाहाकारः प्रहरणार्थे सूक्तवाके न हि देवताभ्यो दानरूपो यागो भवति, न तु पूर्वकृता प्रस्तरप्रतिपत्तिरपि यागोऽन्यथा शाखाप्रहरणमपि यागः स्यात्तेनैव मन्त्रेण स्वाहाकारान्तेन कृतत्वान्न च शाखायागसंबन्धो जैमिनेरिष्ट आशङ्क्य साक्षात्प्रतिषिद्धत्वात् । अतो भाष्यकारेण किमवलम्ब्योक्तं स्वाहाकारान्तो मन्त्र इति नास्मद्बुद्धिगोचरः । तस्मात्सूक्तवाक इष्टदेवतास्मारक इष्टानामाज्यभागादिदेवतानां स्विष्टकृदन्तानां संस्कारजनको दृष्टार्थो यागार्थत्वेनादृष्टार्थ इति सिद्धम् । शंयुवाकस्तु केवलमदृष्टार्थ एव कर्मसमवेतार्थप्रकाशत्वाभावादारादुपकारकस्तोत्रशस्त्रवदिति ।

प्रहरणे मन्त्रान्तरमाह—

अक्तं देवानाꣳ रिहन्तु रिहाण्यन्तु वयाꣳसि
वशा पृश्निर्भूत्वा दिवं गच्छेति वा ।

तत्र प्रहरणे विशेषमाह—

**नात्यग्रमनुदग्रमप्रतिशृणन्नग्रमजिह्ममिव हस्तं धारयन् ।**

अजिह्ममिवेषदृजुं हस्तं धारयन्कुर्वन्प्रहरतीति संबन्धः पूर्वेणैव । नात्यग्रमग्निमतिक्रान्तमग्रं यस्य प्रस्तरस्य न भवति स नात्यग्रस्तं तादृशं प्रहरेत् । तथाऽनुदग्रमनूर्ध्वाग्रमनुदग्दिगग्रं च प्राञ्चं प्रहरतीति फलति । तथाऽप्रतिशृणन्नग्रं न प्रतिशृणन् । शॄ पाके । अग्रमग्रभागमङ्गारेषु न प्रतिशृणन्न भर्जयन् । तथा चोपरीव प्रहरतीत्युक्तम् । वैखानसेन तु—'ऊर्ध्वमुद्यौति कर्षन्निव न्यञ्चमन्ततः पर्यावर्तयति ' इत्युक्तम् ।

**कर्षन्निव न्यञ्चमन्ततः पर्यावर्तयति ।**

ऊर्ध्वमुद्यम्य ततो न्यञ्चमधोऽग्र आनीयाधरोत्तरावयवभावेनान्तत आयतने पर्यावर्तयति घटीयन्त्रवद्भ्रामयतीत्यर्थः । एमा अग्मन्निति याजमानम् । अग्निरिदमित्यादि पूजितीर्यजमानो जपति अग्नेरहमुज्जितिमित्याद्या देवतानिर्देशोऽग्नय इदमित्यादि यागदेवता इत्युक्तमेव ।

---

१ क. ग. च. ठ वृष्टिमेरयेति ओ ।

आशास्तेऽयं यजमानोऽसावित्युच्यमा-[1]नेऽपिसृज्य प्रस्तरमग्नीद्रमयेति संप्रेष्यति।

आशास्त इति होत्रोच्यमाने संप्रेष्यत्यग्नीधम् ।

त्रिरञ्जलिनाऽऽग्नीध्रः प्रस्तरमूर्ध्वं समुद्यौति ।

त्रिरुत्क्षिपत्यञ्जलिना प्रस्तरमायतन एव । रोहितेनेत्यादि याजमानम् । ततो विसृजत्याग्नीध्रः प्रस्तरमायतने ।

अनुप्रहरेति संप्रेष्यति स्वगातनुभ्यः स्वाहेति प्रस्तरस्य तृणमपात्तमाग्नीध्रोऽनुप्रहरति ।

अपात्तमपाकृत्य प्रज्ञातं स्थापितम् । स्वगातनुभ्य इदं दिवः खील इति याजमानम् । प्रस्तरं लक्षीकृत्य प्रहरत्यनुप्रहरति ।

ए[3]तदेतदिति त्रिरङ्गुल्याऽन्ववदिशति ।

तत्तृणं प्रहृतं तर्जन्याऽध्वर्युराग्नीध्रमनुलक्षीकृत्यान्ववदिशति कथयति । सकृन्मन्त्र इति न्यायम् ।

आयुष्पा अग्नेऽस्यायुर्मे पाहीति यथा-रूपं प्राणायतनानि संमृशति ।

प्राणा इन्द्रियाणि तेषामायतनानि स्थानानि । आयुष्पा इति नासारन्ध्रे सकृन्मन्त्रः। संमृशति चक्षुष्पा इत्यनेन सकृच्चक्षुषी । इदमेव यथारूपं यथालिङ्गमित्युक्तम् ।

ध्रुवाऽसीतीमामभिमृशति ।

इमां पृथ्वीम् । अन्तर्वेदीत्यापस्तम्बः ।

संवदस्वेत्याग्नीध्रः संप्रेष्यति ।

मया सह संवादं कुरु इति संप्रेष्यत्यध्वर्युम् ।

अगा३नग्नीदित्यध्वर्युराह ।

आग्नीध्रं प्रत्याह । अगानगच्छात्किं प्रस्तरोऽग्निम् ।

एवमध्वर्युणा पृष्टे—

अगान्नित्याग्नीध्रः ।

आह । गतः प्रस्तरोऽग्निमित्यर्थः ।

श्रावयेत्यध्वर्युः श्रौषडित्याग्नीध्रः ।

स्पष्टम् ।

---

१ क. ख. ग. च. छ. ट. ठ. 'मान इत्यु' । २ क. ख. ग. च. छ. ट. ठ. °नेऽग्नी° । ३ क. ख. ग. ङ. न. ट. ?. °तदि° ।

मध्यमं परिधिमन्वारभ्य स्वगादैव्या होतृभ्यः
स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहीति संप्रेष्यति ।

होतारमित्यर्थः ।

शंयुवाकं होता प्रतिपद्यते ।

आरभते । विष्णोः शंयोरिति याजमानम् । स्पष्टम् ।

अध्वर्युः परिधीननुप्रहरति ।

कथं तत्राऽऽह–

यं परिधिमिति मध्यमम् ।

चेतयाता इति मन्त्रान्तो न स्वाहाकारः ।

यज्ञस्य पाथ उपसमितमितीतरौ ।

दक्षिणोत्तरौ । द्विवचनमितमिति मन्त्रे दृश्यतेऽतो युगपदेवानुप्रहरति ।

तयोर्विशेषमाह–

अवाञ्चमुत्तरस्याग्रमङ्गारेषूपोहति ।[1]

अवाञ्चमिति विशेषणमग्रशब्दं पुंलिङ्गं मन्यमानेनोक्तम् । मध्यमस्याधस्तादुत्तरस्याग्रमङ्गारेषूपोहति प्रवेशयति दक्षिणार्ध्य(णस्याग्र)मुपरीत्यर्थात् । तथोक्तं वैखानसेन—'दक्षिणोत्तरौ परिधी युगपत्पाणिभ्यां प्रहरन्नुत्तरस्याग्रं मध्यमस्याधोऽङ्गारेषूपोहति दक्षिणस्याग्रमुपरि' इति । वि ते मुञ्चामीति याजमानम् ।[2]

यजमानं प्रथतेति सर्वाननुमन्त्रयते ।

परिधीनिति शेषः । अत्रापि दृष्टे संभवत्यदृष्टकल्पना न न्याय्येति । शंयुवाकस्यापि शंयोर्वाक इत्याहुतीनामेकविंशतौ गणना । विष्णोः शंयोरहं देवयज्ययेति तथा शंयुमेव बार्हस्पत्यं भागधेयेन समर्धयतीति तथा जोषं भरामीति तथा यज्ञस्य पाथ इति च लिङ्गैर्योगरूपता ज्ञेया । सूत्रमपि सूक्तवाकवदत्र योज्यम् । विष्णुरूपः शंयुर्देवतेति केचिदाहुः । तन्न । सूक्तवाकेन प्रस्तरं प्रहरतीतिवच्छंयुवाके विनियोगाभावान्न परिधिप्रहरणे यागता । लिङ्गास्तावकत्वेन न श्रुतिकल्पकत्वम् । तस्माच्छंयुवाकस्योत्कर्षेऽपि यथास्थानमत्रैव परिधिप्रहरणं कार्यम् ।

जुह्वा बिले उपभृतोऽग्रमवधाय सं-
स्रावभागाः स्थेति स्रुचौ प्रस्रावयति ।[3]

विद्यमानलेपानग्नौ पातयतीत्यर्थः । तदाह वैखानसः—' स्रुचोराज्यशेषमग्नौ सं-

१ क, ख. ग. च. छ. ढ. ठ. 'त्तराध्यस्या' । २ घ. ज. 'लमुप' । ३ घ. ङ. ज. झ. ञ.ढ. °भागा इति ।

स्रावयति ' इति । मादयध्वमिति मन्त्रान्तः । अत्र द्रव्यदेवतासंबन्धः प्रतीयते । स च दानेन विना नान्यः संभवतीति दानार्थे यजतिर्वा जुहोतिर्वा प्रयोक्तव्य इति प्राप्ते संस्रावशब्देन प्रक्षेपावगतेर्जुहोतिरनुमेयः । तथा च ब्राह्मणे—' सꣳस्रावभागाः स्थेत्याह । वसवो वै रुद्रा आदित्याः सꣳस्रावभागाः ' इत्यादिना द्रव्यदेवता- संबन्धस्य विधानाच्च जुहोत्यनुमानम् । अत एवाहाऽऽपस्तम्बः—' सꣳस्रावेणाभि- जुहोति' इति । बौधायनोऽपि तथैवोक्त्वा स्वाहाकारान्तं मन्त्रं च पठति । तस्माच्छेष- प्रतिपत्तिरूपत्वेऽपि देवतामुद्दिश्य दानरूपे होमे गुणभावाद्द्रव्यस्यास्ति दर्विहोमतेति स्वाहाकारेण होतव्यम् । इष्टो यज्ञ इति याजमानम् ।

**उक्ते शंयुवाके हविःशेषान्प्राश्नन्ति ।**

पुरोडाशसांनाय्यानां हविषां विनियुक्तादवशिष्टान्भक्षयन्ति । पुरुषार्थत्वात्सर्वेऽपि ननु तुषोपवापवत्परार्थान्येके न क्रियेरन्निति न्यायः प्रवर्तते । यजमानस्यापि शेषभक्षण- मस्त्येव संस्कारत्वान्नापि सूत्रान्तर इवात्र्त्विजामित्युक्तम् ।

**आज्यलेपान्प्रक्षाल्य ॥ १० ॥**

स्रुक्स्रुवगतानाज्यलेपान्ध्रुवावर्जं, लेपो हि प्रयोजनार्थं गृहीतस्य पात्रे किंचिल्लग्नः शेषः । स ध्रुवायां न संभवतीति न तस्याः क्षालनम् ।

**इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवै- जयन्त्यां द्वितीयप्रश्ने चतुर्थः पटलः ॥ ४ ॥**

---

अथ द्वितीयप्रश्ने पञ्चमः पटलः ।

---

**जुहूपभृतावध्वर्युरादत्ते वेदꣲ होता सस्रुवामाज्यस्थाली- माग्नीध्रः प्रत्यञ्चो यन्ति पत्नीः संयाजयिष्यन्तः ।**

पत्नीरिति नामधेयैकदेशेन लिङ्गसमवायेन वा पत्नीसंयाजा एव गृहीता न देव- पत्नीमात्रम् । चत्वारः पत्नीसंयाजा इति नामधेयं स्पष्टमेव चतुर्णां वाचकम् । अनि- यमनिवारणार्थमध्वर्युरित्याद्युक्तम् । वेदोऽसीति याजमानम् । प्रत्यञ्चो यन्ति प्रदक्षिण- मावृत्य पत्नीः संयाजयितुमित्यर्थः ।

एवं प्रतिज्ञामाह—

**दक्षिणेन गार्हपत्यमध्वर्युरतिक्रामत्युत्तरेणेतरौ ।**

अग्रेण गार्हपत्यं गत्वा प्रदक्षिणमावृत्याध्वर्युर्दक्षिणेन भागेन गार्हपत्यमतीत्य पश्चा- त्क्रामतीत्यर्थः । उत्तरेणेतरौ होत्राग्नीध्रौ ।

अग्नेर्वामपन्नगृहस्य सदसि सादया-
मीति कस्तम्भ्यां[1] स्रुचौ सादयति ।

शकटस्य कस्तम्भी यत्र युगनेषे बध्येते स प्रदेशो मध्यं युगस्य । कस्य शकटस्य तम्भी स्तम्भ्यतेऽनया सा तेन प्रदेशेन शकटमुत्तभ्यते धुर्याभ्याम् । 'यदि पात्र्यां नेर्वपत्येतेनैव स्फ्ये विमुच्य' इति वैखानसः । धत्तमिति मन्त्रान्तः ।

धुरि धुर्यौ पातमिति धुरोः प्रोहति
प्रोहणमेके पूर्वं[2] समामनन्ति ।

स्रुचौ युगस्य धुरोर्बलीवर्दस्कन्धोपारि निधीयमानयोर्युगप्रवेशयोर्धुरोरुपारि प्रोहति ागग्रे प्रवाहयतीत्यर्थः । तदिदं प्रोहणं कस्तम्भ्यासादनात्पूर्वमेके शाखिनः पठन्ति तो विकल्पः पौर्वापर्ये । पात्र्यामापस्तम्बेनानुग्रह उक्तः—'यदि पात्र्यां निर्वपेद्राभ्यां जुभ्यां स्फ्ये स्रुचौ सादयेत्' इति । अग्नेर्वामिति धुरि धुर्यौ पातमिति द्वाभ्यामपि ादनमेव न प्रोहणं भिन्नमस्तीत्यर्थः ।

शकटस्य स्फ्यो वाचनिकः प्रतिनिधिस्तेन न स्फ्ये धुरि धुर्यौ पातमिति लिङ्गवि- धानमन्त्रलोपः, प्रतिनिधौ नोहो नापि शब्दविपर्यय इति न्यायसिद्धमित्याह—

स्फ्ये वा निर्वपति स्फ्ये विमुच्य ।

मन्त्रद्वयेनेत्ययमर्थो गम्यते । स एवाऽऽपस्तम्बेनोक्तो दर्शितः ।

विमुक्ताभ्यामपरेण गार्हपत्यमुपविश्य
ध्वानेनैव स्रुग्भ्यां[2] पत्नीः संयाजयन्ति ।

विमुक्ताभ्यां स्रुग्भ्यामिति संबन्धः । ननु विमुक्तयोरेव प्रकृतत्वात्तथा प्रथमं जुहू- भृतावध्वर्युरादत्त इत्युक्तत्वाच्च किमर्थं विमुक्ताभ्यामित्युक्तमिति चेत् । उच्यते—सूत्रा- रे स्रुग्भ्यां सह प्रत्यञ्चो यन्ति पत्नीः संयाजयिष्यन्त इत्युक्त्वा तयोरेवाग्नेर्वामित्या- संस्कारमुक्त्वा पुनरपि स्रुग्भ्यां यन्तीत्युक्तम् । स्फ्ये स्रुचौ सादयेत्स्रुग्भ्यां स्रुवाभ्यां पत्नीः सयाजयन्तीत्युक्तं तत्रापूर्वे स्रुचावितीव तथाऽपूर्वावेव स्रुवाविति व्याख्यातं, योः सादनमात्रार्थमानयनमित्यपि तत्र व्याख्यातम् । तथा वैखानसेनाप्युक्तम्— अपरेण गार्हपत्यमुपविश्योपांशूच्चैर्वा स्रुग्भ्यां पत्नीः संयाजयन्ति' इति । तत्राप्य- भ्यामित्येव तत्स्वस्य नेष्टमिति विमुक्ताभ्यामित्युक्तम् । स्रुग्भ्यामिति च विशेष्यत्वेन निर्देशः स्रुक्स्रुवाभ्यां वा मा भूदिति आपस्तम्बोक्तमिव । उपविश्येति तिष्ठद्धोम- वृत्त्यर्थमध्वर्योराग्नीध्रस्य चाऽऽश्रावणमुत्करे तिष्ठतो मा भूद्यथा वैखानसमतेन दक्षि-

१ क. ग. च. छ. ट. ठ. प्रत्याम्नायत्वेन । २ क. ग. च. छ. ट. ठ. ढ. °ग्भ्य । गार्ह- पे प° ।

णेऽध्वर्युरुत्कर आग्नीध्रो मध्ये होतेत्युक्तम् । त्रयाणामपि पश्चाद्गार्हपत्यस्योपवेशनेन याजनं वक्तुमुपविश्य याजयन्तीति च बहुवचनं प्रयुक्तम् । पत्नीरिति पत्नीसंयाजा-नामितिनामधेयानुसारेण पत्नीशब्देन सर्वा देवता गृह्यन्ते देवपत्नीसहभावात् । अत एव केवलग्रहणाय देवानां पत्नीरिति वदिष्यति । ध्वानेन स्वरेण त्रयो ये याज्यानुवाक्ये होतुरमुष्मै ब्रूहीत्याद्यध्वर्योरस्तु श्रौषडित्यग्नीधस्य ध्वानेनैव गम्यन्ते । तत्र होतुरुच्चैःस्वर एव ऋग्वेदविहितत्वात् । अन्ययोरुपांशु यजुर्वेदविहितत्वात् । तयोः पुनरन्यत्राऽऽश्रुतप्रत्याश्रुतेभ्य इति प्रतिप्रसवात्पुनरुच्चैरेव प्राप्तिस्तन्निवारणमनेन क्रियते । यद्यपि सामर्थ्यात्परप्रत्यायनार्थानां ब्रूहीत्यादिवषडन्तानां नोपांशुता संभा-व्यते तथाऽपि ध्वानेनापि परप्रत्यायनं भवेदिति तत्रापि ध्वान एव । ध्वानो हि स्वर-व्यञ्जनयोः पृथगनुपलब्धिर्ध्वान इति लक्षितत्वात् । एवकारेण परप्रत्यायनार्थानामपी-त्युक्तम् । अथवा बहुवचनेनैव तदुक्तमेवकारेण सूत्रान्तरोक्तेनोपांशूच्चैःस्वरो विकल्पो मा भूदिति । वैखानस उपांशूच्चैर्वेत्याह । ध्वानेनोपांशु वेत्यापस्तम्बः अत्राऽऽज्यमेव द्रव्यमनादेश आज्यमिति बौधायनोक्तम् । महीनां पयोऽसीति निर्वापो देवयज्याया इति मन्त्रलिङ्गात्सर्वार्थत्वेन निर्वापाच्च । यद्यपि सर्वस्मै वा एतद्यज्ञा-गृह्यते यद्ध्रुवायामाज्यमित्यपि श्रूयते तथाऽपि वेद्यां गृहीतं न पश्चान्नयन्तीति प्रतिषे-धाभिप्रायेणोक्तं गार्हपत्य आज्यार्थान्स्थाल्या आज्येनेति । तानि सर्वाणि चतुर्गृही-तान्येव यागार्थत्वात् । याज्यापुरोनुवाक्यावतीषु चतुरवत्तं पञ्चावत्तं जमदग्नीनामिति परिभाषितत्वादत्रैव । यागधर्मा अपि पत्नीसंयाजेषु च याज्यापुरोनुवाक्ये इत्युक्तम् तथाऽऽश्रुतप्रत्याश्रुते याज्यासंप्रैषश्चेति तथा पुरोनुवाक्यामवदास्यन्नवत्ते वा संप्रैष्य-त्यमुष्मा अनुब्रूहीति तत्सर्वमनुसंधेयमिति तूष्णीमत्र याजयन्तीत्युक्तम् ।

**वेदं चोपभृत्य पत्न्यामन्वारब्धायामुत्तरार्धे सोमं यजति दक्षिणार्धे त्वष्टारं तावन्तरेणेतरा यजति ।**

यजतीत्येतदनूयाजेषु व्याख्यातम् । वेदं चेत्युपभृता समुच्चयार्थश्चकारः स्पष्टमन्यत् ।

**परिश्रितेऽपरिश्रिते वा देवानां पत्नीर्यजति ।**[4]

सूत्रान्तरोक्तनियमव्युदासायानियम उक्तः । परिश्रितमावृतं व्यवहितमाहवनीया-त्तथैवाऽऽपस्तम्बोक्तेः । अन्यथा त्वपरिश्रितम् । देवानां पत्नीरिति सोपपदेन सर्वपत्नी-संयाजदेवतानिवृत्तिः । न तु लिङ्गसमवायेन सर्वासामपि नामधेयम् । पत्नीसंयाजा इ-

---

१ क. ग. च. छ. ट. ठ. गम्यते । २ ख. ट. °थगुप° । ३ ख. ट. °ब्धिर्ध्वनिर्ध्वा°
४ घ. ङ. ज. झ. ञ. ढ. °ते दे° ।

सर्वयागाणां नामधेयं पत्नीभिः सममिज्यन्ते ते पत्नीसंयाजा इति । तस्मिन्सति पुनर्ग्रहणान्नोपलक्षणम् । न चायं नामैकदेशो देवानामित्यधिकत्वात् । देवानां पत्नीरिति पुनर्ग्रहणादेकैव तच्छब्दवाच्या बहुवचनप्रतिपाद्या ।

अपरिश्रिते राकां पुत्रकामो यजेत सिनी-
वालीं पशुकामः कुहूं पुष्टिकामः ।

अपरिश्रित इति सर्वत्र । एतत्कामो यक्ष्य इति संकल्पिते यजमानेनेत्युक्तम् । अध्वर्युर्यजति प्रकृतौ काम्याः ।

पुरस्ताद्देवानां पत्नीभ्यो राका-
सिनीवाल्यावेके समामनन्ति ।

नित्यत्वेनैवास्मिन्पक्षे ते विकृतावपि भवतः । सोमायानुब्रूहि, आश्रावय, अस्तु श्रौषट् । सोमं यज, वषट्कारेण सह वषट्कृते वोक्तस्थाने जुहोति, सोमाय सोमस्या-[इ]मिति याजमानम् । एवं त्वष्ट्रादिषु ज्ञेयं याजमानं च । यदा देवानां पत्नीरग्निं [गृ]हपतिं चाव्यवधानेन तदा देवानां पत्नीरग्निर्गृहपतिरिति याजमानम् ।

अग्निं गृहपतिमिष्ट्वा संपत्नी पत्या सुकृतेन गच्छतां
यज्ञस्य युक्तौ धुर्यावभूताम् । संजानानौ विजहतामः-
रातीर्दिवि ज्योतिरजरमारभेतामिति स्रुवेण गार्ह-
पत्ये संपत्नीयं जुहोति पत्न्यां[3] समन्वारब्धायाम् ।

जुहोतिना चोदितत्वात्स्वाहान्तो मन्त्रः । समन्वारब्धायां यजतीति पूर्वमुक्तं तद्यागे-[ष्]वेव तदर्थं पुनर्होमे विधानम् । स्रुग्भ्यामित्यधिकारस्तु यागार्थ एव । समाख्यया [जु]हूप्राप्तौ स्रुवेणेत्युक्तम् । गार्हपत्यग्रहणमाहवनीयस्य समाख्याप्राप्तस्य निवृत्त्यर्थम् । न तिष्ठद्धोमत्वमपि जुह्वाऽऽहवनीय इतिसंभवादपि निवृत्तम् । संपत्नीयनामकं होमम् । [मन्त्रा]न्तरत्वाच्चतुर्भ्योऽधिकत्वादयागत्वाच्च पत्नीसंयाजव्यतिरिक्तत्वं, नापि तदङ्ग[प्र]माणाभावात्पृथग्गार्हपत्याग्निविधानाच्च । परार्थान्येकेनेति पत्न्यन्वारम्भस्याध्वर्यु-[सं]स्कारत्वादेकयाऽन्वारम्भो बहुपत्नीकस्य । अनालम्भुकत्वादिनाऽसंनिहितायामन्ये-[ना]न्वारम्भो भवत्येव यजमानेनाग्नीधा वा, पत्नीसंस्काराणामेव लोपस्य परिभाषितत्वात् । [अ]त एव न संपत्नीयस्य लोपः । ज्योतिर्देवता ।

होतुरङ्गुलिपर्वणी अनक्त्यपरमङ्क्त्वाऽथ पूर्वमितरथा वा ।

---

१ घ. ङ. ज. झ. ञ. ढ. °ते वा रा° । २ ख. घ. ङ. ज. झ ञ. ढ. °ता॰ स्वाहेति । ३ घ. ङ. ज. झ. ञ. ढ. पत्न्याम° । ४ क. ग. च. छ. ट. ठ. समाख्ययाऽपि निवृत्ता । सं° । ५ क. ग. च. छ. ठ. °न्तराच्च° ।

द्वितीयमङ्क्त्वा ततः प्रथमं विपरीतमितरथा ।

तत्सोऽवघ्राय ।

स होता ।

अप उपस्पृशति ।

श्रौतमुपस्पर्शनम् ।

दक्षिणे होतुः पाणौ चतुर आज्यबिन्दूनिडामवद्यति ।

वामे त्विडावदानं, दक्षिणेनान्वारम्भो मा भूदिति दक्षिण इत्युक्तम् ।

षडग्नीधः ।

दक्षिणे पाणावित्येवेडाषड्बिन्दूनवद्यति ।

उपह्वयते होता ।

इडाद्वयमपि लक्षयित्वा सेडौ हस्तावेकत्र कुरुतः । होतेत्यध्वर्युरधिकृतो मा भूदिति ।

इडामुपहूयमानामध्वर्युराग्नीध्रः ॥ ११ ॥ पत्नी चान्वारभन्ते ।

स्पष्टम् ।

उपहूतेयं यजमानेत्युच्यमान उपहूता पशुमत्यसानीति जपति ।

लिङ्गात्पत्न्येव । अयं पाठो याजुषहौत्रानुसारेण बाह्वृच्ये तूपहूतोऽयं यजमा इत्येव, तदा यजमान एव जपति पूर्ववत् । दैव्या अध्वर्यव इत्युच्यमाने पूर्ववदध्वर्यु रुपहूतः पशुमानसानीति जपति । द्विविधेऽपि हौत्रे जपत्येव परिगणनया यजमान स्यान्वारम्भव्यावृत्तिः । तेनान्वारम्भाभावाद्यजमानस्य जपोऽपि नास्तीडामाह्रिय माणामित्यपि चाऽऽह्रियमाणत्वाभावात् । इडाऽस्मानित्येव याजमानं परस्य परि रुयार्थं च ।

उपहूतां प्राश्नाति होता ।

वैखानसेनोक्तमृत्विजः प्राश्नन्तीति तदध्वर्योर्मा भूदिति होतेत्युक्तम् तूष्णीमेव ।

उपहूतो द्यौः पितोप मां द्यौः पिता ह्वयतामग्निराग्नीध्रादायुषे वर्चसे जीवात्वै पुण्यायेत्याग्नीध्रः प्राश्नात्युपहूता पृथिवी मातोप मां माता पृथिवी ह्वयतामग्निराग्नीध्रादायुषे वर्चसे जीवात्वै पुण्यायेति वा ।

---

१ क. ग. च. छ. ट. ठ. होतृपा° ।

द्वावाग्नीध्रस्य वैकल्पिकौ ।

प्राश्य तूष्णीं मार्जयते ।

आग्नीध्र इत्यनुवृत्तेः । होतुर्हौत्र एव विधिर्ज्ञेयः ।

इडान्तः शंय्वन्तं वा ।

गार्हपत्यसमीपे क्रियमाणं पत्नीसंयाजंसपत्नीयहोमेडाभक्षणं तदिदं परामृश्यते । तदिडान्तमुक्तमेव तदनूद्य शंय्वन्तं वेति विकल्पः । इडान्तमेव कर्म संतिष्ठते । इडाभक्षणान्तमिडान्तमित्यर्थः ।

शंय्वन्ते विशेषमाह—

शंय्वन्ते वेदात्तृणमपादाय तस्य जुह्वामग्रमज्यात्स्रुवे मध्यमुपभृत्याज्यस्थाल्यां मूलम् ।

अञ्ज्यादित्यर्थः ।

तस्य कल्पो यः प्रस्तरस्य ।

तस्य तृणस्य कल्पो यः प्रस्तरस्य प्रस्तरतृणस्येत्यर्थः । केषांचिदयमभिप्रायः—यदा शंय्वन्तं तस्मिन्पक्षे कर्तव्ये सति प्रस्तरप्रहरणं सूक्तवाकेन साध्यं ततो न तस्योत्कर्षोऽपि त्वावृत्तिरेव प्रधानयोः प्रस्तरवेदतृणप्रहरणयोः कालभेदात् । न च प्रस्तरप्रहरणमप्याकृष्यते तस्य स्वतन्त्रस्य तृणप्रहरणं प्रत्यनङ्गत्वादङ्गत्वाच्च सूक्तवाकस्याऽऽवृत्तिरेव न्याय्या । न च शंयुवाकं होता प्रतिपद्यते यं परिधिमिति विधानाच्छंयुवाकस्यापि परिधिप्रहरणं प्रत्यङ्गत्वादावृत्तिरिति वाच्यम् । सूक्तवाको [illegible]ज्या प्रस्तर आहुतिरिति श्रुतिबलाज्जैमिनिना साधनभावः सूक्तवाकस्यैव साधितः । [illegible] च शंयुवाकपरिधिप्रहरणयोः साध्यसाधनभावे श्रुतिरस्ति । शंयुमेव बार्हस्पत्यं [illegible]गधेयेन समर्धयतीत्याद्यर्थवादा न साधका अन्यार्थत्वात् । यदपि शंयोर्वाक इति [illegible]तिराहुतित्वमाहैकविंशत्याहुतिषु तदपि नोक्तमाहुतित्वेन प्रमाणमपि तु दर्शे [illegible]र्णमासे चैक एव शंयुवाक इति तन्त्रेणाङ्गानीत्यत्रार्थे प्रमाणं यथेडाहुतित्वेन [illegible]रिगणिताऽपि नाऽऽहुतिः । ततः शंयुवाको न दृष्टार्थः किंतु स आरादुपकारक एव । [illegible]मात्तस्योत्कर्ष एव न्याय्यः । परिधिप्रहरणं संस्रावश्च स्वस्थाने तत्रैव केवलं सूक्त[illegible]कशंयुवाकप्रैषपूर्वकाविति विवेको ज्ञेय इति । तदिदं नास्मत्सूत्रारूढं, सूत्रार्थस्तु [illegible]युवाकार्थं प्रेषितेन शंयुवाकेऽनूक्ततृणमक्तप्रस्तरतृणवत्प्रास्यतीति तावद्गार्हपत्ये । [illegible]क्तं कात्यायनेन—शंय्वन्ते वेदतृणमादाय प्रस्तरवदनक्तीत्युक्त्वाऽग्नीदाहानुप्रहरेति [illegible]स्य तृणादि पूर्ववच्छंय्वन्ते स्रुक्स्रुवं प्रगृह्णातीति । एवमस्माकमपि प्रस्तरस्य येन

१ क. ग. च. छ. ट. ठ. वेदतृण° । २ ख. °णमादा° ।

विधिना यैर्मन्त्रैरञ्जनमेवं तृणस्यापि। तथा प्रस्तरस्य संबन्धि यत्तृणं तद्वदेव प्रहरणेन प्रतिपत्तिरिति कात्यायनेन दर्शितम्। तथाऽऽश्वलायनेनापि शंयोरेवात्र विकल्प उक्तः।

प्रकृतमाह—

दक्षिणाग्नाविध्मप्रव्रश्चनान्यभ्याधा-
य पिष्टलेपफलीकरणहोमौ जुहोति।

अप्रदक्षिणमावृत्य स्रुग्व्यवायनिवारणाय दक्षिणाग्नेः पश्चादासीन इध्मस्य संभरणावसरे यानि मूलाग्राण्यवशिष्टानि प्रज्ञातानि निहितानि[तानि] दक्षिणाग्नौ प्रक्षिप्य पिष्टलेपफलीकरणनामकौ होमौ जुहोति। अन्वर्थेयं संज्ञा यदि ते सन्ति।

चतुर्गृहीताज्ये फलीकरणानोप्याग्नेऽदब्धायो इति जुहोति।

अवैदिक इतिकरणे परतः सति यो इत्योकारस्य विकल्पेन प्रकृतिभावोऽग्नेऽदब्धायो इत्यत्र। स्वाहेत्यन्तः। ब्राह्मणमप्येवमेवाऽऽह। तच्छेषस्तु—अतिरिक्तानि वा इध्मसंवृश्चनानि, अतिरिक्ताः फलीकरणाः, अतिरिक्तमाज्योच्छेषणमिति। त्रयस्यातिरिक्तत्वेनार्थवादो होमप्रशंसा संज्ञा तु फलीकरणहोम इति। बौधायनादिभिरप्येवमेवोक्तम्। वैखानसस्तु नाम्न संज्ञया विधत्तेऽपि तु फलीकरणानोप्य जुहोतीत्येतावदेवाऽऽह। तथाऽपि फलीकरणमाधार एवायं चतुर्गृहीतं न होमद्रव्यं तत्रावधानेन संस्कारो भवति फलीकरणानामतिरिक्त एवातिरिक्तं दधातीति फलीकरणहोमस्यैव शेषत्वात्। इध्मसंवृश्चनानामभ्याधानं पूर्वभावितया संस्तुतं तथा चाषधे यागे न फलीकरणहोमस्तेषामभावात्। न चान्यानुपादाय होम इति वक्तुं शक्य अतिरिक्तत्वेन संस्तवाद्ध्रियमाणानामेव प्रतिपत्तिः। तेषामभावेऽप्यभ्याधानमिध्मसंवृश्चनानां कार्यमेव तस्य होमं प्रत्यनङ्गत्वात्। स्यपा पूर्वभावित्वमात्रत्वाभिधानात् वैश्वानर्यादावनिध्मके कर्मणि तेषामभावेऽपि फलीकरणहोमः। अनौषधे याग आमिक्षादौ विद्यमानेध्मसंवृश्चनानामस्त्येव प्रतिपत्तिः। न चाऽऽज्येन केवलेन होमस्तस्य ब्राह्मणेऽप्यविधानात्। फलीकरणहोममेव प्रस्तुत्योक्तमतिरिक्तमाज्योच्छेषमिति संस्कारकत्वमात्रेण संस्तवाच्चापि वस्तुगत्या न स्थालीस्थमुच्छेषणं संज्ञाऽनारिष्ठादीनां विद्यमानत्वात्।

अपरं चतुर्गृहीतं गृहीत्वा पिष्टलेपमोप्योलूखले मुसले यच्च शूर्पे आशिश्लेष दृषदि यत्कपाले।

---

१ घ. ङ. ढ. °हीत आज्ये।

अवप्रुषो विप्रुषः संयजामि विश्वे देवा हविरिदं जुषन्तां यज्ञे या विप्रुषः सन्ति बह्वीरग्नौ ताः सर्वाः स्विष्टाः सुहुता जुहोमीति पिष्टलेपं जुहोति ।

जुहोतिना चोदितत्वात्स्वाहान्तो मन्त्रः । अत्र पिष्टलेपमिति पुनर्वचनं सूत्रान्तरेषु पिष्टलक्षणलेपस्कन्दननिमित्तो होम इतीष्टं न तु पिष्टानामपि होम इति स्वमते तु तद्धोमोऽपीष्ट इति दर्शनार्थम् । तथैवान्येषां सूत्रकाराणां संमतम् । बौधायनस्तावदाह स्रुचि चतुर्गृहीतं गृहीत्वेत्येवं प्रकृत्यान्वाहार्यपचने सर्वप्रायश्चित्तं जुहोतीति । भरद्वाजोऽपि—आज्येनैव पिष्टलेपं जुहोतीति । तयोरेवमभिप्रायः—उलूखल इत्ययं मन्त्रो लिङ्गेनैव विनियुज्यते तद्धलात्पिष्टलेपानामेवायं होमो न किंतु लिङ्गेन पिष्टलेपानां तत्र तत्र लग्नानां स्कन्दननिमित्तो होम इति संज्ञाऽपि शाखान्तरीयोपपन्नेति । आचार्यस्तु न तत्प्रतिषेधति । यन्नैमित्तिकहोमत्वमाज्यहोमस्य किं तु प्राप्ते लेपे होमोऽपि समुच्चयेन कार्य एव । अत एव चतुर्गृहीत आज्ये फलीकरणानोप्येत्युक्तम् । अत्र तु चतुर्गृहीतं गृहीत्वेति तावदेव प्राधान्येनोक्तम् । पिष्टलेपानोप्येत्येतदपि पूर्वनिरपेक्षमुक्तमत उभयोरपि प्राधान्येनैव होमद्रव्यत्वं न तु पूर्ववत् । यथा क्रियते फलीकरणहोमः प्रतिपत्त्यर्थोऽयं पुनः प्रतिपत्त्यर्थोऽपि प्रायश्चित्तार्थश्च यथा सोमो विप्रुड्निमित्तक इति । तेन गृहीतलेपाभावेऽपि होम आज्येनैव सोऽपि पिष्टलेपनिमित्तस्तथासंज्ञक इति संज्ञाप्रवृत्तिने(रे)तदेवाऽऽचार्यस्येष्टं यदयं पिष्टलेपफलीकरणहोमौ जुहोतीत्युक्त्वा फलीकरणाञ्जुहोतीति न वदति संज्ञयैव तेषां होम्यत्वप्राप्तेस्तथा पिष्टलेपेषु प्राप्तिश्चेत्तत्रापि न वदेत्पिष्टलेपं जुहोतीति पुनरेव वदति च । तस्मान्न संज्ञया प्राप्तिः, तस्यास्तत्र तत्रावशिष्टलग्नलेपनिमित्तत्वात् । ततस्तु गृहीतानामहोमः स्यात्स मा भूदिति पुनर्वचनं प्राप्तेषु तेषामपि होम इति भावः । चरावपि पिष्टानामग्रहणे होमो मन्त्रेणेष्ट एव दृषदि यत्कपाल इति पदद्वयलोपेनेति ज्ञेयम् ।

पिष्टलेपं पूर्वमेके समामनन्ति वेदोऽसि वित्तिरसीति वेद१ होता पत्न्यै प्रयच्छति ।

सनेयमिति मन्त्रान्तः ।

वेदोऽसि वेदसे त्वा वेदो मे विन्देति वा ।

प्रदाने मन्त्रो वैकल्पिकः ।

घृतवन्तं कुलायिनमिति त२ सोपस्थे कृत्वा ।

---

१ घ. ङ. ज. झ. ञ. ढ. °होमि स्वाहेति । २ ख. च. छ. ट. ठ. सोमे । ३ क. ख. ग. च छ. ट. ठ. °म् । वे° ।

वाजिनमित्यन्तः। याजमानमप्यनेन। सा पत्नी तं वेदम्।

**अस्यते।**

नानेन मन्त्रः संबध्यते लिङ्गानुगुणत्वाभावादग्रे मन्त्रविधानाच्च। अत्र वैकल्पिकं वक्तुं प्रतिज्ञामात्रं क्रियते मन्त्रस्तु तयोपस्थस्थापने। उपस्थोऽङ्कः। अयं शाखान्तरीयो विधिर्यत्पत्न्यै वेदस्य दानं स्वशाखीयमाह।

**होताऽस्यति।**

होताऽस्यतीत्येकेषामग्निममाकृष्यते प्रयच्छति वाऽस्यति वेत्यर्थः। उपस्थ एव तथाऽऽपस्तम्बे दर्शनात्। अस्यति क्षिपति, तत्र वेदोऽसीति घृतवन्तामिति च द्वाभ्यामस्यति तथैवाऽऽपस्तम्बेनोक्तम्। प्रदानाभावे वोपस्थे करणमपि पत्न्या नास्ति।

**त्रिरवस्यतीत्येकेषाम्।**

सकृन्मन्त्रः। द्विस्तूष्णीं, होताऽस्यतीत्येकेषामित्यपि संबन्धः। अवस्यत्यवसानं प्रापयति। धात्वन्तरमेतदस्यतेः सकाशात्। अवसानं स्थापनं तत्पुनः पुनर्गृहीत्वैव नान्यथा।

**निर्द्विषन्तं निरराति नुदेति वेदं पत्नी निरस्यते।**

यदि गृहीत्वोपस्थे कृतो यदि वाऽङ्के होत्रैवास्तो यदि त्रिरवसितो वा तदा गृहीत्वा गृहीत्वा मन्त्रेण निरस्यते प्रास्तं प्रास्तं प्रति निरस्यतीत्यापस्तम्बोक्तेः। निरस्यत इत्यात्मनेपदनिर्देशेनाऽऽत्मगामिता निरसनान्तक्रियाजन्यफलस्योक्ता। तेन प्रतिपत्तिर्वेदादानादीति गम्यते। मन्त्रलिङ्गं च घृतवन्तमित्याद्याशीर्लक्षणं स्पष्टमेव। निर्द्विषन्तमित्यपि प्रतिकूलनिरसनमिष्टमेवेति पुरुषार्थत्वादावृत्तिः। आदाननिरसनयोः पत्नीसंस्कारत्वात्। वेदोऽसीति योऽध्वर्युमन्त्रः सोऽप्याशीरेव। साऽपि यजमानगामिनीति न्यायनिश्चयः। ब्राह्मणमपि प्रजापतेर्वा एतानि श्मश्रूणीत्यादि फलमेवाऽऽहातोऽनेकासां कार्यम्।

**इमं विष्यामीति योक्त्रपाशं विष्यते।**

आत्मनेपदेन पत्नी कर्त्री, आशीर्मन्त्रत्वादेव। एवं च ब्राह्मणं विरुध्यते-यो वा अयथादेवतं यज्ञमुपचरत्या देवताभ्यो वृश्चयते पापीयान्भवति यो यथादेवतं न देवताभ्य आवृश्चयते वसीयान्भवति वारुणो वै पाशः, इमं विष्यामि वरुणस्य पाशमित्याह वरुणपाशादेवैनां मुञ्चतीति। सर्वत्र पुंनिर्देशात्कर्तृत्वमध्वर्योरेनामिति कर्तुरन्या कर्मत्वेन निर्दिष्टा पत्नी। तस्मान्न विमोकः पत्नीकर्तृकः। विष्यामीति परस्मैपदाच्च। इदमेव मनसि कृत्वोक्तं वैखानसेन-इमं विष्यामीति पत्नीं वाचयतीति। ततस्तु स्योनं मे सह पत्या करोमीत्याहाऽऽत्मनश्च यजमानस्य चानार्त्यै संत्वायेति मन्त्रवत्तयाऽऽत्मन इति फलादेशोऽपि युज्यते। तथा चाऽऽध्वर्यवसंज्ञा न

षाधिता सूत्रं च । तत्राधिकं प्रविष्टं न तु तद्धानिरधिकप्रवेशोऽङ्गीकृत एव बहुवच-
नेनं यज्ञं व्याख्यास्याम इत्येतेन । पूर्वं पश्चाच्च होतुरधिकारे सति पत्नीति
पदं नानुवर्ततेत्याशङ्कां निरसितुं मन्त्रे परस्मैपदप्रयोगेऽपि विधावात्मनेपदं
दर्शितम् ।

**तस्याः सयोक्त्रेऽञ्जलौ पूर्णपात्रमानयति ।**

योक्त्रसहितेऽञ्जलौ पत्न्या उदकेन पूर्णं पात्रं पूर्णपात्रं निनयति रेचयति ।
अत्राऽऽध्वर्यवमित्येव गम्यते । अञ्जलौ पूर्णपात्रमानयतीति नात्र होतुर्निर्देशोऽस्ति ।
सूत्रेऽपि पूर्वं पत्नीत्यनुकृष्टमेव तेन होतेति विप्रकृष्टमग्रे होतुर्ग्रहणं च करिष्यति ।
तस्मादाध्वर्यवमिति भाष्यकारो मन्यते । हो(हौ)त्रे च स्वयं न होतुरुक्तवांस्तस्मा-
त्प्यध्वर्योरेव । इयमत्र व्यवस्था बाह्वृच्ये सूत्रे होतुर्निनयनविधाने तेनैव कार्यमन्येन
याजुषेण हौत्रेऽध्वर्युणैवेति ।

**समायुषेत्यानीयमाने जपति ।**

आनीयमाने पूर्णपात्रे । अत्र जपतीति पूर्वं प्रकृतस्याध्वर्योः कर्तृत्वे प्राप्तेऽपि संनि-
धिलिङ्गस्य बलीयस्त्वान्मन्त्रलिङ्गात्पत्नी गम्यते । अत्र पत्नीत्यनुवृत्तावपि तत्सेति
तस्या उत्तरसूत्रे निर्देशो ज्ञापयति नियमार्थं सेति सैवेति । ततस्तु पूर्वसूत्रे योक्त्रे
वेष्यते जपतीत्यनयोः पत्न्याः कर्तृत्वेऽपि निनयनकर्तुरनिर्दिष्टस्य मन्त्रवाचकत्वेन
प्रयोजककर्तृत्वमपरस्याः प्रयोज्यकर्तृत्वमिति पूर्वं व्याख्यात एवार्थो ज्ञापितः सूत्र-
कृताऽपीति सूत्रान्तराद्दृढीकृतोऽस्माभिः । ममेति मन्त्रान्तः ।

**तत्सा निनीय मुखं विमृज्य यथार्थं गच्छति ।**

सा पत्नी स्वाञ्जलिगतमुदकं भूमौ निनीयाऽऽर्द्रेण हस्तेन दक्षिणेनैव तस्यैवानादेशे
साधनत्वात् । मुखमार्जनं पत्नीसंस्कारत्वात्प्रतिपत्न्यावर्तते । अञ्जलौ निनयनमपि
तथैव मन्त्रलिङ्गेनाऽऽशीःप्रतिपादनान्मुखमार्जनमपि स्पष्टः स्वसंस्कारो वाक्यशेषाच्च
मुखं विमृष्टेऽवभृथस्यैव रूपं कृत्वोत्तिष्ठतीति । यथार्थं गच्छति ब्राह्मणे योऽर्थो वाक्यश
उक्तस्तं प्राप्नोतीत्यर्थः । अवभृथस्यैव रूपं कृत्वोत्तिष्ठतीति वाक्यशेषः । तदुक्तं
बोधायनेन—अवभृथस्यैव रूपं कृत्वोत्तिष्ठतीति ब्राह्मणमिति । अवभृथस्येत्येतद्व्याख्याने-
नोक्तं मुखं विमृज्योत्थाय पुष्टिमती पशुमती यथार्थं गच्छतीति वैखानसेन । मुखं
विमृज्योत्तिष्ठति पुष्टिमती पशुमती प्रजावती गृहमेधिनी भूयासमितीत्यापस्तम्बेन । त
एतेऽर्था नानाशाखावाक्यशेषादेवावगम्यन्ते ।

**घृतवन्तं कुलायिनमिति वेद[१] होता स्तृण-**
**न्नेति गार्हपत्यात्संततमाहवनीयात् ॥ १२ ॥**

---

१ क. ग. च. छ. ट. ठ. ण. °ने च य° ।

वाजिनमित्यन्तः । वेदस्याग्रे कर्मदर्शनाद्वेदैकदेशं संततिपर्याप्तं स्तृणीते वेदसंस्का रोऽयं द्वितीयानिर्देशात्सोऽप्यदृष्टार्थ एव । दृष्टस्यादर्शनान्मन्त्रे फलस्तवाच्च । गार्हप त्याद्गार्हपत्यमारभ्येति ल्यब्लोपे पञ्चमी । आहवनीयादत्राऽऽङ्पूर्वत्वं ज्ञेयम् कियन्ति वेदतृणानि स्तृणन्प्रसारयन्संततमविच्छिन्नमित्यर्थः । राजिरूपेणैव । अ होत्रस्याऽऽध्वर्यवे प्रसङ्गेन ब्राह्मणे विधानात्तत्पाठानुसारेण स्वेनापि व्याख्यातं तावत्प रित्यज्य होतृसूत्रे व्याख्यास्यते । तस्मादिदं न बाहुच्येन हौत्रेण विकल्पते किं याजुषे हौत्र एव संनिवेशो बाहुच्य उक्तं तु तेनानुष्ठाने ग्राह्यमेव । ऋग्वेदेन होत करोतीति स्वेनैवोक्तत्वात् ।

यथेतमध्वर्युरेत्य ।

अध्वर्युग्रहणं होतृव्यावृत्त्यर्थम् ।

जुह्वां द्विर्गृहीत्वा—

या सरस्वती यशोभगीना तस्यै ते स्वाहा या सरस्वती वेशभगीना तस्यै ते स्वाहेति सारस्वतौ होमौ हुत्वा ।

सरस्वती देवता ययोस्तौ यथार्थनामानौ जुह्वाऽऽहवनीय इति । अत एवाऽऽ ज्यार्थान्ध्रुवाया इत्युक्तमेव । यद्यप्येतदादि दर्विहोमा एव तथाऽपि दर्शपूर्णमास तन्त्रान्तर्गतानामनियमो दर्विहोमधर्माणामिति ज्ञापयति । अत्रैव द्विरित्याह प्राप्तमेव तेनेतरधर्मपरिसंख्येति उत्तरतउपचारो विहार इति सामान्यमेव ।

इन्द्रोऽपानस्य केह मनसो वेशा-
न्कुरु सुमनसः सजातान्स्वाहा ।

जुहोतीति शेषः ।

ऋषभं वाजिनं वयं पूर्णमासं यजामहे । स नो दोहताँ सुवीर्यँ रायस्पोषँ सहस्रिणं प्राणाय सुराधसे पूर्ण- मासाय स्वाहेति पौर्णमास्याम् । अमावास्या सुभगा सुशेवा धेनुरिव भूय आप्यायमाना । सा नो दोहताँ सुवीर्यँ रायस्पोषँ सहस्रिणमपानाय सुराधसेऽमावास्यायै स्वाहेत्यमावास्यायाँ स्रुवेण पार्वणौ होमौ जुहोति ।

जुह्वाहवनीययोः संबन्धेन प्रवृत्तानां दर्विहोमधर्माणां निवृत्तिः स्रुवेणेत्यनेन । पार्वणौ पर्वणोरेवैकैकस्य समुदायस्य पौर्णमास्याख्यस्यामावास्याख्यस्य च कर्म णोऽङ्गभूतौ यथा पौर्णमासीसमुदायस्य वैमृधः । सप्तमीभ्यां निर्दिष्टौ समुदायौ तयोः क्रियमाणत्वात्साङ्गदर्शपूर्णमासयोः पर्वण्येव विधानाद्विशेषसंज्ञाविधानमेकैकपर्व-

१ क. च. ट. ठ. 'र्वणहो° ।

कर्तव्यसमुदायाङ्गत्वख्यापनार्थं तेन न विकृतिषु प्राप्तिः । समुदायरूपाया विकृतेरभावादिति भावः । साधितं न्यायविद्भिः ।

पुरस्तात्स्विष्टकृत एके समामनन्ति ।

पार्वणौ विकल्पेते क्रमविशेषेण ।

दश ते तनुवो यज्ञ यज्ञियास्ताः प्रीणातु यजमानो घृतेन । नारिष्ठयोः प्रशिषमीडमानो देवानां दैव्येऽपि यजमानोऽमृतोऽभूत् । यं वां देवा अकल्पयन्नूर्जो भागꣳ शतक्रतू । एतद्वां तेन प्रीणानि तेन तृप्यतमꣳ हहौ । अहं देवानाꣳ सुकृतामस्मि लोके ममेदमिष्टं न मिथुर्भवाति । अहं नारिष्ठावनुयजामि विद्वान्यदाभ्यामिन्द्रो अदधाद्भागधेयम् । अदारसृद्भवत देव सोमास्मिन्यज्ञे मरुतो मृडता नः । मा नो विददभिभामो अशस्तिर्मा नो विदद्वृजना द्वेष्याया । ब्रह्म प्रतिष्ठा मनसो ब्रह्म वाचो ब्रह्म यज्ञानाꣳ हविषामाज्यस्य । अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन्स्वाहाकृताहुतिरेतु देवान् । सं ते मनसा मनः सं प्राणे प्राणं दधामि ते सं व्याने समपानं दधामि ते । परिगृह्य यजमानोऽमृतोऽभूच्छं न एधि द्विपदे शं चतुष्पदे स्वाहेति नारिष्ठाञ्जुहोति ॥ १३ ॥

षड्गृहीत्वा नारिष्ठसंज्ञकान्होमाञ्जुहोति । जुहोतिचोदितत्वात्स्वाहाकारेण जुहोतीति परिभाषणात्प्राचीनेषु पञ्चस्वपि स्वाहान्तेन होमः । षष्ठे तु पाठेनैवोक्तः स्वाहाकारो देवताप्रवृत्तिनिमित्तः शब्दस्तत्र त्रिष्वेव मन्त्रेषु नारिष्ठलिङ्गताऽन्येषु नानालिङ्गं तथाऽपि पूर्वत्रयसहचरिताः सर्वे नारिष्ठा एव । केचिदत्रापि नारिष्ठविशेषणं देवसोममरुतां ब्रह्मयज्ञवाङ्मनःप्राणव्यानानामिच्छन्ति । अन्ते स्वाहाकारेऽपि नारिष्ठानिति बहुवचनात् । यत्र मन्त्रगणेन कर्म चोद्यते प्रतिमन्त्रं तत्र जुहुयादिति वक्ष्यमाणत्वाच्च प्रतिमन्त्रं होमः ।

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैजयन्त्यां द्वितीयप्रश्ने पञ्चमः पटलः ॥ ५ ॥

अथ द्वितीयप्रश्ने षष्ठः पटलः ।

---

अष्टात्रिंशद्(त्कृत्वो गृ)हीत्वा —

इष्टेभ्यः स्वाहा वषडनिष्टेभ्यः स्वाहा भेषजं दुरिष्ट्यै स्वाहा निष्कृत्यै स्वाहा निर्ऋत्यै स्वाहा दौराध्यैं स्वाहा दैवीभ्यस्तनूभ्यः स्वाहर्ध्यै स्वाहा समृद्ध्यै स्वाहा ।

एते स्वाहान्ता नव मन्त्राः शाखान्तरीयाः । तत्र निर्ऋतिनिष्कृत्योरुदकस्पर्शः स्मार्तः ।

अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्त्वमया असि । अयसा मनसा धृतोऽयसा हव्यमूहिषेऽया नो धेहि भेषजꣳ स्वाहेमं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने अयाऽसि प्रजापते भूर्भुवः सुवरिति व्याहृतिभिर्जुहोत्येकैकशः समस्ताभिश्च ।

अयं *स्वाहाकारान्तो यत्पाकत्रेति चरमश्च स्वाहान्तौ पठितौ । इष्टादिस्पष्टा न देवता दशमेऽया अग्निः । इमं मे वरुणेति मन्त्र ऋग्वरुणो देवता, तत्त्वा यामीत्यपि तथैव । त्वं नो अग्ने स त्वं नो अग्न इति द्वे, अग्नीवरुणौ देवता । त्वमग्ने अयाऽसीत्यग्निः । प्रजापते न त्वदिति प्रजापतिः । एते षण्मन्त्राः प्रतीकोपात्ताः । तस्यां शाखायामन्यत्र पठितानामत्रापि पाठप्रदर्शनार्थमेव प्रतीकेन पठिताः । तथैव सूत्रकृता शाखान्तरीयपाठ एव दर्शितः । तत्राऽऽद्यन्तमन्त्रयोः स्वाहापाठ एव मध्येऽनुषङ्गार्थः । यथा ऋताषाडृतधामेत्याद्यन्तयोः स इदमिति पठ्यते । भूरादि पठित्वा संदेहनिवृत्त्यर्थमेकैकशः समस्ताभिश्चेत्युक्तं तत्र व्याहृतिभिरित्यत्र बहुवचनात्प्रत्येकं मन्त्रता सिद्धैकमन्त्राणि कर्माणीति परिभाषया तथाऽपि समस्तायां व्यस्तता न लभ्येतेति द्वयमुक्तम् । अग्न्यादिदेवताः ।

आश्रावितमत्याश्रावितं वषट्कृतमत्यनूक्तं च यज्ञे । अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन्स्वाहाकृताहुतिरेतु देवान् ।

यज्ञो देवाः ।

अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथु । अग्ने तदस्य कल्पय त्वꣳ हि वेत्थ यथातथꣳ स्वाहाकृताहुतिरेतु देवान् ।

---

* इदं पदमसंबद्धम् ।

---

१ क. ख. ग. ट. ठ. ण. °ष्टाचत्वारिंश° ।

अग्निर्देवाः ।

अतिरिक्तं न्यूने जुहोमि न्यूनमतिरिक्ते जुहोमि ।
समꣳ समे जुहोमि स्वाहाकृताहुतिरेतु देवान् ।

देवाः ।

यदकर्म यन्नाकर्म यदत्यगाम यन्नात्यगाम यदत्यरी-
रिचाम यन्नात्यरीरिचाम । तत्त्वं विष्णो यज्ञे
यज्ञं प्रतिष्ठापय स्वाहाकृताहुतिरेतु देवान् ।

विष्णुर्देवाः ।

यत्प्रमत्तान्तरगाम किंचिदस्मिन्यज्ञे मन्त्रतः कर्मतो
वा । अनयाऽऽहुत्या तच्छमयामि सर्वं तृप्यन्तु
देवा हविषो घृतस्य स्वाहाकृताहुतिरेतु देवान् ।

देवाः ।

ब्रह्म प्रतिष्ठा मनस इत्येषा ।

ब्रह्मयज्ञौ देवाः । ऋगन्यत्र पठिता ग्राह्येत्यर्थः । तस्यां शाखायामन्यत्र पाठादेव-
मुक्तम् ।

ततं म आपस्तदुतायते पुनः स्वादिष्ठाधीतिरुचथाय शस्यते ।
अयꣳ समुद्र उत विश्वभेषजः स्वाहा कृतस्य समुतृप्णुतर्भुवः ।

ऋभवः ।

उद्वयं तमसस्पर्युदु त्यं चित्रम् ।

इत्यपि प्रतीकेन द्वे सूर्यो द्वयोः ।

यद्वो देवा अतिपादयानि वाचा चित्प्रयतं
देवहेडनम् । अरायो अस्माꣳ अभि-
दुच्छुनायतेऽन्यत्रास्मन्मरुतस्तं निधेतन ।

देवा मरुतः ।

यत इन्द्र भयामहे ततो नो अभयं कृधि । मघव-
ञ्छग्धि तव तन्न ऊतये विद्विषो विमृधो जहि ।

मघवानिन्द्रः ।

स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी ।
वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयंकरः ।

वृत्रहेन्द्रः ।

आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः । यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठभाजो अध ते स्याम ।

हरिवानिन्द्रः ।

अव ते हेड उदुत्तमम् ।

द्वे प्रतीकेन पूर्वो द्वयोः ।

पुरुषसंमितो यज्ञो यज्ञः पुरुषसंमितः । अग्ने तदस्य कल्पय त्वꣳ हि वेत्थ यथातथꣳ स्वाहाकृताहुतिरेतु देवान् ।

अग्निर्देवाः ।

यत्पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मर्त्यासः । अग्निष्टद्धोता क्रतुविद्विजानन्यजिष्ठो देवाꣳ ऋतुशो यजाति ।

अग्निर्देवाः ।

स्वाहेति जुह्वाऽऽहवनीयेऽध्वर्युः ॥ १४ ॥

सर्वप्रायश्चित्तानि जुहोति ।

सर्वप्रायश्चित्तसंज्ञकान्होमान् । अथ वा सर्वप्रायश्चित्तानि विच्छिन्नसंधानरूपाणि होमकर्माणि जुहोति । अत्र परिभाषाप्राप्तानामनुवादोऽन्यपरिभाषितदर्विहोमधर्मनिवृत्त्यर्थम् । तथा हि आपस्तम्बेन जुह्वा स्रुवेण वा सर्वप्रायश्चितानि जुहोतीत्युक्तम् । तन्निवृत्त्यर्थं जुह्वेति जुह्वैव । आहवनीयग्रहणमन्यधर्मपरिसंख्यार्थम् । अध्वर्युग्रहणं ब्रह्मनिवृत्त्यर्थम् । आश्वलायनेन प्रायश्चित्तेषु जुहोतीति चोद्यमाने ब्रह्माणं प्रतीयादित्युक्तम् । जुह्वाहवनीयाध्वर्युव्यतिरिक्तानां साधनानां दर्विहोमत्वेन प्राप्तानां प्रायश्चित्तेषु निवृत्तिः । केषां, समिदाधानमग्रेणाऽऽहवनीयं दक्षिणतोऽतिक्रमणं तिष्ठन्निति च निवर्तते । अत्र स्वशाखायां पठितानि सर्वप्रायश्चित्तानि वैकल्पिकान्येतैर्ह्येयानि । तानि तु ब्रह्म प्रतिष्ठेत्ययमाच्छिद्रिकोऽनुवाकः । वैखानसेनासौ सर्वप्रायश्चित्तत्वेन गृहीतः । आहवनीयं गत्वा जुह्वा स्रुवेण वा ब्रह्म प्रतिष्ठेत्येषोऽनुवाको यदकर्मेत्याद्युक्त्वोक्तं सर्वप्रायश्चित्ताहुतीर्जुहोतीति । तस्मादनुवाक एव सर्वप्रायश्चित्तार्थोऽन्यथा न विनियोगः स्यात् ।

ध्रुवामाप्याय्य ।

चतुर्गृहीतस्य पञ्चगृहीतस्य षड्गृहीतस्य वा न व्ययोऽस्ति तथाऽपि वचनादाप्यायनं समिष्टयजुरर्थम् ।

देवा गातुविद इत्यन्तर्वेद्यूर्ध्वस्तिष्ठन्ध्रुवयाऽऽहवनीये त्रीणि समिष्टयजूꣳषि जुहोति ।

दर्विहोमत्वेन प्राप्तानां धर्माणां निवृत्तिर्विशेषणैः क्रियते । वाते धाः स्वाहेति मन्त्रान्तः । ऊर्ध्वग्रहणमार्जवार्थं तिष्ठन्यथा वक्रो न भवेत् । स्पष्टमन्यत् । समिष्टयजुर्नामकानि होमकर्माणि जुहोति । अत्र मन्त्रगणेन कर्म चोद्यते यत्प्रातिमन्त्रं तत्र जुहुयादिति परिभाषितत्वान्मन्त्रत्रयेणाऽऽहुतित्रयं प्राप्तं तथैव मन्त्रविभागेन भरद्वाजेनापि दर्शितम् । तथा च त्रित्वे प्राप्तेऽपि + तथाऽपि पुनर्वचनं स(न्नात्स)कलस्य मन्त्रस्याऽऽवृत्त्या त्रीणि जुहोति । कुतः, वात एव यज्ञप्रतिष्ठादर्शनाद्वाते धाः स्वाहेत्यन्तस्यैकमन्त्रताऽवगम्यते तस्मादावृत्तिरित्येतैरनाभिधानाच्च । मध्यमे स्वाहाकारे बर्हिरनुप्रहरतीत्यविशेषेण त्रिःस्वाहाकारता मन्त्रेऽन्ते च । तथैवाऽऽपस्तम्बेन सर्वेण मन्त्रेण सकृदेव होमो विहितोऽतो वाते धाः स्वाहेत्येक एव मन्त्रः । ब्राह्मणमपि वाते धा इत्यन्तमेव मन्त्रं सर्वं प्रतिपादयति—'वाताद्वा अध्वर्युर्यज्ञं प्रयुङ्क्ते । देवा गातुविदो गातुं वित्त्वा गातुमितेत्याह । यत एव यज्ञं प्रयुङ्क्ते । तदेनं प्रतिष्ठापयति ' इति । वाते धा इत्यन्ते खलु वातपदं प्रयुज्यते । तस्मान्नैकपक्षे विभक्तो मन्त्रः । एवं द्विपक्षेऽपि ज्ञेयम् । ननु तथाऽपि कथमावृत्तिनिवृत्तिरिति चेत् । उत्तरसूत्रादिति ब्रूमः[1] संततं विग्राहं वा [इति] ।

एकं द्वे त्रीणि वा संततम्[2] ।

संततं देवा गातुविद इति मन्त्रारम्भेण सहाऽऽज्यधारया संततया स्वाहाकारपर्यन्तमेकमेव जुहोति । द्वे वा त्रीणि वा तथैव ।

विग्राहं वा ।

पूर्वसूत्रानर्थक्यं मा भूदिति भरद्वाजोक्तसंग्रहार्थं तत्रैव विकल्पः । त्रीणि मन्त्रविग्राहेण प्रतिस्वाहाकारं त्रीण्येव जुहुयात् । यदि विग्राहमिति धाराविच्छेदेन वेति व्याख्यायेत तदाऽत्रत्येन त्रीणीत्यनेनार्थस्य वैकल्पिकस्य सिद्धौ पूर्वसूत्रे तु त्रीणीत्यनर्थकम् । अथात्रैव त्रिषु स्वाहाकारेष्विति व्याख्यायेत तदा त्वेकं द्वे इत्यनयोरसंबन्धः स्यात् । तस्मात्पूर्वसूत्रेणैव संबन्धः । त्रीणीत्यनेनैव संबध्यते । संतते संतते[6] स्वाहाकारधारे यत्र तत्संततं विग्राहं वाऽत्र प[...] प्राप्तावृत्तिविग्रहणं च स्वाभाविकमनुज्ञातम् । यद्यत्र त्रीणीति न क्रियेत तदैकं द्वे इत्येताभ्यां प्रसंततनियमः संबध्यते तन्मा भूत्त्रीणीत्यनेनैव संबध्यतामित्येवमर्थं पुनर्ग्रहणम् । ननु तर्हि प्रथमं त्रीणीति सूत्रं माऽस्त्विति चेत् । न । तदा ह्येकमित्यादित्रयेण संबध्येत पुनर्ग्रहणसामर्थ्यात्तेनैवं ।

द्वेष्यस्य न्यञ्चं विच्छिनत्ति वा ।

---

+ तथाऽपीत्यधिकम् ।

---

१ ठ. द्वितीयप' । २ ण. °त्तिरि° । ३ ण. 'मः । ए° । ४ ण. °ततं विग्राहं वा । सं° । ५ क. ग.च. छ. ट. ठ. ण. 'वेपूर्वसू' । ६ ण. 'ते स्वा' । ७ ग. 'साबतिवि' । ८ ग. च. ठ. 'नैवम् । द्वे° ।

न्यञ्चमिति पुंलिङ्गं होममिति विशेष्यं ज्ञेयम् । उच्चप्रदेश आहुतिमारम्य नीचया समाप्तिः । विच्छेद आहुतिमध्ये तद्द्वेष्यस्य भवेन्न यजमानस्येत्यर्थः ।

**यं कामयेत प्रमायुकः स्यादिति जिह्मस्तिष्ठञ्जुहुयात् ।**

यं यजमानं प्रमायुकं मरणधर्माणमत्रापि पूर्ववत्तथा न जुहुयादित्यर्थः । जिह्मो वक्रः ।

**मध्यमे स्वाहाकारे *बर्हिरनुप्रहरति ।**

एकं यदा तदाऽपि मध्यमे द्वे यदा तदा प्रथममन्त्रावृत्तौ मध्यमे स्वाहाकारे, एवं त्रीण्यत्र प्रथमावृत्तावेवेति ज्ञेयम् । बर्हिरिति जात्यभिप्रायेण सर्वं, व्यक्त्यभिप्रायेणैकैव दर्भनाडिका ।

**बर्हिर्मुष्टिं वा ।**

मुष्टिमात्रम् ।

**हुते वाऽनुप्रहरति ।**

अन्तिमे स्वाहाकारे[1] हुतेऽनुप्रहरति—

**प्रहृत्य वाऽभिजुहुयात् ।**

प्रथमं प्रहृत्य पश्चाद्यथासंख्यं जुहुयादभि उपरि ।

**यदि यजमानः प्रवसेत्प्रजापतेर्विभान्नाम लोक इति ध्रुवायां यजमानभागमवधाय सह समिष्टयजुषा जुहुयात् ।**

यजमानेनेत्यन्तः । अवधान एव मन्त्रो लिङ्गात् । होमो हि समिष्टयजुर्मन्त्रेण मन्त्रद्वयस्य युगपदसंभवाच्च । वातायेदम् । अग्नेऽदब्धायो इति याजमानम् । दिवः खील इति च । न बर्हिर्होमेन संबध्यतेऽनुप्रहरणेन प्रतिपत्तिमात्रं भवति ।

**अभिस्तृणीहि परिधेहि वेदिं जामिं मा हिꣳसीरमुया शयाना । होतृषदना हरिताः सुवर्णा निष्का इमे यजमानस्य ब्रध्न इति होतृषदनैर्वेदिमभिस्तृणाति ।**

होतुरासनदर्भैर्वेदिं छादयति । प्राधान्यान्मन्त्रे प्रतिपादितानामुपयुक्तत्वाद्दर्भाणां वेदेश्च द्वितीयानिर्देशाच्चोभयोः परस्परेण संस्कारः ।

**पोषाय व इत्यग्रेणाऽऽहवनीयं प्रणीताः पर्याहृत्य यो वोऽयौक्षीत्स वो विमुञ्चत्वित्यन्तर्वेदि विमुञ्चति ।**

प्रणीताः । स्पष्टमन्यत् । सदसि सन्मे भूया इत्यादि याजमानं संस्थाजपान्तम् । ब्रह्मा च स्वभागं प्राश्याऽऽचम्य समिधमाधाय यथेतं गच्छति ।

---

* बर्हिरनुप्रहरतीति ध. संज्ञके पुस्तके नास्ति ।

---

1. क. ङ. °कारहुतिनु° ।

यं देवा मनुष्येषूपवेषमधारयन् । ये अस्मदपचेतसस्तानस्म-भ्यमिहा कुरु । उपवेषोप विड्ढि नः प्रजां पुष्टिमथो धनम् । द्विपदो नश्चतुष्पदो ध्रुवानन्पगान्कुर्वित्युपवेषमादाय ।

द्वाभ्यामादानम् ।

योपवेषे शुक्साऽमुमृच्छतु यं द्विष्म इत्युत्करे निखनेन्निरस्येद्वा ।

खात्वा स्थापयेत्त्यजेद्वा ।

निरमुं नुद ओकसः सपत्नो यः पृतन्यति । निर्बाध्येन हविषेन्द्र एणं पराशरीत् । इहि तिस्रः परावत इहि पञ्चजनाꣳ अति । इहि तिस्रोऽतिरोचना यावत्सूर्यो असद्दिवि । परमां त्वा परावतमिन्द्रो नयतु वृत्रहा । यतो न पुनरायासि शश्वतीभ्यः समाभ्यः । हतोऽसा-ववधिष्मामुमिति यं द्वेष्टि तस्य वधं मनसा ध्यायत्यन-सृष्टः परापत शरो ब्रह्मसꣳशित इति वाऽप उपस्पृश्य ।

नित्य एव कल्पोऽभिचरन्नित्यनभिधानात् । असौ पाप्मेति नाम प्रथमं द्वेष्यस्य वा । यद्यस्ति तथाऽमुमत्र द्वितीयान्तं पाप्मनो द्वेष्यस्य वा मन्त्रान्ते ध्यायेत् । केचि-द्ध्यानमाभिचारे विधेयमापस्तम्बे दर्शनादित्याचक्षते ।

कस्त्वा युनक्ति स त्वा विमुञ्चत्विति यज्ञं विमुञ्चति ।

तस्य व्याख्यानमेवाऽऽह—

सर्वमनुवीक्षते ।

सर्वं विहाररूपं यज्ञमनुवीक्षते । अयमेव विमोक इत्यर्थः ।

यानि घर्मे कपालानीति कपालानि ।

विमुञ्चतामिति मन्त्रान्तः । पूर्वपरे च विमोकः कपालानाम् ।

इति संतिष्ठेते दर्शपूर्णमासौ ।

सꣳस्थितायां पौर्णमास्याम् ॥ १९ ॥

पौर्णमासीयागे ब्राह्मणतर्पणान्ते सति ।

वैमृधस्य तन्त्रं प्रक्रमयति ।

पौर्णमासीसमुदायस्याङ्गं वैमृधो न तु प्रत्येकाङ्गता तेन विकृतौ समुदायधर्मानति-देशान्न विकृत्यर्थता वैमृधस्येति भावः । न्यायविद्भिः प्रपञ्चितमेवं वैमृधेष्टेः कर्मण इन्द्रो वैमृधो देवता यस्य कर्मणो वैमृधो देवता । साऽस्य देवतेति तद्धितान्तत्वान्नाम-

धेयमभेदेन वा देवताहविषोर्विशिष्टदेवतोकर्मकेषु (?) गुणेनैव व्यपदेशो न विशिष्टे तद्धितानुत्पत्तेर्विशिष्टात्प्रत्येकं विभक्तौ त्विन्द्रो वैमृध इति देवताद्वयेन कर्मद्वयमापद्येत कर्मधारयात्प्रत्ययोत्पत्तिर्न भवति । विशिष्टदेवतासु विशेष्यं पूर्वं निर्दिश्यते विशेषण मनन्तरं तेन क्रमेण समासे त्वसाधुता । विशेषणं पूर्वमिति पाणिनिस्मृतेः । विशेषणस्य पूर्वभावित्वे वैमृधेन्द्र इति प्रातिपदिकं देवतान्तरवाचकं स्याद्देवताभिधाने क्रमस्य विवक्षितत्वाच्छब्देन देवतासमवायात् । तदुक्तं वार्तिकाचार्यैः—

'शब्देन देवतायागे समवैति न रूपतः' इति ।

अत एवाग्नीन्द्राविन्द्राग्नी वेति देवताभेदेन विकृतौ विकल्पयन्ति । तस्मान्न समास विशिष्टदेवताप्रातिपदिकयोर्गुणेनैव व्यवहारो वैश्वानरमित्यादौ नापि तद्धितेन हविः संबन्धो विष्णवे शिपिविष्टायाग्नये वैश्वानरायेन्द्राय वैमृधायेत्यादि दृश्यते । प्रकृते तु वैमृधः पूर्णमासेऽनुनिर्वाप्यो भवति । तेन पूर्णमासः सेन्द्र इति नायमुत्पत्तिविधि किंतु शास्त्रान्तरप्राप्तस्यानुवादः । अर्थवादेन सेन्द्रत्वसंपादनाय विधिं दर्शयिष्यति प्रकृतेऽनुवादमात्रेण प्राप्तेन गुणनाम्ना व्यवहरति सूत्रकृत् । तत्र साङ्गं कर्म प्रक्रम यति स्वार्थे णिच् । प्रपूर्वकोऽकर्मको वा प्रादुर्भावार्थः । तस्माद्धेतुमति णिच् । प्रादुर्भा वयतीत्यर्थः ।

तस्यैन्द्राग्नेन कल्पो व्याख्यातः ।

कल्पो विधानमनुष्ठानम् । व्याख्यातो दर्शितः । कथं, तत्राऽऽऐन्द्राग्नेन । नोपदेशे नापि त्वतिदेशेन । ऐन्द्राग्नेन दार्शिकेन कर्मणा समानानुष्ठान इत्यर्थः । वक्ष्यत्यग्रे प्रकृति विकृतिभावं तत्र प्रतिदैवतैकदेश इत्यैन्द्राग्नविकारो न त्वाग्नेयविकार इति भावः ।

पञ्चदश सामिधेन्यः सप्तदश वा ।

विकृतौ विकल्पे पूर्वपक्षयित्वोक्तमविकल्पो वेति वक्ष्यमाणमत्र मा भूदिति तदर्थमत्र वचनम् ।

निर्वपणकाल इन्द्राय वैमृधाय प्रभूतान्व्रीहीन्निर्वपति ।

अन्वाधानादि वेदं वेदिपरिस्तरणं कर्मणे यज्ञस्य सदने पात्राणि प्रयुज्याग्नि कृत्वा यदा निर्वापकालः प्रकृत्यनुष्ठाने यत्र प्राप्तस्तस्मिन्नित्यर्थः । देवस्य त्वेत्यादिने न्द्राय वैमृधाय जुष्टं निर्वपामीति निर्वपति प्रभूतान्बहून्परिपूर्णमुष्टींस्तथाऽन्वाधाने प्रभूतत्वं संपादनीयम् ।

---

१ क. ग. च. छ. ट. ठ. °शिष्टा दे° । २ क. ग. च. छ. ट. ठ. ण. °ता यस्य क° । ३ क. ग. च. छ. ट. ठ. ण. °तास्तु वि° । ४ ग. च. छ. ठ. ण. °वतां भे° । ५ क. ग. च. छ. ट. ठ. °दर्थं यत्र° ।

दक्षिणाकाले यथाशक्ति दक्षिणां ददाति ।

नान्वाहार्यः । सुवर्णं गुञ्जादिमानेन । न पार्वणहोमः ।

तत्र याथाकामी प्रक्रमे ।

विकल्पेनार्थं न तु तदकरणे वैगुण्यम् । पौर्णमासयागस्याधिकगुणतैव परमनुष्ठानात् । तत्रोपक्रान्तस्य न त्याग इति प्रथमारम्भे यथा कामना भवति गुणाधिक्याय मया कार्य इति चेत्तदा यावद्दर्शपूर्णमासानुष्ठानं तावत्कर्तव्य एव । कुतः, न ह्येकस्यां शाखायां विकल्पः श्रूयतेऽस्मच्छाखायां तु नित्य एव तदनुसारेणोपक्रान्तेन त्यागः । आरब्ध- बाधात् । यदि शाखान्तरे तु निषेधस्तदनुसारेण न क्रियते तदा चानारब्ध उत्तरमारम्भो न कार्यः । अङ्गीकृतशास्त्रप्रामाण्यत्यागप्रसङ्गात् । तस्मात्प्रथमत एवैकं शास्त्रं प्रमा- णत्वेन स्वीकृतं तस्याप्यप्रामाण्यापादनं न कार्यमिति भावः ।

प्रक्रमात्तु नियम्यते[1] ।

उक्ताभिप्रायेण नियमः ।

एवं दर्शपूर्णमासौ साङ्गौ व्याख्याय गुणभेदनिबन्धनप्रयोगभेदान्दर्शपूर्णमाससंस्था- विशेषान्व्याख्यातुं प्रतिजानीते—

दर्शपूर्णमासयोः काम्यान्कल्पान्व्याख्यास्यामः ।

कर्मान्तरत्वशङ्कानिरासार्थं प्रतिज्ञा ।

अनेन दर्शपूर्णमासाभ्यामृद्धिकामो यजेत ।

अनेन वक्ष्यमाणेन गुणविकारेणोपलक्षिताभ्यां दर्शपूर्णमासाभ्यामृद्धिः संपत्तत्कामः । दर्शपूर्णमासशब्दसामानाधिकरण्येन नेयं विकृतिरपि तु गुणविकृतौ दर्शपूर्णमासावेव शब्दान्तरादिभिः कर्मभेदाभावादिति भावः ।

प्रयोगमाह—

द्वे पौर्णमास्यौ यजेत द्वे अमावास्ये ।

यजेतेत्युभयत्र । प्राप्तयोरनुवादेनाभ्यासो विधीयते । दाक्षायणयज्ञे स्पष्टमुक्तं दिर्युर्यजेत वेदिमेव तत्करोति यद्वत्सानपाकरोति सदोहविर्धाने एव संमिनोति यद्य- त इति तद्वदत्रापि द्वे अभ्यस्ते एकः पञ्चदश्यामुपक्रान्तो यागो यथाप्रकृति प्रति- पदि समापनीयः पुनः प्रतिपदि प्रारब्धो द्वितीयायां समापनीय आगन्तुकस्यान्ते निवे- शात् । ततः परं नित्यावेव दर्शपूर्णमासौ कार्यौ । काम्यस्य गुणस्याभ्यासलक्षणस्यानु- क्तत्वात् । तत्रायं प्रयोगः—अभ्यस्ताभ्यां दर्शपूर्णमासाभ्यामृद्धिकामो यक्ष्य इति

---

१ घ. ङ. ज. झ. ञ. ढ. नियम्येत । २ क. ग. च. छ. ट. ठ. ण. °दे चाभ्या° ।

संकल्पः प्रथमः । सद्यस्कालपौर्णमासीवदनुष्ठाय ब्राह्मणभोजनान्ते पुनरन्वाधानादि प्रतिपदि द्वितीयायां यागसमाप्तिः । अस्ति चेद्वैमृधस्तमपि कुर्यात् । साम्याससैवाङ्गं सकृदेव तस्य पौर्णमासशब्दवाच्यत्वाभावात् । असंनयतोऽमावास्यायामपि तथैव संनयतश्च । इमामूर्जं पञ्चदशीमित्याद्यविकृतं सर्वं पार्वणहोमौ च ।

अत्र प्रयोगान्तरं दर्शयति—

**यः कामयेतर्ध्नुयामित्येकेषां पौर्णमासीमेव यजेत ।**

शाखान्तरे वाक्यं यः कामयेतर्ध्नुयामिति स पौर्णमासीमेव यजेतेत्यर्थः । तदुक्तमाप- स्तम्बेन—यः कामयेतर्ध्नुयामित्युक्त्वा हैकामेव यजेतेति । पौर्णमासीमभ्यस्तां प्रक्रान्ता- मेव, अमावास्यां तु नित्यवदेव कुर्यादित्यर्थः ।

**भ्रातृव्यवानामावास्यां द्व्यवरार्ध्यं त्र्यवरार्ध्यं वा यजेत संक्रामे संक्रामे वज्रं भ्रातृव्याय प्रहरति ।**

ब्राह्मणानुकरणमेतद्वाक्यं सार्थवादं पठितं कामादिपदाभावेन कथं फलमत्रावगन्त- व्यमितिशङ्कानिराकरणार्थं, कामपदाभावेऽपि अप्राप्ते प्रधाने फलमङ्गी क्रियतेऽर्थवादेन यस्य यजमानस्य वैरिणः प्रतिफलाः सन्ति तेनायं यागः कार्य इत्युक्तेर्वैरिणामपनयो भवतीति गम्यते । कथमित्यपेक्षायां भ्रातृव्याय संक्रामे [संक्रामेऽ] मावास्याया अति- क्रमेऽतिक्रमे तदेव वज्ररूपं प्रहृतं भवतीत्यर्थः । तस्मादमावास्यां न कुर्यात् । अत्रापि पौर्णमासी साम्यासैव । भ्रातृव्यं हन्तुकामः ससंक्रामया साम्यासया पौर्ण- मास्या यक्ष्य इति संकल्पः । द्व्यवरार्ध्यं द्वे अवरे यस्मिन्नर्ध्ये स्थाने यस्यामिति क्रिया- विशेषणम् । अवरशब्दो न्यूनवाची । अर्ध्यशब्दः स्थानवाची । ससंक्रामे द्वे अभ्यस्ते न्यूने यस्मिन्स्थाने द्व्यधिकं कार्यं न न्यूनमित्यर्थः । एवं त्र्यधिकं न तु त्रिभ्यो न्यून- मित्यपि ज्ञेयम् ।

**अग्नीषोमीयाणि प्रधानानि स्युर्भ्रातृ- व्यवतोऽभिचरतस्तितीरिषतो वा ।**

पर्वद्वयेऽपि यानि यानि प्रधानानि पुरोडाशाज्यसांनाय्यरूपाणि तानि यानि यावन्ति यस्य यत्र पर्वणि तानि तावन्ति तस्य तस्मिन्पर्वणि सर्वाण्यग्नीषोमदेवता- कान्येव भवन्तीत्यर्थः । अमावास्यायां पौर्णमास्यां चेत्युक्तमापस्तम्बेन । अग्निदेवताकं गुणं बाधित्वाऽग्नीषोमाभ्यां जुष्टमभिघारयामीत्यादयोऽन्नादो भूयासं विरुज्य प्राशित्रं चतुर्धाकरणमेव ज्ञेयम् । अग्नीषोमयोरहं देवयज्ययेन्द्रियाव्यन्नाद इत्याद्यमावास्यायां ज्ञेयम् । कपालोपधानं प्राकृतमेव । भ्रातृव्यवत इति पूर्ववत् । अभिचरतः परं हन्तु-

१ ढ. °त द्वे अमावास्ये सं° ।

कामः । तितीरिषत इत्यत्रेट्छान्दसः । तर्तुमिच्छति विपदं व्याध्यादिकां तस्येत्यर्थः । अभिचारशब्दसामर्थ्यादेव परमरणकामना सिध्यति । तितीरिषत इत्यत्रेच्छार्थेन सन्प्रत्ययेनैव कामना ।

**साकंप्रस्थायीयेन पशुकामो यजेत ।**

साकंप्रस्थायीयलक्षणगुणवता दर्शसारव्येन कर्मणा यजेत । अत्राप्रसिद्ध्या गुणस्येदं कर्मनामधेयमित्यथैष ज्योतिरथैष विश्वज्योतिरितिवन्नामभेदात्कर्मभेदमाशङ्क्य परिहृतं गुणप्रसिद्धिं दर्शयद्भिर्जैमिनीयैः । साकं कुम्भीभिः प्रस्थानेन यागो विधीयते[1]ऽत्रातो नामधेयान्तरात्कर्मान्तरमिति ।

प्रयोगमाह—

**बहवः सायं दोहा भवन्ति बहवः प्रातर्दोहास्तैरनन्तरं दोहैर्यजते ।**

अमावास्याविकारत्वमेव । तत्र नित्यं सांनाय्यदर्शनात्सामान्येन न पौर्णमासीविकारत्वे दाक्षायणयज्ञस्य विकृतसांनाय्यगुणस्य न विकारः, तर्हि (नहि) भिक्षुर्भिक्षुं याचत इति न्यायात्, इत्यभिप्रायेणोक्तम् । स्पष्टमाचष्टाऽऽपस्तम्बः—अमावास्या विक्रियत इति । बहुत्वं त्रित्वे पर्यवस्यति तथाऽपि तथेष्टं चेत्त्रयो दोहा भवन्तीत्येव ब्रूयात्तस्माच्चतुःप्रभृत्यपि दोहा अनुज्ञायन्ते यावता होमः कर्तुं शक्यते । अत्रैकैकस्य दोहस्यार्थे षट्षड्वत्सानपाकृत्यैकयैव शाखया शाखापवित्रमेकमेव । सकृन्निरुह्य विभज्य तेषु कुम्भीरधिश्रयति एवं यानि विभवन्त्यङ्गानि तानि सकृत् । अविभवन्त्यावर्तन्ते । संक्षालननिनयनान्तं दोहमेकैकस्यां करोति । ततः परमङ्गान्युद्वासनान्तानि पदार्थानुसमयेनैवं सायं दोहान्संपाद्य तैर्दोहैर्दोहकर्मसमाप्त्यनन्तरं सायं यजेत । अत्र प्रधानस्यापकर्षे पूर्वाङ्गाण्यपकृष्यन्ते यानि तन्त्रेण क्रियन्त आज्यभागान्तान्याराडुपकाराणि यानि च संनिपत्योपकाराण्यपि तन्त्रेणानुष्ठेयानि वेदिकरणस्तरणादीनि यानि केवलं प्रातर्दोहार्थानि तेषां नापकर्षस्तेषां क्रमभङ्गमात्रं सोढ्वा प्रधानसंनिधाने वाऽनुष्ठानम् । तथा चायं प्रयोगः—अग्निहोत्रोच्छेषणाभ्यातञ्चनान्ते परिस्तरणान्ते कर्मणे वां यज्ञस्य सदने पात्राणि प्रयुनक्त्यौपभ्रप्रातर्दोहपात्रान्वाहार्यस्थालीवर्जं जुह्वासादनानन्तरं महत औदुम्बरान्यावन्तो दोहास्तावतश्चमसान्प्रयुनक्ति तेषां जुहूकल्पः संमार्गे वाजिनं त्वेति विकृतत्वात् । ब्रह्मवरणादि प्रणीताप्रणयनं प्रोक्षणीः संस्कृत्योत्तानानि पात्राणि प्रसूतः प्रोक्षति यजमानवाग्विसर्गः । उत्तरपरिग्राहादीनि कर्माण्याज्यस्थालीमासाद्येत्येतदन्ते दक्षिणश्रोण्यां कुम्भीरासाद्याऽऽज्यभागान्ते, आवाहने तु अग्निमग्नआवह, सोममावह, इन्द्रं महेन्द्रं वाऽऽवहाग्निमावहेन्द्रं महेन्द्रं वाऽऽवहे-

---

१ ख. 'तेऽतो । २ क. °हादि यज° ।

त्यादिकमविकृतम् । इन्द्रस्य मध्ये व्यवधानं देवतान्तरेणेति पुनराबाहनमिति न्यायः । आज्यभागान्ते कुम्भीभिः सह दक्षिणाऽतिक्रामन्निन्द्राय महेन्द्राय वाऽनुब्रूहीति संप्रेष्यति । चमसानग्रेणाऽऽहवनीयं परिकर्मिण आनयन्ति । यावत्यः कुम्भ्यः स्युस्तावन्तो ब्राह्मणा उपवीतिनश्चमसानादायैकमध्वर्युरादाय तेषु कुम्भीरानीयाऽऽश्रावणादि चमसैर्जुह्वति । तत्राध्वर्योराहुतिमन्वन्ये जुह्वति सर्वहुतं, स्विष्टकृद्भक्षाश्च न विद्यन्त इत्यापस्तम्बोक्तेश्च । ततो विरम्य श्वोभूते प्रातर्दोहपात्रैः सहौषधपात्राणि प्रयुज्य निर्वापादि प्रोक्ष्य प्रातर्दोहकाले पूर्ववद्दोहान्दुग्ध्वाऽप्यलेपं बर्हिषि निनीयाऽऽग्नेयेन प्रचर्य पूर्ववद्दोहैः प्रचरन्ति । तत आग्नेयात्स्विष्टकृदिडाद्यविकृतं ब्राह्मणभोजनान्तम् ।

प्रकारान्तरेणास्यैव प्रयोगमाह—

अपि वा यथाऽमावास्यायाः हविर्दुहन्त्येवं दुग्ध्वाऽऽतंच्य निदध्याद्यत्प्रातः स्यात्तच्छृतं कुर्यात्पात्रसंसादनकाले यथार्थं पात्राणि प्रयुनक्ति जुहुं स्रौदुम्बरान्महतश्चमसांस्तेषां जुह्वा कल्पो व्याख्यातः ।

अत्र पक्षे नापकर्षो यागस्य सायं दोहान्बहून्दुग्ध्वा तत्पृथक्पृथग्दधि कृत्वा प्रातर्दोहांश्चापि तथैव दोहकाले सायंप्रातर्दोहार्थांश्चमसान्पृथक्पृथक्प्रयुनक्ति जुहूं प्रकृतां प्रयुज्य । गतार्थमन्यत् ।

प्रचर्याऽऽग्नेयेन पुरोडाशेनाऽऽग्नीध्रे स्रुचौ निधाय सह कुम्भीभिरतिक्राममाहेन्द्रायानुब्रूह्याश्रावयेन्द्रं यजेति यावत्यः कुम्भ्यः स्युस्तावन्तो ब्राह्मणा दक्षिणत उपवीतिन उपोत्तिष्ठेयुर्दारुपात्राण्यादाय तेषु कुम्भीरानीय सर्वे युगपज्जुहत्यध्वर्योराहुतिमनुजुह्वति ।

गतार्थमेतत् । तत आग्नेयस्य स्विष्टकृदादिकमविकृतं ब्राह्मणभोजनान्तम् । ब्राह्मणेभ्यो यथाशक्ति दक्षिणा देया । संतिष्ठते साकंप्रस्थायीयः ।

अथ दाक्षायणयज्ञः ।

दाक्षायणयज्ञेन सुवर्गकामो यजेत ।

नेयं संज्ञाऽपि तु गुणविधिरिति । तदुक्तं पूर्वपक्षसिद्धान्ताभ्यां कात्यायनेन—नामफलगुणयोगात्कर्मोत्तरं गुणविधानं संनिधिसंपद्वचनाभ्यामिति । संनिधिः प्रकरणम् । अनेन कृतेन दर्शपूर्णमासयागः कृत इति संपद्वचनं पूर्वेद्युर्यजत इत्यादिना । तस्मादयं फलार्थो गुणविधिस्तदिदं गुणविकारानित्येव स्पष्टं सूत्रितम् ।

---

१ ग. घ. ज. भ. ढ. °तञ्च्य नि° ।

त्वग्निमप्रयोगप्रदर्शने स्पष्ट इति भावः । कथं, दक्षः कुशल उत्साहीति यावत्, ये प्रयोगास्तेनानुष्ठातुं योग्यास्ते दाक्षास्तेषां प्रयोगाणामयनमावृत्तिः प्रतिमासं स यज्ञश्चेति विग्रहः । एवमेव जैमिनीयैरपि साधितम् । केचिदापस्तम्बीयाः ःतरत्वमाशंसन्ते तन्न्यायेन सूत्रेण च विरुद्धम् ।

प्रयोगमाह—

द्वे पौर्णमास्यौ भवतो द्वे अमावास्ये ।

एवं द्वयोः प्रयोगयोः स्थाने चत्वारः प्रयोगा भवन्तीति तेषां प्रतिमासमावृत्तिर्न ाम्यत्वात्सकृदनुष्ठानमित्यर्थः । द्वे पौर्णमास्याख्यौ प्रयोगौ पूर्णिमायां प्रतिपदि च कृति यजेत ततोऽस्या अस्याभ्यासगुणको यागः प्रतिपद्यन्वाधानादि द्विती- यजेतेत्यर्थः । तथैवामावास्यायामपि भवत आवृत्ते भवत इति पूर्वेद्युर्यजत ास्यं फलितोऽर्थ इत्यर्थः ।

विशेषमाह—

आग्नेयोऽष्टाकपालोऽग्नीषोमीय एकादशकपालः पूर्वस्यां पौर्णमास्यामाग्नेयोऽष्टाकपाल ऐन्द्रं दध्युत्तरस्यामाग्नेयोऽ- ष्टाकपाल ऐन्द्राग्न एकादशकपालः पूर्वस्याममावास्या- यामाग्नेयोऽष्टाकपालो मैत्रावरुण्यामिक्षोत्तरस्याम् ।

अत्र पूर्वेद्युर्यथाप्रकृति परेद्युरग्नीषोमीयस्थान ऐन्द्रं दधीति तथैवामावास्यायामपि वक्तव्ये गुरुनिर्देशेनैता एव नोपांशुयाजोऽसोमयाजिनोऽप्यग्नीषोमीयोऽसंनयतोऽपि शृतं संनयतोऽप्यैन्द्राग्न इत्येवमर्थमिदं वचनम् । अन्येऽग्नीषोमीयस्य ग्रहणं निय- मार्थमेव न तूपांशुयाजनिवृत्त्यर्थमुभयनियमे गौरवादिति भवत्युपांशुयाज इत्याहुः । अत्र प्रयोगः—दाक्षायणयज्ञेन सुवर्गकामो यक्ष्ये पञ्चदश वर्षाणीति संकल्प्य पौर्ण- मास्यां प्रतिपदि च तथाऽमावास्यायां प्रतिपदि द्वितीयायां चाधिकामप्रयोगवदेतैर्ह- विर्भिः प्रयोगो ज्ञेयः । नात्र प्रधानमात्रस्यापकर्षः साकंप्रस्थायीयवर्तिकत्वन्वाधानादि- ब्राह्मणभोजनान्तस्य प्रयोगस्याऽऽवृत्तिरिति प्रयोगेऽभ्यस्ते संस्थिते वैमृधो न तूभयेद्युः । मैत्रावरुण्यामिक्षा यद्यपि दर्शपूर्णमासगता तथाऽपि वैश्वदेव्यामिक्षाया विकृतिः । अत्रास्मच्छाखायां वाजिनयागान्ताङ्गप्रचारानभिधानात्सूत्रे चातो गुणविकृतत्वेन प्रकृतिरपि विकृतिरियमस्या अतिदेशस्तु साङ्गविहितवैश्वदेवामिक्षात एव । अत्र वाजसनेयिनां मैत्रावरुण्यामिक्षायामेव तप्ते प्रातर्दोह इत्याद्यामिक्षोत्पत्तिविधिरस्ति । स च सर्वशाखाप्रत्ययन्यायेनात्रैव सूत्रकृता व्याख्येयस्तथाऽप्यामिक्षाव्युद्धरणाद्य-

१ ख. °देव्याऽऽमिक्षयाऽत ।

क्तानि बहूनि वैश्वदेव्यामिक्षायामेवं तद्ब्राह्मणानुसारेण व्याख्यास्यन्ते । अत उत्पत्तिविधिरपि तत्रैव व्याख्यास्यते प्रकृतिगतोऽपि लाघवाय तस्मात्तदतिदेशमेव सर्वामिक्षासु वदिष्यति । अतोऽत्रापि प्राप्तौ नवप्रयाजादिप्राप्तिमग्रे निवारयिष्यामः ।

अत्र विशेषमाह—

तस्यैतद्व्रतं नानृतं वदेन्न माꣳसमश्नीयान्न स्त्रियमुपेयान्नास्य पल्पूलनेन वासः पल्पूलयेयुर्नाञ्जीत नाभ्यञ्जीतर्तौ जायामुपेयात् ।

कर्माङ्गतयाऽनृतवदनमांसभोजनस्त्रीमैथुनानि प्रतिषिध्यन्तेऽन्तरालेऽपि अन्यथा कर्मवैगुण्यं स्यादित्यर्थः । त्रितयं स्पष्टम् । पल्पूलनं वस्त्रप्रक्षालनसाधनं पाषाणादि यत्प्र*सिद्धं तेन नास्य दाक्षायणयज्ञयाजिनो वासो वस्त्रं +न पल्पूलयेयुः शिष्यभृत्यादयः [किंतु] हस्तादिभिरेव । तथा रजकेनापि प्रक्षालनं न कार्यम् । प्रकारान्तरेणैव वस्त्रधावनं कार्यम् । अत्र विशेषानभिधानात्सर्वदैव व्रतानि स्युः । अञ्जनाभ्यञ्जने प्रसिद्धे । तत्र गृहमेधीये विधानाद्व्रतः । न स्त्रियमुपेयादित्युक्तस्य संकोचमाह विधिना—ऋतौ जायामुपेयाद्गच्छेत् । तथा गमने वैधे तु न वैगुण्यं क्रतोः । अत्रोक्तं भरद्वाजेन—अन्तरालव्रतानि यथा चातुर्मास्येष्विति ।

अन्येषां गुणविकाराणां यदा कामस्तदा कृत्वाऽन्यदा त्वविकृतौ यागौ यावज्जीवादिपक्षेषु न तथाऽयं कुतो दर्शपूर्णमासप्रकृतप्रयोगेणाऽऽरम्भ एव विकल्पादित्याह—

सोऽयं दर्शपूर्णमासयोरादितो विकल्पोऽनेन दर्शपूर्णमासाभ्यां वा यजेत ।

सोऽयं दर्शपूर्णमासाभ्यां नित्यप्रयोगाभ्यां काम्यप्रयोगाभ्यां फलितोऽस्य दाक्षायणयज्ञस्य विकल्प आदित आरम्भ एवाऽऽधानानन्तरकाल एव ज्ञेयो न त्विच्छया तयोरारब्धयोरस्य प्रयोगस्तस्मिन्वाऽऽरब्धे तयोः प्रयोगः ।

अथ कथमेवमिति चेत्तत्राऽऽह—

तेन पञ्चदश वर्षाणीष्ट्वोत्सृजति दर्शपूर्णमासौ ॥ १६ ॥

इति हिरण्यकेशिसूत्रस्य द्वितीयप्रश्ने षष्ठः पटलः ॥ ६ ॥

---

यतोऽयं पाञ्चदशवार्षिकः प्रयोगो नियम्यते गतायामपि कामनायां सति जीवने निमित्ते त्यक्तुमशक्यत्वात्स एव नित्यतां गतः काम्यदर्शपूर्णमासवत् । अत्र यजेत

---

* अत्र प्रतिषिद्धमिति क. ग. च. छ. ट. ठ. ण. पुस्तकेषु विद्यते तत्प्रामादिकमिति प्रतिभाति । + नेतिपदमधिकम् ।

---

१ क. 'भेत' ।

वेत्युक्तमापस्तम्बेन । यावज्जीवमित्यर्थः । उभयथाऽपि पुनरारम्भो निषिद्धः प्राकृतयोर्दर्शपूर्णमासयोरिति सिद्धम् । उत्सर्गोऽनयोरपि । अथ वा दाक्षायणयज्ञलक्षणौ दर्शपूर्णमासावुत्सृजेदित्यर्थः । अत्रापि न पुनः प्राकृतयोरारम्भ इत्यपि सिध्यत्यर्थादिदमग्रिमे प्रश्ने स्फुटयिष्यते ।

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैजयन्त्यां द्वितीयप्रश्ने षष्ठः पटलः ॥ ६ ॥

---

अथ द्वितीयप्रश्ने सप्तमः पटलः ।

---

समाप्तौ दर्शपूर्णमासौ । एवं सविकारौ सानुनिर्वाप्यौ सविकल्पौ दर्शपूर्णमासाख्यौ यागौ व्याख्याय ब्रह्मत्वं व्याख्येयेऽपि दर्शेऽध्वर्युणाऽनुष्ठेयत्वसाम्येन तादृशस्यापि न दर्शाङ्गतेति वक्तुं पिण्डपितृयज्ञाख्यं दर्विहोमपिण्डदानसमुदायाख्यं(यरूपं) कर्म 'तिस्र आहुतीर्जुहोति त्रिर्निदधाति षट् संपद्यन्ते' इति श्रुतं व्याचष्टे—

अमावास्यायामपराह्णे पिण्डपितृयज्ञेन यजते ।

संज्ञान्तरात्स्वतन्त्रकालविधानात्संस्कारेषु पृथगभिधानाच्च निष्क्रीय प्रतनुत इत्यादिना नित्यो न्याय्यो नतु काम्यः कर्मान्तरम् । यद्यपि यजतिः श्रूयते तथाऽपि न यागो निर्ज्ञातया संज्ञया यजेरन्यार्थत्वं पिण्डैः पिण्डदानेन सहितः पितृभ्यो देवेभ्यो यज्ञो होमः स पिण्डपितृयज्ञः । पिण्डा मानुषेभ्यः पितृभ्यो दीयन्त इति प्रसिद्धम् । तदिदं पिण्डदानं पिण्डशब्देनोपलक्षितं, तेन सहभावो देवरूपपितृहोमस्योक्तस्तेन पिण्डदानहोमयोरुभयोरपि प्राधान्यमुक्तं, तेनास्य कर्मणो दैवत्वं पित्र्यत्वं चास्ति । ततस्तु जीवत्पितुः[1] पिण्डदानलोपेऽपि होमेनैव तत्सिद्धिरसोमयाजिन इवाऽऽग्नेयोपांशुयागाभ्यां पौर्णमाससिद्धिः । अत्र दानहोमात्मके कर्मणि न ददातेः प्रयोगो नापि जुहोतेः । अत एव सूत्रान्तरे श्रुत्यन्तरे च पिण्डपितृयज्ञेन चरन्तीति सामान्यप्रयोगः । अतः सूत्रकृता यज्ञशब्देन सहकृतशाखान्तरीयो यजतिरेव प्रयुक्तः साङ्गयज्ञेविधिवदत्रापि साङ्गकर्मविधानाज्जुहोतिददात्योरनुगतप्रदानमात्रसामान्यवाची । तत्रोभयोः प्राधान्येऽङ्गानि किं पित्र्याणि प्राचीनावीतित्वलक्षणानि तद्विपरीतानि दैवानि वेति संदेहे त्वनियमप्राप्तौ प्रयोगेण न्यायमाहऽऽचार्यस्तस्याभिप्रायो वर्ण्यते । तत्र पितृतन्त्रस्य मुखतः प्रवृत्तेस्तस्य बलवत्त्वम् । कथम्, अपां मेध्यमिति बर्हिराहरणं पित्रर्थमेव । परिस्तरणानि तु पृथगेव परिभोजनीयैर्यदा न पिण्डदानं

---

१ ख. ग. च. छ. ठ. ण. °वपितुः ।

[तदा]न बर्हिराहरणं प्रयोजनाभावात् । परिस्तरणार्थं परिभोजनीयाहरणं तु कर्तव्यमेव । तस्माद्धोमात्प्राचीनं सर्वमुभयार्थमपि पित्र्यधर्मेणैव कार्यम् । परिस्तरणान्यप्युभयार्थान्येव देवानामुभयेषां निवासार्थं संस्तवात् । तस्मात्प्राचीनावीती भूत्वाऽध्वर्युः कर्माणि सर्वाण्यपि कुर्यात्समानकर्तृकत्वादङ्गप्रधानयोः प्रथमप्रधानेऽध्वर्युं होमे कर्तारं वक्ष्यत्यतोऽध्वर्युरेव तत्राङ्गानां कर्ता । दक्षिणापवर्गाण्यप्रदक्षिणं चेत्यादि दर्शितं ज्ञेयम् । अत एवोक्तं दक्षिणाप्रागग्रैरिति होमार्थमुपविष्टोऽध्वर्युरुपवीतीत्याद्याह । अपराह्णशब्दस्य कालवाचित्वात्तत्समभिव्याहृतस्तदपेक्षितोऽमावास्याशब्दोऽपि कालपर एव तत्रैव मुख्यत्वाच्च । यजति चरतीत्यर्थः । आपस्तम्बेनाप्युक्तं चरन्तीति । अपराह्णोऽत्र नवधा विभक्तस्यर्[1]ह्नोऽष्टमो भागः सवितुः प्रसव इति निरूपितो यदा मासिके श्राद्धेऽधिकारी तदा द्वेधा विभागमाश्रित्यापराह्णो ग्राह्योऽन्यथा पिण्डपितृयज्ञानन्तरं क्रियमाणस्य काललोपः स्यात्[2] । अन्यस्य त्रेधा विभागः ।

अधिवृक्षसूर्ये वा ।

वृक्षानधि सूर्यो यत्र स तथा तत्र[3] यागः ।

अमावास्याशब्दस्य पञ्चदश्यां प्रतिपदि च प्रवृत्तेर्नियममाह—

यदहः पुरस्ताच्चन्द्रमसं न पश्यन्ति ।

प्रत्यक्षेण शास्त्रेण वाऽभ्रादिव्यवधाने तत्र संधिमतीत्यर्थः ।

यदि दृश्यते तदाऽऽह—

दृश्यमाने तूपोष्य श्वोभूते यजते ।

उषित्वा सत्यसति वा पर्वसंधौ परदिनेऽपराह्णेऽधिवृक्षसूर्ये वा यजते ।

प्राचीनावीति—

अपां मेध्यं यज्ञियꣳ सदेवꣳ शिवमस्तु मे ।
आच्छेत्ता वो मा रिषं जीवानि शरदः शतमिति
सकृदाच्छिन्नꣳ समूलं बर्हिराच्छिनत्ति ।

सकृत्प्रयत्नेन मूलैः सह । यत्समूलं तत्पितृणामिति श्रुतेः सकृदाच्छिन्नमिति स्तरणमन्त्रलिङ्गाच्च । उदकस्पर्शः ।

दक्षिणाप्रागग्रैर्दर्भैर्दक्षिणाग्निं परिस्तीर्य ।

दक्षिणा च प्राक्चाग्राणि येषां ते पुरस्तात्पश्चाच्च दक्षिणाग्रा दक्षिणोत्तरतस्तु प्रागग्रा इत्यर्थः । प्रागादिप्रदक्षिणं परिस्तीर्य ।

---

१ ग. घ. ठ. °तस्त्वपे° । २ ख. °स्याहः सप्तमो । ३ क. ट. °ह्नो देवस्य स° । ४ ख. °त् । अधि° । ५ क. ग. घ. छ. ट. ठ. ण. °त्र । अ° ।

उत्तरेणाग्निं दर्भान्सꣳस्तीर्य ।

परिस्तरणसंस्तरणयोः परिभोजनीया एव । संस्तरणे तु न दक्षिणाग्रता विधानाभावादित्यर्थः ।

एकैकशः पिण्डपितृयज्ञपात्राणि प्रयुनक्ति ।

पिण्डपितृयज्ञाधिकारे पुनः पिण्डपितृयज्ञपात्राणीति वचनं दार्शपौर्णमासिकेभ्योऽन्यत्वख्यापनार्थम् । पिण्डपितृयज्ञारम्भे पात्राणि तदर्थानि कार्याणि । वचनाहिताग्निस्तदा तु न वक्तव्यमेव सिद्धमेवान्यकरणम् । एकमेकमित्यर्थः । न सह सर्वाणि नापि द्वे द्वे एकमेकꣳ संभरेत्पितृदेवत्यानीति श्रुतेः ।

स्फ्यꣳ स्थालीं मेक्षणं शूर्पं
कृष्णाजिनमुलूखलं मुसलम् ।

प्रागपवर्गाण्युदगपवर्गाणि वा श्रौतत्वात् ।

अपरेणाग्निं व्रीहिमच्छकटमवस्थाप्यैकपवित्रान्तर्हिताꣳ
स्थालीं व्रीहिभिः पूरयित्वा निमृज्य पितृभ्यस्त्वा
जुष्टं निर्वपामीति सकृदेव शूर्पे निर्वपति ।

निमृज्याधिकानुपरि राशीभूतान्हस्तेन निःसार्य । स्पष्टमन्यत् । शकटाभावे स्फ्ये पात्र्यां वा ।

दक्षिणेन दक्षिणाग्निं दक्षिणापूर्वेण दक्षिणापरेण वा
प्रत्यगुदग्ग्रीवं[1] कृष्णाजिनमास्तीर्योलूखलमधिवर्त्य ।

दक्षिणेनाऽऽग्नेयेन नैर्ऋत्येन वेत्यर्थः । वायव्यग्रीवम् । स्पष्टं गतार्थं चान्यत् ।

[2] दक्षिणाप्राची पत्नी तिष्ठन्त्यवहन्ति ।

आग्नेयाभिमुखी ।

परापावमविवेकꣳ सकृत्फली करोति दक्षिणाग्नौ जीवतण्डुलमिव चरुꣳ
श्रपयित्वोत्पूतेन नवनीतेनानुत्पूतेनाऽऽज्येन[3] वाऽभिघार्योद्वास्य ।

परापावं णमुल् । पूञ्धातोः परापूय परापूय तुषाणां परापवनं निःसारणं कृत्वा कृत्वेत्यर्थः । अविवेकमयमपि णमुल् । अविविच्याविविच्येत्यर्थः । सतुषवितुषानविविच्य केवलं तुषमेव निर्गमय्य सकृदेकवारमेव फली करोति कणविमोकार्थम् । जीवास्तण्डुला अविशीर्णास्तण्डुला यस्मिंश्चरौ तादृशमनतिपाकमित्यर्थः । एकपवित्रेणोत्पूतेन नवनीतेन ।

---

१ क. ख. ग. च. छ. ट. ठ. 'भिवृत्य । द° । २ ग. च. ठ. °भ्रेव्यभि° । ३ घ. ङ. ज. झ. ञ. ड. °तेन वा सर्पिषाऽभि' ।

**अध्वर्युरुपवीती दक्षिणं जान्वाच्य मेक्षणेन स्थालीपाकस्योपहत्य ।**

अध्वर्युग्रहणं प्रधानानां भागे कर्तृत्वार्थं भागान्तरे यथा यजमानः स्वधर्मविशिष्टः कर्ता स्यादित्येवमर्थम् । कथं, पिण्डपितृयज्ञोऽयं कर्मणां समुदायस्तत्र त्रयो होमास्तिस्र आहुतीर्जुहोतीति तेषां जुहोतिना नोदितत्वाद्दर्विहोमत्वं, कतिपयानां दर्विहोमधर्माणां विशेषविधिना पिण्डपितृयज्ञप्रकरणस्थेन बाधेऽपि कर्तुरध्वर्योरबाधं स्मारयितुमुक्त- मध्वर्युरिति । यजुर्वेदेनाग्निहोत्रमित्युक्तं तदुपलक्षणं सर्वदर्विहोमानामिति पिण्डपितृ- यज्ञोऽपि दर्विहोमत्वेनाध्वर्युकर्तृक इत्यर्थम् । किं च नात्राध्वर्युरपूर्वो विधीयते किं तु दर्शेष्ट्यर्थं वृत एवाध्वर्युरित्युक्तं दक्षिणान्तरानुपदेशात्तत्कालान्तर्गतकर्मणोऽपि प्रसङ्गेन सिद्धिः । दक्षिणजानुपातो हि स्मार्ते विकल्पेन तन्नियमार्थमेव । होमस्य दैवत्वादु- पवीतीत्युक्तम् । अत एव दक्षिणं जान्वाच्य भूमिं प्रापय्येत्यर्थः । गमनार्थस्याञ्चेर्णि- जन्तस्याऽऽङ्पूर्वकस्य रूपमपि रूपम् । मेक्षणेनोपहत्येति वचनमवदानधर्मनिवृत्त्यर्थं, मेक्षणेन गृहीत्वा स्थालीपाकस्येति तदेकदेशमित्यर्थः । स्थालीपाकस्योभयार्थत्वान्नाव- शिष्टस्य शेषतेति भावः ।

**सोमाय पितृपीताय स्वधा नम इति प्रथमामाहुतिं जुहोति यमायाङ्गिरस्वते पितृपते स्वधा नम इति द्वितीयामग्नये कव्यवाहनाय स्विष्टकृते स्वधा नम इति ये मेक्षणे तण्डुलास्ताञ्जुहोति ॥ १७ ॥**

तृतीयामाहुतिमिति अर्थात्सिध्यति । अत्र दर्विहोमत्वेन स्वाहाकारप्राप्तावपि नमस्कारेण तदर्थाभिधानादुक्तार्थानामप्रयोग इति न्यायान्न स्वाहाकारः । तथाहि— स्वाहाकारवषट्कारौ दानार्थौ स्वाहाकारेण वषट्कारेण वा देवेभ्यो दीयत इति श्रुतेः । स्वधा नम इति वषट्करोतीति श्रुतेर्वषट्कारार्थता स्वधा नम इति शब्दस्यातो दानार्थेनानेन स्वाहाशब्दस्य बाधः । अत एव दर्विहोमेऽपि यज्ञशब्दो वषट्कार- प्रदानस्वधर्मत्वेनेति प्रथमामित्यादिसंख्या सोमाय पितृपीताय स्वधा नम इत्येका ब्राह्मणे विहिता द्वितीया न विहिताऽतोऽन्ययोः शाखान्तरीययोर्विकल्पो मा भूदिति तृतीयाऽपि स्वशाखाविहिताऽग्नये कव्यवाहनायेति केवला सा स्विष्टकृद्गुणकोक्ता शाखान्तरादिति विनिवेशप्रदर्शनार्थं ये मेक्षणे लग्नास्तण्डुलाः सिक्थलक्षणा द्वितीयाहु- तिहोमावशेषितास्तानेव तृतीयामाहुतिं जुहोतीत्यर्थः ।

**तूष्णीं मेक्षणमादधाति ।**

स्पष्टम् ।

**ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति । परापुरो निपुरो ये भरन्त्यग्निष्टानस्मात्प्रणु-**

नोक्तु लोकादिति दक्षिणाग्नेरेकोल्मुकं धूपायत्परा-
चीनꣳ हृत्वा दक्षिणेनैकस्फ्यादेशे निदधाति ।

यदानीतमवाङ्मुखं याऽग्रे चिकीर्षिता वेदिरेकस्फ्या तस्या देशेऽन्ते । उल्लिखितान्ते निदधातीत्यापस्तम्बः । दक्षिणाग्नेः सकाशाद्दक्षिणेन हृत्वेति संबन्धः । इदमदृष्टार्थमारादुपकारकं कर्म विधीयते संस्कारो वा वेदेः । तदपि पिण्डदानस्याङ्गं तदभावे न स्यात् । मेक्षणप्रहरणानन्तरं प्राचीनावीत्येवाध्वर्युः ।

अपहता असुरा रक्षांसि वेदिषद इत्यवहननदेशे दक्षिणां दक्षिणाप्राचीं वा स्फ्येनैकस्फ्यां वेदिमुल्लिख्य ।

दक्षिणेन दक्षिणाग्निमित्याद्युक्तेऽवहननप्रदेशे दक्षिणापवर्गामाग्नेय्यपवर्गां वा वेदिमेकस्फ्यानामिकामेकः स्फ्यः साधनं यस्या इति विग्रहः । एकरेखयोल्लिखितेत्यर्थः । सकृत्स्फ्येनोल्लिख्येत्युक्तमापस्तम्बेन ।

उदीरतामवर इत्यद्भिरवोक्षति ।

अवाचीनहस्तेन प्रोक्षणमवोक्षणम् । प्रोक्षणीसंस्कारनिवृत्त्यर्थमद्भिरित्युक्तम् ।

सकृदाच्छिन्नं बर्हिरूर्णा मृदु स्योनं पितृभ्यस्त्वा भराम्यहम् । अस्मिन्सीदन्तु मे पितरः सोम्याः पितामहाः प्रपितामहाश्चानुगैः सहेति सकृदाच्छिन्नेन बर्हिषैकस्फ्याꣳ स्तृणाति ।

स्पष्टम् ।

तस्याꣳ स्थालीपाकं निदधाति ।

अर्धं हुतमर्धमेकस्फ्यायां निदधाति सादयति ।

दक्षिणत आञ्जनमभ्यञ्जनं कशिपूपबर्हणमुदकुम्भं च प्रतिष्ठापयति ।

आञ्जनं कज्जलम् । अभ्यञ्जनं तैलम् । मस्तु पितृणामिति श्रुतेर्दधिमण्ड उपरितनस्नेहो वा । कशिपु मञ्चः । सतूलिक इति केचित् । उपबर्हणं शिरस्युपधानम् । उदकेन युक्तं पूर्णकुम्भम् । एतावताऽध्वर्युर्विरमति ।

यजमानः प्राचीनावीती सव्यं जान्वाच्य सकृदाच्छिन्नेऽवाचीनपाणिर्दक्षिणापवर्गाꣳस्त्रीनुदकाञ्जलीन्निनयति ।

सकृदाच्छिन्ने स्तीर्णे बर्हिषीत्यर्थः । अवाचीनौ तिर्यगावर्तितौ पाणी कृताञ्जली येन निनयनवेलायामञ्जलिना सेचनं पित्र्येण तीर्थेन कार्यमित्यर्थः । अथवाऽवाचीनो

१ घ. ङ. ज. झ. ञ. ढ. 'देशं नि° ।

दक्षिणः पाणिर्यस्येति निनयनवेलायामञ्जलिभूतस्य पाणेर्दक्षिणस्यावाचीनताऽपरञ्च कार्येति स एवार्थः। उदकेन पूर्णानञ्जलीन्निनयति रेचयति। स्पष्टमन्यत्।

तत्र विकल्पेन मन्त्रद्वयमाह—

मार्जयन्तां पितरः सोम्यासो मार्जयन्तां पिता-
महाः सोम्यासो मार्जयन्तां प्रपितामहाः सो-
म्यास इत्यसाववनेनिङ्क्ष्वासाववनेनिङ्क्ष्वेति वा।

अत्रैकेनेतिकरणेनैकमन्त्रता सकृन्मन्त्रो द्विस्तूष्णीमिति स्यात्। मध्ये विभागे कारणं नास्ति तथाऽपि विनियोगं प्रदर्श्य मन्त्रं प्रदर्शयत्याचार्यस्तज्ज्ञापयति त्रयोऽञ्जलयः पृथक्स्थानसंस्कारार्था इति स्यात्प्रत्येकं मन्त्रो मन्त्रलिङ्गाद्विभागेनैव तेष्विति निनयनप्रदेशान्पृथङ्निर्दिशति। ते च पित्रादित्रयस्य क्रमेणेति मन्त्रविभागेन त्रित्वं प्रत्येकं क्रियासद्भावाच्च। असावित्यस्य स्थाने पित्रादीनां क्रमेण नामानि लौकिकानि संबुद्ध्यन्तानि मध्यमपुरुषनिर्देशाद्गृह्णाति न तु पितस्ततेति नापि द्वयं विधानाभावान्नापि अध्वर्युर्वाऽऽन्तरैर्हि पिण्डदानं क्रियत इति। तत्र त्रयं त्रयमेकैकस्येति मन्यते। कृष्णावनेनिङ्क्ष्वेत्यादि कृष्णशर्मन्नवनेनिङ्क्ष्वेत्यादि वा।

तेष्ववाचीनपाणिर्दक्षिणापवर्गांस्त्रीन्पिण्डान्ददाति।

निदधाति परस्वत्वापादनरूपस्य दानस्यात्रासंभवात्। अत एव त्रिर्निदधातीत्येव श्रुतिः। अत्र देवतात्रयनिरूपितमेकं कर्म तथाऽपि तस्य प्रतिदेवतमभ्यासस्त्रिरिति श्रुताभ्यासार्थ एव। तथा होमभक्तिरियम्। तेषु निनयनेन संस्कृतेषु स्थानेष्वेव क्रमेण त्रीस्त्रीः पिण्डान्कृतान्ददाति। अवाचीनो दक्षिणः पाणिर्यस्याङ्गुष्ठभागपार्श्वमधो यस्य पाणेः सोऽवाचीनः। दक्षिणसमाप्तीन्क्रमेण ददाति। दानक्रियायामधिकरणं यद्यपि न संभवति तस्या यागवन्मानसत्वात्परं तु परस्वत्वापादनेनांशेन प्रक्षेपान्तताऽप्यस्ति होमवदिति कृत्वाऽधिकरणमुक्तं प्रक्षेपं प्रति पूर्वमस्माभिर्दानस्य परस्वत्वापादनापवर्गतोक्ता, सा तु सर्वदानानुयायिनी। न हि पृथ्व्यादिदानेषु दीयमानस्य प्रक्षेपः संभवति प्रकृतेऽयं न धात्वर्थः किं तु प्रक्षेपो धात्वन्तरस्य निदधातेरर्थ उत्पत्तिविधौ हि त्रिर्निदधातीति श्रवणात्तेनोपलक्षितं दानमत्र तथा पर्यवसन्नमिति न विरोधः।

मन्त्रमाह—

एतत्ते ततासाविति पित्रे पिण्डं ददाति।

एतत्ते तत ये च त्वामन्विति मन्त्रस्य प्रतीकम्। असाविति शाखान्तरलब्धं पूरितं मध्ये। अत एवोक्तमापस्तम्बेन—एतत्ते ततासौ ये च त्वामन्वित्येतैरिति। पित्र्येष्ट्यां च तथैव पठितमेतत्ते तत ये च त्वामन्विति। तथा च पिण्डं गृहीत्वा-एतत्ते ततामुकश-

मन्ये च त्वामन्वित्येतैर्निदधाति पिण्डम् । नात्र गोत्रवसुरूपादिशब्दोच्चारणमविधानात् ।
स्मार्ते तथाविधाम्नायते । केचिदत्रापि कुर्वन्ति तत्सूत्रभाष्यसूत्रान्तरभाष्यान्तरविरोधादु-
पेक्ष्यं याज्ञिकैः ।

एतत्ते पितामहासाविति पितामहायै-
तत्ते प्रपितामहासाविति प्रपितामहाय ।

पूर्ववद्व्याख्या ।

तूष्णीं चतुर्थम् ।

पिण्डमिति पूर्ववत् ।

स कृताकृतः ।

एकस्यां शाखायां विहितोऽपरस्यां निषिद्धोऽन्यतरस्यां विकल्पित इत्यर्थः ।
कर्तव्ये तस्मिंस्तूष्णीम् ।

अथ यदि नामधेयानि न विन्द्यात्स्वधा पितृभ्यः
पृथिविषद्भ्य इति पित्रे पिण्डं दद्यात्स्वधा पितृ-
भ्योऽन्तरिक्षसद्भ्य इति पितामहाय स्वधा
पितृभ्यो दिविषद्भ्य इति प्रपितामहाय ।

पित्रादिनामाज्ञाने त्वेतैरेव मन्त्रैर्यथापूर्वं दद्यात् । पित्रोर्मरणे स्वयं बाल एव पश्चा-
दन्येनोपनयनादिना संस्कृतस्तत्र पित्रादिनामधेयानि नाज्ञासीदिति तद्बाल्ये मृतपि-
त्रादिविषयं प्रवसति यजमानेऽध्वर्युविषयं च । पृथिविषद्भ्य इति पृथिवीशब्दे ह्रस्वत्वं
छान्दसम् ।

*यदि द्विपितैकैकस्मिन्पिण्डे द्वौ द्वावुपलक्षयेत् ।

दत्तक्रीतादिर्द्विपिता स एकस्मिन्पिण्डे द्वौ पितरौ पितामहपिण्डे द्वौ पितामहौ प्रपि-
तामहपिण्डे द्वौ प्रपितामहावुच्चारयेदूहेनेत्यर्थः । एतद्वां ततौ विष्णुकृष्णशर्माणौ ये च
त्वा मनु । एवमुत्तरत्रापि । अत्रापि नामाज्ञाने स्वधा पितृभ्य इत्यादिभिरेव दानम् ।

जीवपिता पितामहाय प्रपितामहायेति दद्यात् ।

जीवः पिता यस्येति तथा स द्वौ पिण्डौ दद्यात् । इतिकरणः प्रकारवाची । तेन
जीवपितामहः पित्रे प्रपितामहाय जीवप्रपितामह इतरयोर्यौ जीवतस्तदन्यस्मै सर्वेषु न
कस्मा अपीतिकरणार्थः ।

---

* सूत्रपुस्तकेष्वेव यदीति विद्यते ।

---

१ घ. ज. झ. ञ. ददाति स्वधा ।

न जीवन्तमति ददातीत्येकेषाम् ।

उभयोर्मध्ये यो जीवति तमतिक्रम्य न ददातीत्यर्थः । प्रपितामहे जीवति पूर्वाभ्यां द्वयोर्जीवतोः पित्रे दातव्यमेवातिक्रमणमात्रप्रतिषेधात्पूर्वं यस्मै देयस्तस्मिञ्जीवति परस्मै दीयते तत्रैव प्रतिषेधः पूर्वसूत्रप्राप्तस्य ।

तत्र यावति कर्मण्यनधिकारस्तावदेव त्याज्यं न पिण्डपितृयज्ञ एव न ददातीति दानमात्रप्रतिषेधात्कार्यमेवेत्यभिप्रायेणाऽऽह—

होमान्तमेव कुर्यात् ।

मेक्षणप्रहरणान्तमित्यर्थः ।

जीवपितुः पिण्डदानप्रभृत्युत्तरं लुप्यते ।

किमर्थमिदमुच्यते गतार्थत्वात् । उच्यते–द्विपितुरेकस्मिञ्जीवति तत्प्रभृति तत्प्रमुखं द्वयं लुप्यते नत्वन्यदपीत्येवमर्थमिदमिति ब्रूमः ।

प्रकृतं वक्तुं स्मारयति—

निधाय पिण्डान् ।

अनुवादः ।

आपो देवीः स्वधया वन्दमानास्ता वो गच्छन्तु पितरः स्योनाः । ऊर्जं वहन्तीः सतमक्षितोदकाः क्षीरमुदकं घृतं मधु पयः कीलालं परिस्रुत१ स्वधा स्थ तर्पयत मे पितॄनिति त्रीनुदपात्रान्निनयति ।*

पिण्डेषु निनयनं प्रत्येकमेकमेकं संस्कारोऽयं यद्यपि प्रत्येकं प्राप्तस्तथाऽपि बहुवचनेन सर्वेषु धारया सकृत्पातो मा भूदिति त्रीनित्युक्तम् । एकमेव पूर्णोदकं पात्रमुदकुम्भाद्गृहीत्वा प्रत्येकं पिण्डेषु पातयेद्द्रव्यपृथक्त्वेऽभ्यावर्तत इति न्यायात् ।

अत्र पितरो यथाभागं मन्दध्वमनुस्वधमावृषायध्वमित्युक्त्वा पराङावर्तते ।

प्रदक्षिणं परावर्तते । मन्त्रस्तु पूर्वमेव जप्यः पिण्डानां पराङ्मुखस्तिष्ठेदित्यर्थः ।

ओष्मणो व्यावृत्त उपास्ते स्वाहोष्मणो व्यथिष्या इत्यूष्माणमुद्यन्तमनुमन्त्रयते ।

पराङ्मुख एवोद्यन्तं पिण्डेभ्य ऊष्माणमनुमन्त्रयते ।

---

* सूत्रपुस्तकेषु निनयतीत्यत्र निनीयेति विद्यते ।

---

१ क. ग. च. छ. ट. ठ. °र्थः । स्वा° ।

व्यावृत्त ऊष्मण्यव्यावृत्ते वाऽमीमदन्त पित-
रोऽनुस्वधमावृषायीषतेत्युक्त्वोपपर्यावर्तते ।

व्यावृत्त इति स्वशाखाविकल्पितविध्यन्तरसद्भावादस्मच्छाखाविधिः । ओष्मणो व्यावृत्त उपास्त इति यावदूष्मणो व्यावृत्तिर्निर्गमनं पिण्डेभ्यस्तावत्परावृत्त एवोपास्त इति शाखान्तरीयस्तु तद्विपरीतस्तदर्थं विकल्पः । अमीमदन्तेति मन्त्रमुक्त्वा यथेतं पिण्डसंमुखो भवेदित्यर्थः ।

यः स्थाल्यां शेषस्तमवघ्रेण भक्षयति ।

भक्षणबुद्धिकरणं कार्यम् । उदकस्पर्शः ।

उपस्पृशति वा ।

बहिर्निष्कास्य हस्तेन स्पृशति । नोदकस्पर्शः ।

आमयाव्यन्नाद्यकामो वा प्राश्नीयाद्यो
वाऽलमन्नाद्याय सन्नान्नमद्यात्तेन प्राश्य ।

रोगी रोगनिवृत्तयेऽन्नमदनीयं योग्यं कामयते स वा प्राश्नाति । यः पुमानन्नाद्याय समर्थो नान्नमद्यादरुचिदोषेण तेन प्राश्य श्रुत्यनुसारेण क्रियाद्वयं प्रयुक्तम् ।

अत्राऽऽञ्जनाभ्यञ्जने वासश्चानुपिण्डं ददाति ।

अत्रेति वचनं सूत्रान्तरेऽञ्जलिनिनयनानन्तरमुक्तं तेन विकल्पो मा भूदिति । प्रतिज्ञेयम् ।

विधिमाह—

आङ्क्ष्वासावाङ्क्ष्वासाविति त्रिराञ्जनमभ्य-
ङ्क्ष्वासावभ्यङ्क्ष्वासाविति त्रिरभ्यञ्जनम् ।

प्रत्येकं त्रिः सकृन्मन्त्रेण द्विस्तूष्णीमेवं प्रत्येकमिति भाष्यकृत् । त्रिर्ग्रहणं चतुर्थपिण्डनिवृत्त्यर्थमित्यन्ये । तदा सकृदेव ।

एतानि वः पितरो वासांस्यतो नोऽन्यत्पितरो मा यूढ्व-
मिति दशामूर्णास्तुकां वा छित्त्वा न्यस्यति पूर्वे वयसि ।

स्ववस्त्रदशामविलोमपुञ्जं वाऽविस्थं छित्त्वा नतु पतितं पिण्डेषु क्षिपति सकृन्मन्त्रेण सर्वेषु निधाने सकृन्मन्त्रः संभवेदित्येवमर्थं न्यस्यतीत्युक्तम् । पूर्वं वयः पुरुषायुषस्य शतस्य पूर्वमर्धं पञ्चाशद्वर्षाणि । पञ्चाशद्वर्षताया ऊर्ध्वं स्वं लोमेत्याश्वलायनः । तस्मात्पूर्वं पूर्वं वयः । अथवा त्रेधा विभक्तस्य पूर्वौ द्वौ भागौ पूर्वं वयः । तदाह बौधायनः—ऊर्ध्वं षट्षष्टेश्च वर्षेभ्योऽष्टभ्यश्च मासेभ्यश्चेति ।

---

१ घ. ङ. ज. झ. ञ. ढ. 'वजिघ्रे' ।

स्वं लोम च्छित्त्वोत्तरे ।

नाभेरूर्ध्वं वै पुरुषस्य नाभ्या इति श्रुतेः । गतम् ।

नमो वः पितरो रसायेति नमस्कारैरुपतिष्ठते ।

नमःशब्दपूर्वकाः सप्त मन्त्रा एतैः सप्तभिः प्रत्येकं सप्तोपस्थानानि कार्याणि । दृष्टार्थेषु विकल्पो भवेत् । अदृष्टार्थत्वान्मन्त्रावृत्त्या क्रियाभ्यासेऽपि न दोष इति वक्तुं नमस्कारैरित्युक्तम् ।

ऊर्जस्वतीः स्वधया वन्दमानास्ता वो गच्छन्तु पितरः स्योनाः । ऊर्जं वहन्तीः सतमक्षितोदकाः क्षीरमुदकं घृतं मधु पयः कीलालं परिस्रुतꣳ स्वधा स्थ तर्पयत मे पितॄनिति त्रीनुदपातानिनयति यथा पुरस्तात् ॥ १९ ॥

गतार्थम् । यथा पुरस्तादिति वचनं लेपनिनयनं सूत्रान्तर उक्तं तन्मा भूदिति ।

उत्तिष्ठत पितरः प्रेतपूर्वे यमस्य पन्थामनुयाता पुराणम् । धत्तादस्मासु द्रविणं यच्च भद्रं प्र णो ब्रूताद्भागधान्देवतास्विति पितॄनुत्थापयति ।

पितॄणामुत्थापनं[सं]भाव्य जपतीत्यर्थः । पिण्डान्वोत्थापयति ।

परेत पितर इति प्रवाहयति ।

प्रवाहणं समीचीनैर्यानैः पितृलोकं प्रति नयनम् । मन्त्रः पूर्ववत् । मदन्तीति मन्त्रान्तः ।

यन्तु पितरो मनसा जवेनेति पितॄन्सꣳसाधयति ।

पितृलोकं प्रापयति पूर्ववत् ।

मनो न्वा हुवामह इति तिसृभिर्मनस्वतीभिरुपतिष्ठते ।

मनःशब्दवतीभिः । आ न एत्विति द्वितीया । पुनर्न इति तृतीयर्क् । स्वलोकस्थान्पितॄनुपतिष्ठते ।

अक्षन्नमीमदन्त प्रजापत इति पङ्क्तिप्राजापत्याभ्यां प्रत्येति[१] ।

पङ्क्तित्वेन ज्ञानं कर्माङ्गमन्यथा यजुष्ट्वे यज्ञभ्रेषप्रायश्चित्तं दक्षिणाग्नौ । हरी इति प्रथमा । रयीणामिति द्वितीया । उपवीती भूत्वोपस्थानार्थं गार्हपत्यं प्रति गच्छति ।

यदन्तरिक्षमिति पङ्क्त्या गार्हपत्यमुपतिष्ठते ।

मनेनसमिति मन्त्रान्तः । अक्षरगणनया शाक्करी तस्यां पङ्क्त्युपासना कार्येति भावः ।

---

१ ख. ग. च. छ. ट. ठ. ण. 'सादय' । २ घ. ङ. ज. झ. म. ढ. °ति च प° ।

अभून्नो दूतो हविषो जातवेदा अवाड्ढव्यानि सुरभीणि कृत्वा । प्रादाः पितृभ्यः स्वधया ते अक्षन्प्रजानन्नग्ने पुनरप्येति देवानित्येकोल्मुकं प्रत्यपिसृज्य ।

स्थापितमुल्मुकं पुनर्दक्षिणाग्नौ मेलयित्वा ।

अभ्युक्ष्य द्वंद्वं पात्राणि प्रत्याहरति ।

पिण्डपितृयज्ञपात्राणि अद्भिरभ्युक्ष्य पश्चाद्द्वे द्वे प्रत्यवहरति आसादनस्थानात्प्रवाहयति ।

स्थाल्यां पिण्डान्प्रत्यवदधाति ।

चरुस्थाल्यां पिण्डान्निक्षिपति ।

अपां त्वौषधीनाꣳ रसं प्राशयामि भूतकृतं गर्भं धत्स्वेति मध्यमं पिण्डं पत्न्यै प्रयच्छति ।

स्पष्टम् ।

आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् ।
यथेह पुरुषोऽसदिति पत्नी प्राश्नाति ।

पुरुषसंस्कारत्वान्मन्त्रलिङ्गाच्च पुरुषार्थत्वावगतेर्विभज्य प्रतिपत्तिं देयः सर्वाभिर्मन्त्रेण भक्षणीय इति स्थितिः ।

तदर्थमेवार्थवादं पठति—

पुमाꣳसं जनयति ।

पुत्रमिति शेषः । न कामना कामपदाभावात् ।

ये समानाः समनसः पितरो यमराज्ये । तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् । ये सजाताः समनसो जीवा जीवेषु मामकाः । तेषाꣳ श्रीर्मयि कल्पतामस्मिँल्लोके शतꣳ समा इति सकृदाच्छिन्नानभ्युक्ष्याग्नावादधाति ।

अभ्युक्ष्य मन्त्राभ्यामादधाति दक्षिणाग्नौ ।

अपः पिण्डानभ्यवहरति ब्राह्मणं वा भोजयति ।

अपोऽभिलक्षीकृत्य निक्षिपति । स्पष्टम् ।

सोऽयमेवं विहित एवानाहिताग्नेः ।

सोऽयं पिण्डपितृयज्ञ एवंप्रकारेणोक्त एवानाहिताग्नेरपि भवति ।

**तत्र यानि श्रपणसंयुक्तानि तान्यौपासने क्रियन्ते ।**

होमस्त्वतिप्रणीतेऽपि न तत्र पाकः । स तत्समवेतनिर्वापपात्रासादनानि तान्यौपासने नियम्यन्ते ।

**अतिप्रणीत आहुतीर्जुहोति ।**

एकोल्मुके प्रणीते तत्रैव होमः । तथाच होमसमय एव प्रणयनम् ।

**यस्मिञ्जुहोति तमुपतिष्ठते ।**

अतिप्रणीतमेवोपतिष्ठत इत्यर्थः । भाष्यकृता व्याख्यातं यस्मिञ्जुहोतीति गुरुनिर्देशाद्विकल्प इति गुरुनिर्देशस्यास्ति फलं दक्षिणाग्नौ पिण्डपितृयज्ञे कृतेऽपि गार्हपत्यस्योपस्थानवदौपासनस्य मा भूदित्येवमर्थं यस्मिन्नित्याद्युक्तम् ।

**अत्र गार्हपत्यप्रवादः परिलुप्यते ॥ २० ॥**

**इति हिरण्यकेशिसूत्रस्य द्वितीयप्रश्ने सप्तमः पटलः ॥ ७ ॥**

---

गार्हपत्यपदं लुप्यते नोह एतस्यापि पिण्डपितृयज्ञस्य प्रकृतित्वात् । नापि लक्षणया व्याख्या प्रकृते गार्हपत्यमुपतिष्ठत इति सति विधौ ह्यैन्द्र्या गार्हपत्यमुपतिष्ठत इति द्वितीयाश्रुतिबलेन व्याख्या प्रकृते यस्मिञ्जुहोति तमुपतिष्ठत इत्येव विधौ द्वाराभावाल्लोप एव गार्हपत्यपदस्येति युक्तम् ।

**इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैजयन्त्यां द्वितीयप्रश्ने सप्तमः पटलः ॥ ७ ॥**

---

अथ द्वितीयप्रश्नेऽष्टमः पटलः ।

---

**अहं भूपतिरहं भुवनपतिरहं महतो भूतस्य पतिर्देवेन सवित्रा प्रसूत आर्त्विज्यं करिष्यामि देव सवितरेतं त्वा वृणते बृहस्पतिं दैव्यं ब्रह्माणं तदहं मनसे प्रब्रवीमि मनो गायत्रियै गायत्री त्रिष्टुभे त्रिष्टुब्जगत्यै जगत्यनुष्टुभेऽनुष्टुब्बृहत्यै बृहती पङ्क्त्यै पङ्क्तिः प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यो विश्वे देवा बृहस्पतये बृहस्पतिर्देवानां[२] ब्रह्माऽहं मनुष्याणां भूर्भुवः सुवरिति वृतो ब्रह्मा जपति ।**

यजमानेन भूपत इति वृतो जपति । अत्राऽऽचमनं ब्रह्मणो विहितं वैखानसेन ।

---

१ घ. ङ. ज, झ. ञ. ढ. 'त्वान्यौपासने तानि क्री' । २ घ. ङ. ज. झ. ञ. ढ. 'ति ब्रह्मा वृतो ज° ।

वाचस्पते यज्ञं गोपायेत्यपरेणाऽऽहवनीयं दक्षिणाऽतिक्रम्य ।

अत्र ब्राह्मणपठितस्य वाचस्पते यज्ञं गोपायेत्यनेन विकल्पः । यजमानः पूर्वमेवा-तिक्रामतीति वैखानसेनोक्तम् ।

अहे दैधिषव्येति ब्रह्मसदनात्तृणं निरस्याप उपस्पृश्य ।

पाकतर इति मन्त्रान्तः । श्रौत उदकस्पर्शः ।

उम्रिवत उदुद्रुतश्च गेषमित्युपविशति ।

इदमुपवेशनं प्राङ्मुखत्वेन पश्चादाहवनीयाभिमुख्येनोपवेशनान्तरस्य विधानात् । अथाह इति मन्त्रान्तः ।

इदमहमर्वाग्वसोः सदने सीदामि प्रसूतो
देवेन सवित्रा बृहस्पतेः सदने सीदामि
तदग्नये प्रब्रवीमि तद्वायवे तत्सूर्याय तत्पृ-
थिव्या इत्याहवनीयमभिमुख उपविशति ।

पूर्वं प्राङ्मुख उपविष्ट इदानीमाहवनीयाभिमुखो मन्त्रेणोपविशति ।

आसंस्थानादन्वास्ते ।

न चङ्क्रम्यत इत्यर्थः ।

कर्मणि कर्मणि वाचं यच्छति ।

आरब्धे कर्मणि यावत्समाप्ति न ब्रूयात् ।

मन्त्रवत्सु वा कर्मसु तूष्णीकेषु च याथाकामी ।

स्पष्टम् ।

अपि वा सामिधेनीषु प्रयाजानूयाजेषु च वाचं यच्छति ।

सामिधेन्यारम्भप्रभृति समाप्तिपर्यन्तमेवमन्यत्रापि ।

यदि प्रमत्तो व्याहरेद्वैष्णवीमृचं जपि-
त्वा व्याहृतीश्च पुनर्वाचं यच्छति ।

योऽङ्गीकृतो नियमपक्षस्तत्र प्रमादेन नियमत्याग इदं विष्णुरिति तिस्रो व्याहृतीश्च जपेत् ।

ब्रह्मन्नपः प्रणेष्यामीत्युच्यमाने प्रणय यज्ञं
देवता वर्धयैता नाकस्य पृष्ठे यजमानो

---

१ क. ख. ग. च. छ. ट. ठ 'षु या'।

तत्र यानि श्रपणसंयुक्ता[1]नि तान्यौपासने क्रियन्ते ।

होमस्त्वतिप्रणीतेऽपि न तत्र पाकः । स तत्समवेतनिर्वापपात्रासादनानि तान्यौपासने नियम्यन्ते ।

अतिप्रणीत आहुतीर्जुहोति ।

एकोल्मुके प्रणीते तत्रैव होमः । तथाच होमसमय एव प्रणयनम् ।

यस्मिञ्जुहोति तमुपतिष्ठते ।

अतिप्रणीतमेवोपतिष्ठत इत्यर्थः । भाष्यकृता व्याख्यातं यस्मिञ्जुहोतीति गुरुनिर्देशाद्विकल्प इति गुरुनिर्देशस्यास्ति फलं दक्षिणाग्नौ पिण्डपितृयज्ञे कृतेऽपि गार्हपत्यस्योपस्थानवदौपासनस्य मा भूदित्येवमर्थं यस्मिन्नित्याद्युक्तम् ।

अत्र गार्हपत्यप्रवादः परिलुप्यते ॥ २० ॥

इति हिरण्यकेशिसूत्रस्य द्वितीयप्रश्ने सप्तमः पटलः ॥ ७ ॥

---

गार्हपत्यपदं लुप्यते नोह एतस्यापि पिण्डपितृयज्ञस्य प्रकृतित्वात् । नापि लक्षणया व्याख्या प्रकृते गार्हपत्यमुपतिष्ठत इति सति विधौ हैन्द्या गार्हपत्यमुपतिष्ठत इति द्वितीयाश्रुतिबलेन व्याख्या प्रकृते यस्मिञ्जुहोति तमुपतिष्ठत इत्येव विधौ द्वाराभावाल्लोप एव गार्हपत्यपदस्येति युक्तम् ।

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैजयन्त्यां द्वितीयप्रश्ने सप्तमः पटलः ॥ ७ ॥

---

अथ द्वितीयप्रश्नेऽष्टमः पटलः ।

---

अहं भूपतिरहं भुवनपतिरहं महतो भूतस्य पतिर्देवेन सवित्रा प्रसूत आर्त्विज्यं करिष्यामि देव सवितरेतं त्वा वृणते बृहस्पतिं दैव्यं ब्रह्माणं तदहं मनसे प्रब्रवीमि मनो गायत्रियै गायत्री त्रिष्टुभे त्रिष्टुब्जगत्यै जगत्यनुष्टुभेऽनुष्टुब्बृहत्यै बृहती पङ्क्त्यै पङ्क्तिः प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यो विश्वे देवा बृहस्पतये बृहस्पतिर्देवानां ब्रह्माऽहं मनुष्याणां भूर्भुवः सुवरिति वृतो ब्रह्मा[2] जपति ।

यजमानेन भूपत इति वृतो जपति । अत्राऽऽचमनं ब्रह्मणो विहितं वैखानसेन ।

---

१ घ. ङ. ज, झ. ञ. ढ. 'त्कान्यौपासने तानि क्री' । २ घ. ङ. ज. झ. ञ. ढ. 'ति ब्रह्मा वृतो ज' ।

वाचस्पते यज्ञं गोपायेत्यपरेणाऽऽहवनीयं दक्षिणाऽतिक्रम्य।

अत्र ब्राह्मणपठितस्य वाचस्पते यज्ञं गोपायेत्यनेन विकल्पः। यजमानः पूर्वमेवातिक्रामतीति वैखानसेनोक्तम्।

अहे दैधिषव्येति ब्रह्मसदनात्तृणं निरस्याप उपस्पृश्य।

पाकतर इति मन्त्रान्तः। श्रौत उदकस्पर्शः।

उभिवत उदुद्रुतश्च गेषमित्युपविशति।

इदमुपवेशनं प्राङ्मुखत्वेन पश्चादाहवनीयाभिमुख्येनोपवेशनान्तरस्य विधानात्। अथाह इति मन्त्रान्तः।

इदमहमर्वाग्वसोः सदने सीदामि प्रसूतो
देवेन सवित्रा बृहस्पतेः सदने सीदामि
तदग्नये प्रब्रवीमि तद्वायवे तत्सूर्याय तत्पृ-
थिव्या इत्याहवनीयमभिमुख उपविशति।

पूर्वं प्राङ्मुख उपविष्ट इदानीमाहवनीयाभिमुखो मन्त्रेणोपविशति।

आसꣳस्थानादन्वास्ते।

न चङ्क्रम्यत इत्यर्थः।

कर्मणि कर्मणि वाचं यच्छति।

आरब्धे कर्मणि यावत्समाप्ति न ब्रूयात्।

मन्त्रवत्सु वा कर्मसु तूष्णीकेषु च याथाकामी।

स्पष्टम्।

अपि वा सामिधेनीषु प्रयाजानूयाजेषु च वाचं यच्छति।

सामिधेन्यारम्भप्रभृति समाप्तिपर्यन्तमेवमन्यत्रापि।

यदि प्रमत्तो व्याहरेद्वैष्णवीमृचं जपि-
त्वा व्याहृतीश्च पुनर्वाचं यच्छति।

योऽङ्गीकृतो नियमपक्षस्तत्र प्रमादेन नियमत्याग इदं विष्णुरिति तिस्रो व्याहृतीश्च जपेत्।

ब्रह्मन्नपः प्रणेष्यामीत्युच्यमाने प्रणय यज्ञं
देवता वर्धयैता नाकस्य पृष्ठे यजमानो

---

1 क ख ग. च. छ. ड. ठ 'षु यां'।

अस्तु । सप्तर्षीणा१ सुकृतां यत्र लोकस्त-
त्रेमं यज्ञं यजमानं च धेह्यों प्रणयेति प्रसौति ।

प्रसौति पृष्टेऽनुमोदनं प्रसवः । स्पष्टम् ।

सर्वेष्वामन्त्रणेष्वोंकारेण प्रसौति ।

आगामिष्वप्यामन्त्रणेषु ओंकारपूर्वकं प्रसौत्युचितानुमोदनक्रियापदात्पूर्वमोंकारमुच्चार्य क्रियापदमुच्चारयति ॐ प्रोक्षेत्यादि ।

येन येन कर्मणाऽऽमन्त्रयते सर्वत्र तेन तेन प्रसौति ।

येनेति तृतीयेत्थंभावलक्षणे । येन कर्मणोपलक्षितमामन्त्रयते ब्रह्मन्प्रोक्षिष्यामीत्यादिप्रोक्षणेन कर्मणाऽऽमन्त्रयते ब्रह्माऽपि तेन तेनैव प्रोक्षेति प्रसौतीत्यर्थः ।

ब्रह्मन्प्रोक्षिष्यामीत्युच्यमाने प्रोक्ष यज्ञ-
मिति हविष इध्माबर्हिषश्च प्रोक्षे ।

प्रोक्षे प्रोक्षणकर्मणि । इध्माबर्हिषः प्रोक्षणेनोक्तमामन्त्रणं तदध्वर्युप्रत्ययं यस्य स्यात्तत्रैव प्रसौति नास्मत्सूत्रानुसारेण । देवता वर्धयेत्याद्यनुषङ्गः सर्वत्र वक्ष्यते ।

ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामीत्युच्यमाने बृह-
स्पते परिगृहाण वेदि१ स्वगावो देवाः सदनानि
सन्तु । तस्यां बर्हिः प्रथता१ साध्वन्तरहि१-
ताणः पृथिवी देव्यस्त्वित्युत्तरस्मिन्परिग्राहे ।

अत्रापि देवता इत्यनुषङ्गः ।

ब्रह्मन्सामिधेनीरनुवक्ष्यामीत्युच्यमाने प्रजा-
पतयेऽनुब्रूहि यज्ञमिति सामिधेनीषु ।

इदं होतृप्रत्ययं यदि स आमन्त्रयते । अत्रापि देवता इत्यनुषङ्गः ।

ब्रह्मन्प्रवरायाऽऽश्रावयिष्यामीत्युच्यमाने
॥ २१ ॥ वाचस्पते वाचमाश्रावयैतामा-
श्रावय यज्ञं देवेषु मां मनुष्येष्विति प्रवरे ।

पूर्ववदनुषङ्गः ।

देवता वर्धयेति सर्वत्रानुषजत्योमाश्रावयेति प्रसौति ।

पूर्वोक्तेष्वनुषङ्गं करोति । धेहीत्यन्ततः परमोंकारेण तत्तत्कर्मणा प्रसौत्युक्तमेव ।

मित्रस्य त्वा चक्षुषा प्रेक्ष इति प्राशित्रमवदीयमानं प्रेक्षते ।

अध्वर्युणा प्राशित्रावदान आरब्ध एव प्रापश्यत इति प्राशित्रं प्रकर्षेण पश्यति ।

---

१ घ. °स ऋषीणा१ । २ क. ख. ग. च. छ. ट. ठ. °जति । पू° ।

**ऋतस्य पथा पर्येहीति पर्याह्रियमाणम् ।**

आग्नीध्रेणाग्रेणाऽऽहवनीयं परि परित आनेतुमारब्धमेवैशानदिग्भागगतं प्रतीक्षत इत्यनुषङ्गः ।

**सूर्यस्य त्वा चक्षुषा प्रतिपश्यामीत्याह्रियमाणं प्रतीक्षते ।**

स्वाभिमुखतयाऽऽह्रियमाणमाग्नेयदिग्भागगतं प्रतीक्षतेऽभिमुखो भूत्वेक्षते पूर्वं तु यत्संनिवेशेनाऽऽहवनीयाभिमुखस्थितस्तथैव प्रेक्षतेऽत्र तु प्राशित्राभिमुखो भूत्वेक्षत इति विशेषः

**देवस्य त्वेति प्रतिगृह्य ।**

प्राशित्रमित्यनुषङ्गः । प्रतिगृह्णामीति मन्त्रान्तः ।

**पृथिव्यास्त्वा नाभौ सादयामीडायाः पद इत्यपरेणाऽऽहवनीयं न्यू(न्यु)ह्य तृणानि प्राग्दण्डꣳ सादयति ।**

न्यू(न्यु)ह्यापसार्य तृणानि बर्हिष आस्तीर्णस्य प्राग्दण्डं सादयति । प्राग्दण्डो यस्य पात्रस्य तादृशं पात्रं यस्य । प्राशित्रहरणप्राशित्रयोरभेदविवक्षयोक्तं प्राग्दण्डमिति ।

**सुपर्णस्य त्वा गरुत्मतश्चक्षुषाऽवपश्यामीत्यवेक्ष्य ।**

अवनम्यावनतो भूत्वोपरीक्षत इति विशेषः । गरुत्मत इति विशेषणादधो दृष्टिं वक्तुमवेक्ष्येत्युक्तम् ।

**देवस्य त्वेत्यङ्गुष्ठेनोपमध्यमया चाङ्गुल्याऽऽदाय ।**

स्पष्टम् ।

**अग्नेस्त्वाऽऽस्येन प्राश्नामीति प्राश्नाति ।**

मुखे निक्षिपति । वैखानसेनोक्तं जिह्वाग्रे निधायेति ।

**ब्राह्मणस्योदरेणेत्यसंश्लेत्यावगिरति ।**

मन्त्रेणावगिरति अधस्तान्नयति । असंश्लेत्य ग्लानिं ग्लानिमप्रापय्याचर्वणममेलयित्वा पूर्वं जिह्वाग्रे स्थापितं तथैवानवच्छिद्यैवाधस्तात्प्रवेशयतीत्युक्तम् । प्राशित्रमादायान्तर्विहारं प्राश्नाति ।

**न दतो गमयति ।**

दन्तान्न प्रापयति निक्षेपवेलायां ग्रसनवेलायां च ।

---

**या अप्स्वन्तर्देवतास्ता इदꣳ शमयन्तु स्वाहा-**
**कृतं जठरमिन्द्रस्य गच्छेत्यद्भिरभ्यवहरति ।**

अपो गृहीत्वा ताभिर्मन्त्रेण कण्ठनालेनाधस्तादुदरं प्रापयति तावत्पूर्वं कण्ठे धारयतीत्यवगम्यते ।

**आचम्य ।**

श्रौतमाचमनम् । आदौ स्मार्तं कृत्वा श्रौतं कार्यं कर्माङ्गम् । अथवा श्रौतेनैवोभयसिद्धिः । स्मार्तं धर्मसूक्तं—त्रिः प्राश्य द्विस्त्रिर्वाऽङ्गुष्ठमूलेन परिमृज्य सकृद्विर्वाऽङ्गुल्यग्रैरुपस्पृश्य सव्यं पाणिं पादौ प्रोक्ष्य शिरश्च प्रोक्ष्य, श्रौते त्वालभ्येति विशेषः । चक्षुषी नासिके श्रोत्रे सकृत्सकृत्सोदकाङ्गुष्ठतर्जनीभ्यामालभ्य, श्रौते तु हृदयं हस्ततलेनेत्यधिकम् । शिरसः प्रोक्षणं स्मार्ते, श्रौते त्वालम्भ एवेति ज्ञेयम् ।

**घसिना मे मा संपृक्था ऊर्ध्वं मे नाभेः सीदेन्द्रस्य**
**त्वा जठरे सादयामीति नाभिदेशमभिमृशति ।**

स्पृष्ट्वा जपति—

**वाङ्म आसन्नसोः प्राण इति यथारूपं प्राणायतनानि संमृशति ।**

सम्यङ्मृशति स्पृशति सोदकाङ्गुलिभिः । यस्य मन्त्रस्य यद्रूपं लिङ्गं तेन मन्त्रेण तस्य तस्य प्राणस्येन्द्रियस्याऽऽयतनम् । बाह्वोर्बलमिति हस्तद्वयेन सहैव बाहुद्वयं पूर्वमपि सकृदेवोभयोरुभयोर्वाङ्म इति मुखं सलोमकम् ।

**अरिष्टा विश्वान्यङ्गानीति सर्वाण्यङ्गानि ।**

मा मा हिꣳसीरिति मन्त्रान्तेन हस्तद्वयेन शिरःप्रभृति पादपर्यन्तम् ।

**पात्रं प्रक्षाल्य पूरयित्वा दिशो जिन्वेति पराञ्चं निनयति ।**

प्राशित्रहरणपात्रं प्रक्षाल्याद्भिः पूरयित्वोदकं निनयति पातयति पराञ्चमात्मानं कृत्वा । निनयनावसरे पात्रेणोर्ध्वदण्डेन बहिर्बिलेन निनयने कृते पात्रस्य पृष्ठत आत्मा भवति । क्रियाविशेषणत्वे पराङ्निनयतीति स्यात्पराञ्चमिति पुंलिङ्गानुपपत्तिः ।

**अपरं पूरयित्वा मां जिन्वेत्यभ्यात्मं निनयति ।**

आत्मानमभिमुखं क्रियाविशेषणमभ्यात्ममिति समासान्तप्रत्ययेनाकारान्तता ।

**ब्रह्मभागं परिहृतं न पुरा सꣳस्थानात्प्राश्नाति ।**

पुरा पूर्वं संस्थानान्न प्राश्नातीति प्रतिषेध इतरेषामृत्विजां स्वस्वभागपरिहारानन्तरमेव प्राशनं तन्मा भूदिति ।

**ब्रह्मन्ब्रह्माऽसि ब्रह्मणे त्वाहुताय मा मा**
**हिꣳसीरहुतो मह्यꣳ शिवो भवेत्यन्तर्वेद्यन्वा-**

१ क. ट. °ति तथा क्रि° । २ क. ग. ध. ङ. छ. ज. झ. ञ. ट. ठ. ढ. पुनरा° ।

हार्यमासन्नमभिमृशति प्रजापतेर्भागोऽसीति च ।

उभयोः समुच्चयो न प्रत्येकं जपो भवत्यदृष्टार्थत्वात् ।

ब्रह्मन्प्रस्थास्याम इत्युच्यमाने देव सवित-
रेतत्ते प्राह तत्प्र च सुव प्र च यज
बृहस्पतिर्ब्रह्मा स यज्ञं पाहि स यज्ञपतिं
पाहि स मां पाह्योँ प्रतिष्ठेत्यनूयाजसमिधि ।

प्रसौतीति विप्रकृष्टमप्याकृष्यते ।

भूमिर्भूमिमगान्माता मातरमप्यगात् । ऋध्यास्म पुत्रैः पशुभिर्यो नो
द्वेष्टि स भिद्यतामिति यत्किंच यज्ञे मृन्मयं भिद्येत तदभिमन्त्रयेत ।

प्रायश्चित्तार्थमेतत् । यज्ञे प्रयोगकाले ।

सार्वत्रिकमेके समामनन्ति ।

प्रयोगकालादन्यत्रापि । अन्यदाऽपि भिन्नं मृन्मयमागामिप्रयोगे वृतो ब्रह्माऽभिम-
न्त्रयते । तस्याऽऽदावेव प्रतिनिधिर्ग्राह्यः ।

ब्रह्मभागं प्राश्य ।

दिवो भागोऽसीति पूर्वमेव प्रदर्शितेन मन्त्रेण ।

अयाडग्निर्जातवेदा अदब्धोऽन्तरः पूर्वो अस्मिन्निषद्य ।
सुन्वन्सनि१ स विमुचानो विमुञ्च धेह्यस्मासु द्रविणं
जातवेदो यच्च भद्रं प्र णो यच्छाभिवस्यो अस्मान्सन्नः
सृज सुमत्या वाजवत्येति समिधमाधाय हुत्वोपस्थाय वा ।

आधाने तु न स्वाहाकारः । होमेऽस्त्येव स्वाहाकारो दर्विहोमधर्मत्वात् । तदाऽग्रे-
णाऽऽहवनीयं गत्वा जुह्वां स्थाल्याज्यं सकृद्गृहीत्वा । त्रितयं विकल्पते । अत एव
ज्ञायते यत्र जुहोतिचोदना नास्ति तत्र स्वाहाकारः कुत्रापि नास्तीति । यत्रास्ति पाठेन
स्वाहाकारः सोऽपि दर्विहोम एवान्यत्र स्वाहाकारे श्रद्धाजाड्यमनेन परिहृतम् ।
सूत्रान्तरे किंचिन्मूलं दृष्ट्वा कल्पयन्ति । यथाऽऽपस्तम्बे सूक्तवाके न स्वाहाकार इत्यु-
क्तम् । तदस्मत्सूत्रकारस्य पक्षे तु नचाऽऽशङ्का न चोत्तरमिति ।

यथेतं प्रतिनिष्क्रामति ।

गतम् ।

---

१ ग. घ. छ. ठ. 'लं परिहृतं इ° ।

एवं विहितमिष्टिपशुबन्धानां ब्रह्मत्वं ब्रह्मत्वम् ॥ २२ ॥

इति हिरण्यकेशिसूत्रे द्वितीयप्रश्नेऽष्टमः पटलः ॥ ८ ॥

---

इति हिरण्यकेशिसूत्रे द्वितीयः प्रश्नः ॥ २ ॥

---

आध्वर्यवेऽतिदेशो व्याख्यास्यते । त(अ)त्र तादृग्व्याख्येयं नास्तीति सूचयति । द्विरुक्तिः प्रश्नपरिसमाप्त्यर्था ।

इति हिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैजयन्त्यां द्वितीयप्रश्नेऽष्टमः पटलः ॥ ८ ॥

सत्याषाढमुनेर्जयन्ति विपुला वाचो विमर्शेन याः
पायंपायममीक्ष्णशोऽमृतरतास्तृप्तिं न जग्मुर्बुधाः ।
तुष्टा याभिरुदारबुद्धय इमे सूत्रेऽपदेशैर्जना-
नुद्धर्तुं जडतापसंतमसतो देवस्य गुप्त्यै स्थिताः ॥ १ ॥
स्मारंस्मारमनेकशो मुनिवरान्व्याख्यानसंस्फूर्तये
प्राप्ता ह्यल्पधियाऽपि संस्फुटतरा व्याख्याऽस्य सूत्रस्य सा ।
विष्णौ यज्ञतनौ पुराणपुरुषे प्रत्यर्पिता नांहसा
योज्याऽर्वाग्जातिभिः प्रसादविशदैः सद्भिः पुनर्दृश्यताम् ॥ २ ॥

इति दर्शपूर्णमासौ पिण्डपितृयज्ञो ब्रह्मत्वं च तयोः समाप्तानि ।

---

इति हिरण्यकेशिसूत्रव्याख्यायां द्वितीयः प्रश्नः ॥ २ ॥

---

अथ तृतीयप्रश्ने प्रथमः पटलः ।

---

यदर्पितं कर्म फलाय कल्पते यदर्पितं बन्धविमुक्तयेऽपि च ।
सचित्सुखानन्तमनन्तमीश्वरं नमामि विष्णुं दुरितेभदारणम् ॥ १ ॥
वेदत्रयात्मन्ननलत्रयात्मन्नीशत्रयात्मन्प्रकृतेर्गुणात्मन् ।
जन्तोरवस्थात्रितयानुबिम्बबिम्बत्रयात्मन्नव मामनर्थात् ॥ २ ॥
ओंकारप्रतिपादितं सुरनुतं भक्तानुकम्पायुतं
दोःपद्मे दधतं दतं हरसुतं श्वेत्यं भजन्तं तनौ ।
ज्ञानाच्छादितमोपहं कविमहं सोहंधिया गां(गं)मनौ
ध्येयं देहभृतां भयच्छिदमजं लक्ष्म्या भजामीश्वरम् ॥ ३ ॥

गङ्गाधरो दारशरीरभाग्यया
यया हरिः श्रीपतिसंज्ञितः कृतः ।
यया महालक्ष्म्यभिधानया जग-
त्पितामहोऽप्येष सरस्वतीपतिः ॥ ४ ॥
तस्यै नमस्तेऽम्ब पुनर्नमोऽस्तु ते
भूयो नमस्तेऽस्तु कृपाकटाक्षतः ।
मां पाहि जाड्यात्कृपणं कृपानिधे
महेशमातर्जगतां च साक्षिणि ॥ ५ ॥
सर्वयज्ञतदङ्गानां सामान्यन्यायपूर्वकम् ।
मीमांसया तथा दर्शपूर्णमासप्रयोगयोः ॥ ६ ॥
विशेषेणैव च व्याख्या कृतेदानीं वितन्यते ।
अनुष्ठानक्रमेणैव त्वग्न्याधेयादिकर्मणाम् ॥ ७ ॥
आवश्यकानां तत्राऽऽदौ फलमावश्यकं तु यत् ।
सर्वसाधारणं व्यासमीमांसावर्त्मनाऽऽगतम् ॥ ८ ॥
प्रश्ने तृतीय आद्येन पटलेन निरूप्यते ।
नियतानां विभागश्च प्रतिनिध्युपदेशनम् ॥ ९ ॥
कर्मभिर्निःश्रेयसं तानि शब्दलक्षणानि धार्यन्ते ।

नियतकर्मणां फलाश्रवणादनिष्टनिवृत्त्यर्थमपि प्रवृत्तिसिद्धेः संशयः किमेभिर्नास्ति साध्यं फलमुतास्तीति ।

तत्र—कर्तव्यान्येव नियतमिति कर्माणि यानि तु ।
एतेषां कर्मणां साध्यं फलं नैव हि लभ्यते ॥ १ ॥
वाक्ये फलाश्रुतेर्वाक्यभेदात्साध्यानपेक्षणात् ।
फलाभाव इति प्राप्ते सूत्रेणोत्तरमुच्यते ॥ २ ॥

सत्यामसत्यामिच्छायां विधिना यानि कर्तव्यानीत्युच्यन्तेऽत एवाकरणेऽनिष्टमेवास्तीति तेषु ज्ञायते तैः साध्यं फलं न श्रूयतेऽतो नास्ति। न च विश्वजिन्न्यायेन कल्प्यमिति वाच्यम् । कल्पितेऽपि सत्यामिच्छायां प्रवृत्तिरन्यथा वा प्रवृत्तिर्नियतेषु विरुध्येत । अथ सर्वजनोद्देश्यमुत्कृष्टं सुखमेव नियते फलं कल्प्यते तर्हि निमित्तफलयोरुद्देश्यत्वे वाक्यभेदः स्यात् । न च साकाङ्क्षत्वेन विध्यपर्यवसानाद्वाक्यभेदो न दूषणमिति वाच्यम्। धात्वर्थमात्रस्य साध्यत्वेनापि कर्माकरणे दोषदर्शनात्प्रवृत्तिसिद्धेर्नापर्यवसानम्। न चेष्टसाधनतयैव प्रवृत्तिहेतुरनिष्टपरिहारे प्रायश्चित्तेऽपि प्रवृत्तिदर्शनात् । न चात्राप्युद्देश्यद्वयसद्भावाद्वाक्यभेद इति वाच्यम्। धात्वर्थस्यानुद्देश्यत्वेऽपि नान्तरीयकतया साध्यत्वादन्यथा विध्यपर्यवसानात् । ननु कर्मणैव हि संसिद्धिमास्थिता जन-

कादय इति कर्मफलं संसिद्धिर्मोक्षो दृश्यते तत्कथं फलाश्रवणमिति चेन्न। तद्वाक्यभेद-भयादनियतानामेव फलमस्तु तत्र वाक्येषु निमित्ताश्रवणात्। दृश्यते चानियतानामपि निःश्रेयसं फलं स्वर्गशब्देनोपात्तम्। न च स्वर्गो विशिष्टदेश एवेति वाच्यम्। उत्कृष्टे सुख एव रूढेः। तथा सर्वकामार्थानि कर्माणि दर्शपूर्णमासपशुसोमरूपाणि निःश्रेयस-लक्षणस्वर्गार्थानि च भविष्यन्ति, तथा प्रजातिज्यैष्ठ्यसर्वजयब्रह्मसायुज्यफलानि वाजपेय-द्वादशाहादीन्यनेकानि सहस्रसंवत्सरान्तेषु श्रूयमाणानि कर्माणि मोक्षसाधनानीति न नियतेषु फलश्रवणम्। यद्यपि नियतेष्वपि ऋणानि त्रीण्यपाकृत्येत्यादिवाक्यान्तरैर्भवेन्निः-श्रेयसं फलं तथाऽपि तत्प्रयोगान्तर एव स्यान्न पुनरेकप्रयोग उद्देश्यद्वयेन सकृत्सं-बन्धायोगात्। अथ वा नियताननुष्ठाने दुरितं तन्मोक्षप्रतिबन्धकमिति तदनुष्ठानान्मो-क्षः फलत्वेनोपचर्यत इति पूर्वः पक्षः। एवं प्राप्तेऽभिधीयते—कर्मभिर्निःश्रेयसं तानि शब्द-लक्षणानि धार्यन्ते।

विधिरिष्टफलेप्सूनामिष्टसाधन एव यत्।
प्रवर्तकोऽन्यथा तस्य स्वरूपक्षतिरापतेत्॥ १॥
तस्मात्साध्यफलं त्विष्टं नियतेष्वपि सर्वथा।
पाप्मनः परिहारस्तु न साध्यो नान्तरीयकः॥ २॥

कर्मभिर्निश्चित्तं श्रेयो यद्यस्येष्टं तत्प्राप्यते यतस्तानीति शेषः। पूर्वं व्याख्यानप्रति-ज्ञायां यज्ञप्राधान्येन कृतायामपि फलं प्रति कर्ममात्रस्य साधनत्वं समानमेव न तु यज्ञप्रयोगबाहुल्यवत्तरतमभावोऽस्तीति वक्तुं कर्मशब्देन प्रतिज्ञातार्थग्रहणम्। नन्व-विहितेऽपि कर्मणि कर्मशब्दोऽस्तीति धर्मैरिति वक्तव्यं लाघवाच्चेति चेत्। न। धर्म-शब्दस्य मीमांसकमते केवलविधिमात्रविहिते प्रयोगो न तु निषिद्धप्रागभावपरिपाल-नरूपे, तदनुष्ठातरि धार्मिक इति प्रयोगाभावादिति। तस्यापि निःश्रेयससाधनत्वं वक्तुं कर्मशब्दप्रयोगः। विधिलक्षणानि कर्माणीति प्रकरणात्सामर्थ्याच्च शब्दलक्षणानीत्यभि-धानाच्च नावैधेषु प्राप्तिरिति विहितैरिति ज्ञास्यते। नन्विह निषेधशास्त्रे कथं पालने विधि-रुभयत्र प्रामाण्याभावादिति चेत्। न पिबेन्न हन्यादित्यादौ सर्वत्र विधिप्रत्ययदर्शनान्न-ञोऽपि दर्शनान्नञ्प्रकृतिभूतधात्वर्थेन न संबध्यते न प्रत्ययन केवलेन किं तु पदेन पदे तु विशेषणभूतेन धात्वर्थेनातो हननाभावेनेष्टं भावयेदिति वाक्यार्थः। तत्राभावस्य साक्षाद्भावनावच्छेदकत्वाभावेन हननादिप्रागभाव परिपालनरूपं कर्मैव लक्ष्यते। तेनायं शब्दार्थो हननादिप्रागभावपरिपालनेनेष्टं भावयेदिति। तथा चार्थाद्दोषप-त्त्यापत्तौ हननादि दुःखसाधनमिति। तस्य चाधर्मत्वं यं गर्हते सोऽधर्म इति वक्ष्यमा-णत्वादधर्मरूपं हननादिकमिति गम्यते यश्चार्थादर्थो न स चोदनेतिन्यायान्न तस्य चोदनाशब्दविषयत्वमर्थापत्तिविषयत्वात्। स्वमते तु पालनमपि धर्म एव परमतेन

१ ख छ. °पेऽपि त°।

व्याप्त्यर्थं कर्मशब्दप्रयोगः। स्वमते तु पालनेऽपि धर्मशब्दप्रयोगा दृश्यन्ते सामयाचारिकान्धर्मानिति। पालनबहुला आचारा एवाभिमता धर्मशब्दवाच्या आचार्यस्यैवमन्येऽपि प्रयोगा द्रष्टव्याः। एवं याज्ञवल्क्यादिप्रयोगा ज्ञेयाः—

'वर्णाश्रमेतराणां नो ब्रूहि धर्मानशेषतः।' इत्यादिकाः।

ननु नियतकर्मणां खलु निःश्रेयससाधनत्वमुच्यते पालनस्य नियतत्वं कथमिति चेत्। इत्थं पालनाकरणेऽपि गर्हादर्शनाद्धननादाविव यस्तु हनन उद्यत एव दैवेन प्रतिबद्धः साक्षान्न करोति पालने यत्नं च न करोति सोऽपि पापीत्युच्यतेऽतो ज्ञायते हनन इव पालनाभावेऽपि प्रत्यवायः। उक्तं च वेदव्याख्यातृभिर्विद्यारण्यश्रीपादैर्निषेधेऽपि न हन्यान्न पिबेदित्यादौ प्रागभावपरिपालनमेव विधेयम्। जीवतोऽधिकारः। तदतिक्रमे प्रायश्चित्तं संध्यातिक्रम इवेति। तथा तैरेवोक्तम्–स्मरन्ति च परिहारस्य धर्मत्वम्—

> नित्यमष्टगुणैर्युक्तो ब्राह्मणो ब्रह्म लौकिकम्।
> ब्राह्मं पदमवाप्नोति यस्मान्न च्यवते पुनः॥

अष्ट गुणा अहिंसादयः।

> अमतां परिहारश्च संसर्गश्चाप्यनिन्दितैः।
> स्वधर्मे च व्यवस्थानं शौचमेतत्प्रकीर्तितम्॥ इति॥

तस्मान्निषिद्धपालनं सुतरां नियतम्। तथा च तदकरणरूपप्रागभावस्य प्रत्यवायाजनकत्वेऽपि तस्याविनाभूतेनान्येन कर्मणा प्रत्यवायस्तस्य क्रियाजन्यत्वादेकत्र प्रतिषिद्धा हननादिका क्रियाऽन्यत्रानुमितनिषेधाऽग्निहोत्रादिकर्माभावव्याप्तेति। तथाच केवलं कर्तव्यानीत्येव श्रूयते तानि नियमेन कर्तव्यानीत्युच्यन्तेऽतो नियतानि। यत्र फलं तत्र सत्यां कामनायां कर्तव्यतोच्यते। तत्र भिन्ने जुहोतीत्यादीनि यद्यपि नियतकर्मविधायकान्येव तथाऽपि तेषां क्रतुवैगुण्यपरिहारमात्रेण फलवत्त्वोपपत्तेर्नोदाहरणता। कर्मभिर्नियततया विहितैर्निश्चितं श्रेयो निःश्रेयसं प्राप्यते। अचतुरेति सूत्रेण कर्मधारयेऽकारान्तता। निश्चितं ध्रुवमुत्कृष्टं निरवधिसुखरूपमात्मैव। अत एव धर्मप्रश्न आत्मलाभात्परं नास्तीति चरि(वदि)ष्यति। तत आनन्दरूप आत्मा साक्षात्कारेण प्राप्यस्तत्प्राप्तिद्वारं कार्यं ब्रह्म वा। वक्ष्यत्यूर्ध्वरेतसामर्चिरादिमार्गेण कार्यब्रह्मप्राप्तिं तेऽर्यम्ण उत्तरेण गत्वा न पुनरावर्तन्त इति। अन्नोभयोत्कृष्टतामजानात(नान)स्याऽऽभूतसंप्लवं स्थानममृतशब्दादिवाच्यमेव निःश्रेयसं तदाऽपि सात्त्विकवृत्त्यभिव्यक्त आत्मैवान्यस्य सुखस्याभावात्। न ह्येतन्निरयान्यतमानाकाङ्क्षी प्रेक्षाकारी विद्यते। अतस्तु नियमेन कर्तव्यस्य कर्मणोऽधिकार्थंनुशयानुसा-

---

१ क. ग. छ. ठ. ण. तथापि॰।

रेण सहकारिगुणतरतमभावेन नियतमेव फलं विद्यमानं न केनापि त्यज्यते । कुतः, प्रमाणात् । यतस्तानि कर्माणि शब्दलक्षणानि धार्यन्ते । शब्दो निरपेक्षा विधिप्रत्ययश्रुतिः । विधिर्हि विधेयकर्मणि फलसाधनतां विना न पर्यवस्यतीति भावः । विधिरित्युक्ते वाक्यमपि स्यात्तत्रापि विधिशब्ददर्शनात्तत्समभिव्याहारात्मकं न शब्दमात्रं स शब्दो लक्षणमन्यार्थव्यावृत्त्या प्रमाणं येषां तानि विधिलक्षणानि । कर्माणीत्युक्तेऽपि पुनर्वचनं वाक्याय फलासंबन्धे निवारणार्थम् । कथम् ।

इत्थम्—कर्मसाध्यं फलं श्रेयो निश्चितं नियतानि तु ।
कर्माणि विहितान्येव विधिश्रुत्याऽनपेक्षया ॥
तथैव फललाभान्न वाक्यभेदः प्रसज्यते ।
विधिश्रुत्यैव सर्वत्र भावनैवेष्टसाधनम् ॥
गम्यतेऽन्यत्र वाक्येन तदेवेष्टं विशिष्यते ।
वाक्यबोध्ये यदुद्देश्ये द्वे यत्र स्तस्तदैव तु ॥
वाक्यभेदो भवेन्नायं श्रुत्यैकोद्देश्यबोधने ।
इष्टसाधनतावेदिविधिश्रुत्येकगोचरः ॥
भावनाऽपीष्टसाध्याय साकाङ्क्षाऽनिष्टरूपिणम् ।
धात्वर्थमाददानैव निराकाङ्क्षा भवेत्कथम् ॥
धात्वर्थः करणं सोऽपि नेतिकर्तव्यतां स्वतः ।
गृह्णीयान्नियतेष्वेषा दृश्यमाना विरुध्यते ॥
प्रायश्चित्तेन जन्ये हि पाप्मनाशे प्रवर्तताम् ।
नाजन्ये करणानिष्टाभावे पूर्वमपि स्थिते ॥
शब्दान्तरानवच्छेदादिष्टमिष्टमसावधि ।
सकृच्छ्रुत्या वेदितं तदभ्यासैर्न विरुध्यते ॥
औदासीन्येन विहितं यथा वैदिककर्मणि ।
फलमभ्यासतः प्राप्यं सामर्थ्यादेवमत्र हि ॥
श्रुत्या पदान्तरवशान्नाभ्यासाविहितं तु यत् ।
तत्तथैव कृतं कर्म निःश्रेयसकरं परम् ॥
अवश्यं भवताऽप्येषां नियतानां मुमुक्षुणाम् ।
कर्तव्यताऽङ्गी क्रियतेऽन्यथा मोक्षः कथं भवेत् ॥
दुरितैः प्रतिबद्धो हि न कर्मशतकैरपि ।
जायतेऽतस्तेभ्य एव निःश्रेयसमपीष्यताम् ॥
यद्यन्येभ्योऽपि जायेत कर्मभ्यो न निवार्यते ।
तेषामकरणे नास्ति दुरितं फलघातकृत् ॥

निवतानां तूभयथाऽप्युपकारोऽस्त्वनाविलः ।
फलस्योक्तिस्तु या पूर्वं संसिध्यादिपदेरिता ॥
साऽपीष्टा श्रुतितः प्राप्तफलस्यास्यानुवादतः ।
श्रुत्या प्रोक्तं कर्मणां यत्फलं निःश्रेयसं स्थितम् ॥
एवं शब्दोदितान्येव ज्ञात्वाऽध्ययननिर्णयैः ।
धार्यन्तेऽध्येतृभिः सर्वैरनुष्ठानप्रसिद्धये ॥

तथा च श्रुत्यैव बोधितस्य न पदान्तरापेक्षा येन वाक्यमात्रमापन्ने वाक्ये भेदः स्यात् । तदुक्तं पार्थसारथिमिश्रैः—

ननु च—निमित्तफलसंबन्ध एकवाक्येन युज्यते ।
उद्देश्यद्वयसंबन्धे वाक्यभेदः प्रसज्यते ॥ इति ।

प्राभाकरोक्तमाशङ्क्योक्तम्-उच्यते—

द्वाभ्यां विधेयसंबन्धे वाक्यभेदः प्रसज्यते ।
उद्देश्येन निमित्तेन विधेयस्य न संगतिः ॥ इति ।

विवृतं च तेनैव विधेयस्य द्वाभ्यां संबन्धे वाक्यभेदो भवति । न चेह तथा विधेयस्य कर्मणः फलेन संबन्धः कर्तव्यताया निमित्तेन । न चैवं सति वाक्यभेदो भवति । साकाङ्क्षत्वाच्च, भवति ह्यस्मिन्सतीदं कुर्यादित्युक्ते किमर्थमित्याकाङ्क्षा । तत्रैवमर्थमिति संबध्यमानं फलं न वाक्यं भिनत्ति । समानजातीयं ह्युद्देश्यं वाक्यं भिनत्ति । यथा यस्य पिता पितामहः सोमं न पिबेदिति निमित्तद्वयं, यः प्रजाकामः पशुकामः स्यादिति फलद्वयम् । तस्मान्न वाक्यभेद इति विवृतम् । ननु तर्हि काम्यं कर्म निमित्तफलोद्देशेन विधीयमानं न वाक्यभेदात्प्रयोग-भेदमापादयेदिति चेत् । न । सत्यामिच्छायां कामनया प्रवृत्तिरसत्यां न, नियते तु नियमे-नातो विरोधेऽप्येकवाक्यता न बलात्क्रियत इति श्रुतनानावाक्ययोर्विद्यमानवाक्य-भेदात्प्रयोगभेद एव । प्रकृते तु विनियोक्तृतया विधिप्रत्ययश्रुत्यैवान्विताभिधायिन्वा भावना फलं च तत्संबन्धश्च समसमयमेव बोध्यन्ते तदुत्तरकालं वाक्येन निमित्तसंबन्ध इति स एकेनैव वाक्येन भवतीति न पूर्वस्य त्यागः । अत एवापि प्रत्यवायपरिहा-रार्थत्वं वाक्यविमतं श्रौतमिष्टसाधनत्वं न बाधेत विरोधात् । अथ यदुक्तं साध्यान-पेक्षणादिति तदपि परिहृतम् । आकाङ्क्षा ह्यन्विताभिधीयमानप्रत्ययार्थान्वये नाङ्गं किंतु वाक्ये । अस्ति चाऽऽकाङ्क्षाऽपि पूर्ववृत्तसंबन्धे साऽनेन बाध्यत इत्युक्तमेवैतत्सूत्रा-वयवेनेति । नन्वज्ञानकृताद्बन्धाज्ज्ञानेन मुक्तिरिति युक्तं न कर्माण्यपि प्रमाकरणानी-त्याशङ्कानिरासार्थमेतदेव सूत्रं योज्यम् । तानि निःश्रेयससाधनानि धार्यन्तेऽवधार्यन्ते । कुतः, यतः शब्दा विविदिषन्तीत्यादयो विविदिषाद्युत्पत्तिद्वारा निःश्रेयससाधनत्वे

प्रमाणानि । कर्मणामप्रामाण्येऽपि निःश्रेयससाधनप्रमाणोपकारकत्वान्निःश्रेयससाधनानीत्यवधार्यत इति भावः । ननु वेदेऽथवा सूत्रे मुमुक्षुर्दर्शपूर्णमासाभ्यां यजेतेत्येवंरूपतया कुतो न निबद्धापी(नी)त्याशङ्कानिवारणमनेनैव कार्यम् । यादृशैः शब्दैर्लक्षितानि तानि तैरेव धार्यन्ते तदैव श्रेयःसाधनानि तानि विदित्वा तदेवानुष्ठितं फलाय नान्यथेति । तथा च श्रुतिः–यदेव विद्यया करोति तदेव वीर्यवत्तरं भवतीति । क्वचिद्विधायकं वाक्यं क्वचित्संज्ञा क्वचिदनुवादमात्रं क्वचिद्द्रव्यदेवतासंबन्धमात्रं क्वचिदालभतिः क्वचिन्निर्वपतिरेवमादिभिः शब्दैः प्रतिपादितानि तानि तथैव तत्तच्छब्दलक्षितान्येवास्माभिर्निबद्धानि । अत एव वेदोऽप्येवं नोपालम्भनीयोऽध्ययनविधिना यादृशो दृष्टः श्रेयःसाधनतया वाऽध्यापितस्तादृशस्यैवार्थग्रहणं फलायेत्यप्यावेदितमिति वेदं व्याख्यातुमेव भवामो न तूपालब्धुमिति ।

न तु (नु) त्रिभिर्वेदैरित्यत्र स्मार्ताचारलक्षणकर्मणां विधायकब्राह्मणमन्त्रात्मको(क)वेदो (दे)न प्रामाण्यं नास्तीत्युक्तं ततस्तेषां न श्रुत्या विधानमिति न विधिलक्षणकर्मत्वं नाप्यावश्यककर्मत्वमतोऽव्यापकमत आह—

**वैदिकानाꣳ शब्दानाꣳ स्मृतिग्रहणानि लौकिकानि ।**

तानि शब्दलक्षणानि धार्यन्त इति पूर्वानुवृत्तिः । लौकिकान्यपि यानि कर्माणि तानि तादृशानिःश्रेयससाधनानि शब्दलक्षणानि धार्यन्त इत्यन्वयः । ननु तथा लौकिकेषु श्रुत्यभाव इत्युक्तं तत्राऽऽह–वैदिकानामित्यादि । मन्त्रब्राह्मणरूपस्य वेदस्यैकदेशभूताः केचित्क्वचिन्मन्त्रा एव क्वचिद्विधय एव क्वचिन्नोभयं किंतु वैतानिककर्मप्रकरणगतार्थवादमन्त्रावयवा एव प्रसङ्गेन सिद्धार्थानुवादिनः । ते वैदिकाः शब्दास्तेषां सार्थानां या जायन्ते स्मृतयो मन्वादीनां सर्ववेददर्शिनां ताः स्मृतय एव ग्रहणानि प्रमाणानि येषां तानि तथा । प्रकीर्णानां प्रकरणे पाठाभावादेकवाक्यतयैकं कर्म बोधयितुमसमर्थानां यदेकत्रोपसंहारः शब्दानां स न पाठेनास्मदादिभिर्गृह्यतेऽतो मन्वादिभिरपि नैकत्र गृह्यते, ततस्तेषामपि यतस्ततो व्यस्तानां स्मृतय एव जायन्ते ताभिरेकत्र संकल्प्य न तान्येव शब्दरूपाण्येकत्र धार्यन्ते तेषां स्वारस्येन वाक्यार्थानवबोधकत्वात्तैर्मन्वादिभिर्न्यायतो मीमांस्यमानानां कर्मणां यज्जायते निर्णयरूपं ज्ञानं तदेव प्रमाणं येषु तानि पश्चात्स्मृत्याऽऽचारेण वा प्रवर्तितानि मन्वादिलोकैर्विमर्शकारिभिर्लोकयन्ति विमृशन्त्यर्थान्वैदिकांस्ते तथा । ते हि न्यायार्षज्ञानाभ्यां वेदमूलाभ्यां सर्ववेदार्थनिर्णयकर्तारो नान्ये । अतः स्मृतय एव निर्णयरूपस्य ग्रहणस्य हेतव इति स्मृतय एव ग्रहणानीत्युक्तम् । *तत्र । (त्रा)प्रमोका(हा) विमर्शा वा स्मृ-

*अत्र तत्राप्रमोहा इत्यपेक्षितमिति प्रतिभाति ।

तयस्ते साध्यसाधनत्वावेदका इत्यर्थः। यद्यत्र शब्दशब्देन श्रुतिर्विवक्ष्येत तदा पूर्वेणैव सिद्धेरेतदर्थं न सूत्रान्तरमारम्भणीयं स्यात्। न चोच्छिन्नश्रुतित्वाद्याऽऽशङ्कायां सूत्रान्तरारम्भ इति वाच्यम्। यैर्दृष्टाः श्रुतयस्तान्प्रति श्रौतलौकिककर्मविभागो न स्यात्। न च नित्यानुमेयश्रुतिप्रतिपादनार्थमारम्भ इति वाच्यम्। वैदिकानां शब्दानामिति च विरुध्येत। न च नित्यानुमेया एव वेदाः केऽपि सन्तीति मतं गुरोर्मतमिति वाच्यम्। गुरुगुरोर्न तथेति पूर्वतनं गुरुमतमेवेत्युपेक्षणीयमित्याचार्याभिप्रायः। उक्तं च पार्थसारथिमिश्रैः—

> यद्यप्यनुमिताद्वेदाल्लौकिकोऽपि तु वैदिकः।
> प्रत्यक्षवेदविरहान्नैवासौ सदृशो मतः॥

ननु सोऽपि वेदः केषांचित्प्रत्यक्ष एव नित्यानुमेयमूलनिराकरणात्। सत्यं, तथाऽप्यसदृश एव। कथं, वैतानिककर्माधिकारे त्रयी प्रवर्तते। तन्मध्ये तु प्रसङ्गादवैतानिकं किंचिदुच्यत इति नित्यसापेक्षत्वाद्वेदत्तस्य गुरुकुलमितिवत्स्मृतिग्रहणानीति समासः। एतेन श्रौतानि कर्माणि तानि न लौकिकैः शब्दैर्धार्यन्ते किं तु यथापठितैः कठिनैरपि धार्यन्त इत्युक्तमर्थात्तदेव पूर्वसूत्र एव व्याख्यातम्। एतदेवोपजीव्य वेदे विधानत्रयमुक्तमस्माभिर्व्याख्यातं ज्ञेयम्।

> ननु श्रुत्यैव सर्वत्र फलमिष्टं हि लभ्यते।
> तस्य वाक्योदितं तत्तु न विवक्ष्यं विशेषणम्॥
> उद्देश्यस्य च पूर्वेण निराकाङ्क्षस्य यद्वदः।
> विशेषणं विवक्ष्येत भवेद्वाक्यभिदुद्धता॥
> न साध्यत्वप्रतीतिस्तु जायते तैः पदैः क्वचित्।
> स्वर्गकामादिकैः सर्वैः श्रौतसाध्याविशेषकैः॥
> विशिष्टशिष्टमप्यर्थमाचष्टे तत्पदं न हि।
> कर्तुर्विशेषणत्वेन प्रथमान्तं फलान्वयि॥
> ग्रामकामाऽऽगच्छ भुङ्क्ष्व चैवं स्यादुपलक्षणम्।
> अथवा भूतभव्यानामेकत्राप्यन्वये सति॥
> भूतं भव्यायोपदेश्यमिति न्यायाद्गुणे विधिः।
> स्वर्गस्य सुखरूपस्य साधनैश्चन्दनादिभिः॥
> यागो[1] हि साध्यतां तस्मात्सर्वकर्मफलं स्थितम्।
> निःश्रेयसं चैकमेव नान्यत्फलमसंगतेः॥

---

१ क. योगो।

एवं प्राप्तेऽभिधीयते—

कर्मणाऽभ्युदयोऽकर्मण्यप्रत्यवायोऽनियतानां तु ।

[तु]ना पूर्वपक्षव्यावृत्तिः । अनियतानां कर्मणाऽनुष्ठानेन फलं भवति । येषामननुष्ठाने च न प्रत्यवायः श्रूयते ।

इष्टसाधनताज्ञानमात्रादिष्टं प्रतीयते ।
साध्ये तन्मात्रतो नैव प्रेक्षाकारी प्रवर्तते ॥
न च तत्र निमित्तेन प्रवृत्तिस्तस्य चाश्रुतेः ।
अतस्तान्यनियतत्वाद्दोषाकारिण्यकर्माणि ॥
आवश्यक्यामसत्यां तु प्रवृत्तौ स्वेष्टसाधनम् ।
बुद्ध्यैव हि प्रवर्तेत संख्या वाऽत्रान्यया क्वचित् ॥
एवं प्रवृत्तिसिद्ध्यर्थं वाक्यार्थो यद्विशेषणम् ।
गृह्णदिष्टं न वाक्यस्य भेदं कुर्यात्तु कुत्रचित् ॥
तस्मात्तेषामनुष्ठानाज्जायतेऽभ्युदयः फलम् ।
स्त्रीकामो वृणुयाद्दारानिति लौकिकवाक्यतः ॥
वरणेनैव दाराणां प्राप्तिरुक्तेति गम्यते ।
पूर्वप्रकारतो नैव संगतिः पदयोर्भवेत् ॥

आह च—

स्वर्गकामो यजेतेति द्वे पदे चेद्विधायके ।
परस्परेण संबन्धो नानुवादेऽपि युज्यते ॥
अतोऽनूद्य पदेनैकेनापरेण विधीयते ।
यदि तत्रैव संबन्धस्ततो जायत नान्यथा ॥
अनूद्य यदि यागं तु स्वर्गकामो विधीयते ।
कामनायास्तथा यागाददृष्टं परिकल्पते ॥
स्वर्गकामं त्वनूद्यार्थं यदि यागो विधीयते ।
तस्योपकारकत्वेन ततः स्वर्गस्य साध्यता ॥
प्रयत्नरूपो यागोऽयं निष्फलः स च नेष्यते ।
विधेयोऽपि हि साध्यस्य साधनत्वेन जायते ॥
स्वर्गः साध्या नान्यतरत्साध्यं किंचिदपीष्यते ।
प्रयत्नरूपो यागोऽपि तेन स्यात्तस्य साधनम् ॥
उद्दिश्य स्वर्गकामं तु स्फुटे यागविधौ सति ।
एकवाक्यगतः स्वर्गस्तेनैवेह प्रसाध्यते ॥

साध्यं नान्यद्धि यागस्य न चान्यत्स्वर्गसाधनम् ।
साध्यसाधनसंबन्धस्तेनेष्टः स्वर्गयागयोः ॥ इति ॥

अश्रुतानुष्ठाननिमित्तानां कर्मणामनियमेनेच्छायामनुष्ठानमनिच्छायां नेति तान्यनियतानि तेषामकर्मा(र्म)ण्यननुष्ठाने न प्रत्यवायो भवति । तस्मादवश्यं वाक्येनैवाभ्युदयलक्षणं यद्यत्र विहितं तत्तत्र कर्मणोऽनुष्ठानेन भवेदित्यावेद्यत इति सूत्रार्थः ।

नियतानामननुष्ठानेऽपि प्रत्यवाय उत्पद्यत इत्यर्थादुक्तम् । तदयुक्तम् । सत्सु निमित्तेषु कर्तव्यमेवेत्येतावदेवावगम्यते न तु प्रत्यवायजनकत्वमननुष्ठानस्य प्रत्यवायजनकत्वं च निषिद्धक्रियायाः । न चाननुष्ठानं क्रिया तस्य प्रागभावरूपत्वात् । न च तस्य निषेधः शक्यो विहितक्रियायाः प्रागभावस्यानादित्वेनोत्पत्त्यप्राप्तेस्तत्प्रागभावपरिपालनेऽपि न निषेधो निषेधस्याश्रवणात् ।

न च—' विहितस्याननुष्ठानान्निषिद्धस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥ '

इति विहिताननुष्ठानभावस्यापि पापजनकत्वमस्तीति वाच्यम् । नहीयं राज्ञामाज्ञा तदेवायुक्तमित्युक्तम् । तस्माच्च नाननुष्ठाने प्रत्यवायो नापि नियतकर्मत्वं सिध्यतीति प्राप्तेऽभिधीयते—

**अकर्मणि दोषो येषां लोकेऽकर्मण्युपालम्भस्तानि नियतानि ।**

यथा येषां पालनानां प्रतियोगिभूतेऽकर्मणि निषिद्धक्रियारूपे दोषः प्रत्यवायापूर्वमिति तानि प्रागभावपरिपालनरूपाणि कर्माणि नियतानि नियमेनानुष्ठेयानि नियतफलानि च तथा येषां विहितानामकर्मणि कर्मणो विरुद्धे प्रागभावपरिपालनरूप उपालम्भो निन्दा लोके स्मृतिशिष्टरूपे तान्यपि नियमेन कर्तव्यानि नियमफलानीत्यर्थः । एतदुक्तं भवति—यथा निषिद्धक्रियाया अनुष्ठाने दोषः प्रागभावपरिपालने च फलं तथा विहितक्रियाया अपि नियमविधानादनियमव्यावृत्त्याऽवश्यंभाविनि प्रतिषेधे सति तेन निवारिते प्रागभावपरिपालनरूपे कर्मण्येव गर्हया दोषोऽनुमीयते । न वा कश्चित्कालो मनोवृत्त्या त्वव्याप्तोऽस्ति प्राणवृत्त्या सुषुप्तेरपि व्याप्तत्वात्तस्मान्मनोवृत्तिभिः प्राणवृत्तिभिश्च बाह्यमकुर्वतोऽपि सर्वदाऽस्त्येव क्रिया । सा विहितप्रागभावव्याप्ता प्रत्यवायजनिकेत्यतोऽन्या तु सुतरामिति । ननु नियतफलानाकाङ्क्षिणः कस्यचित्किं नियमेनानुष्ठानमुक्तमनियमेनेति फलानाकाङ्क्षिणो न नियम इति प्राप्ते नियतानीत्येवाकरणेऽनिष्टं स्यात्तद्धियाऽपि नियतेषु तर्हि सति निमित्ते यागं कुर्यादित्येव संबध्यते तेन नेतिकर्तव्यताकाङ्क्षेति विगुणमेव कार्यमिति प्राप्नुयात् । किं च, न हि सर्वत्र यावज्जीवशब्दोऽस्ति न च गर्हयाऽनुमानं कर्तुं शक्यम् । उत्सर्गोऽपि त्रिशब्देभ्यो

जीर्णतायाश्चोर्ध्वं दृश्यते। तेन कथं केषां नियतता कथं चानुष्ठानमिति न ज्ञायते। उच्यते—नियतता तु येषां फलं न चोद्यते सूत्रे तेषां नियतताऽऽधानप्रभृति सूचिता। वसन्ते वसन्त इत्यत्र सोमेऽपि प्रयोगभेदेन सर्वकामा(मत्वा)न्नित्यस्य नियतता। अनुपक्रान्तेष्वपि प्रतिनिधेर्वक्ष्यमाणत्वादाधानादौ नियतेऽप्यङ्गप्रयोगकथनात्प्रायश्चित्तेन वैगुण्यपरिहाराभिधानाद्यथोपपन्नाङ्गानुष्ठानेन नित्यसिद्धिरिष्टेति गम्यते। दर्शपूर्णमासयोर्यावज्जीवशब्देन स्पष्टीकृता। आधानं विना न कस्याप्यारम्भस्तस्यैव निःश्रेयसफलेषु प्रथमपरिगणनात्। आधानादग्निहोत्रं दर्शपूर्णमासौ सोमेज्या ब्राह्मणस्य नियतानीति वदिष्यति। तत्राऽऽधानाकरण उपपातकं स्मृतौ तथाऽग्निहोत्रादिषु यस्य वेदश्च वेदिश्चेत्यादिना स्मृतिषु। य आ तृतीयात्पुरुषात्सोमं न पिबेदित्यादिश्रुतिष्वपि सर्वत्र प्रायश्चित्तविधानादुपालम्भान्नियततेति सूचितम्। यावज्जीवनादिनिमित्तान्यपि शास्त्रान्तराज्ज्ञेयानि। एतत्सर्वं कात्यायनेन सम्यग्विवृतम्। तथा हि—फलयुक्तानामारम्भे याथाकामी फलार्थित्वात्। फलार्थिनो हि कर्म चोद्यते। तस्माद्याथाकाम्यं प्राप्तम्। न, नियमनिमित्ताग्निहोत्रदर्शपूर्णमासदाक्षायणाग्रयणपशुषु प्रवृत्तेः। नियमेषु न याथाकाम्यम्। यस्मान्नियोगतस्तत्र शास्त्रं प्रवर्तयति। सत्यवादी स्यादधःशायी स्यादिति च। पक्षे चैतन्नियमशास्त्रं प्रवृत्तम्। प्रागेव यस्माद्याथाकाम्यं प्राप्तं यदि नियोगतो नानुष्ठेयं सत्यवदनशासनमनर्थकमेव स्यात्। तस्मान्नियमेषु न याथाकाम्यम्। निमित्तेऽपि यद्विधीयते तत्रापि न याथाकाम्यं निमित्तोपदेशेन विधानाद्गृहदाहेऽग्नये क्षामवते निर्वपेदिति। यदि क्षामवत्यादिषु याथाकाम्यं स्याद्गेहदाहग्रहणमनर्थकमेव स्यात्। प्रागपि हि गेहदाहग्रहणाद्याथाकाम्यं सिद्धमेव। तस्मान्नैमित्तिकेऽपि न याथाकाम्यम्। अग्निहोत्रेऽपि न याथाकाम्यं यावज्जीवमग्निहोत्रं जुहुयादिति श्रूयते। ननु चाग्निहोत्रं जुहुयात्स्वर्गकाम इति तत्र प्रकरणादस्यैवैष कर्मणो धर्मस्ततश्च याथाकाम्यं भवति। नेत्युच्यते। प्रकरणादेष कर्मधर्मः स्याद्यावज्जीवता। तत्रापि लक्षणया कर्माभ्यासो लक्ष्यते। कर्तृधर्मे पुनर्जुहुयादिति स्वार्थ एव वर्तते नाभ्यासं लक्षयति। जीवने निमित्ते त्वज्ञातो होमो विधीयते। तस्मात्कर्तृधर्मो यावज्जीवकता। ततश्च तया याथाकाम्यम्। यत्पुनरुक्तमग्निहोत्रं जुहुयात्स्वर्गकाम इति स पृथक्काम्यप्रयोगः। अयमपरो जीवननिमित्त इति तत्रैतद्भवति काम्येऽपि प्रयोगे क्रियमाणे नैयमिकः कृत एव भवति। सोऽप्यग्निहोत्रप्रयोग एवेति। दर्शपूर्णमासादिष्वप्येवमेव द्रष्टव्यम्। तत्रापि हि काम्यचोदना यावज्जीवचोदना च। दाक्षायणग्रहणं काम्यसंबन्धाशङ्कया। आग्रयणेष्ट्यामपि शाखान्तरान्न याथाकाम्यम्। स्वशाखायामपि नवं प्रकृत्याऽऽमनन्ति—'अनयोर्वा अयं द्यावापृथिव्यो रसोऽस्य रसस्य हुत्वा देवेभ्योऽथ नवमश्नाति'। [इति] अशनस्य च नित्यकर्तव्यता। न च देवेभ्यो हुत्वाऽसौ नित्यकर्तव्यता क्रियते। अतो नित्यता गम्यते। अपि च प्रायश्चित्तविधानमत्र भवति—अनिष्ट्वाऽऽग्रयणेन नवस्या-

श्रीयादिति। तस्मादाग्रयणेऽपि न याथाकाम्यम्। पशावप्येवम्। निरूढं प्रकृत्याऽऽमनन्ति तं वै संवत्सरो नानीजानस्यातीयादिति। सोमे वैकेषां ज्योतिष्टोमस्य निमित्तम्। यथा यावज्जीवमग्निहोत्रस्य। एके पुनरन्यथा वदन्ति। ज्योतिष्टोमेन स्वर्गकामो यजेतेति फलयुक्ता चोदना। तस्मादिह याथाकाम्यमा(म)म्नोच्यते पृथक्प्रयोग एवायम्। एकः स्वर्गकामप्रयोगोऽपरो नैयमिकः कर्तृधर्म इति। एवं च कृत्वा गवामयनश्रवणम्। कथमेषां सोमोऽनन्तरितो भवतीति। सवनैरिति। सवनैरिति ब्रूयादिति। यदवश्यं कर्तव्यं तस्य कारणान्तरेणानन्तराय उच्यते। तस्मादत्रापि न याथाकाम्यम्।

तथा च स्मरणम्—

> कृतानां पशुसोमानां निष्कृत्यर्थमसंभवे।
> इष्टिं वैश्वानरीं नित्यं निर्वपेदब्दपर्यये॥

चातुर्मास्येषु चतुर्मुखश्रुतेः। चातुर्मास्येषु च न याथाकाम्यम्। कुत एतत्। ऋतुमुखश्रुतेः। ऋतुमुख ऋतुमुखे चातुर्मास्यैर्यजेतेति श्रूयते। किंच, नियतसहपाठात्। अपि च नित्यैः सह चातुर्मास्यानां पाठो भवति त एतान्यज्ञक्रतूंस्तेनिरेऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुबन्धं सौम्यमध्वरमिति। नियतसहपाठात्तत्तुल्यता गम्यते। दर्शनाच्च। दृश्यते चायमर्थो यथा नित्यानि चातुर्मास्यानि। गवामयनयाजिनं प्रकृत्योच्यते कथमेषां चातुर्मास्यान्यनन्तरितानि भवन्ति। दीक्षितत्वात्तेषां प्रतिषेधे सति कारणान्तरेण चातुर्मास्यानामनुग्रहं दर्शयति पयस्ययेति ब्रूयादिति। यच्च नामावश्यं कर्तव्यं तस्य कारणान्तरेणानुग्रहो भवति। अपरे तु सर्वकर्मविषयं दर्शनं मन्यन्ते। कथमेषामग्निहोत्रमनन्तरितं भवति। कथमेषां पौर्णमासं हविरनन्तरितं भवत्येवमादि सर्वत्र कारणान्तरेणानुग्रहो दृश्यते। नोत्सर्गयोगात्। न च नित्यानि चातुर्मास्यानि। उत्सर्गेण हि तानि युज्यन्ते। यन्नाम नित्यं कथं तस्योत्सर्ग इति। स्यात्त्रिंशच्छब्दवत्। भवेद्वा नित्यत्वेऽप्युत्सर्गो यथा दर्शपूर्णमासयोस्त्रिंशतमेव वर्षाणि यजेतेति। अपि च नित्यमुच्यते यदवश्यं कर्तव्यम्। द्विप्रकारं कर्म नित्यं काम्यं च। तत्र नित्यं प्रकृत्य चिन्त्यते—किं सगुणमेव कर्तव्यमुत विगुणमपीति। गुणाम्नानात्सगुणमेवेत्येवं प्राप्त आह विगुणे फलनिर्वृत्तिरङ्गप्रधानभेदात्। विगुणेऽपि नित्ये कर्मणि फलनिर्वृत्तिर्भवति। कुत एतत्। यतोऽङ्गानि प्रधानानि वा भिन्नानि। इह यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति दर्शपूर्णमासयोरेव कर्तव्यतोच्यते नाङ्गानामतश्च प्रधाने कृते यत्फलं तत्सिद्धं भवत्येव। धात्वर्थमात्रमेव कर्तव्यम्। न तेनान्यस्य कर्तव्यता। यत्र

---

१ ख. चैकेषां।

च साधनत्वेन यागस्य श्रवणं तत्र साध्यापेक्षा भवतीतिकर्तव्यतापेक्षा वा। न चात्र साधनत्वम्। तस्माद्विगुणादपि फलं भवति। अङ्गाम्नानं तर्हि किमर्थम्। काम्यप्रयोगविषयमित्यदोषः। किंच प्रायश्चित्तविधानाच्च। विगुणेऽपि नित्ये प्रायश्चित्तं विधीयते भिन्ने जुहोति स्कन्ने जुहोतीत्येवमादि। यदि हि विगुणं फलं न साधयेत्, प्रायश्चित्तविधानवैयर्थ्यप्रसङ्गः स्यात्। तथा च दृष्टं विगुणमपि नित्यं कर्म यथाकथंचित्परिसमाप्यमानम्। व्यत्ययो म स्यात्, केन जुहुयादिति व्रीहियवाभ्यामिति। यद्व्रीहियवौ न स्यातां केन जुहुयादिति या अन्या ओषधय इत्येवमाद्यभिधाय पुनरुपसंहरति न वा इह तर्हि किंचनाऽऽसीदथैतदवहूयते सत्यं श्रद्धायामिति। यथाकथंचित्परिसमाप्तिं दर्शयति। न चैते विषयो विधिविभक्तेरभावात्। तस्माद्विगुणं नित्यं फलं साधयत्येव। अपरेऽन्यथा व्याचक्षते—गुणाम्नानसामर्थ्यान्नित्यं सगुणमेव कर्तव्यम्। सूत्रव्याख्या च विगुणेऽपि नित्ये फलाभिनिर्वृत्तिर्भवत्येव। यदि नाम दैवान्मानुषाद्वा प्रतिबलात्सर्वाङ्गोपसंहारो न शक्यते कर्तुम्। कतिपयाङ्गोपसंहारेणापि कर्तव्यमेव। यथा शक्नुयादित्युपपद्यार्थोऽत्र परिकल्पते। सर्वदा कर्तव्यं सगुणं चेत्यशक्यमेवावश्यंभावि दैवान्मानुषाद्वा प्रतिबलाद्वैगुण्यमिति। एवं कृत्वा विकृतौ नित्ये कर्मणि प्राकृता पदार्थानुवृत्तिर्दृश्यते। यथा वरुणप्रघासेषु अथाध्वर्युरेवाऽऽहाग्निमग्नीत्संमृड्ढीत्यसंमृष्टमेव भवति संप्रेषितमथ प्रतिप्रस्थाता प्रतिपरैति स पत्नीमुदानयन्निति पत्न्यानयनविधिपरे वाक्येऽग्निसंमार्गप्रैषं दर्शयति। तथा महापितृयज्ञे स यज्ञोपवीती भूत्वाऽऽज्यानि गृह्णातीत्येवं विधिपरे वाक्ये लेखाकरणहरणोत्तरपरिग्रहादीन्पदार्थाननुवदति। यदि हि नित्यस्याङ्गसंबन्धो न स्याल्लेखाकरणहरणाद्यनुवादो नाभविष्यत्। भवति च तस्मान्नित्यानामप्यङ्गसंबन्धः। पशौ च दर्शयति—उत्तरमाघारमाघार्यासंस्पर्शयन्स्रुचौ पर्येत्य जुह्वा पशुं समनक्तीति। पशुसमञ्जनविधिपरे वाक्य उत्तराघारं दर्शयति। यच्चोच्यते न यागेनान्यत्साध्यत इति। आम्नानसामर्थ्याद्दुपात्तदुरितक्षयो वा, उत्पत्स्यदुरितासंबन्धो वा भवत्येव। तस्मान्नित्येऽप्यङ्गसंबन्ध इति कात्यायनाचार्येणोक्तं ज्ञेयम्।

कर्मभिर्निःश्रेयसं प्राप्यमित्युक्तम्। तथा मध्ये वेदनेच्छालक्षणं द्वारं चोक्तं, निःश्रेयसप्रापकं ज्ञानमेवोत्पाद्यं कर्मभिरित्युक्तम्। तत्र कर्मसाध्या यद्यपि जिज्ञासा भवेन्नैतावता ज्ञानसिद्धिरित्याशङ्क्याऽऽह—

**निःश्रेयसबुद्धिः प्रजनसंबन्धापेक्षा।**

निःश्रेयससाधनभूता बुद्धिस्तथा सा च प्रकृष्टो जन आचार्यो ब्रह्मवित्तत्संबन्धमपेक्षते। आचार्यवान्पुरुषो वेदेति श्रुतेः। न कर्मानुष्ठानमात्रेणापि तु वैराग्यादिसंपत्त्या

१ घ. ङ. भ. ञ ड. 'ननसं'।

धर्मप्रश्ने वक्ष्यमाणया । यदाऽऽचार्यमुखाद्धर्मप्रश्नप्रदृश्यमानोपनिषदां परिशीलनं स्याच्छ्रवणादिना तदैव साक्षात्काररूपा बुद्धिरुत्पद्यत इति भावः ।

एवं नियतकर्मणां निःश्रेयसफलताममिधाय यज्ञशब्देन श्रौतकर्ममात्रमेव गृहीतमितिव्युदासार्थं प्रयुक्तेन कर्मशब्देन सूचितं सर्ववर्णाश्रमकर्मणां तादृक्त्वं तदेवोदाहरणमुखेन द्रढयति—

अतिथिपूजागुरुपूजासंनिपाते चाभिवादनम् ।

एतन्नियतमित्यग्रिमेण संबन्धः । सामयाचारिकेषु धर्मेषु व्याख्यास्यमानत्वात्तदुदाहृतानि लौकिकानि, गुरोः समागमे गुरोरभिवादनं, स्पष्टमन्यत् ।

श्रौतमप्रेष्टासाध्यमुदाहरति—

तत्कारितत्वाद्ब्राह्मणराजन्ययोर्वै-
श्यस्य च वेदाध्ययनं तन्नियतम् ।

अध्यापकैस्तद्वक्ष्यमाणमध्ययनं तस्मै कारिता अध्ययनार्थं कारिताः संस्कारितास्तेषां भावस्तेषां संस्कारितत्वं तत्कारितत्वं तस्माद्धेतोर्ब्राह्मणादित्रयस्यैवाध्ययनं तच्च नियतमित्यर्थः । ब्राह्मणादय एव वसन्तादिकालेष्वध्यापकैरध्ययनार्थत्वेन संस्कृता अतस्तेषामेवाध्ययनम् । वक्ष्यति च—अशूद्राणामदुष्टकर्मणां विद्यार्थिनां श्रुतितः संस्कार इति । अयमाशयः—अध्ययनं यद्यपि वैदिकफलार्थिनां फलसाधनज्ञानाय सर्वेषामपि प्राप्नुयात्तथाऽपि च तदुपनीतानामेव विधीयते । उपनयनं वसन्तादिषु कालेषु त्रैवर्णिकानामेवातस्तैर्विनाभूतमध्ययनमपि तेषामेवेति । वैश्यस्यासमासग्रहणं ब्राह्मणेन सह कर्मनिरासार्थं द्वादशाहादौ ।

एवं वर्णत्रयस्याध्ययनं नियतमित्युक्तम् । तेन प्रसङ्गेन मोक्षादिना फलार्थिनामपि त्रैवर्णिकानामपि न सर्वकर्मानुष्ठानमिति दर्शयितुमधिकारिनियममाह—

तेषामेव ब्राह्मणविहिता यज्ञा येषु यज्ञकात्स्न्र्यमविप्रतिषिद्धम् ।

येषु त्रैवर्णिकेषु यज्ञस्य साङ्गस्य कात्स्न्र्यं विद्वत्ताऽर्थवत्ता सवर्णस्त्रीपरिग्रह ऋत्विगादिसंपत्तिर्बाह्या समग्रा तेषामेव यज्ञा न तु परमुखेन पृष्टाऽपि कर्तारो भवन्ति । तथाऽर्थं संपादयिष्यामीति ।

अत एव—' यस्य त्रिवार्षिकं धान्यं स तु सोमं पिबेद्द्विजः ' इत्यादि ।

तथा स्त्री नासवर्णा मन्त्रपाठमात्रवती सत्यधिकृता तेषां त्रैवर्णिकानाम् । स्त्री पुंवच्चेति पुमान्स्त्रियेति च सूत्राभ्यामेकशेषेण तेषां त्रैवर्णिक्यः स्त्रियोऽपि गृह्यन्ते । एवकारः फलकामिनामपि शूद्राणामग्न्याधानादिप्रापकलिङ्गनिरासार्थः । ब्राह्मणेनेति

१ क. ग. घ. छ. ट. ठ. ण. कात्स्न्र्ये ।

स्मार्तधर्माणां शूद्रेऽपि प्राप्तिनिवारणार्थम् । ब्राह्मणेन विहिताः श्रौता एतदेव स्फुटयितुं यज्ञा इत्युक्तम् । यज्ञशब्देन श्रौतत्वेनोपलक्षिता आधानादयः । अयमर्थः श्रूयते—वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्य इति । तेनाऽऽधानाभावाद-नग्निः शूद्रः सोऽग्निसाध्ये कर्मणि कथं प्रवर्तिष्यते । आत्मार्थं चाऽऽधीयन्तेऽग्नयो न परार्था आत्मनेपदं ह्यत्र भवत्यादधीतेति । तेन ब्राह्मणादय एवाऽऽधानेनाग्निमुत्पाद-यितुं समर्था न शूद्रा आधानाभावात् । अतः शूद्रस्यानधिकारः । ननु सन्ति चान्या-र्थानि दर्शनानि यैः शूद्रस्याप्यधिकारो गम्यते । हविष्कृदाह्वानविशेषं प्रकृत्योच्यते-आधावेति शूद्रस्य । तथा व्रतविशेषस्तु शूद्रस्य । तथा पितृमेधेऽष्ठीवद्घ्नं शूद्रस्येति । उच्यते—न शूद्रस्याधिकार इत्युक्तमेव । यानि पुनर्दर्शनान्युक्तानि तानि रथकारवि-षयाणि । रथकारस्य हि शूद्रसंबन्धाच्छूद्रत्वमुच्यते । करिण्यां हि स जातः करिणी शूद्रीदुहितेति । तथा निषादविषयाण्यपि तस्यापि शूद्रत्वात् । अथ वा ब्राह्मणरा-जन्यवैश्यानामेवाध्ययनं श्रूयते—वसन्ते ब्राह्मणमित्यादि । उपनयनं चाध्ययनार्थम् । अतस्तदभावादवैधत्वादनधिकारः शूद्रस्य । अपि च शूद्रस्य प्रतिषेधोऽध्ययने प्रतिश्र-वणे त्रपुजतुभ्यां श्रोत्रपरिपूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीरभेद इति । तस्माद-वैधत्वाच्छूद्रो नाधिक्रियत इति । तदिदमेवकारेणोक्तं यल्लिङ्गान्यथासिद्धिरध्ययनाभावश्च । न च स्त्रीणामङ्गत्वमात्रेण यावदुपयुक्तं वेदाध्ययनं न तु कर्माधिकार इति वाच्यम् । जायापत्योर्न विभागो विद्यते पाणिग्रहणादि सहत्वं कर्मसु । तथा पुण्यक्रियासु द्रव्य-परिग्रहेषु न हि भर्तृविप्रवासे स्त्रिया नैमित्तिके दाने स्तेयमित्युपदिशन्तीति । स्त्रीणाम-प्यधिकारं वक्ष्यत्याचार्यो धर्मेषु । कात्यायनः—ब्राह्मणोऽग्नीनादधीत स्वर्गकामो यजेतेति । विशिष्टलिङ्गश्रवणात्स्त्रिया अनधिकारे प्राप्त इदमाह—स्त्री चाविशेषात्स्त्री चाधिक्रियते । कुत एतद्यस्माच्छ्रूयमाणमपि लिङ्गं न विशेषकं भवत्यतो न पुंसामेवाधि-कार इति । उद्दिश्यमानविशेषणमेतत्स्वर्गकामो यजेतेति । विधिसंस्पर्शाभावादविवक्षितं लिङ्गं संख्या च । यत्र पुनर्विधिसंस्पर्शोऽस्ति तत्र लिङ्गं संख्या च विवक्षिते । यथा पशुमालभेतेत्यत्र तद्विशेषणं पुंस्त्वमेकत्वं चोभयं विधीयते । विशिष्टपश्वालम्भोऽन्यथा न भवति । तस्मात्स्त्रिया अप्यधिकारः । दर्शनाच्च । दृश्यते चायमर्थो यथा स्त्रिया अप्यधिकार इति । मेखलया यजमानं दीक्षयति योक्त्रेण पत्नीमिति । योक्त्रविधि-परे वाक्ये पत्न्या अप्यधिकारं दर्शयति । सा च पुंसा सहाधिक्रियते न पृथक्क्रिया फलं च सकलमेकैकस्य भवति । न विभागेन स्वर्गकामो यजेतेत्यनेन यथा यजमानोऽभि-धीयत एवं पत्न्यपीति । यथा यागेन यजमानः फलं साधयति तथा पत्न्यपीति । वाक्यान्तरेण सह क्रिया तयोस्तथा च श्रवणम्—

१ क. ग. ठ. ण. दर्शितानि । २ ख. °सत् । आविशेषात् । यस्मा° ।

'नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् ।
शुश्रूषयति भर्तारं तेन स्वर्गे महीयते' ॥ इति ।

तस्मादुपनीताधीतानां त्रैवर्णिकानां तज्जातिस्त्रीणां च ब्राह्मणविहितेष्वाधानाग्निहोत्रदर्शपूर्णमासादिकर्मस्वधिकार इति सिद्धम् । ननूक्तेन न्यायेनोपनयनाध्ययने अपि स्त्रियाः प्राप्नुतो ब्राह्मणमित्यादिषु लिङ्गाविवक्षणात् । सत्यम् । उपनयनस्थाने नारीणां पाणिग्रहणमेव संस्कारत्वेन स्मर्यते । विवाहानन्तरमध्ययनं यावदर्थमेवार्थप्राप्तत्वात्तस्या अन्यमन्त्रोच्चारणे शूद्रवदेव प्रतिषेधादेवं निषादरथकारयोरपि ।

तदुक्तम्—'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा । ' इति ।

किंचाष्टवर्षो ब्राह्मण उपयच्छेत्सोऽधीयीतेति कर्तृलिङ्गस्य विधेयस्य विवक्षितत्वादुपनयनाध्ययनाभावः ।

त्रैवर्णिकेष्वप्यपवदति केषुचित्—

**यथा द्रव्यवत्ता शरीरकात्स्न्र्यं च ।**

अविप्रतिषिद्धम् । द्रव्यं दायं तद्यस्य विप्रतिषिद्धं नास्ति । दायभाक्त्वेन द्रव्यवत्ता स एव(!) । नास्ति च षण्ढादीनां दायमिति वक्ष्यते । अतस्तेऽशुचित्वेनानधिकारिणोऽति(!) दायप्रतिषेधोऽशुचित्वादेव स्मर्यते । तथा शरीरकात्स्न्र्यमङ्गानुष्ठानं न विप्रतिषिद्धं न विरुद्धं तेषामेव ते यज्ञा नान्येषामन्धपङ्गुमूकबधिराश्रोत्रियाकिंचनानाम् । आज्यावेक्षणविष्णुक्रमणमन्त्रोच्चारणसंबोधनयाजमानदक्षिणासु यज्ञाङ्गेषु विरोधः स्यात् । अनधीतस्यापि त्रिवृदाग्निष्टुत्प्रायश्चित्तत्वेन विहितः साधुवृत्तस्याऽऽधानादिकर्मसाद्गुण्यार्थं ततो भवति तस्याप्यधिकारो नित्यनैमित्तिकेषु च । अकिंचनस्यापि नित्येष्टिपशुचातुर्मास्यसोमेष्वन्वाहार्यमात्रस्य दक्षिणाया विधास्यमानत्वात्प्रतिप्रसवः । तथा मृतभार्यस्य दारकर्माशक्तस्य स्वार्थमाधानं कल्पसूत्रे वक्ष्यते तस्य विना भार्ययाऽपि । कल्पसूत्र एव पक्षे पत्नीं निर्मन्थेन दहन्तीति तत्राप्यग्नयः स्वार्थमेव स्थापनीया अभार्येणापि नित्यं कार्यम् ।

त्रैवर्णिकानामेवाधिकार इति द्रढयति लिङ्गैः—

**येषां च प्रकृतिलिङ्गानि यज्ञाः श्रूयन्ते त्रीन्वृणीते मन्त्रकृतो वृणीते यथार्षि मन्त्रकृतो वृणीत इति विज्ञायते ।**

ब्राह्मणे विज्ञायत इति दार्ढ्यार्थम् । प्रकृतिर्जातिस्तस्या निर्णायकानि लिङ्गानि यज्ञा यज्ञसाधनानि न हि प्रवरमन्येषामस्ति ब्राह्मणादित्रयव्यतिरिक्तानाम् । तत्र पुरोहितादिप्रवरेण राजन्यवैश्ययोर्ब्राह्मणस्य स्वतः प्रवरं स्पष्टम् ।

---

१ घ. ङ. ज. झ. म. ढ. यज्ञे ।

त्रयाणां लिङ्गान्याह—

गायत्रिया ब्राह्मणस्य परिदध्या-
त्रिष्टुभा राजन्यस्य जगत्या वैश्यस्येति ।

इतिशब्दः प्रकारे । एवंप्रकाराण्यन्यान्यपि वेदितव्यानीत्यर्थः ।

एवमधिकारं संभाव्येदानीं कर्मसु नियतान्याह—

तेषामग्निहोत्रं दर्शपूर्णमासौ च नियतौ ।

सहाऽऽधानेन पूर्वभावित्वादकरण उपपातकस्मरणाच्च । अत एव नियतेषु पाठः। तेषां ब्राह्मणविहितानां यज्ञानां मध्ये यावज्जीवमग्निहोत्रं जुहुयाद्यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति नियतनिमित्तताश्रवणात् ।

ब्राह्मणे विशेषमाह—

सोमेज्या ब्राह्मणस्य ।

ऐन्द्राग्नं पुनरुत्सृष्टमालभेतेति तथाऽऽश्विनं धूम्रललाममालभेतेत्यत्र ब्राह्मणस्यैव प्रायश्चित्तत्वेन विधानात्तस्य सोमेज्या नियम्यते । दौर्ब्राह्मण्यव्रात्यत्वपरिहारायाग्निहोत्रं दर्शपूर्णमासौ तु सुतरामित्यर्थः ।

आरम्भनियमविशेषमाह—

आधानादग्निहोत्रं दर्शपूर्णमासौ च नियतौ ।

आधाने कृते दर्शपूर्णमासयोरव्यवधानेनाऽऽरम्भो नियम्यते । सोमेज्या ब्राह्मणस्य नियताऽपि न तस्या आधानाव्यवधाननियमः । चकारोऽन्यतरस्यैव नियमो मा भूदपि तूभयेषामपीति दर्शनार्थः । न वक्तव्यमेतत्तेषां व्यवधानेऽग्निनाशप्रायश्चित्तश्रवणात् । वक्तव्यम् । काम्यार्थे सत्यां कामनायामारम्भोऽसत्यामनारम्भ इति मा भूदित्येवमर्थम्। न च सत्यामारम्भस्तन्निमित्तः कथम् । असत्यां तु नियतानामेव भविष्यतीत्येवमर्थम्। सत्यां तु काम्येनैवाकरणनिमित्तः प्रत्यवायोऽपि परिह्रियत इत्युक्तत्वात्तस्मान्न निःश्रेयसमित्येतावान्विशेषः । तथाऽप्यन्यत एव सिध्यत्येतद्व्यवधानदोषो भवतीति । तर्हि काम्यारम्भे सत्यसत्यां कामनायामत्यागार्थमेतद्भविष्यति । नियतारम्भे यथा यावज्जीवमत्यागस्तथा काम्यारम्भेऽप्यसत्यां कामनायां तेषां त्यागेन नियतारम्भो निषिध्यते । न ह्यारम्भस्याऽऽधानाव्यवहितकालं विनाऽन्यः कालोऽस्तीति कामनात्यागे सायंप्रातः प्रयोगमात्रेण यावदिष्टेन काम्यसमाप्तौ तदनन्तरं प्रयोगा यावज्जीवं निःश्रेयसार्था भविष्यन्तीति न पृथगारम्भनिमित्तं सप्तहोतृहोमादिकमन्वारम्भणीयादिकं कार्यमिति तात्पर्यम् ।

त्रैवर्णिकव्यतिरिक्तयोरप्याह —

**निषादरथकारयोराधानादग्निहोत्रं दर्शपूर्णमासौ च नियम्येते ।**

वर्षासु रथकारोऽग्नीनादधीतेति, तथा—ऋभूणां त्वा देवानां व्रतपते व्रतेनाऽऽदधा-मीति रथकारस्येति च दर्शनादाधानं रथकारजातेराधानोत्पन्नाग्नीनां परार्थत्वादग्निहोत्र-दर्शपूर्णमासनियमस्तथा चैतया निषादस्थपतिं याजयेदिति निषादश्चासौ स्थपतिश्चेति कर्मधारयाभिप्रायेण निषाद इत्युक्तम् । तेनाऽऽपस्तम्बसूत्रे निषादानां स्थपतिस्त्रैवर्णिक एवेति तन्निराकृतमेतन्न्यायशास्त्रसिद्धं तस्येष्टिविधानादाधानमाचार्यो मन्यते । एक-स्याऽऽधानमात्रं नियतं परस्य विकृतेष्ट्युपक्षिप्तमाधानं द्वयोरप्यग्निहोत्रं दर्शपूर्णमासौ च नियम्येते न्यायमतेन निषादस्याऽऽधानं तस्य लौकिकाग्निषु विकृतेष्टिमात्रमवकी-र्णिनो ब्रह्मचारिण इव गर्दभस्येति ।

**तथा जीवपितुः ।**

नियम्येते इत्याकृष्यते । यस्य त्रैवर्णिकस्यान्ययोर्वा योऽयं नियम उक्तः स तु तेषां मध्ये तथा जीवपितुरेव नान्यस्य नियमः । तथा नियताग्निहोत्रदर्शपूर्णमास-कारिणौ जीवौ पितरौ यस्य स तथा । यदि पितरौ जीवतस्तर्हि ताभ्यामाधानादित्रये कृत एव पुत्रस्याधिकारो नान्यथा । तयोरकृताधानयोरन्यतरस्य मरणे सत्यस्त्येवाधि-कार इत्यर्थः । तथा जीवपितुर्भरद्वाजेनाऽऽधानादि निषिद्धं तत्प्रतिप्रसवश्च ।

**उपक्रमादितरे नियम्येरन् ।**

यदीच्छा तदैवोपक्रम्य नियम्यते । न तस्योपक्रमोऽपि बाधादग्निहोत्रवद्दर्शपूर्णमा-सवत् । ब्राह्मणस्य सकृत्सोमेज्यावद्वा । असत्यामिच्छायामनुपक्रमेऽपि न दोषः । अयमभिप्रायः—यथाऽग्निहोत्रे दर्शपूर्णमासयोश्च यावज्जीवशब्देन निमित्ते सति विधानात्सति जीवने निमित्तेऽवश्यकर्तव्यत्वं नैवं पशुचातुर्मास्यसोमेषु यावज्जीवशब्दे-न निमित्तं तत्समाधीयते किं त्वभ्यासान्नियतत्वमुच्येत तथा साभ्यासा आरब्धाश्चेन्न त्याज्या इति । इतरे चातुर्मास्यादयः सोमान्तास्तेषां काम्यानां नित्यानां च सद्भावा-न्नाग्निहोत्रदर्शपूर्णमासवत्काम्यस्योपक्रमेऽप्यत्याग इति नियमः । किं तु नित्यानामुप-क्रमे सति येषां नोत्सर्गविधिस्तेषामत्यागो नियम्यते न तु काम्यस्योपक्रमेऽपि । कुतः, यावज्जीवपदाभावादारब्धस्यासत्यां कामनायां त्यागोऽपि युज्यतेऽन्यस्य पुनरारम्भोऽ-नारम्भोऽपि नियतस्याऽऽरम्भे त्वत्यागं पूर्वाभ्यासस्य निरवधित्वादवधौ चोत्सर्ग इति भावः । प्रमीतपितरौ न तु सति सामर्थ्ये चातुर्मास्याद्यपि चोपक्रमणेऽयमेव नियतत्वे-नाविशेषेण सर्वकर्माणि प्रक्रान्तानि तन्नेतराणीति वक्तव्ये व्यवहितदर्शपूर्णमासया-गावपेक्ष्य तज्जातीयानामेव यागान्तराणां ग्रहणार्थं पुंलिङ्गनिर्देशस्तेनेतरेषां यागानामेवो-पक्रमनियमो न निःश्रेयससाधनानामन्येषां नियतानामपीत्युक्तम् । तेषां तूपक्रम-

स्यापि नियतत्वात् । तथा चायागानामतिथिपूजोपनयनाध्ययनादीनामव्यावृत्तिः । इतरे यागा आग्रयणेष्टिपशुचातुर्मास्यसोमा नित्याः काम्याश्च । तत्रेष्टिपशुसोमाना-मनुत्सर्गाद्यावज्जीवमनुष्ठानमग्निहोत्रवत् । ब्राह्मणस्य सोमेज्या नियता सकृदपि । कथम् । अपुनर्भक्ष्योऽस्य सोमपीथो भवतीति लिङ्गात् । उभयप्रयोगावपि न विरुद्धौ सोमस्य । आग्रयणेष्टौ तूपक्रमादेवाऽऽचार्यस्य नियम इष्टस्तत्स्थाने विहितं नियतमेव काम्यानामपि । यो यक्ष्य इत्युक्त्वा न यजते त्रैधातवीयेन यजेतेत्यसमाप्तौ प्राय-श्चित्तविधानात् ।

## तत्र नित्यस्य द्रव्यस्याभावे सामान्यात्प्रतिनिधिः ।

तत्र तेषु नियतेषु यदि नियतं द्रव्यं व्रीह्यादिकं सोमादिकं न लभ्यते, अभावेऽ-लाभे न तु नाशे । नाशे तु पृथग्वेदेदेवाप्रतिनिधिना तत्स्थानापन्नेन केनापि द्रव्येण नियतं कार्यमेव । आरम्भात्पूर्वमलाभेऽपि नियतं प्रतिनिधिनाऽप्यारम्भणीयम् । प्रक्रान्त-काम्येषु च नित्यस्य विहितस्य द्रव्यस्य साधनभूतस्याप्राप्तौ नाशे वा तत्स्थाने प्रति-निधीयते तत्स्वरूपेण गृह्यते स प्रतिनिधिर्द्रव्यान्तरं ग्राह्यम् । अनियमं निवारयति सामा-न्यात्, जातिसामान्याद्धर्मसामान्यात्सादृश्यादित्यर्थः । अस्मिन्नेवार्थे पूर्वोत्तरपक्षौ कात्या-यनीये—चोदिताभावेऽनारम्भस्तत्सिद्धत्वात्तस्य चोदितस्य द्रव्यस्य चाभावे नाऽऽरब्धव्यं तत्कर्म । कुत एतत् । तदेव हि साधनं तस्य कर्मणः श्रुतं द्रव्यान्तरमश्रुतमतो द्रव्यान्तरेण कर्मान्यत्वं भवति द्रव्यदेवतं हि कर्मणो रूपमिति । एतदेवं काम्ये । अर्थान्नित्ये । कथमिति । नित्येऽपि च श्रुतद्रव्याभावे कर्मान्तरबुद्ध्याऽनारम्भे प्राप्त आह—नियते सामान्यतः प्रति-निधिः स्यात् । नित्ये कर्मणि प्रतिनिधिनाऽऽरब्धव्यं तत्कर्म श्रुतद्रव्यतुल्येन । कुत एतत् । व्रीहिभिर्यजेतेत्यत्र नियममात्रं व्रीहिश्रुतिः । न च नियमानुरो-धेन यावज्जीवश्रुत्युपरोधः शक्यः कर्तुम् । अवश्यं कर्तव्ये कर्मणि नियम-मात्रस्यैवानुपादानं युक्तरूपम् । तस्मात्प्रतिनिधिना तत्कर्म समापनीयम् । कुत एतत् । श्रुतद्रव्यसामान्यत इत्युच्यते । व्रीहिभिर्यजेतेत्यनेन व्रीहिताजात्युपलक्षितानां व्यक्तिविशेषाणामङ्गता विहिता भवति । न व्रीहिजात्या मूर्तत्वात् । अष्टाकपालनिर्वृ-त्तिर्वा शक्यते कर्तुम् । न च व्यक्तिविशेषाणां जातिशब्दादृतेऽन्यद्वाचकमस्ति । तस्माद्व्यक्तिविशेषा एवात्राङ्गभूता इति । तेन सदृशेषूपादीयमानेषु कियतामपि व्यक्ति-विशेषाणामुपादानं कृतं भवति । तस्मात्साधूक्तं सामान्यात्प्रतिनिधिरिति । नित्ये प्रति-निधिर्भवति । काम्ये चापि प्रक्रान्ते प्रतिनिधिरिष्यत एव । तदर्थमाह—आरम्भान्नियमः । आरब्धं हि तत्कर्म । आरम्भश्च समाप्तेर्निमित्तम् । न च प्रतिनिधिद्रव्यमन्तरेण समाप्ति-स्तस्य भवति । तस्मात्तत्रापि प्रतिनिधिर्भवत्येव । अपि च प्रक्रान्तस्य काम्यस्याप्यस-

१ क. ग. च. ट. ठ. ण. °त्स्थानं वि°। २ ड. °देव का°।

माप्तौ दोषो भवति । तदपि हि नित्यैः समानं भवति । यथैव नित्यस्याकरणे शिष्टविगर्हणमेवं काम्यस्यासमाप्तौ शिष्टविगर्हणम् । ननु शिष्टविगर्हणं नाम को दोषः । अस्ति दोषो येन शिष्टा विगर्हन्ते । अथापि नाम नास्ति दोषो विगर्हणमेव दुष्टमिति । दर्शनाच्च । दर्शयति द्रव्यान्तरेण परिसमाप्तिं यदि सोमं न विन्देत्पूतीकानभिषुणुयादिति ।

कात्यायनीयं सर्वत्र द्रव्यसामान्यं प्रयोजकमित्युक्तम् । तत्किमविशेषेण नेत्याह—

**अर्थावाप्तौ द्रव्यसामान्यम् ।**

उपलक्षणमिति शेषः । सजातीयेन प्रतिनिहितेन यदि प्रयोजनं संपद्यते तदा सजातीयं न्यूनविहितगुणमपि यथाकथंचित्प्रयोजनलाभे तदेव ग्राह्यं न तु तच्छब्दानुपलक्षितं विहितसमस्तगुणमपि विजातीयम् ।

व्यतिरेके दर्शयति—

**अर्थविप्रतिषेधे त्वर्थसामान्यम् ।**

यथाकथंचिदपि यदि सजातीयेन प्रयोजनं न भवति तदाऽर्थेन प्रयोजनेन नोपलक्षिता या विहितद्रव्यनिष्ठाऽन्याऽव्यवहिता साक्षाद्व्यापिका जातिस्तयैव समानजातीयं ग्राह्यं न तु व्यापकव्यापकादिसामान्येन सजातीयम् । तदपि पूर्वपूर्वालाभे ग्राह्यमेव समानजातीयपर्यन्तम् । तदेतदर्थसामान्यमित्यनेन दर्शितम् ।

एवमेव विवक्षितमिति दर्शयितुमुदाहरति—

**यथा यूपाञ्जने सर्पिषोऽभावे तैलम् ।**

अत्र यूपाञ्जनेऽनक्ति तेजो वा आज्यं यजमानेनाग्निष्ठेति ब्राह्मण आज्यशब्देन विधानेऽपि सर्पिष इति यदसर्पत्तत्सर्पिरभवदिति घृतसामान्यवाच्याज्यशब्दो न तु संस्कारवाचीति दर्शितम् । अत एव वक्ष्यति लौकिकेनाऽऽज्येनेत्यादि यजमानो यूपमनक्तीति । सर्पिषो यथाकथंचिदसामर्थ्ये सर्पिर्जात्या विजातीयमपि तैलं स्नेहवद्गृह्यते ।

प्रतिनिधौ विहिते च प्रतिषेधस्य संकोचो भवतीत्याशङ्कित उत्तरम्—

**प्रतिषिद्धेभ्यो निवृत्तः प्रतिनिधिः ।**

न हि यागीयत्वेन हि निषिद्धं प्रतिनिधित्वेन ग्राह्यं विजातीयेनान्येनापि तत्सिद्धेः । तस्मान्न्यायेन प्राप्तः प्रतिनिधिर्यागीयत्वेन प्रतिषिद्धेभ्यो निवृत्तोऽन्य एव प्रतिनिधिः ।

ननु प्रकरणे पठितः प्रतिषेधस्तत्रैव स्यान्नान्यत्रेत्याशङ्क्याऽऽह—

**अविशेषेण हि प्रतिषेधः श्रूयते ।**

अविशेषेण श्रुतिस्मृत्यादौ प्रतिषेधो यस्माच्छ्रूयते स तु न संकोचनीयो न्यायप्राप्तविधिना तस्य दृष्टद्वारा सामर्थ्येऽप्यदृष्टद्वारकशक्त्यभावः प्रतिषेधादवगम्यते ।

अक्तग्रहणे कर्मणो लोप एव स्यादित्यर्थः । श्यामाके चरौ विहिते प्रतिनिधौ प्राप्ते श्रूयते-अयज्ञिया वै कोद्रवा अयज्ञिया वरडका इति । तथा माद्रेऽपि चरौ अयज्ञिया माषा इति । सोयमविशेषेण यज्ञसंबन्धो निषिध्यते न चरुद्वय इत्यर्थः । यदार्याणा-ममोजनीयमित्यादिरपि ज्ञेयः प्रतिषेधः ।

अथ यत्र वैकल्पिकं द्रव्यमुपात्तं नष्टं यथा व्रीहिषु नष्टेषु किं व्रीहिसामान्येन प्रतिनिध्युपादानमुत श्रुतद्रव्यं यवा उपादेयाः । श्रुतद्रव्याभावे प्रतिनिधिरिष्यते न श्रुतद्रव्ये सतीति यवा उपादेया इत्येवं प्राप्त आह—

विकल्पे प्रवृत्तिलक्षणः[1] ।

अस्मिन्विकल्पे यत्प्रवृत्तं द्रव्यं तत्सामान्येन प्रतिनिध्युपादानम् । न श्रुतमपि द्रव्यमुपादेयं, किं कारणं सर्वत्र हि वैकल्पिकेषु द्रव्येषु यजमानः स्वयमेवैकं साधनत्वे-नाङ्गी करोति । तत्र च तदेव साधनं नान्यदश्रुतसममेव हि तदिति । यदि च तदु-पादीयते कर्मान्तरबुद्धिः स्यान्न च लभ्यते । तस्मात्प्रक्रान्तद्रव्यसादृश्येन प्रतिनिध्यु-पादानमिति । सजातीयाभावेऽपि विजातीयग्रहणेऽपि व्रीहीणां मेधसुमनस्यमान इति मन्त्रलोपो नास्ति ।

क्वचिदपवादमाह—

कृत्स्नाभावे प्रतिनिधिः ।

विहितस्योपात्तस्य सर्वस्य नाशे प्रतिनिधिरसर्वस्य नाशे न प्रतिनिधिः ।

ननु किंचिन्मात्रावशिष्टेऽपि भवत्येव सर्वस्य नाशस्तत्राऽऽह—

मात्रापचारे तेन समाप्येत ।

कर्मेति शेषः । प्रधानाहुत्यादिसमर्थ उपात्तद्रव्ये सति शेषकार्याणां लोपः प्रधानं तु तेनैवानुष्ठेयम् । एवं विहिते द्रव्ये प्रधानपर्याप्ते संभवति तदेव ग्राह्यम् । तत्रापि शेष-कार्याणां लोपो वरं न तु शेषकार्यसमर्थप्रतिनिध्युपादानम् ।

प्रतिनिधावपि चोदितजात्यादित्यागनिमित्तं प्रायश्चित्तं कार्यमित्याह-

द्रव्याभावे प्रतिनिधिर्विध्यपराधे प्रायश्चित्तम् ।

मात्रापचारे नैव प्रतिनिधिः प्रायश्चित्तं तु भवत्येव । द्रव्याभाव इति पुनरभावग्रहणं प्रधानपर्याप्तद्रव्याभाव एव प्रतिनिध्युपादानप्रदर्शनार्थम् । उपात्तविहितद्रव्यनाश-शङ्कया प्रतिनिधावुपात्तेऽपि तेन प्रधानद्रव्येणानुष्ठाने सिद्धेऽप्युपात्तद्रव्यलाभो यदि भवेत्तदा तेनापि पुनरनुष्ठानं कार्यमेव । उपात्तस्य संस्कृतस्यापि द्रव्यस्याप्रधा-नस्य नाशशङ्कया प्रतिनिध्युपादानेन प्रयोजने सिद्धे पूर्वद्रव्ये यूपादौ लब्धेऽपि न पुन-

---

1 क. ख. ग. च. छ. ट. ण. °लक्षणम् ।

नियोजनादिकं पश्वादीनां कार्यमित्यादिविशेषाः परार्थान्येकेनेतिन्यायतः सूत्रान्तराच्च ज्ञातव्याः।

न स्वामित्वस्य भार्यायाः पुत्रस्य देशस्य कालस्याग्नेर्देवतायाः कर्मणः शब्दस्य च प्रतिनिधिर्विद्यते ॥ १ ॥

इति हिरण्यकेशिसूत्रस्य तृतीयप्रश्ने प्रथमः पटलः ॥

स्वामिनि नष्टे केन प्रतिनिधिरुपादेयः। उपात्तस्य तु कर्तृत्वेन कर्मफलमपि तस्यैव स्यादिति न प्रतिनिधिरसंनिधानेऽशक्ते वा तत्कर्मणो लोप एव। यजमानस्येति वक्तव्ये स्वामित्वप्रयुक्तं यत्कार्यं संस्कारास्ते हि फलभोगार्था न तेषां प्रतिनिधिरन्यार्थेष्वस्त्येव। अत्र विशेषमाह कात्यायनः—गुणेषु प्रतिनिधिः परार्थत्वात्। पात्रासादनाद्याज्यावेक्षणादिषु गुणपदार्थेषु स्वाम्यपि प्रतिनिधीयते। कुत एतत्। परार्थत्वात्। परार्थो ह्यसौ। तत्र न प्रधानवत्स्वार्थं साधयति। तस्मात्क्रत्वर्थाभिनिर्वृत्तये स्वाम्यपि प्रतिनिधीयत इति। अत एव वक्ष्यत्याचार्यः—एवं विहितं प्रवसतोऽपि याजमानं यस्यामस्य दिशग्नयो भवन्ति तां दिशमभिमुखो मन्त्राञ्जपत्यध्वर्युः कर्माणि करोत्यन्यान्यभिमर्शनाद्यजमानो मन्त्राञ्जपत्यन्याव्यादेशनादिति। एवं भार्याया अपि प्रतिनिध्यसंभवेऽप्यग्निभिः सह हेत्वन्तरेणापि तथात्वं वक्तुं पुनर्ग्रहणम्। तत्र भार्यापुत्राग्नीनां न संभवति प्रतिनिधिः। नित्यस्य द्रव्यस्येत्यत्र नियतस्य न संस्कारेण सिद्धस्य द्रव्यस्य प्रतिनिधित्वमुक्तम्। तत्र जातिर्न भार्यादिषु संभवति। न हि ते पदार्था जात्या स्वयमेव क्वचित्सिद्धाः सन्ति किंतु पाणिग्रहणबीजावापाधानैः स्वकृतैः संस्कृतानामेव तत्तच्छब्दवाच्यत्वम्। तत्तु नान्यत्र कुत्रापि संभवति। यद्यपि भार्याया अन्यस्या अपि संभवस्तथाऽप्याधानसंस्कृता चेत्तर्हि सा स्वाधिकारेणैव प्राप्ता नान्यस्याः प्रतिनिधिर्भवति। आधानेनासंस्कृतायास्तु श्रौते कर्मणि प्रतिषेधादेवाप्रतिनिधित्वम्। पुत्रेऽपि तथा पितृकृत्येषु ज्ञेयम्। अग्निर्द्वितीयो नास्त्येव संस्कृतो न हि कश्चिद्गार्हपत्यादिर्जात्या सिद्धोऽस्ति। देशकालयोस्तूद्देश्यत्वेनानुपादेययोरुपादेयो द्रव्यविशेषः कथं स्यात्स्थाने हि तेन धर्मेणोपलक्षिते शब्देन विधातव्यमनुपादेयस्य न प्रतिनिधित्वम्। ननु कथं कालस्य च कर्माङ्गत्वमविहितत्वादिति चेन्न, कर्मण एव कालसंबन्धेन विधानाङ्गीकारादङ्गत्वमनुपादेयस्यैव। अतस्तु यत्रैतौ तत्रैव कर्म विधातव्यम्। प्राचीनप्रवणतायाश्च देशान्तरे संपादयितुं शक्यत्वान्न प्रतिनिधिर्देवताया अपि न काचिज्जातिरस्ति नापि समानसामर्थ्याऽन्या भवति तस्या विध्येकसमधिगम्यत्वात्। तद्धितेन चतुर्थ्या च विहितमन्त्रवर्णेन वा देवतात्वं नान्यथा प्रमाणान्तरेण सामर्थ्यमवगम्यते येन प्रतिनिधिः स्यात्। कर्मणोऽपि दृष्टार्थस्यावहननादेर्न हि पेषणं समर्थमदृष्टार्थस्य तु न सामर्थ्यं

---

१ क. °त्र प्र°।

प्रमाणान्तरं ग्राह्यं येन समर्थं सत्प्रतिनिधीयेत । शब्दे विस्मृतप्रतिनिधिर्वाच्यस्तद-र्थात्स्मरणे तत्प्रतिपाद्यार्थज्ञानात्कस्यार्थस्य प्रतिपादकः शब्दः प्रतिनिधेयः । यस्य कस्यचिद्ग्रहणे त्वदृष्टार्थत्वं स्यात्तेन न स्वार्थं कुर्यात् । चकार एवं जातीयानां शास्त्रं विनाऽनवगतसामर्थ्यानां ग्रहणार्थः । तथा च समर्थः प्रतिनिधिर्न संभवति । तत्राङ्गलोपं सोढ्वा प्रायश्चित्तेन कर्म समापनीयं प्रधानलोपे तु पुनः कर्मैव कर्तव्यम् । अत एवोक्तमेष्वर्थेष्वन्यस्यासामर्थ्यान्न संभवत्येव प्रतिनिधिरिति न विद्यत इत्युक्तम् ।

इति हिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैजयन्त्यां तृतीयप्रश्ने प्रथमः परिभाषापटलः ॥ १ ॥

---

अथ तृतीयप्रश्ने द्वितीयः पटलः ।

---

तृतीयप्रश्नप्रथमपटलस्य मया कृता ।
मीमांसाद्वयमार्गेण यथामति सविस्तरा ॥
व्याख्या सूत्रानुसारेण महाफलमभीप्सता ।
द्रष्टव्या यज्ञवपुषि विष्णौ माला समर्पिता ॥
प्रश्ने तृतीये प्रथमे पटले नित्यकर्मणाम् ।
फलं निःश्रेयसं नित्येष्वधिकारी निरूपितः ॥
आधानं पुनराधानमग्निहोत्रं प्रयाणकम् ।
दर्विहोमातिदेशादि तन्त्रादि समुदीर्यते ॥
नवान्नेष्टिं तृ(ष्टिस्तृ)तीयेऽत्र प्रश्ने सर्वं निरूप्यते ।
आधानं कर्मणामाद्यं श्रौतानां प्रश्न ईर्यते ॥
तृतीये तु द्वितीयाद्यैः पञ्चभिः पटलैरिह ।

तत्राऽऽधानं त्रिविधं सोमपूर्वमिष्टिपूर्वं होमपूर्वं चेति । तत्र सर्वत्रेच्छाविकल्पः । सोमपूर्वकं तु यस्य प्रायश्चित्तपशू न स्तस्तस्यैव । केचित्तु प्रायश्चित्तपश्वोरग्नीषोमीयेन सवनीयेन वा समानतन्त्रतां वदन्तः सोमपूर्वाधानमिच्छन्ति कल्पकारवचनात् । आधा-नात्पूर्वं कर्मोपयुक्तान्मन्त्रान्भार्याऽप्यधीते पितुः पत्युर्वा सकाशात्, ऋत्विग्भ्यो वा । आधानमायतनेषु विधानेनाग्निस्थापनलक्षणः संस्कारोऽनारभ्याधीतविहितत्वान्न कस्य-चित्कर्मणोऽङ्गम् । न च वाक्येन कर्माङ्गताऽग्नीनादधीतेति केवलमग्नीन्प्रत्येवाङ्गता प्रतीयते । तदुत्पादकत्वेनानुष्ठेयं बहिरेव कर्मभ्यः । पवमानेष्टीनामपि संस्कारकर्मत्व-

---

१ क. ग. च. छ. ट. ठ. ण. 'स्मृतिप्र' । २ क. ख. ग. छ. ट. ठ ण. 'स्य प्रातिपादिकश' ।

मेव । यदाहवनीये जुह्वतीत्यादिना तथाऽस्य सर्वे प्रीता अभीष्टा आधीयन्त इत्यर्थवादेन संस्कारकर्मताऽऽश्रिताऽभिमता चेति दर्शितमेव । तेन संस्कारेण संस्कृता अग्नयः पश्चादन्यैर्वाक्यैस्तत्तत्कर्माङ्गत्वेन विधीयन्ते । द्विविधं हि कर्माङ्गं द्रव्यमेकं लोकतः सिद्धमङ्गत्वेन विधीयतेऽन्यद्वैदिककर्मणा सिद्धमङ्गत्वेन विधीयते । तत्साधकं कर्मापि द्विविधं प्रयोगान्तर्गतमनन्तर्गतं च । प्रथमं तु प्रधानाङ्गं सदेव द्रव्योत्पादकं यथाऽवहननादि पुरोडाशोत्पादकम् । अन्यत्प्रधानकर्माङ्गतामनापन्नमेवाङ्गभूतस्य द्रव्यस्याङ्गं सदुत्पादकम् । यथाऽध्ययनं स्वाध्यायोत्पादकमाधानमपि तथा । तस्याधिकारिणस्तु निरूपिता एव । प्रथमपटले पुनर्धर्मेषु स्वयमप्यशूद्राणामदुष्टकर्मणामुपनयनं वेदाध्ययनमग्न्याधेयमिति वदिष्यति । नित्येषु पाठान्नित्यत्वेन केवलमपि हविर्यज्ञत्वेन संकारेषु पठितम् । नियमापूर्वद्वारा निःश्रेयसकारणम् । तस्मादत्रापि पृथक्संकल्पेन भाव्यम् । अनेनैवाभिप्रायेण बौधायनेनोक्तं (नः) ऋत्वादौ क्रतुकामं कामयीत यज्ञाङ्गादौ यज्ञाङ्गं काममित्युपक्रम्याऽऽह—सर्वकामोऽग्नीनाधास्य इत्यग्न्याधेय इति । वैखानसस्तु सर्वकर्मार्थमग्नीनाधास्य इत्युक्त्वेति ततः संकल्पपूर्वकमेवाऽऽधानं कार्यमिति । अत्राऽऽधानाङ्गवैकल्ये पुनः क्रिया सर्वाधानस्य न त्वङ्गमात्रस्य । कुतः, प्रायश्चित्तं कृत्वाऽङ्गमनुष्ठेयम् । नचाऽऽधानासिद्धावाहवनीययोऽस्ति पवमानहविःषु तु भाविसंज्ञया प्रवृत्तेः । अत्रोपकारकमाह बौधायनः—अग्नीनाधास्यमानः प्राज्यमात्मानं कुर्वीत येनास्य कुशलं स्यात्तेन कुशलं कुर्वीतेति यथोक्तमात्मनः पुरश्चरणमिति च । प्राज्यं शुद्धं येन येन कर्मणाऽस्य कुशलं प्रायश्चित्तम् । तथा वैखानसेनाप्युक्तम्—युक्तः श्रद्धान्वितो यजमानोऽनुज्ञातः केशश्मश्रुरोमनखानि च वापयित्वा विधिना स्नात इषे त्वोर्जे त्वेत्यादिस्वाध्यायमधीयानः शतं प्राणायामं च(मांश्च) कुर्याद्ध्यायन्नारायणमुपोष्य सपत्नीको घृतमिश्रं हविष्यं क्षीरेणाश्नीयात्स्मृत्युक्तव्रतमाचरन्पावनार्थममात्यहोमान्कूष्माण्डादींश्च जुहुयादिति । युक्त इन्द्रियचापलरहितः । अनुज्ञातो ब्राह्मणैः केशादीन्वापयेत्स्वाध्यायं वेदपारायणं नारायणं ध्यायन्नन्नत्यागेनोपोष्य नियतात्मेत्यर्थः । वेदपारायणप्राणायामेषु तथाऽन्येष्वमात्यहोमादिषु स्मृत्युक्तेष्वपि व्रतेषु सपत्नीकस्य भोजननियमो घृतमिश्रमित्यादि । एवं स्मृत्युक्तान्यन्यान्यपि जपतिलहोमादीनि कृच्छ्रचान्द्रायणादीनि यथाशक्त्या(क्ति) यावदात्मशुद्धिं मन्यते तावत्कृत्वा संकल्पात्पूर्वमेवारणी छित्त्वा शोषयित्वा यद्वृतुद्वादशाहादिपक्षः । संवत्सरपक्षसंकल्पे चाऽऽर्द्रे एव वाऽऽहरणीये । अरणीप्रमाणमर्थलक्षणं यावता प्रयोजनं तावत्प्रमाणमित्याचार्याणां मतम् । बौधायनस्तु-

१ क तस्य । २ ख छ 'धा स' ।

चतुरङ्गुलोत्सेधां द्वादशाङ्गुलविस्तीर्णां षोडशाङ्गुलायामामिति । चतुर्विंशत्यङ्गुला-मिति कात्यायनः । विष्णुपुराणेऽपि गायत्र्यक्षरसंख्ययेत्यादि चोक्तम् । भारद्वाजस्तु यो अश्वत्थः शमीगर्भो भूमिं मूलेन संगत इति । यस्याश्वत्थस्य मूलं साक्षाद्भूमिं प्राप्तं स एव न शम्यामप्युत्पन्नमात्र इत्यर्थः । अस्मदाचार्यस्योभयमिष्टम् । तथाऽग्रे वक्ष्य-माणां शालामपि तथाऽऽयतनान्यपि पूर्वमेव कुर्यात् । तदेतत्सविशेषमुक्तं वैखानसेन-शमीगर्भमश्वत्थं यद्यशमीगर्भं शुक्लाङ्कुरमशनिवाय्वनुपहतमग्र्यं परस्य स्थानावासमबहु-शुष्कमशीर्णमन्त्यजजात्यनुपहतं गत्वा वैश्वानरसूक्तेन प्रदक्षिणं कृत्वा प्रणमेत्तेनैव प्राचीमुदीचीं वा शाखां प्रागादिप्रदक्षिणं छेदयित्वा प्रागग्रामुदगग्रां चाधोभागेनाधरा-रणीं त्वक्पार्श्वोर्ध्वभागां विगतत्वचं विशोषितां चतुर्विंशत्यङ्गुलायतामष्टाङ्गुलविस्तारां चतुरङ्गुलोन्नतां तथोत्तरभागेनो(णो)त्तरामरणीं च गायत्र्याऽथ करोति तत्र प्रथमानि यानि चत्वार्यङ्गुलानि शिरश्चक्षुः श्रोत्रमास्यं च द्वितीयानि ग्रीवा वक्षो हृदयं स्तनस्तृ-तीयान्युदरप्रभृति चतुर्थानि श्रोणिपिञ्जमान्यूरूषष्ठानि जङ्घे पादावित्येके एवमरणी सर्वैरङ्गैः संपूर्णे भवतो यच्छीर्ष्णि मन्थति शीर्षक्तिमान्यजमानो भवति यद्ग्रीवायामवे-पनो यत्र मन्थेदनारब्धोऽस्य यज्ञो भवत्यूरू रक्षसां योनिर्जङ्घे पादौ पिशाचानां श्रोणी देवानां योनिस्तस्माच्छ्रोण्यामेव प्रथमं मन्थेन्मूलादष्टाङ्गुलं परित्यज्याग्राच्च द्वादशा-ङ्गुलं पार्श्वतस्त्रीणि त्रीण्यङ्गुलानि प्रथममन्थन एवं प्रजननं कुर्वीतोत्तरारणेरष्टाङ्गुल-परिणाहं प्रमन्थं चीर्त्वा मन्थमूले संधत्ते तेन सहितः षड्विंशत्यङ्गुलायतो मन्थो भवति तथा छिद्रमित्युक्तं प्राक्शिरा अरणिस्तथा वेदिः । गृहे सौम्ये पश्चिमपूर्वायतां तथाऽनुवंशोऽपूर्वदक्षिणयोर्द्वारयुगां महतीं शालां कल्पयित्वाऽस्थिरोमकेशाङ्गारतुषका-ष्ठाश्मलोष्टपिपीलिकादीन्वर्जयित्वा मृदा शुद्धयेति गार्हपत्याद्यायतननिर्माणमुक्तम् । अस्य वैखानससूत्रस्यार्थः स्पष्टः । त्वक्पार्श्वोर्ध्वभागामिति त्वचि पार्श्वे ऊर्ध्वभागो यस्याः सा पार्श्वयोरूर्ध्वभागे च तक्षणं बहु न कार्यमित्यर्थः । ततस्तु शाखैव तावती ग्राह्या यावता विस्तारोऽष्टाङ्गुलो भवेत् । अधोभागे तु गर्भपर्यन्तं तक्षणं कार्यमित्यर्थः । ततोऽर्धभागे चतुर्विंशत्यङ्गुलदीर्घाष्टाङ्गुलविस्तारा चतुरङ्गुलोत्सेधा कार्या । नात्र शाखायाः पाटनेन दलद्वयं संपाद्य तयोररणिद्वयं कार्यमित्युक्तं किं तु तस्याः शाखाया अधःकाण्डमधरारणिं तदूर्ध्वमुत्तरारणिमिति केचित्पाटनेनैवेच्छन्ति शिरआदिकल्प-नाऽप्रमारभ्यार्थवादा एते विधिस्तु मूलादष्टाङ्गुलं परित्यज्याग्राद्द्वादशाङ्गुलं पार्श्वयो-स्त्रीणि त्रीणि मध्ये त्र्यङ्गुलविस्तारं चतुरङ्गुलदीर्घं मन्थनस्य प्रथमस्य स्थानमित्यधरा-रणिविषये तथोत्तरारणिविषयेऽपि तु-उत्तरारणेरष्टाङ्गुलपरिणाहमष्टाङ्गुलेन सूत्रेण परितो वेष्टनेन समं प्रमन्थनामकं शकलं चीर्त्वोदर एतदपि त्वग्रभागादेव । मन्थमूले

---

१ क. ग. च. छ. ट. ठ. ण. 'मग्न्यदमर्घं व' ।

मन्थो नाम यज्ञियकाष्ठस्य सारेण कृतो यस्य रज्ज्वा भ्रमणं क्रियते तस्य मन्थस्य मूलभागमुत्कीर्य प्रमन्थस्य शकलरूपस्य मूलं संधत्त कृतसंधानयोरुभयोः प्रमाणं षड्-विंशत्यङ्गुलमिति । अत्रैनैकशालोक्ता । प्राचीनवंशाचार्यस्तु यानमाने वक्ष्यत्याहवनी-यागारे गार्हपत्यागारे वेति । तेन गम्यत उदीचीनवंशशालाद्वयं कार्यम् । आपस्तम्बेन तु स्पष्टमेव शालाद्वयमुक्तम् । तत्राऽऽदौ ब्राह्मौदनिकाधानात्पूर्वदिने नान्दीश्राद्धमुद-कशान्तिं प्रतिसरबन्धं कुर्यात्ततः पूर्वमेवाङ्कुरार्पणं कुर्यात् । पात्रलक्षणं तु दर्शपूर्णमास-योरेव निरूपितम् ।

आयतनानि—सूत्रकृन्नोक्तवान्साक्षान्मानमायतनेषु तत् ।
गार्हपत्यादिकाग्नीनां ततो धिष्ण्यस्य मानतः ॥
गृह्यते याज्ञिकैः सर्वैर्यतो धिष्ण्याश्च तेऽग्नयः ।

धिष्णियमानं तु पिशीलमात्रा भवन्तीति धिष्णियानां विज्ञायते चतुरश्रा इत्येकेषा-मिति सूत्रम् । तत्र परिमण्डलेन विकल्पम्(:) । सर्वाण्यायतनानि चतुरश्राणि परि-मण्डलानि वेति सूत्रकृतामाचार्याणां बहूनां संमतम् । तत्र पिशीलमानं पञ्चधा वदन्ति—बाह्वोरन्तरालमेकम् । बद्धमुष्टी रत्निरिति द्वितीयम् । अरत्निरिति तृतीयम् । द्वात्रिं-शदङ्गुलमिति चतुर्थम् । षट्त्रिंशदङ्गुलमिति पञ्चमम् । एतेषामर्धमानेन वर्तुलं भ्रामयेदेवं सर्वाग्नीनामथवाऽन्यतरमानेन चतुरश्राणि सर्वाणीति निर्णयः । अथ वा वैखानसेनोक्तो विशेषो ग्राह्यः । गार्हपत्यायतनमष्टादशाङ्गुल्या वृत्तं भ्रामयित्वाऽष्टाङ्गुलोन्नतं स्थण्डिलं कृत्वा परितश्चतुरङ्गुलविस्तारं हित्वा मध्ये षडङ्गुलविस्तारं निम्नं खनति शिष्टं तदूर्ध्वमेखला स्यात्तत्परितश्चतुरङ्गुलविस्तारोन्नतामधोमेखलां करोति । तथाऽऽ-हवनीयायतनं चतुरश्रं चतुर्दिक्षु द्वात्रिंशदङ्गुल्यायतमष्टाङ्गुलोन्नतं स्थण्डिलं परि-कल्प्य पूर्ववत्परितो हित्वा मेखला मध्ये निम्नमधोमेखलां करोति । अन्वा-हार्यपचनं पञ्चविंशत्यङ्गुल्या वृत्तं भ्रामयित्वा दक्षिणार्धेऽर्धचन्द्राकारं स्थण्डिलं पूर्ववत्तस्योन्नतं निम्नं मध्यमूर्ध्वाधरमेखलेषु वेद्युत्तरार्धा(?) कृत्वा पूर्वभागान्तरे प्रक्रमे वेद्युन्नतमुत्करं करोतीत्युक्तम् । वेदिस्तु स्वसूत्रे दर्शितैवेति न तदुक्ता ग्राह्या तस्याश्चतुरङ्गुलोन्नतत्वमुक्तमेवमुत्करस्यापि ज्ञेयम् । इदमपि श्रौतत्वाद्ग्रा-ह्यम् । भाष्यमते समक्षेत्रता । एतदनुसारेणेति याज्ञिका आहुर्वर्तुलं[1] गार्हपत्यस्य चतुरश्रमाहवनीयस्यार्धचन्द्रं दक्षिणाग्नेः समक्षेत्राणीति । तदिदं रमणीयमिव मन्य-माना अस्मदीया अपि याज्ञिकाः स्वसूत्रोक्तं पिशीलप्रमाणमरत्निमात्रमनुसृत्य स्वसू-त्रोक्तं चतुरश्रत्वं वर्तुलत्वं[2] वा सर्वायतनसमता(?) आयतनानि विहरन्ति ।

---

१ क. ग. ठ. ण. 'ष्टाङ्गु॰। २ क. ग. च. छ. ट. ठ. ण. 'र्तुलं वा ।

अरत्निविष्कम्भकमाद्यवद्वृत्तं गृहं तत्प्रकृतिं विधाय च ।
अन्यानि तत्क्षेत्रसमानि कुर्वते शुल्बोक्तरीत्या स्वयमूहयन्ति च ॥
अरत्निमानं चतुरश्रमेव वा प्रकृत्य तत्क्षेत्रसमं च वर्तुलम् ।
यद्वद्धेरपरत्र पूर्ववत्तत्रेरिता वृ(म)त्कृताश्च कारिकाः—
प्राचीं विज्ञाय पूर्वं तु विहारं कल्पयेत्ततः ।
प्राचीज्ञानप्रकारं तु कल्प आचार्य ऊचिवान् ॥
तमेवार्थमहं वक्ष्ये व्याख्यानमवलोक्य च ।
चित्रास्वात्यृक्षयोर्मध्यं प्राचीं विद्याद्विचक्षणात् ॥
श्रोणानक्षत्रमथवा दक्षिणापथवासिनाम् ।
उदगाशास्थितानां तु प्राचीं ज्ञेयास्तु कृत्तिकाः ॥
साधारणमिदं सर्वदेशानां वक्ष्यते मया ।
कर्तुमिष्टे समे देशे हस्तद्वयसमन्विते ॥
षडङ्गुलपरीणाहो द्वादशाङ्गुलमायतः ।
एकतःक्ष्णूरु(क्ष्णुर्ऋ)जुस्तष्टः खादिरस्याव्रणः समः ॥
शङ्कुः समशिराः कार्यो देशे तं स्थापयेत्समे ।
शङ्कोः पूर्वापरे देशे रेखां प्रागायतां न्यसेत् ॥
शङ्कुना संमिता रज्जुः पाशद्वयसमन्विता ।
मध्ये तु कल्पयेच्चिह्नं शङ्कौ पाशौ प्रमुच्य च ॥
चिह्नेन मण्डलं कुर्यात्तस्य शङ्कोस्तु सर्वतः ।
पूर्वप्रकॢप्तरेखाया मण्डलस्य च संगमे ॥
शङ्कू पूर्वापरौ स्थाप्यौ ताभ्यां पूर्वापरे दिशौ ।
यावदिष्टं विजानीयादथ याम्योत्तरे दिशौ ॥
आमुच्य पाशं पूर्वस्मिन्नन्यपाशेन मण्डलम् ।
लिखेत्तथा प्रतीच्ये तु पाशं मुक्त्वाऽन्यमण्डलम् ॥
मण्डलद्वयसंसर्गे शङ्कुतो दक्षिणेतरौ ।
याम्योत्तरदिशावेवं विदिशोऽथ प्रकल्पयेत् ॥
पूर्वादिशङ्कुषु तथा पाशावामुच्य लक्षणात् ।
मण्डलानि लिखेदेवं चत्वारि च यथाक्रमम् ॥
मण्डलानां च संसर्गा विदिशः परिकीर्तिताः ।
आचार्योक्त उपायोऽयं प्राचीविज्ञानलक्षणः ॥
प्राचीज्ञानप्रकारोऽन्यः सूर्यसिद्धान्तरीतितः ।
स एवार्थो मयाऽत्रापि यथामति निगद्यते ॥

मीनकन्यागते सूर्ये गते षोडशवासरे ।
अनन्तरं विजानीयात्प्राचीं सूर्येण बुद्धिमान् ॥
मासेष्वन्येषु विज्ञेया वक्ष्यमाणावृता हि सा ।
समे शङ्कुकङ्गुलायामरज्ज्वा मण्डलमालिखेत् ॥
तन्मध्ये कल्पयेच्छङ्कुं द्वादशाङ्गुलमायतम् ।
तच्छायाग्रं स्पृशेद्यत्र रेखां पूर्वापरान्तयोः ॥
तत्र शङ्कू निखायोभौ रज्जुं किंचिद्विवर्धयेत् ।
शङ्कौ तां पश्चिमे मुक्त्वा रेखां तिर्यक्प्रकल्पयेत् ॥
प्राच्ये शङ्कौ तथा मुक्त्वा तद्वद्रेखां प्रकल्पयेत् ।
एवं कृते भवेन्मत्स्यो दक्षिणोत्तरमायतः ॥
दक्षिणोत्तरयोः शङ्कू मत्स्यस्य मुखपुच्छयोः ।
शङ्क्वोः प्रकल्प्य रज्ज्वाऽन्यं मत्स्यं प्राक्प्रत्यगायतम् ॥
मुखपुच्छानुसारेण प्राचीं मत्स्यस्य कल्पयेत् ।
विदिशश्च प्रसाध्यैवं विहारं कल्पयेत्ततः ॥
अङ्गुलादिप्रमाणं तु शुल्व आचार्य उक्तवान् ।
वेदिमानोपयोगित्वात्तत्प्रमाणमहं ब्रुवे ॥
चतुर्दशाणवो यावत्तावदेवाङ्गुलं भवेत् ।
त्र्यस्त्रिंशत्तिला वा स्यात्कोशस्था अङ्गुलं त्विह ॥
दशाङ्गुलं क्षुद्रपदं प्रादेशो द्वादशाङ्गुलः ।
पृथं(?) त्रयोदशाङ्गुल्यास्तावदेवोत्तरं युगम् ।
पदं पञ्चदशाङ्गुल्यो द्वादशाङ्गुल्योऽथवा ॥
पदद्वयं प्रक्रमः स्यात्प्रादेशौ द्वावरत्निकः ।
जानु द्वात्रिंशदङ्गुल्यः षट्त्रिंशद्बाहुशम्यके ॥
चतुःशताङ्गुलं त्वक्षः षडशीत्यङ्गुलं युगम् ।
ईषाप्रमाणमङ्गुल्यस्त्वष्टाशीत्यधिकं शतम् ॥
अरत्नयस्तु चत्वारो व्यायामस्य प्रमाणकः ।
अरत्नयस्तु पञ्चैव पुरुषो व्याम एव च ॥
यजमानस्य चाध्वर्योः प्रमाणं कल्पयेदिह ।
साग्निकेषु विहारेषु यद्गुरेः प्रमाणकम् ॥
आदावाधानवेदेस्तु मानक्रम उदीर्यते ।

---

१-ख. च छ ट. °त् । चतुस्त्रिं° ।

अगारमग्निहोत्रस्य चतुर्हस्तप्रमाणकम् ॥
तन्मध्ये कल्पयेत्पृष्ठ्यां प्रत्यक्प्रागायतामृजुम् ।
पश्चात्पदद्वयं त्यक्त्वा पराग्न्यायतनं भवेत् ॥
अरत्निना मितं तस्य मध्ये शङ्कुं निखाय च ।
प्रादेशमितया रज्ज्वा शङ्कुतो मण्डलं लिखेत् ॥
पुरस्ताद्द्विपदं हित्वा पूर्वाग्नेर्वाऽऽखरो भवेत् ।
अङ्गुलैरेकविंशत्या नवभिश्च तिलैः सह ॥
चतुरश्रः समः कार्यस्तस्य चाऽऽवृदुदीर्यते ॥
यावती मानतो रज्जुस्तावत्यागन्तुकी भवेत् ।
आगन्तुरर्धे चिह्नं स्याच्छ्रोण्यंसार्थं तु तद्भवेत् ॥
तन्मध्यार्धाय चिह्नं तु कर्षणाय भवेदिह ।
दीर्घभागस्थितं पाशं पूर्वशङ्कौ प्रकल्पयेत् ॥
ह्रस्वपार्श्वगतं पाशं पाश्चात्ये लक्षणात्कृषेत् ।
दक्षिणोत्तरतः श्रोणी कल्पयेत्कृतचिह्नतः ॥
शङ्कोः पाशौ विपर्यस्य तस्यांसौ कल्पयेत्पुरः ।
पूर्वापराग्न्योर्मध्यस्य पृष्ठ्या पञ्चविधा भवेत् ॥
षष्ठं भागमथाऽऽगन्तुं समं तत्र नियोजयेत् ।
रज्जोरन्तौ सपाशौ तां पुनः संभुज्य पञ्चधा ॥
भागानां द्वित्रिमध्ये तु लक्षणं कल्पयेत्ततः ।
भागत्रयं पुरस्तात्तु पश्चाद्भागद्वयं तथा ॥
पूर्वापराग्न्योर्मध्यस्थशङ्कोः पाशौ नियोजयेत् ।
लक्षणं दक्षिणाऽऽकृष्य लक्षणे शङ्कुमादिशेत् ॥
सदक्षिणाग्न्यायतनमध्यशङ्कुर्भवेदिह ।
लक्षणं चोत्तराऽऽकृष्य शङ्कुरार्जवकृतये ॥
व्यत्यस्तपाशां रज्जुं तामुदगाकृष्य लक्षणे ।
शङ्कावुत्कर एव स्यात्संचरश्च तदन्तरा ॥
अङ्गुल्यश्च चतुस्त्रिंशद्दक्षिणाग्न्याखरो भवेत् ।
दक्षिणाग्नेर्मध्यशङ्कोरुदक्सार्धाङ्गुलाष्टके ॥
शङ्कुं निखाय तस्यैव त्वाखरार्धेन मण्डलम् ।
कृत्वा मण्डलमध्ये च स्पन्द्यां प्रागायतां न्यसेत् ॥
दक्षिणं धनुरग्नेः स्यादुत्तरं धनुरुत्सृजेत् ।
अङ्गुलैः सप्तविंशत्या पराग्नेराखरोऽथवा ॥

त्रयोदशाङ्गुलैः सार्धैर्मितरज्ज्वा तु मण्डलम् ।
अरत्निसंमितो यद्वा पूर्वाग्नेराखरो भवेत् ॥
चतुरश्रं समं कुर्यात्तत्प्रकारोक्तयाऽऽवृता ।
अग्रेणाऽऽहवनीयं तु मुक्त्वाऽरत्न्यन्तरालकम् ॥
सभ्यागारं भवेत्तत्प्राक्तावदेवान्तरालकम् ।
मुक्त्वाऽऽवसथ्यायतनं कुर्यादाहवनीयवत् ॥
दक्षिणाग्नेर्मध्यशङ्कोरुदग्द्वादशाभिस्तिलैः ।
युतेऽङ्गुलद्वये शङ्कुमादिशेन्मण्डलं ततः ॥
दक्षिणाग्नेस्तु विष्कम्भस्त्रिंशदङ्गुलसंमितः ।
चतुर्भिश्च तिलैः सार्धं तदर्धेनैव मण्डलम् ॥
मण्डलोत्तररेखास्थशङ्कोरन्यच्च मण्डलम् ।
मण्डलद्वयसंसर्गे स्पन्धां पूर्वापरे क्षिपेत् ॥
शूर्पद्वयं दक्षिणं स्यादग्नेरुत्तरमुत्सृजेत् ।
षण्णवत्यङ्गुला वेदिः प्रत्यगाहवनीयतः ॥
पश्चात्तिरश्ची विज्ञेया चतुःषष्ट्यङ्गुलैर्मिते ।
अरत्निद्वययुक्ता सा पुरस्तात्तिर्यगीरिता ॥
सप्तारत्निप्रमाणस्य सूत्रस्यान्तौ सपाशकौ ।
अन्त्यपाशादरत्नौ तु चिह्नमंसार्थकं भवेत् ॥
द्वात्रिंशदङ्गुले चिह्नं पाशाच्छ्रोण्यर्थकं भवेत् ।
अरत्नित्रितये पाशात्कर्षणाय निराञ्छनम् ॥
पूर्वापरान्तयोः शङ्कोः पाशावामुच्य लक्षणात् ।
आकृष्य वेधाः श्रोण्यंसौ कल्पयेत्कृतचिह्नतः ॥
सा दीर्घचतुरश्रा स्यादेवमेकत्र चापराम् ।
पार्श्वमानीं द्विरभ्यस्य रज्ज्वन्तौ तु सपाशकौ ॥
नैर्ऋताग्नेयकोणस्थशङ्कोः पाशौ वितत्य च ।
मध्ये च लक्षणं कृत्वा लक्षणं दक्षिणा कृषेत् ॥
भवेत्तु लक्षणे शङ्कुः शङ्कौ पाशौ नियम्य च ।
लक्षणेन लिखेत्पार्श्वं नैर्ऋताग्नेयकोणगम् ॥
तथोत्तरं लिखेत्पार्श्वं वायव्यैशानकोणगम् ।
द्विरभ्यस्तत्तया रज्ज्वा पार्श्वे पूर्वापरे लिखेत् ॥
अपराग्नेः पुरः शिष्टोऽसावार्यो रत्निसंमितः ।
यदि भूमिरणुस्तत्र वेदिं संनमयेत्कथम् ॥

बहिः कोणस्थशङ्कुभ्यो दक्षिणोत्तरपार्श्वयोः ।
अष्टाङ्गुलप्रमाणे तु शङ्कूंश्चतुर आदिशेत् ॥
अङ्गुलैरष्टभी रज्जुं पार्श्वमानीं विवर्धयेत् ।
क्षिप्त्वा पाशौ बहिः शङ्कौ रज्ज्वा तां नमयेत्क्रमात् ॥
क्रूसे रेखा बहिः कुर्यान्मृदाऽथोमेखलां सुधीः ।
चतुरङ्गुलविस्तीर्णामुत्सेधेन षडङ्गुलम् ॥
अग्न्याधानस्य चेष्टीनां विहारोऽयं प्रदर्शितः ।
इति वृद्धकारिका बौधायनीयानां तदेवेष्टमस्माकमपि ॥
मानद्वयं त्वायतनेषूक्तं तत्तु व्यवस्थया ।
धिष्णियानामायतनं पितृशीलगतमूचिवान् ॥
सूत्रकृत्तत्पितृशीलं त्वरत्निना सममुच्यते ।
धिष्णियान्मण्डलाकारांश्चतुरश्रानथोचिवान् ॥
अरत्निमितविष्कम्भमण्डलं पश्चिमाग्निगम् ।
तन्मानेन समं क्षेत्रं दर्शितं पूर्ववह्निगम् ॥
अङ्गुलैरेकविंशत्या नवभिश्च तिलैः सह ।
चतुरश्रं तथा चैव दक्षिणाग्नेरपीरितम् ॥
यद्यरत्निप्रमाणेन चतुरश्रं तु धिष्ण्यगम् ।
तत्क्षेत्रं वर्तुलं सप्तविंशत्यङ्गुलसंमितम् ॥
तेनारत्निप्रमाणं तु चतुरश्रमुदीरितम् ।
दक्षिणाग्न्याखरेऽस्माकं विशेषस्त्वभिधीयते ॥
अन्तरालं पञ्चधा वा षोढा वा भाजितं तथा ।
षष्ठं वा सप्तमं वाऽपि भागमागन्तुमानयेत् ।
तां रज्जुं त्रिगुणीकृत्य त्वाद्यभागे च कर्षणम् ।
पूर्वापराग्निमध्यस्थशङ्कोः पाशावथापि वा ॥
खरयोरन्तराद्यन्तशङ्कोः पाशौ निधाय च ।
कर्षणं दक्षिणाऽऽकृष्य कर्षणे शङ्कुमावनेत् ॥
स मध्यो दक्षिणस्याग्नेरथवा तस्य दक्षिणे ।
दक्षिणाग्नेरायतनं तत्प्रकारो द्विधा भवेत् ॥
शङ्कुतोऽष्टाङ्गुले सार्धे शङ्कुमुत्तरतो न्यसेत् ।
यद्वा सप्तदशाङ्गुल्या वर्तुलं भ्रामयेदथ ॥

---

१ क. ग. ट. ठ. क्रूसरे । २ क. घ. च. छ. ट. ठ. 'शीलं मत' ।

दक्षिणे वा दक्षिणार्धे ह्यपरो भाग उच्यते ।
अरत्निमानायतनः पूर्वाग्निः स्यात्तदाऽत्र तु ॥
एकोनविंशदङ्गुल्यायामा रज्जुरथाधिका ।
अङ्गुलस्य तृतीयेन भागेन त्वनया दिशेत् ॥
मण्डलं पूर्ववत्तत्र दक्षिणाग्निं प्रकल्पयेत् ।
मण्डलस्य चतुष्कोणकरणेन यथाश्रुतम् ॥
सूत्रं संबध्यते तस्मादेवं व्याख्यातृभिः कृतम् ।
ये तु वर्तुलविष्कम्भं त्वधिकं किंचिदूचिरे ॥
तेषां विरोधोऽवश्यं स्याद्गणितेन न संशयः ।
एवं ब्राह्मौदनात्पूर्वमाधानार्थं प्रकल्पयेत् ॥

एवं संभृतपूर्वाङ्गः शोधितात्मा सभार्यः संकल्पं कुर्यात् । गणेशादीष्टदेवतादिस्मरणपूर्वकं दर्भेष्वासीनयोर्दर्भपाण्योर्यतात्मनोर्दंपत्योरानुष्करणं दर्शपूर्णमासोक्तमनुसंधेयम् । तत्र विशेषः—अद्यतनात्संवत्सरेऽस्मिन्नृतावस्मिन्पर्वणि नक्षत्रे वा । अथवाऽद्यतनाद्दतौ द्वादशाहे चतुरहे त्र्यहे द्व्यहे एकाहे वाऽस्मिन्नक्षत्रे पर्वणि वेति स्मृत्वाऽग्नीनाधास्ये सर्वकर्मसिद्ध्यर्थं यानि कर्माणि कर्तुं शक्ष्यामि येषु चाधिकारस्तेन कर्मणा यज्ञेश्वरं प्रीणयानीति दंपती त्रिरुपांशु त्रिरुच्चैर्वदतः । केचित्सोमपूर्वान्होमपूर्वानिष्टिपूर्वानित्यपि स्मर्तव्यमित्याहुर्न तेन कश्चिद्विशेषः । संकल्पात्पूर्वमेवाङ्कुरार्पणमुदकशान्तिं प्रतिसरबन्धं च कृत्वा पूर्वेद्युस्तद्दिने वा नान्दीश्राद्धं कुर्यात् । तत उक्तलक्षणानृत्विजो वृणुयात्—ब्रह्माणं होतारमध्वर्युमाग्नीध्रम् । अग्न्याधेये ब्रह्माणं त्वामहं वृण इत्यादिना । तथा भविष्यामीति प्रतिब्रूयुः । अध्वर्युर्युवानिवा स्पष्टवाचो वेदवेदाङ्गपारगान् । अत्र वैखानसः—प्रतिसरं बद्ध्वा तद्दिने ब्राह्मणानुक्तलक्षणानृत्विजो वृत्वा संपूज्य मधुपर्कं ददाति यजमानः पत्नी च नवैर्वस्त्रोत्तरीयाभरणपुष्पाद्यैरलंकृतौ भवत इति । कर्मादिष्वेतैर्जुहुयादिति श्रुतेरौपासने कूष्माण्डैराचारवता तन्त्रेण चित्त्वा स्थापिते अरणी पूर्वशुष्के ।

अग्नीनाधास्यमानस्य यो अश्वत्थः शमीगर्भ
आरुरोहत्वेसचा । तं ते हरामि ब्रह्मणा यज्ञियैः
केतुभिः सहेत्यश्वत्थस्य शमीगर्भस्यारणी उद्धरति ।

अग्नीनाधानलक्षणेन कर्मणोत्पादयिष्यमाणस्य यजमानस्य यो अश्वत्थ इत्यनेन मन्त्रेणाध्वर्युररणी आहरति यजमानगृहं प्रति अश्वत्थवृक्षस्य शमीवृक्षोत्पन्नस्य संब-

---

१ च. °तात्म° ।

न्धिनी। अरणीशब्दोऽग्निमन्थनकाष्ठे प्रसिद्धो न संस्कारवचनः। द्वयोरप्येकवदेव सकृन्मन्त्रेणाऽऽहरणम्। मन्त्रे हरामीति लिङ्गात्। अश्वत्थस्योद्धृते उद्गृहीते वाऽरणी हरति संसृष्टद्रव्यत्वात्तं ते इति तमश्वत्थमेवारणीरूपेण हरामीति मन्त्रार्थप्रतीतेर्द्वे सहैव गृहीत्वा मन्त्रेण सहैव नयति। अत एवाऽऽपस्तम्बेनोक्तमाहरतीति। तथाऽऽहरेदित्येवाऽऽह भरद्वाजोऽपि।

अपि वाऽश्वत्थादेवोद्धरेदियं वै शमी तस्या
एष गर्भो यदश्वत्थ इति विज्ञायते।

अथ वा केवलादेवाश्वत्थादुद्धरेत्। मन्त्रलिङ्गोपपत्त्यर्थं श्रुतिमुदाहरतीयं वा इति। इयं प्रसिद्धा पृथिव्येव शमी तस्या एष गर्भ इति श्रुतिव्याख्यानात्केवलाश्वत्थारण्योरपि मन्त्रो न विरुध्येत।

अश्वत्थाद्धव्यवाहाद्धि जातामग्नेस्तनूं यज्ञियाꣳ संभरामि।
शान्तयोनिꣳ शमीगर्भमग्नये प्रजनयितव इति संभरत्या-
युर्मयि धत्तामायुर्यजमान इति संभृते अभिमन्त्रयते।

संभरति गृह्याग्निशालायां स्थापयति। पूर्ववत्तन्त्रेणाभिमन्त्रयते तत्रैव।

कृत्तिका रोहिणी मृगशीर्षं पुनर्वसू फल्गुन्यौ हस्त-
श्चित्रा विशाखे अनूराधाः श्रोणा प्रोष्ठपदाश्चोत्त-
रेऽग्न्याधेयनक्षत्राणि कृत्तिका ब्राह्मणस्योत्तरे
फल्गुन्यौ चित्रा च राजन्यस्यावशिष्टानीतरेषाम्।

कृत्तिकाः स्त्रीलिङ्गबहुवचनान्तेनैकमेव नक्षत्रमनूराधाः प्रोष्ठपदाः पुनर्वसू पुंलिङ्गाः (ङ्गौ) फल्गुन्यौ विशाखे स्त्रीलिङ्गे स्पष्टान्यन्यानि। कृत्तिका एव ब्राह्मणस्य। अभिषिक्तः क्षत्रियो राजन्यस्तस्य पूर्वं तु निरुपपदफल्गुन्याविति पूर्वयोः फल्गुन्योरुत्तरयोरपि ग्रहणं सामान्यमात्रविवक्षया द्विवचनान्तेनैव। तथा च नित्यानि काम्यानि चैतान्येव नक्षत्राणि तान्यग्न्याधेय इत्यर्थः। अवशिष्टानि त्रिभ्योऽन्याधाननक्षत्राणि येषां वैश्यनिषादरथकाराणामाधानं तेषामेवाविशेषेणाऽऽधाननक्षत्राणि। ऋतुमासकालाभिधानपूर्वकनक्षत्रविशेषकालाभिधानं कार्यं तथाऽपि पाठक्रमानुसारेणैवं कृतम्। अत्र ब्राह्मणादिविशेषोपादानेऽपि नोत्तरत्र तदनुवृत्तिर्विहितेष्वेव कामार्थताऽपि।

काम्येषु विशेषाश्रवणात्प्राप्ताधानानां सर्वेषामेवाऽऽह—

सर्वेषां तु काम्यानि।

ब्राह्मणादिनिषादान्तानां काम्यानि समानान्येव।

---

१ क. ख. ग च. ठ. ण 'षि क्तिका'।

तान्येवाऽऽह—

**कृत्तिकास्वग्निमादधीत यः कामयेत मुख्यो ब्रह्मवर्चसी स्यामि[1]ति ।**

उत्कृष्टं ब्रह्मवर्चसमध्ययनाध्यापनादिना वर्चस्तेजस्तद्वान्भवेयमिति कामः ।

तत्र दोषमाह—

**कामं तु मेऽग्निर्गृहान्दाहुकोऽस्त्विति ।**

ब्राह्मणे दृष्टो दोषो गृहदाहः स चेद्भवेद्भवतु परं तु फलं मे भूयादिति य एवं फलं कामयते स आदधीतेत्यर्थः । नित्ये तु न दोषः । कुतः, अस्मच्छाखायां फलवाक्य एव दोषश्रवणात् । शाखान्तरे तु ब्राह्मणस्य नित्यविधौ दोषस्याश्रवणादिति दर्शयितुं फलवाक्य एव तथोक्तो दोषो दर्शितः । नत्र ब्राह्मणे कामपदाश्रवणमिति न काम्यमिति शाखान्तरे समानजातीयेषु कामपददर्शनादत्रार्थवादेन फले कल्पिते समानार्थतैव ।

**रोहिण्यां यः कामयेत सर्वान्रोहान्रोहयेयमिति ।**

रोहानुच्छ्रयान्प्रजापशुधनादिकाभिवृद्धीः ।

**मृगशिरसि यः कामयेत श्रीमान्स्यामिति ।**

स्पष्टम् ।

**यः पुरा भद्रः सन्पापीयान्स्यात्स पुनर्वस्वोः ।**

पूर्वमनेककल्याणवांस्ततोऽपकर्षगतस्तस्यापकर्षस्य परिहारायेत्यर्थः ।

**यः कामयेत दानकामा मे प्रजाः स्युरिति स पूर्वयोः फल्गुन्योः ।**

प्रजा दातारो लोकास्तेषां मह्यं दानं दास्याम इति कामा भवन्त्विति यः कामयते सः ।

**यः कामयेत भगी स्यामिति स उत्तरयोः ।**

फल्गुन्योः । भगोऽधिकलक्ष्मीः ।

**विपरीतमेके समामनन्ति ।**

पूर्वयोर्यत्फलं तदुत्तरयोर्यदुत्तरयोस्तत्पूर्वयोरित्यर्थः ।

**हस्ते यः कामयेत प्र मे दीयेतेति ।**

मे मह्यं प्रदीयेतेति कामः पूर्ववत् ।

**चित्रायां भ्रातृव्यवान् ।**

गतम् ।

**विशाखयोः प्रजाकामः ।**

गतम् ।

---

१ क. ख. ग. छ. ट. ठ. ण. स्यामिति ।

अनूराधेष्वृद्धिकामः ।

ऋद्धिः समृद्धिः ।

श्रोणायां पुष्टिकामः ।

पुष्टिः पुत्रादिभाग्यम् ।

प्रोष्ठपदेषु ब्रह्मवर्चसकामः ।

गतम् ।

सूर्यनक्षत्रे वा ।

हस्ते वेदं फलमित्यर्थः ।

अथो खलु यदैवैनꣳ श्रद्धोपनमेत्तदाऽऽदधीत ॥ २ ॥

ब्राह्मणमेवेदं पठितम् । न नियमो वर्णविशेषेण कामेन वा नक्षत्रेषु यानि काम्यानि नक्षत्राण्युक्तानि तेष्वेव सर्वेषु सत्यां श्रद्धायामादधीतेत्यर्थः । तदुक्तमाप-स्तम्बेन—सर्वाणि नित्यवदेके समामनन्तीति । सर्वाणि काम्यानि । अत्र भरद्वाजः—अथातः श्रद्दधानस्यर्तुं सूर्यश्च नक्षत्रमिति । बौधायनस्त्वातुरविषयमित्याह ।

वसन्तो ब्राह्मणस्याऽऽधानकालः ।

चैत्रवैशाखौ मीनमेषयोर्वाऽऽदित्यास्तिष्ठति स वसन्तः । मुखं वा एतदृतूनां यद्वसन्त इति । मुखं वा एतत्संवत्सरस्य यत्फल्गुनी पूर्णमास इति ।

ग्रीष्मो हेमन्तश्च राजन्यस्य ।

वसन्तादनन्तरं मासद्वयं ग्रीष्मः । हेमन्तो मार्गशीर्षपौषौ वृश्चिकधनुषोर्वा रविः ।

वर्षा रथकारस्य ।

श्रावणभाद्रपदौ मिथुनकर्कटयो रविर्वा ।

शरद्वैश्यस्य ।

आश्विनकार्तिकौ कन्यातुलयोर्वा रविः । अथ वा मेषादिवसन्तप्रवृत्त्या सर्वेऽप्यृत-वो ज्ञेया ज्योतिःशास्त्रात् ।

सर्वेषाꣳ शिशिरः ।

ब्राह्मणादीनां रथकारनिषादयोरपि ।

अमावास्यायां पौर्णमास्यामापूर्यमाणपक्षे वा ।

आपूर्यमाणः पक्षः पूर्वपक्षः । उक्तेष्वेवर्तुषु पौर्णमास्यमावास्यापूर्यमाणपक्षाश्च विकल्पेन । आपूर्यमाणपक्ष इत्यनेन पूर्णमासग्रहणे पुनरुपादानमतिशयार्थं तत्प्रतिप-द्ग्रहणार्थं च ।

**पुण्ये नक्षत्रे ।**

आपूर्यमाणपक्ष इत्यनेन पुण्ये नक्षत्र इति समुच्चीयते वाशब्दस्याश्रानन्वयात् । तत्र समानस्याह्नः पञ्च पुण्यानि नक्षत्राणीत्युक्तानि नात्र संबध्यन्ते । सूर्योदयात्पूर्वमेव गार्हपत्याधानमुदिते सूर्य आहवनीयाधानमिति नैतस्य प्रयोजनमस्ति । तस्मात्पुण्यनक्षत्रशब्देन कृत्तिकाद्यानि पूर्वोक्तानि द्वादश नक्षत्राणि गृह्यन्ते । तान्यविशेषेण सर्ववर्णानाम् । अस्मिन्पक्षे कृष्णपक्षपरिसंख्या कृत्तिका ब्राह्मणस्येत्यत्र पक्षे तु कृष्णपक्षेऽपि न तत्र पर्वादरोऽपि कृत्तिकासु वसन्ते पर्वासंभवाद्वैशाख्यमावास्यामात्रे कचित्संभाव्यत इति ब्राह्मणस्याऽऽधानकालस्तु दुर्लभता स्यात् ।

**यत्र त्रीणि संनिपतितान्यृतुर्नक्षत्रं पर्व तत्समृद्धम् ।**

श्रुतिरेव वाजसनेयिनामियं पठिता । संनिपतितानि गार्हपत्याधानसमये मिलितानि यदि लभ्यन्ते तत्समृद्धमतिसगुणमित्यर्थः ।

**विप्रतिषेध ऋतुर्नक्षत्रं च बलीयः ।**

त्रयाणां समुच्चयालाभे पर्वादरो न कार्यः किंतु वसन्तादिकेषूक्तेष्वेवर्तुषु नक्षत्रमेव ग्राह्यम् । अत्राऽऽपूर्यमाणपक्ष इति समुच्चीयते तदर्थमेवाऽऽरम्भोऽस्य ।

**सोमेन यक्ष्यमाण आदधानो नर्तुं न नक्षत्रꣳ सूर्क्षेदित्येकेषाम् ।**

यस्य ब्राह्मणस्य व्रात्याश्विननिमित्तं नास्ति स सोमपूर्वाधानं कुर्यात् । अन्यस्य तु तन्न संभवति । अकृतसांनाय्येऽपि तद्विकारे पशौ नाधिकारीति तस्य होमपूर्वमिष्टिपूर्वं वोभयथा दर्शपूर्णमासाभ्यामिष्ट्वा प्रायश्चित्तपशू कृत्वा सोमेन यजेत । केचित्तयोः पश्वोः सवनीयेन सहाऽऽलम्भं कल्पकारवचनादिच्छन्ति । न सूर्क्षेन्नाऽऽद्रियेत । सूर्क्षधातुरादरार्थः । तत्र नक्षत्रे पर्वणि वाऽऽधाय सेष्ट्यपवृज्याऽऽगामिपर्वपर्यन्तं दीक्षापक्षमाश्रित्य कर्तुं शक्यते । एकादशीमारभ्य द्वादशीमारभ्य वा तथा कर्तुमसमर्थो वसन्तमात्रेऽग्निमादधीत ऋतुमपि न सूर्क्षेदित्युक्तम् । इदं ब्राह्मणव्यतिरिक्तविषयम् । तेषां न वसन्त आधानकालः सोमस्तु वसन्त एव सर्वेषाम् । ततस्तु सोमानुरोधेनैवाऽऽदधीत ।

**प्राचीनमुदीचीनं वोदवसाय शालीनोऽग्नीनादधीत प्राचीनप्रवणे देवयजने ।**

शालीनो नाम शाला गृहास्तेषु निवसति स शालीन इति शब्दानुगतिः शालीनवृत्त्याऽनुजीवनमस्येति धर्मशास्त्रे दर्शिता वृत्तिस्तद्वान् । गृहेभ्य उदीचीनं प्राचीनं वा देवयजनयोग्यं देशमौपासनेन सह गत्वा तत्राऽऽदधीत । देवयजनदेशः सोमे व्याख्यास्यते तत्र प्राचीनप्रवणे स्वभावतोऽग्नीनादधीत तत्र शालायामित्यर्थः ।

गृहेषु यायावरः ।

यात्राशीलो यात्वा यात्वा वृत्तिं संपाद्य जीवति सोऽपि धर्मशास्त्रलक्षितो ज्ञेयः । स तु यत्र तिष्ठति गृहेषु तेष्वेव शालां संपाद्याऽऽदधीत । अथ यजमानस्य वपनं दतो धावते स्नात्यहतं वासः परिधत्ते वपनवर्जं पत्न्या अपि, भोजनमध्ययनयोः शास्त्रान्तरे दृष्टम् ।

उदीचीनवंश्शा शाला ।

कर्तव्येति शेषः । अत्राऽऽपस्तम्बेनोक्तमन्यदाहवनीयस्यागारमन्यद्गार्हपत्यस्येति । अत्रास्मदाचार्येण न विशेषोऽभिहितस्तथाऽपि याजमानेऽगारद्वयमुक्तम् । सभ्यावसथ्ययोरगाराद्बहिरेवाऽऽयतने बाह्यत इतरयोरिति वक्ष्यति । एकां शालां कुर्याद्यावता शालायाः प्राग्भागे ब्राह्मौदनिकगार्हपत्यदक्षिणाग्न्यायतनानि भवन्ति । शालायाः पश्चिमार्धं तु सर्वेषामवस्थानार्थं संभारादिपदार्थस्थापनार्थमिति गम्यते । तथैवोक्तं बौधायनेनापि देवयजनेऽगारमपरिमितं भवति तस्य द्वे द्वारौ कुर्वन्ति प्राचीं दक्षिणां च मध्ये गार्हपत्यस्याऽऽयतनं कुर्वन्ति पुरस्ताद्द्वादशसु विक्रामेष्वाहवनीयायतनमिति ।

तस्याः पूर्वेण मध्यमं वंश्शमधिवृक्ष-
सूर्य औपासनाद्ब्राह्मौदनिकमादधाति ।

तस्याः शालाया यो मध्यमो वंशस्तस्याधस्ताद्भागस्य पूर्वेणाग्रेऽदूरे स्थले ब्राह्मौदनिकमादधातीति संबन्धः । तस्या एव प्रतीतत्वेऽपि तस्या इति विशेषणमन्यस्या मा भूदिति । तेनाऽऽहवनीयागारत्वेन द्वितीयाऽपि शाला ज्ञापिता भवति । सा च प्राग्वंशोदग्वंशा वा प्राग्वंशा द्वितीया कात्यायनेनोक्ता । वृक्षानधिकृत्य नाधस्तान्नोपरिष्टात्सूर्यस्तिष्ठति स कालोऽधिवृक्षसूर्य इत्यर्थः । औपासनाग्नेरेकदेशं गृहीत्वा तस्मिन्स्थले स्थापयति तूष्णीमेव । ब्राह्मौदनः पच्यतेऽस्मिन्निति भाविनी संज्ञा तम् । औपासनाग्नेः सकाशादेकदेशमुद्धृत्य प्रागुक्तस्थले तमग्निमादधाति स्थापयति । सर्वं वौपासनमित्यापस्तम्बः । सर्वाधानपक्षे सायंप्रातःकालौपासनहोमौ पार्वणस्थालीपाक इत्येतानि लुप्यन्ते न प्रतिनिधिनाऽग्निना लौकिकेन कार्याणि नित्यत्वेन प्राप्तस्य द्रव्यस्याभावे प्रतिनिधिः । न चौपासनाग्निरस्ति गार्हपत्यादिरूपेणावस्थान्तरप्राप्तौ पूर्वस्वरूपस्याभाव एवाऽऽत्यन्तिकः । किंच नाग्नेः प्रतिनिधिर्न्यायेनेत्येव वदिष्यति । यदा पुनराधानं तदा निर्मन्थ्यमेवाऽऽदधीत ब्राह्मौदनिकं न तु पुनरौपासनोत्पत्तिर्यथा धार्य आहवनीयो न गार्हपत्यमागच्छत्यनुगत एवं गार्हपत्यत्वेन भृतो न पूर्वयोनिं प्रत्यागच्छति योनेरभावादेवार्धाधानेऽप्ययं न्यायः समान एव तदाऽप्युत्पत्तिर्निर्मन्थ्यादेवेति निर्मन्थ्याधानमप्यापस्तम्बेनोक्तम् । प्रकृतमनुसरामः—केचिदर्धाधाने पार्वणसायंप्रातर्होमानिच्छन्त्यर्धोपासने । कुतः । तस्यौपासनेनाऽऽहिताग्नित्वं तथा पार्वणेन चरुणा दर्शपूर्ण-

मासयाजित्वं चेति कश्चिद्वक्ष्यत्याचार्यस्ततस्तु साक्षादाहिताग्नित्वे संपन्ने तद्भक्तिरूपस्य नानुकल्पस्यानुष्ठानमिति । तत्र नित्यमत ऊर्ध्वमिति नित्यं सायं प्रातर्व्रीहिभिर्यवैर्वेति नित्यग्रहणनिवृत्तिरिति सत्याषाढमतम् । अन्येषां स्मार्तानां कर्मणां तु तत्रैव कर्तव्यत्वम् । सर्वाधाने तु लौकिक एव कर्तव्यतामाहुः फलार्थानां नियतानामङ्गभूतस्याग्नेरभावे यथाऽवकीर्णिनो ब्रह्मचारिणो गर्दभपशुचन्वेऽग्नीनां लौकिकानामेव ग्रहणम् । विधुरवल्लौकिक एव कर्तव्यता न लोपः । वचनादिति पूर्वेण वैषम्यं तत्र मनुनाऽग्नौकरणहोमस्य दक्षिणाग्नावपि विधानात्तथा कार्यं मासिकादावष्टकाहोमो लौकिक एव तस्याग्नौकरणशब्दवाच्यत्वाभावात् । यावदरणी निष्टपति तावदौपासनं पार्वणौ च ब्राह्मौदनिक एवानुगमने तु पुनरौपासनमुत्पाद्य तमादधाति, तस्याद्यापि गार्हपत्याद्यवस्थानापन्नस्यास्त्येवौपासने प्रवेश इति सर्वं न्यायतोऽवगन्तव्यमर्धाधाने पिण्डपितृयज्ञः पूर्वमौपासन आरब्धोऽपि सेष्ट्याधानानन्तरं दक्षिणाग्नावेव । आधानापवर्गात्पूर्वं तु लोपे प्रायश्चित्तमेव । प्रकृतमनुसरामः—ततः परं ब्रह्मौदनहोमार्थं पात्राण्यासादयति । तत्राऽऽदौ परिस्तरणं दक्षिणतो ब्रह्मयजमानयोः सदने उत्तरेण ब्राह्मौदनिकमग्निं दर्भान्संस्तीर्य पात्राणि प्रयुनक्ति दर्वीं समिधमाज्यस्थालीमग्निहोत्रहवणीं चरुस्थालीं मेक्षणं शूर्पं कृष्णाजिनमुलूखलं मुसलं लोहितमानडुहं चर्म पाजकं वा चित्रियाश्वत्थस्य तिस्रः समिधो निर्वपणार्थं शरावाणि तथोद्धरणार्थं चत्वार्युपवेषकाष्ठं चेति प्रयुज्य ।

निशायां ब्रह्मौदनं चतुःशरावं निर्वपति ।

निशायां रात्रेः पूर्वार्धे ब्रह्मणो देवतायाः संबन्ध्योदनो ब्रह्मौदनस्तमुद्दिश्य निर्वपति । तस्य परिमाणं चतुःशराव इति शरावं यद्यपि पात्रविशेषस्तथाऽपि तस्यौदनप्रकृतिद्रव्यत्वं न संभवतीति तेन परिमितं धान्यमुक्तं योग्यत्वात् । तथा चतुरो मुष्टीन्निर्वपतीति मुष्टिशब्देन मुष्टिपरिमितं धान्यमुच्यते । तथाऽपि पात्रस्य परिमाणानवगमात्पुनर्धान्यं तु न परिच्छिन्नं स्यात् । ततस्तु रूढ्याऽत्र शरावशब्देनैकस्य भोजनपर्याप्तौदनप्रकृतिधान्यमत्र ज्ञेयम् । तस्य चतुर्वारं निर्वापेणोपादानं वक्ष्यति । तत्तु प्रसिद्धयाऽग्निहोत्रहवण्या मुष्टिमात्रधान्योपादानं न संभवति बहुत्वाद्द्रव्यस्य । तस्माद्भोजनपर्याप्तौदनप्रकृतिधान्यग्रहणसमर्थं शरावपात्रमेवाग्निहोत्रहवणीस्थाने ग्राह्यम् । तादृशेन चतुर्वारमुप्तधान्यस्यौदनश्चतुःशराव इति हि निर्णयः । चतुष्प्राश्यमोदनमिति कात्यायनोक्तेश्चतुर्भ्यो भोजनपर्याप्त इत्यवगम्यते । स ब्रह्मशब्दाभिधेयब्राह्मणदेवताप्राश्योऽयमोदन इत्यवगते प्राशनं प्रधानम् । चत्वार आर्षेयाः प्राश्नन्तीति सार्थवादश्रुतेश्च । होमस्तु तत्संस्कारस्तस्य विस्मरणे न पुनः क्रियेति । अत्र निर्वपतिना न यागानुमानं प्रत्यक्षेणात्र प्राशनमात्रस्य विधानादपूर्वं कर्मेदं निर्वापस्य चतुःशरावसंबन्धाच्चतुर्वारं शरावेण मितं

द्रव्यं निर्वपति न हि पात्रस्य निर्वापो भवति। यद्यपि संख्या पात्रगता श्रूयते तथाऽपि द्रव्यपरिच्छेदस्यान्यतोऽसिद्धेर्द्रव्यपरिच्छेदार्थैव। आग्नेयमष्टाकपालं निर्वपतीत्यादौ चतुरो मुष्टीन्निर्वपतीति परिच्छेदकस्य श्रूयमाणत्वात्कपालानां पाकसंबन्धः। अस्य दर्विहोमत्वान्न तथा। चतुर्भिः शरावैः संस्कृतो निर्वापेण स ओदनश्चतुःशरावः। एकेन शरावेण चतुर्वारं निरुप्त इति यावत्। अथ यदि चतुर्षु शरावेषु पाकस्तदा संस्कृतं भक्षा इति सूत्रेणाष्टाकपालवदुपपद्यते। तदग्ने स्थाल्यां सर्पिष इति न युज्येत। अतश्चत्वार्युदपूर्णानि पात्राणि स्थाल्यामानीय तत्र पाक उदकपाकपक्षे। अत एव वैखानसेनोक्तम्—चतुःशरावं निर्वपतीत्युपक्रम्य चतुःशरावैस्तण्डुलानावपतीति। उक्तमावपनकाले प्रवृत्तिनिमित्तं संपादितमाचार्यमते तु निर्वपणे पाकोदके वेति ज्ञेयम्।

रोहिते चर्मणि पांजके वा।

रोहितं लोहितं चर्म तदानडुहमेवेति सूत्रान्तरे शकटवाहिनश्चर्मेत्यर्थः। पांजकं पात्रं महानसोपकरणं पटलकशब्दवाच्यं वंशपात्रविशेषः। तत्र शरावेण गृहीत्वा निर्वपति।

तत्प्रकारमाह—

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो
हस्ताभ्यां ब्रह्मणे प्राणाय जुष्टं निर्वपामि ब्रह्म-
णेऽपानाय ब्रह्मणे व्यानाय ब्रह्मण इति चतुर्थम्।

निर्वपतीति चतुर्थे केवलं ब्रह्मणे निरुपपदाय। जुष्टं निर्वपामीत्यनुषङ्गः सर्वत्र।

अवहत्य [1]रश्मि चरुं[*] श्रपयति।

यथार्थमवहत्यैकस्यामेव स्थाल्यां दुग्धे चरुं श्रपयति।

चतुर्षु वोदपात्रेषु।

पयसा सह चतुर्णामुदपात्राणां विकल्पो न स्वश्रुतया स्थाल्या। ततस्तु स्थाल्यां चतुर्षु पात्रेषूदकयुक्तेषु निहितेषु सत्सु चतुर्वारं पात्रेण स्थाल्यामानीयोदकं तत्र श्रपयति।

न निर्णेनेक्ति।

न प्रक्षालयतीत्यर्थः।

नावसिञ्चति।

उदकं तण्डुलेषु रेचितं तत्र प्रस्रावयति न त्यजतीति यावत्।

* चरुमिति पदं सूत्रपुस्तकेषु नास्ति।

१ क. ख. घ. छ. ट. स्यात्। २ ख. पाचके। ३ क. ख. ट. पांचकं।

श्रपयित्वाऽभिघार्योद्वास्य ।

पुनः श्रपयित्वेति वचनं सूत्रान्तरपक्षनिरासार्थम् । वैखानसेनोक्तमीषच्छ्रपणं तथाऽऽपस्तम्बेन जीवतण्डुलमिव श्रपयतीति । स्वमते तूचित एव पाकः । लौकिके-नाऽऽज्येनाभिघार्य ।

प्रवेधसे कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे । यतो भयमभयं तन्नो अस्त्ववदेवान्यजेहृव्यानिति जुहोति ।

जुहोतिचोदितत्वात्स्वाहाकारः ।

अभिमन्त्रयते वा ।

नात्र स्वाहाकारः । स्थाल्यामेव स्थितस्याभिमन्त्रणम् । अस्मिन्पक्षे तु न प्रवेधसे कवये ब्रह्मणे दानं न च होमोऽतो ब्रह्मभ्य ओदनो ब्रह्मौदन इत्येव पर्यवस्यत्यभि-मन्त्रणं तु संस्कारः । होमपक्षे द्रव्यस्य देवतायाश्च संस्कारः । कविशब्देन ब्रह्मा ब्राह्मणाश्च गृह्यन्ते । उभयत्र त एव देवताः संस्कारोऽप्रधानोऽत्र त एव जात्यैकव-चनेनोक्तास्तथाहि प्रवेधसे कवये शुश्रुवांसो वै कवय इति श्रुतेः । एतदेव दर्शा-यितुमार्षेयेभ्य ऋत्विग्भ्य उपोहतीत्युक्तम् । तत्राऽऽर्षेयवचनमेष वै ब्राह्मण ऋषिरा-र्षेय इति श्रुतेस्तथोक्तं नो चेद्विशेषणवैयर्थ्यम् । अथ प्रवेधस इति विशेषणं तस्यैव यज्ञविधायकत्वादथ वा विधातृत्वमारोप्य स्तुत्यर्थम् । सर्वथा परमेष्ठिरूपेण निरूपितो ब्रह्मा वा होमे देवतेति सर्वमवदातम् । दर्व्योपहत्येत्यापस्तम्बवैखानसौ दर्वी होमा-र्थेति तथाऽन्यस्याविधानादप्राप्तिः ।

तं चतुर्धा व्युद्धृत्य प्रभूतेन सर्पिषोपसिच्य ।

तमोदनं चतुर्षु पात्रेषु पृथक्पृथक्स्थाल्याः सकाशान्निर्गमय्य स्थापयति । प्रभूतेन बहुतरेण लौकिकेन सर्पिषोपसिच्य युक्तं कृत्वा प्रत्येकम् ।

स्थाल्यां[1] सर्पिःशेषमानयति ।

उपसेचनशेषं निक्षिपति ।

अनुच्छिन्दन्निव चतुर्भ्य आर्षेयेभ्य ऋत्विग्भ्य उपोहति ।

भूभागेन वियोगमप्रापयन्नृत्विग्भ्यः समीपं प्रत्येकमूहति प्रापयति । नैतद्दानमध्वर्यु-कर्तृकत्वात् । ऋत्विग्भ्य इति चतुर्थ्या निर्देशात्तानुद्दिश्य निवेदनमत्र विधीयत उपो-हतीत्यनेन । तदेतद्दानं यद्यपि तथाऽपि न ददातिनाऽनुनिर्दिष्टमतोऽध्वर्युपूर्व(?)आर्षे-येभ्य इति व्याख्यातम् ।

प्राशितवत्सु ।

वरदानं याजमानम् ।

---

१ क. ग. च. छ. ट. ठ. ण. °स्थाल्यां प्र° ।

यः स्थाल्याꣳ शेषस्तस्मिन्नार्द्राः सपलाशाः ॥ १ ॥ स्तिभिकवतीरस्तिभिका वा प्रादेशमात्रीर्लक्षण्यस्याश्वत्थस्य तिस्रः समिधोऽनक्ति ।

ससर्पिष्के स्थालीगते ब्रह्मौदनशेषे समिधोऽनक्ति तेन सस्नेहाः करोति । सपलाशाः सपत्राः स्तिभिकानि फलानि मुकुला इति केचित् । तद्वत्यो न वा सर्वा अपि तथैवैकरूपा एवेत्येवमर्थं सूत्रारम्भः । अङ्गुष्ठतर्जन्योः प्रसारितयोरन्तरालं प्रादेशो द्वादशाङ्गुलो वा लक्षणोपयोग्यो लक्षण्यो येन ग्रामतीर्थसीमादि लक्ष्यते । स्पष्टमन्यत् ।

चित्रियादश्वत्थात्संभृता बृहत्यः शरीरमभिसꣳस्कृताः स्थ । प्रजापतिना यज्ञमुखेन संमितास्तिस्रस्त्रिवृद्भिर्मिथुनाः प्रजात्या इत्यभिमन्त्र्य ।

समिधः ।

ब्राह्मौदनिक आदधाति ।

वक्ष्यमाणमन्त्रैरेकैकां प्रतिमन्त्रं ब्राह्मौदनिकेऽग्नावादधाति न स्वाहाकारः ।

श्रीन्मन्त्रानेव पठति—

प्र वो वाजा अभिद्यवो हविष्मन्तो घृताच्या । देवाञ्जिगाति सुम्नयुः । उप त्वा जुह्वो मम घृताचीर्यन्तु हर्यत । अग्ने हव्या जुषस्व नः । उदग्ने तव तद्घृतादर्ची रोचत आहुतम् । निꣳसानं जुह्वो मुख इति तिसृभिर्गायत्रीभिर्ब्राह्मणस्य ।

आदधातीत्यनुषङ्गः ।

एतासां तिसृणोऽन्या विकल्पार्थमाह—

समिधाऽग्निं दुवस्यतेत्येषा । उप त्वाऽग्ने हविष्मतीर्घृताचीर्यन्तु हर्यत । जुषस्व समिधो मम । तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि । बृहच्छोचायविष्ठ्येति वा ।

एता ब्राह्मणस्य ।

समिध्यमानः प्रथमो नु धर्मः समक्तुभिरज्यते विश्ववारः । शोचिष्केशो घृतनिर्णिक्पावकः सुयज्ञो अग्निर्यजथाय देवान् । घृतप्रतीको घृतयोनिरग्निर्घृतैः समिद्धो घृतमस्यान्नम् । घृतप्रुषस्त्वा सरितो वहन्ति घृतं पिबन्सुयजा यक्षि देवान् । आयुर्दा अग्न इति त्रिष्टुब्भी राजन्यस्य ।

स्पष्टम् ।

त्वामग्ने समिधानं यविष्ठ देवा दूतं चक्रिरे हव्यवाहम् ।
उरुज्रयसं घृतयोनिमाहुतं त्वेषं चक्षुर्दधिरे चोदयन्वति ।
त्वामग्ने प्रदिव आहुतं घृतेन सुम्नाय वः सुषमिधा समी-
धीरे । स वावृधान ओषधीभिरुक्षित उरुज्रयाꣳसि
पार्थिवा वितिष्ठसे । घृतप्रतीकं व ऋतस्य धूर्षदमग्निं मित्रं
न समिधान ऋञ्जते । इन्धानो अक्रो विदथेषु दीद्यच्छु-
क्रवर्णामुदु नो यꣳसते धियमिति जगतीभिर्वैश्यस्य ।

गतम् । निषादरथकारयोरनुपदेशात्तूष्णीमेवाऽऽदधाति ।

धारयति ब्राह्मौदनिकम् ।

मिथुनावसिक्तरेतसौ ददाति याजमानं न प्रयाति न प्रवसति ।

संवत्सरमृतुं द्वादशाहं चतुरहं त्र्यहं द्व्यहमेकाहं वा ।

पूर्वकृतसंकल्पानुसारेण धारणं विकल्पितम् ।

प्रयात्यनुगते चैवं विहितं ब्रह्मौदनं
पक्त्वैताः समिधोऽभ्यज्याऽऽदध्यात् ।

नैमित्तिकमेतत् ।

यद्येनꣳ संवत्सरेऽग्न्याधेयं नोपनमेदेवं
विहितं ब्रह्मौदनं पक्त्वैताः समिधोऽ-
भ्यज्याऽऽधाय यदा शक्नोत्यथाऽऽधत्ते ।

दैवान्मानुषाद्वा संवत्सरे संकल्पितमग्न्याधेयमेनं यजमानं नोपनमेन्नाऽऽगच्छेन्न स्यात्तदोक्तं कार्यम् । संवत्सरग्रहणं कल्पितत्वाद्युपलक्षणम् । यदा शक्नुयात्तदा युक्तर्तु-नक्षत्रयोरेवाऽऽदधीत, उदगयन आपूर्यमाणपक्षे पूर्वोक्तरीत्या ।

श्व आधास्यमानो ब्रह्मौदनं पचति ।

नात्र समिदाधानं पूर्ववदनभिधानान्न चैतद्ब्रह्मौदनाङ्गम् । अग्निसंस्कारोऽयं पृथगेव तस्याविधानाद्द्वितीये ब्रह्मौदने न प्राप्नोति ।

श्व आधास्यमानेऽध्वर्युरेताꣳ रात्रिं व्रतं चरति ।

आधास्यमाने यजमानेऽग्नौ वा कर्मणि प्रत्ययः ।

नानृतं वदति न माꣳसमश्नाति न स्त्रियमुपैति । प्रजा अग्ने
संवासयाऽऽशाश्च पशुभिः सह । राष्ट्राण्यस्मा आधेहि
यान्यासन्सवितुः सव इति गार्हपत्यायतने कल्माषमजं

**बध्नाति शिल्पैरेताᳬं रात्रिं यजमानं जागरयन्ति ॥ ४ ॥**
**इति हिरण्यकेशिसूत्रस्य तृतीयप्रश्ने द्वितीयः पटलः ।**

---

कल्माषः श्वेतः कृष्ण आयतनसंस्कारार्थम् । शिल्पैर्गीतवाद्यादिभिः । तदुक्तमाप स्तम्बेन—वीणातूणपणवैर्जागरयन्तीति । शल्कैरग्निमिति याजमानं शिल्पैरेतां रात्रिं जागर्तीत्यपि च ।

**इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैजयन्त्यां तृतीयप्रश्ने द्वितीयः पटलः ॥ २ ॥**

---

अथ तृतीयः पटलः ।

---

**ततः संभारानाहरति वैश्वानरस्य रूपमित्येतैर्यथारूपम् ।**

यथारूपं यथालिङ्गं वैश्वानरस्येत्यादिमन्त्राणां यावतां यादृशं रूपं प्रतिपाद्यमस्ति तावतः संभारान्संभारनामकान्पदार्थान्संभ्रियन्तेऽग्नयो येषु ते संभाराः । अन्यत्र सर्वत्र ब्राह्मणपठितानां मन्त्राणां पाठेन विनियोगेऽपि प्रकृते लिङ्गमात्रेण विनियोगोऽस्य ब्राह्मणस्य स्वशाखात्वं दर्शयितुम् । पूर्वं सर्वत्र पाठेनैव मन्त्रा विनियुक्तास्ततो नेदं ब्राह्मणमस्मच्छाखागतमिति शङ्का तामपनेतुं लिङ्गमात्रेण विनियोगा आदिप्रतीकेन। पूर्वं प्रतीकानुपादानमस्य ब्राह्मणस्य विकल्पप्रदर्शनार्थम् । एतस्याः संहिताया विकल्पेन नाना ब्राह्मणानि सन्तीति तन्मध्यगतमिदं ब्राह्मणमिति प्रदर्शितम् । अत एव क्वचिदेतद्ब्राह्मणमन्त्रांस्त्यक्त्वाऽन्यब्राह्मणमन्त्रान्दर्शयति । तत्रापि ते वैकल्पिका इति ज्ञापितं भवति । वैश्वानरस्य रूपं पृ० तु न इति मन्त्रे यद्यपि सिकताशब्दो नास्ति तथाऽपि ब्राह्मणे क्रमेण सिकता निवपति एतद्वा अग्नेर्वैश्वानरस्य रूपमिति लिङ्गमन्येषां मन्त्राणां स्पष्टं लिङ्गमास्ति । ततोऽयं प्रथमः प्रथमस्य संभारस्य प्रकाशक इति लिङ्गात्सिकतासु विनियोगो ब्राह्मणानुसारेण ज्ञेयः । आहरणमायतनसमीपे प्रत्येकं मन्त्रोऽत एव क्वचिन्मन्त्रद्वयमपि ब्राह्मणेन दर्शितं रूपं मन्त्रद्वयं प्रकाश्यमतो द्वयस्यैक एव मन्त्र इत्यपि ज्ञेयम् । वैश्वानरस्येति सिकताः । यदिदं दिव इत्यूषान् । ऊतीः कुर्वाण इत्याखूत्करम् । ऊर्जं पृथिव्या इति वल्मीकवपाम् । प्रजापतिसृष्टानामिति सूदम् । यस्य रूपमिति वराहविहतम् । यत्पर्यपश्यदिति पुष्करपर्णम् । याभिरदृᳬहदिति शर्कराः । अग्ने रेत इति रजतम् । तूष्णीं सुवर्णशकलानि अश्वो रूपमित्यश्वत्थः । ऊर्जः पृथिव्या इत्यौदुम्बरम् । गायत्रियेति देवानामिति द्वाभ्यां पलाशम् । यया त इति शमीम् । यत्ते सृष्टस्येति वैकङ्कतम् । यत्ते तान्तस्येत्यशनिहतम् । यं त्वा समभरन्निति संभृत्य सह निदधाति । ततः संस्कृत्य ।

जातवेदो भुवनस्य रेत इह सिञ्च तपसो यज्जनिष्यते । अग्निम-श्वत्थादधि हव्यवाह२ँ शमीगर्भाज्जनयन्यो मयोभूः । अयं ते योनिर्ऋत्विय इति द्वाभ्यां ब्राह्मौदनिक उपव्युषमरणी निष्टपति।

उपव्युषमुषःकालश्चतस्रो घटिकास्ततः पूर्वं व्युष उप नितरां तपति तापयतीत्यर्थः । सकर्मकस्य प्रयोगः ।

दोग्ध्रा च ते दुग्धभृच्चोर्वरी ते ते भागधेयं प्रयच्छामि ताभ्यां त्वादध इत्यरणी यजमानाय प्रयच्छति ।

स्पष्टम् । मही विश्पत्नीति यजमानः प्रदीयमाने प्रतीक्षते । आरोहतमिति प्रतिगृ-ह्णाति । ऋत्वियवती स्थ इति प्रतिगृह्याभिमन्त्रयते ।

मयि गृह्णामि यो नो अग्निरिति द्वाभ्यामात्मन्नग्निं *गृहीत्वा ।

आत्मनि गृहीत्वा स्थापयित्वा । उभावपि जपतो मन्त्रौ विशेषस्तु भावनाऽग्नेः स्थापनस्य ।

अग्नी रक्षा२ँसि सेधति शुक्रशोचिरमर्त्यः । शुचिः पावक ईड्य इत्यभिमन्त्र्यानुगमयति ब्राह्मौदनिकम् ।

ब्राह्मौदनिकमभिमन्त्र्येति संबन्धः । पश्चाच्छान्तिं प्रापयति । इदमहमनृतादिति मन्त्रं जपित्वा यजमानो वाचं यच्छति ।

प्राचीनं ब्राह्मौदनिकाद्गार्हपत्यायतनमुद्धन्ति [1] ।

प्रतिज्ञेयं प्राग्भागेऽगार एव । उद्धनने खननम् । गार्हपत्यायतनमिति सिद्धवदनु-वादात्पूर्वमेव शौल्बेन विधिना कृतम् ।

उद्धन्यमानमस्या अमेध्यमप पाप्मानं यजमानस्य हन्तु । शिवा नः सन्तु प्रदिशश्चतस्रः शं नो माता पृथिवी तोकसातेति ।

उद्धन्तीत्यनेनेत्यर्थः ।

दक्षिणतःपुरस्ताद्धितृतीयदेशे नेदी-यसि गार्हपत्यस्य दक्षिणाग्नेरायतनम् ।

दक्षिणपूर्वयोरन्तराले व्यतीतस्तृतीयस्तृतीयो भागो यस्य पूर्वापरान्तरालदेशस्य तस्मिन् । नेदीयसि अतिसमीपे गार्हपत्यस्य । स एवंप्रकारः शुल्बेन दर्शितः ।

* सूत्रपुस्तकेषु गृह्णीत इति विद्यते ।

१ क. ग. ण. °त्याद्गार्हपत्याय° ।

प्राचीनं गार्हपत्यायतनादाहवनीयायतनमुद्धन्ति बाह्यत इतरयोः ।

उद्धन्तीतिमन्त्रसंबन्धार्थं पूर्वाभ्यां पराभ्यां चाऽऽयतनाभ्यामाहवनीयागारस्य पृथग्दर्शनादन्योदग्वंशा शालाऽऽहवनीयार्थे कर्तव्या तस्याः सभ्यावसथ्ययोः शालाया उदग्वंशाया बहिस्तयोरपि स्वतन्त्रे एव शाले प्रयोजनान्तरप्रयुक्ते । सभा तु देवनशाला, आवसथोऽतिथिशाला तयोर्भवौ सभ्यावसथ्यौ तयोरायतने न तूदीचीनवंशायाम् ।

गार्हपत्यात्प्राचीनं कियति प्रदेश आहवनीयायतनं तत्राऽऽह—

द्वादशसु[1] विक्रामेष्वग्निमादधीतेत्यविशेषेण श्रूयते ।

द्वादशसु विक्रामेष्वग्निमादधीतेति ब्राह्मणे वर्णविशेषेण मानं श्रूयतेऽतस्तेषां त्रैवर्णिकानां निषादरथकारयोरपि भवतीत्यर्थः । विक्रामः प्रक्रमशब्देन व्याख्यातः प्रक्रमो व्याख्यातो वैकल्पिकः ।

अष्टासु ब्राह्मणस्यैकादशसु राजन्यस्य द्वादशसु वैश्यस्य ।

पूर्वेण पूर्वयोर्विकल्पः ।

चतुर्विंशतिरपरिमितं च साधारणे ।

सर्ववर्णानामित्यर्थः ।

अपरिमित आदधीतेत्यस्यार्थमाह—

चक्षुषा प्रक्रमान्प्रमिमीतेति विज्ञायते ।

अपरिमितशब्दस्तु ब्राह्मणेन चक्षुर्निमित आदधीतेत्यनेनैव व्याख्यात इत्यभिप्रायेणाऽऽह विज्ञायत इति श्रुत्यैव विशेषो ज्ञायते । चक्षुषा मानं कुर्यादेतावन्तो विक्रमा भविष्यन्तीति प्रमिमीत न तु दण्डादिनेत्यपरः पक्षः । पूर्वैरेव मानैर्विकल्पते । एतत्पक्षद्वयमपि सर्वेषाम् ।

प्राचीनमाहवनीयात्सभा तत्र सभ्यस्य प्राचीनमावसथः सभायास्तत्राऽऽवसथ्यस्य ।

आयतनमित्यनुषङ्गः सर्वत्र ।

एवमनुपूर्वाण्येषां कर्माणि क्रियन्ते ।

एषामायतनानामग्नीनां च संस्कारकर्माणि येन क्रमेणाऽऽयतनानि दर्शितानि तेनैव क्रमेण क्रियन्ते न तु प्रादक्षिण्येन । उद्धन्यमानमिति प्रत्यायतनमावर्तते क्रमेणोद्धन्ति ।

---

१ घ. ङ. ज. झ. ञ. ढ. 'सु प्रक्रमे' ।

शं नो देवीरभिष्टय आपो भवन्तु पीतये।
शंयोरभिस्रवन्तु न इत्यद्भिरवोक्षति।

अर्वाचीनमुष्टिना प्रत्यायतनं मन्त्रेणाऽऽवृत्त्या।

उद्वयं तमसस्पर्युदु त्यं चित्रमित्यत्र खरहोमानेके समामनन्ति ॥ ९ ॥

खरेष्वायतनेषु होमाः खरहोमा आयतनसंस्कारत्वात्प्रत्येकं वैखानसः पृथक्पृथक्स्रुचैर्जुहोतीत्याह हिरण्यं निधायेति च।

उपकृप्ताः संभाराः पञ्च पार्थिवाः सप्त वा।

विकल्पोऽग्रे विनियोगार्थं संभृतास्तु सप्तापि।

एवं वानस्पत्याः।

सप्त पञ्च वेत्यर्थः। उपकृप्ताः पूर्वमेव संभृताः।

तेषामेकैकं द्वैधं विभज्य।

तेषां पञ्चानां सप्तानां वैकैकमंशमर्धमिति यावत्तत्पुनर्द्वैधं विभज्यते। तदुक्तं वैखानसेनाऽऽपस्तम्बेन च सिकतार्धं द्विधा कृत्वेति।

गार्हपत्यदक्षिणाग्न्योर्निवपति।

अर्धं द्वेधाकृतं द्वयोरायतनयोरग्निशब्देन लक्षितयोरनुपक्तयोर्वा।

अर्धांस्त्रेधं कृत्वा पूर्वेषु।

आहवनीयादिषु त्रिषु यद्येकस्तदाऽर्धस्य न विभागः सर्वमर्धमाहवनीय एव।
एवं विभागप्रकारमभिधाय समन्त्रं प्रयोगमाह—

अग्नेर्भस्मासीति सिकता निवपति।

अर्थपृथक्त्वेऽभ्यावर्तेत इति न्यायात्प्रत्यायतनं मन्त्रावृत्तिः। युक्तविभागप्रकारेणेत्यर्थः। पुरीषमसीत्यन्तम्।

संज्ञानमसि कामधरणमित्यूषान्।

भूयादिति मन्त्रान्तः। गतम्।

तान्निवपन्यदद‍श्चन्द्रमसि कृष्णं तदिहास्त्विति मनसा ध्यायति।

तानूषानायतनेषु निवपन्प्रत्येकं मन्त्रोच्चारणसमये यच्चाद इदं चन्द्रमसि कृष्णं रूपं दृश्यते तदिह पृथिव्यामस्तु। एवं संभावनाऽदृष्टार्था श्रुतिसामर्थ्यात्। द्वावेतौ मन्त्रौ लिङ्गेन प्रापितौ सिकतोषाणां पुरीषामृतत्वेन संस्तवादाधानब्राह्मणे।

उदेनमग्ने अधिमातुः पृथिव्या विश आविश
महतः सधस्थात्। आशुं त्वा यो दधिरे देवयन्तो हव्यवाहं भुवनस्य गोपामित्याखूत्करम्।

गतम्।

यत्पृथिव्या अनामृतꣳ संबभूव त्वे सचा।
तदग्निरग्नयेऽददात्तस्मिन्नाधीयतामयमिति
गार्हपत्यायतने वल्मीकवपां निदधाति।

प्रत्येकं भिन्नमन्त्रप्रदर्शनार्थं मध्ये निवपतीत्युक्तम्।

यदन्तरिक्षस्यानामृतमिति दक्षिणा-
ग्नेर्यद्दिवोऽनामृतमित्याहवनीयस्य।

संबभूवेति द्वयोरप्यनुषङ्गः प्रथमात्।

तूष्णीमितरयोः।

अत्रार्थपृथक्त्वेऽभ्यावर्तेत इत्यावृत्तिरन्तिमस्य मन्त्रस्य प्राप्ता तथाऽपि गार्हपत्या दित्रयं सामविधानार्थं पृथिव्यादिरूपेण संस्तुतं न सभ्यावसथ्ययोस्तदस्तीति द्वि इति मन्त्रलिङ्गविरोधात्तूष्णीमिष्टमाचार्यस्य। वैखानसस्य चाऽऽपस्तम्बवत्सर्वत्र मन्त्रः।

उत्समुद्रान्मधुमाꣳ ऊर्मिरागात्साम्राज्याय
प्रतरां दधानाः। अमी च ये मघवानो
वयं चेषमूर्जं मधुमत्संभरेमेति सूदम्।

गतम्।

इयत्यग्र आसीरिति वराहविहतम्।

एतावानेव मन्त्रः।

अदो देवी प्रथमाना पृथग्यद्देवैर्न्युप्ता व्यसर्पो महि त्वा।
अहꣳहथाः शर्कराभिस्त्रिविष्टप्यजयो लोकान्प्रदिशश्चतस्र
इति शर्करास्ता भिवपन्यं द्वेष्टि तस्य वधं मनसा ध्यायति।

नित्यत्वात्पाप्मानमेव ध्यायति द्वेष्य(ष्या)भावे। एवं सप्त पार्थिवाः पुष्करपर्णं न पार्थिवेषु। पञ्चपक्षे ये केचन पञ्च मन्त्रास्तल्लिङ्गा एव।

सर्वेषामभावे विकल्पमाह—

लौहान्यौदुम्बराणि पार्थिवानां विकल्पार्थानि भवन्ति।

वाशब्देन भाव्यं लौहान्यौदुम्बराणि वेति, तथा नोक्तं समानार्थानां विकल्पः स्वत एव सेत्स्यतीति मत्वाऽनेन शिष्या व्युत्पादिता अन्यदपि वाशब्दाभावेऽपि विकल्पो यथा स्यादिति। तत्तु पूर्वं वेदिकरणप्रस्तावेऽमावास्याविषये दर्शितमेव। लौहानि लोहस्य शकलानि। तथोदुम्बरस्य ताम्रस्य शकलानि।

यास्ते शिवास्तनुवो जातवेदो या अन्त-
रिक्ष उत पार्थिवीर्याः। ताभिः संभूय सगणः

सजोषा हिरण्ययोनिर्वह इत्यमग्न इत्युत्त-
रतः संभाराणा॰ सुवर्ण॰ हिरण्यमुपास्यति ।

आयतनेषु संभारेषूत्तरत आयतनेष्वेवोपास्यति स्थापयति ।

अतिप्रयच्छति रजतं द्वेष्याय यदि द्वेष्यं न
विन्देन्निरस्येन्नोपास्य पुनराददीत ॥ ६ ॥

दानं निरसनं चाहष्टार्थे निरसनं नाऽऽयतनेषु । स्पष्टमन्यत् ।

चन्द्रमग्निं चन्द्ररथ॰ हरिव्रतं वैश्वानरमप्सुषद॰
सुवर्विदम् । विगाहं तूर्णिं तविषीभिरावृतं भूर्णिं
देवास इह सुश्रियं दधुरित्युपास्तमनुमन्त्रयते ।

नानुमन्त्रणं दानपक्षे ।

पुष्करपर्ण उदुम्बरः शमी विकङ्कतोऽ-
श्वत्थोऽशनिहतो वृक्षः पलाशश्च ।

अग्निममाकृष्यत इति वानस्पत्यास्तानितः प्रथमं जज्ञ आग्निरिति निवपतीति योग्यत्वात्सकृदिति नानुषज्यते तद्विकल्पार्थं द्वितीयेन कल्पेन । तदयमर्थो यथा पूर्वपार्थिवा विभज्य न्युप्ता एवमेतेऽपि तथैव न्युप्या मन्त्रस्तु सर्वेषामेक एव । अथवाऽऽहरणमन्त्रैस्त-लिङ्गैरावृत्तिस्तैस्तदेति वानस्पत्यास्तानित्येतावदेवाग्निममाकृष्यते निवपतीति पूर्वतनं विप्रकृष्टमाकृष्यते । तदुक्तं वैखानसेन संभारग्रहणमन्त्रैरित्येक इति ।

अपि वा येऽन्ये पुष्करपर्णाद्विकङ्कताच्चेति वानस्पत्या-
स्तानितः प्रथमं जज्ञे अग्निरिति सकृदेवैकैकस्मिन्निवपति ।

पुष्करपर्णविकङ्कतौ तु पूर्ववद्विभज्यैवान्यानेकत्र कृत्वा प्रत्येकं मन्त्रावृत्त्या सर्वेष्वायतनेषु निवपति सकृदिति सर्वत्रेति भ्रमनिरसार्थमेकैकस्मिन्नित्युक्तं सकृत्सहैव सर्वान् ।

सं या वः प्रियास्तनुव इत्यूषान्सिकताश्च स॰सृजति ।

आयतनस्थान् । तदेवं ज्ञायते पूर्वपुञ्जानेव प्रत्येकं विविक्तानायतने स्थापयेदिति ।

सं वः सृजामि हृदयानि स॰सृष्टं मनो अस्तु वः । स॰-
सृष्टः प्राणो अस्तु व इति सर्वान्संभारान्स॰सृजति ।

पूर्वं मन्त्रेण संसृष्टानसंसृष्टानेकत्र मिश्री करोति प्रत्यायतनं मन्त्रावृत्त्या ।

ऋत॰ स्तृणामि पुरीषं पृथिव्यामृतेऽध्यग्निमादधे सत्येऽ-

---

१ घ. ङ. ज. झ. ञ. ढ. 'मभिम' । २ घ. ङ. ज. ढ. °क्षः पाला° । ३ ग. ठ. ण. पूर्वं पा° । ४ क. ग. च. ट. ठ. ण. पूर्वं पु° ।

ध्यग्निमादधे दिवस्त्वा वीर्येण पृथिव्यै महिम्ना । अन्त-
रिक्षस्य पोषेण सर्वपशुमादध इति सꣳसृष्टान्कल्पयति ।

कल्पयति सर्वान्समी करोत्यायतनेषु प्रत्येकं मन्त्रावृत्त्या कल्पनं समर्थीकरणमग्नि-धारणे तत्सर्वायतनस्तरणायेति मन्त्रलिङ्गाद्गम्यते ।

उद्यत्सु रश्मिष्वपोह्य(ह्य) ब्राह्मौदनिकस्य भस्म ।

उद्यत्सु वर्तमानसामीप्य उक्तमुदयात्पूर्वं गार्हपत्याधानविधानादायतनगतं निःशेषं कृत्वा ।

दशहोत्राऽरणी संनिधाय ।

चित्तिः स्रुगिति द्वे अरणी संगते कृत्वा तत्र ब्राह्मौदनिकस्य स्थाने निदधाति । प्रतीचीनप्रजननामिति वैखानसेन स्थानमुक्तमापस्तम्बेन भस्मापोह्य तस्मिञ्छमीगर्भा-दग्निं मन्थतीति । अत्र वैखानसेनोक्तमधरारणिमर्धमात्मानं विष्णुमर्धमग्निं ध्यायन्सहा-ग्नेऽग्निनेति मन्थतीति ।

सहाग्नेऽग्निना जायस्व सह प्रजया सह रय्या सह पुष्ट्या सह पशुभिः सह ब्रह्मवर्चसेनेत्यत्राग्निं मन्थत्युपातिष्ठत्यश्वे ।

सकृदेव मन्त्रो विचेष्टापृथक्त्वेऽपि द्रव्यस्यैकत्वात् । उप समीपेऽश्वे तिष्ठति । अत्र प्रकृते ब्राह्मौदनिकाग्ने स्थाने ।

मथ्यमानेऽग्नौ चतुर्होतॄन्यजमानं वाचयति ।

ब्रह्मवादिनो वदन्ति किं चतुर्होतॄणां चतुर्होतृत्वमित्यत्र चतुर्होतृशब्देन गृह्यन्त एव बहुवचनेन होतॄनिति विनियुक्ता न तु पृथिवी होतेत्ययमेव बहुवचनवैयर्थ्या-पत्तेः । चित्तिः स्रुक् । पृथिवी होता । अग्निर्होता । सूर्यं ते चक्षुः । महाहविर्होतेति पञ्च तान्यजमानं वाक्यशः पाठयति ।

अगन्नाग्निर्होता पूर्वः पूर्वेभ्यः पवमानः पावकः शुचिरीड्य इति जातमग्निमनुमन्त्रयते ।

अनुलक्षीकृत्य मन्त्रेण प्रकाशयेत् । अत्र याजमानं प्रजापतेस्त्वा प्राणेनेति । जातमग्निमभिप्राणिति अभिजिघ्रतीत्यर्थः । अहं त्वदस्मीति जातमभिमन्त्र्य वरं ददाति वाचं च विसृजतेऽत्र क्षौमे वाससी परिदधाते यजमानः पत्नी च ते अपवृत्तेऽग्न्या-धेयेऽध्वर्यवे दत्त इति याजमानम् ।

अध्वर्युः—

१ ख. घ. छ. ट. °यतीति । २ घ. ङ. ज. झ. ञ. ठ °मभिमन्त्र्° ।

अजीजनन्नमृतं मर्त्यासोऽस्रेमाणं तरणिं वीडुजम्भम् ।
दश स्वसारो अग्रुवः समीचीः पुमा᳚ꣳसं जातम-
भिसꣳरभन्तामिति जातं परिगृह्णाति ॥ ९ ॥

इति हिरण्यकेशिसूत्रे तृतीयप्रश्ने तृतीयः पटलः ।

---

परिग्रहणमञ्जलिनेति वैखानसो जातमञ्जलिनाऽभिगृह्णातीत्यापस्तम्बः । परितोऽञ्ज-लिना गृह्णाति परित उत्तानौ हस्तौ किंचिदूर्ध्वाङ्गुष्ठपार्श्वौ करोतीत्यर्थो भावना च परिगृहीतोऽसीति ॥

इति हिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैजयन्त्यां
तृतीयप्रश्ने तृतीयः पटलः ॥ ३ ॥

---

अथ चतुर्थः पटलः ।

---

तमादाय प्रथमाभ्यां व्याहृतीभ्यां यथर्ष्याधानेन
प्रथमाभ्या᳚ꣳ सार्पराज्ञीभ्यां प्रथमेन च घर्मशि-
रसा प्राणे त्वामृतमादधाम्यन्नादमन्नाद्याय गोप्तारं
गुप्त्यै । अग्ने गृहपते परिषद्य दिवः पृथिव्याः
पर्यन्तरिक्षाल्लोकं विन्द यजमानाय पृथिव्यास्त्वा
मूर्धन्सीद यज्ञिये लोके यो नो अग्ने निष्ट्यो
यो निष्ट्योऽभिदासतीदमहं तं त्वयाऽभिनि-
दधामीति गार्हपत्यायतने संभारेषु प्रतिष्ठापयाति ।

तमग्निमादाय तूलशुष्कगोमयचूर्णादिना पुष्टं पात्रेणाऽऽदाय प्राञ्चमुद्धृत्याऽऽसीन इति वैखानसापस्तम्बौ । व्याहृतीभ्यां यथर्ष्याधानेनेति मन्त्रनामधेयं यथर्षयो यस्य यजमानस्य ऋषिस्तमनतिक्रम्य यो मन्त्र आधानसाधनं स यथर्ष्याधानमित्यभि-धीयते । स त्वग्रे वक्ष्यते । सर्वमग्रे स्वयमेव वदति । सर्वेषां मन्त्राणामन्ते रथंतरे साम्नि प्रारब्धे संभारेषु प्रतिष्ठापनं तत्राऽऽधानमन्त्राणां करणमन्त्रत्वेऽपि न मन्त्रान्तेन कर्मा-दिसंनिपातो न स्याद्रथंतरारम्भेण व्यवधानादसंभवादन्य एव साम गायति तावत्पर्य-वस्यतीत्यत एवाऽऽहाऽऽपस्तम्बः–ब्रह्माऽऽग्न्याधेयसामानि परिगायतीति । बौधायनस्तु साम्नामर्थ उद्गातारमेवाऽऽह रथंतरं ब्रूहीत्यथैनमादधातीति । इदं छन्दोगानामेव युक्तम् । यद्यपि यजुर्वेदविहितत्वादुपांशुत्वमेव परिभाषायां दर्शितं तथाऽपि सामवेदे

साम्नामुत्पत्तेरसंभवाच्चान्यः कुर्यादिति युक्तमुद्गात्रा गानं तद्योनेर्ऋचां हिंकारमात्रस्य च प्रतिनिधित्वमुक्तं बौधायनेनैव ।

रथंतरे गीयमाने नक्तं गार्हपत्यमादधाति दिवाऽऽहवनी-
यमर्धोदिते सूर्य आहवनीयमादधाति पुरोदयमुदिते वा ।

नक्तमुदयात्पूर्वं दिवाऽऽहवनीयमस्यैवार्थोऽर्धोदिते सूर्य इति । पुरोदयमुदिते वाऽऽहवनीयमित्येव ।

सर्वानुदिते ब्रह्मवर्चसकामस्य ।

गार्हपत्यादीन्सर्वानुदित आदधाति । अत्र यजमानेन संकल्पः कार्यः—ब्रह्मवर्चसकामः सर्वानग्नीनुदित आधास्य इति । ततो गार्हपत्याद्याधानम् । अत्र यजमानो गार्हपत्यमुपतिष्ठत आह मन्त्रे सुगार्हपत्य इति पूर्वप्रतिज्ञातान्मन्त्रान्दर्शयति ।

भूर्भुवः सुवरिति व्याहृतयः ।

आरण्यकपाठस्याऽऽपस्तम्बोक्तस्य व्यावृत्तये पाठः प्रसिद्धानामपि व्याहृतीनाम् एतयोः प्रथमे पूर्वनिर्दिष्टे इत्यर्थः ।

भृगूणां त्वा देवानां व्रतपते व्रते-
नाऽऽदधामीति यथर्ष्याधानं भार्गवस्य ।

भार्गवगोत्रस्य यजमानस्य ।

अङ्गिरसां त्वा देवानां व्रतपते व्रतेनाऽऽदधामीत्याङ्गिरसस्य ।

गतम् ।

आदित्यानां त्वा देवानां व्रतपते व्रतेनाऽऽद-
धामीत्यन्यासां ब्राह्मणीनां प्रजानाम् ।

भार्गवाङ्गिरसव्यतिरिक्तानां ब्राह्मणानाम् ।

वरुणस्य त्वा राज्ञो व्रतपते व्रतेनाऽऽदधामीति राज्ञः ।

स्पष्टम् ।

इन्द्रस्य त्वेन्द्रियेण व्रतपते व्रतेनाऽऽदधामीति राजन्यस्य ।

क्षत्रियजातिमात्रो राजन्यो राज्ञो जातौ यदिति प्रत्ययः । पूर्वस्तु राज्याधिपतेरभिषिक्तस्येत्यर्थः ।

मनोस्त्वा ग्रामण्यो व्रतपते व्रतेनाऽऽदधामीति वैश्यस्य ।

ऋभूणां त्वा देवानां व्रतपते व्रतेनाऽऽदधामीति रथकारस्य ।

त एते मन्त्रा यथर्ष्याधानानीत्यभिधीयन्ते । निषादस्य नर्ष्याधानमन्यैरेव मन्त्रैरशिष्टैरिति ज्ञेयं गोत्राभावादनुपदेशाच्च मन्त्रस्य ।

भूमिर्भूम्नेति चतस्रः सार्पराज्ञियः ।

राज्ञ्य इति प्राप्ते छान्दस इयङ् । इयं वै सर्पतो राज्ञीति भूमिप्रकाशको मन्त्रः सर्पराज्ञीत्युच्यते । सर्पराज्ञी सैव सार्पराज्ञीति ।

घर्मः शिरस्तदयमग्निः संप्रियः पशुभिर्भुवत् । छर्दिस्तोकाय तनयाय यच्छ । वातः प्राणस्तदयमग्निः संप्रियः पशुभिर्भुवत् । स्वदिदं तोकाय तनयाय पितुं पच । अर्कश्चक्षुस्तदसौ सूर्यस्तदयमग्निः संप्रियः पशुभिर्भुवत् । यत्ते शुक्र शुक्रं वर्चः शुक्रा तनूः शुक्रं ज्योतिरजस्रं तेन मे दीदिहि तेन त्वाऽऽदधेऽग्निनाऽग्ने ब्रह्मणेति त्रीणि घर्मशिराꣳसि ।

घर्मशिर इति पदवन्मन्त्रसमुदितानि त्रीणि यजूंषि तथोच्यन्ते ।

एवं मन्त्रान्प्रदर्श्य दक्षिणाग्न्यादीनामाधानार्थमाह—

गार्हपत्येऽग्निप्रणयनान्या*दीप्य ।

आश्वत्थमिध्ममित्यापस्तम्बः ।

सिकताश्चोपयमनीरुपकल्पयते ॥ ८ ॥

उपयम्यतेऽग्निर्याभिस्ताः सिकता उपयमनीः शरावेण गृहीता भवन्तीत्यर्थः ।

अश्वं पुरस्ताद्धारयति ।

अग्नावुध्द्रियमाणेऽश्वं पुरस्ताद्धारयत्यन्येन ।

ओजसे बलाय त्वोद्यच्छे वृषणे शुष्मायाऽऽयुषे वर्चसे सपत्नतूरसि वृत्रतूर्यस्ते देवेषु महिमा सुवर्गः । यस्त आत्मा पशुषु प्रविष्टः पुष्टिर्या ते मनुष्येषु पप्रथे । तया नो अग्ने जुषमाण एहि । दिवः पृथिव्याः पर्यन्तरिक्षाद्वातात्पशुभ्यो अध्योषधीभ्यः । यत्र यत्र जातवेदः संबभूथ ततो नो अग्ने जुषमाण एहि । उदु त्वा विश्वे देवा इति चतसृभिर्गार्हपत्यादाहवनीयमुद्धराति ।

अग्निप्रणयनीयैर्दीप्तैः काष्ठैर्वैखानसः शराव उद्धृत्य तं सिकतापूरितेन पात्रेणोपयम्येति एवं गार्हपत्यादूर्ध्वं हरति गार्हपत्यात्पृथक्करोति ।

वामदेव्ये गीयमाने ।

साम्नि । गतम् ।

---

* आदीपयतीति सूत्रपुस्तकेषु पाठः ।

---

१ क. ग. च. ङ. ठ. ण श्वे० विभावसुरिति ।

नाऽऽत्मानमुपरीव न कर्णदघ्नमत्युद्गृह्णात्यात्मानम् ।

आत्मानं शरीरमुपरीव शिरस उपरीव तथा कर्णदघ्नं परिमाणे दघ्नच् । कर्णपरिमाणं चाऽऽत्मानं नात्युद्गृह्णाति । अत्र ब्राह्मणमुपरीवाग्निमुद्गृह्णीयादुद्धरन्निति तद्व्याख्यातमनेन सूत्रेण । कथम् । गार्हपत्यादाहवनीयमुद्धरन्नुपरीवोद्गृह्णीयादित्यत्रोपरीत्युच्यमाने न शिरसि नापि कर्णदघ्नमिवेति शब्देनैषदित्युक्तम् । व्यतिरेकेण वेदमेवोक्तम् । यदुपर्युपरि शिरो हरेत्प्राणान्विच्छिन्द्यादधोऽधः शिरो हरति प्राणानां गोपीथायेति । कर्णादध ऊर्ध्वमात्मानमिति सामानाधिकरण्यम् । अधोऽधः शिरो हरत्यस्यैवैतद्व्याख्यानम् ।

उद्यच्छतीध्ममुपयच्छत्युपयमनीः ।

पात्रेणेध्ममुद्यच्छति । पूर्वमग्निप्रणयनानीत्युक्तमिदानीमिध्ममिति यदाह तज्ज्ञापयत्याचार्यो नेध्मशब्दः संस्कारवचनोऽपि तु क्रियावचन इध्यतेऽग्निरनेनेति । तेन संस्कारमर्हतीत्यभिप्रायेण । उपयच्छतीति पूर्णपात्रमुपयमनीरेव दर्शितं तद्वैखानसवचनेन सेध्मं पात्रं सिकतापूरितेन पात्रेण संवृणुयाद्यथा प्रतप्तं पात्रं न हस्तं दहेत्तथोपयच्छति ।

उपयते धार्यमाणे ।

उपयम्यत इति उपयतोऽग्निस्तस्मिन्धार्यमाणे सति ।

लौकिकमग्निमाहृत्य मथित्वा वाऽऽग्नीध्रो दक्षिणाग्निमादधाति ।

पाकशालाग्निमन्यं शुद्धं लौकिकारण्योर्मथित्वा वा । वैखानसस्तु गार्हपत्यादग्निमाहृत्यैक इत्याहापि वा गार्हपत्यादेवान्वाहार्यपचनमादधातीत्याह बौधायनः । प्रजापतिरग्निमसृजतेति ब्राह्मणमप्युदाहृतम् । एकयोनय इत्येक इत्याश्वलायनः । यत्रेधाऽग्निराधीयत इति विधिसरूपार्थवादाच्च गार्हपत्ययोनित्वमप्यस्ति । तथा वा गार्हपत्यादग्निमाहृत्याऽऽग्नीध्र आदधाति ।

द्वितीयया व्याहृत्या यथर्ष्याधानेन द्वितीयतृतीयाभ्यां सार्पराज्ञीभ्यां द्वितीयेन[२] घर्मशिरसाऽग्नेऽभ्नपा मयोभुवः सुशेव दिवः पृथिव्याः पर्यन्तरिक्षाल्लोकं विन्द यजमानाय पृथिव्यास्त्वा मूर्धन्सीद यज्ञिये लोके यो नो अग्ने निष्ट्यो यो निष्ट्योऽभिदासतीदमहं तं त्वयाऽभि निदधामीति दक्षिणा[३]ग्न्यायतने संभारेषु प्रतिष्ठापयति यज्ञायज्ञिये गीयमाने ।

ऊर्ध्वज्ञुरासीनो वेत्यापस्तम्बः । भुवो भृगूणां त्वा० आऽयं गौः । त्रिंशद्धाम ।

---

१ क. ख. ग. च. छ. ट ठ. ण. °घ्नमुद्गृ° । २ घ. ङ. ज. झ. ञ. ढ. °न च घ° । ३ घ. ङ. ज. झ. ञ. ढ. °णाग्नेराय° ।

मातः प्राण० तुं पचाग्नेऽन्नपा इत्यादिनाऽऽदधातीत्यर्थः । अग्नेऽन्नपा इति वर्जयित्वाऽने-नोपतिष्ठते यज० ।

**यो ब्राह्मणो राजन्यो वैश्यः शूद्रो वा सुर इवं बहु पुष्टः स्यात्तस्य गृहादाहृत्याऽऽदध्यात् ।**

सुरो देवः स इव बहुप्रकारैर्धनधान्यपशुपुत्रादिभिः पुष्टः स्फीतः । परमपुष्टताख्या-पनायोक्तं सुर इवेतीति केचिद्व्याचक्षतेऽन्ये त्वसुर इति पदं कुर्वन्तोऽसुवद्रायो धनानि यस्य सोऽसुरः । ह्रस्वत्वं छान्दसम् । प्राणतुल्यं धनं व्ययितुमशक्त इत्यर्थः । अथवाऽसूत्रातीत्यसुरः । रा आदाने प्राणानेव पुष्णातीत्यर्थः । अतिकृपणो नृशंसः पर-स्मादेवाऽऽदाय पुष्टिं वृद्धिं प्राप्त इति व्याचक्षते । तस्य गृहादग्निमाहृत्य दक्षिणाग्नि-मादधातीत्यन्यः कल्पः ।

**अत ऊर्ध्वमस्यान्नं नाद्यात् ।**

पुरुषार्थः प्रतिषेधो यत्प्रभृत्यग्निराहृतस्तत्प्रभृति तस्यान्नं न भोक्तव्यं यजमानेन ।

**वृक्षाग्राज्ज्वलतो ब्रह्मवर्चसकामस्य ।**

स्वयमेव केनचिदग्निना वृक्षो दह्यमानस्तस्याग्रप्रदेशादग्निमाहृत्य ब्रह्मवर्चसकामस्य यजमानस्याऽऽदध्यात् । तत्र संकल्पः— ब्रह्मवर्चसकामो वृक्षाग्रादग्निमाहृत्य दक्षि-णाग्निमाधास्य इति ।

**भर्जनादन्नाद्यकामस्य ।**

भर्जनमम्बरीषं यत्राहरहर्भर्जनेन पाको जायते तस्मादानीयेत्यर्थः । स्पष्टमन्यत् ।

**या वाजिन्नग्नेः पवमाना पशुषु प्रिया तनूस्तामावह या वाजिन्नग्नेः पावकाऽप्सु प्रिया तनूस्तामावह या वाजिन्नग्नेः सूर्ये शुचिः प्रिया तनूस्तामावहेत्यश्वस्य दक्षिणे कर्णे यजमानमग्नितनूर्वाचयति ।**

कर्णसमीपे यज्ञतनुनामकान्मन्त्रान्वाचयति ।

**विक्रमस्व महाꣳ असि वेदिषन्मानुषेभ्यः । त्रिषु लोकेषु जागृहि प्रजया च धनेन च । प्राचीमनुप्रदिशं क्रमध्वम-ग्निनेति तिसृभिरश्वप्रथमाः प्राञ्चो गच्छन्ति ।**

सर्वेषां मन्त्रः पठितया सह प्रतीकोपात्ते द्वे एवं तिसृभिर्ऋग्भिरश्वः प्रथमोऽग्रगो येषामृत्विग्यजमानानां तेऽश्वप्रथमा आहवनीयायतनाभिमुखा गच्छेयुः ।

**जानुदघ्नेऽग्रे हरत्यथ नाभिदघ्नेऽथाऽऽस्यदघ्ने ।**

मन्त्रमुक्त्वा प्रागगमनं प्रारभ्य एवाग्रं जानुदघ्ने ध्री(ध्रि)यमाणमग्निं हरति । ततः किंचिद्गत्वा नाभिदघ्ने तथैव किंचिद्गत्वाऽऽस्यदघ्ने तथैव धृत्वा हरति ।

---

१ क. ख. ग. च. छ. ट. ण. 'व पु' ।

नाग्निमादित्यं च व्यवैति ।

अध्वर्युरग्निं पश्चात्कृत्वा मध्ये सूर्यस्याग्नेश्च व्यवायं न कुर्यात् ।

पूर्वमग्निं हरति पश्चादन्वेति दक्षिणतो वा परिगृह्येव हरति नाकोऽसि ब्रध्नः प्रतिष्ठा संक्रमणमिति समयार्धे हिरण्यं निधाय वरे दत्तेऽतिक्रामति ।

समयापथ(द)मर्धभागवाचि तथा चार्धार्धे हिरण्यं मन्त्रेण निधाय वर्त्मनि हिरण्यनिधानम् । तदुक्तं वैखानसेन तस्मिन्नध्वनि हिरण्यं निधायेति । यजमान इमा उ मामुपतिष्ठन्त्विति मध्याद्ध्रियमाणमग्निमभिमन्त्रयते वरं ते ददामीति वरं ददाति । ततोऽध्वर्युरतिक्रामन्दक्षिणतो यजमानो ब्रह्मा च ।

बृहस्पते परिदीया रथेनेति दक्षिणतो ब्रह्मा रथं वर्तयति ॥ ९ ॥ रथचक्रं वा ।

रथानामित्यन्तः । वर्तयति वाहयति विहारे तिष्ठन्गार्हपत्यादाहवनीयपर्यन्तम् । तदुक्तं वैखानसेन—गार्हपत्यादाहवनीयात्संततं त्रिः परिवर्तयतीति ।

यावच्चक्रं त्रिः परिवर्तते द्वेष्यस्य षट्कृत्वोऽभ्यस्थाद्विश्वाः पृतना अरातीरिति प्राञ्चमश्वं दक्षिणेन पादेन संभारानाक्रमयति पार्श्वतो वोत्तरतः संभाराणां यथाऽऽहितस्याग्नेरङ्गाराः पदमभ्यवपतस्यन्तीति ।

गार्हपत्यादारभ्याऽऽहवनीयपर्यन्तं नीत्वा पुनः प्रदक्षिणं गार्हपत्यपर्यन्तं वाहयति पुनस्तथैवेति त्रिवारं तावति कालेऽध्वर्युरग्निमाग्नीध्रहस्ते दत्त्वाऽश्वं प्राञ्चं तस्य दक्षिणेन पादेनाऽऽहवनीयायतनगतान्संभारानाक्रमयति अश्व आक्रामति तेन तथा कारयतीत्याक्रमयति संभाराणामुत्तरतः पार्श्वत उत्तरे पार्श्वे वोभयथाऽपि आहितस्याग्नेरङ्गारास्तत्पदमभि उपरि अवपतस्यन्तीत्येवमाक्रमयति मन्त्रेण ।

यदक्रन्दः प्रथमं जायमान इति प्रदक्षिणमश्वं पर्याणीय तदेव पदमाक्रमयति प्रत्यञ्चम् ।

परितो भ्रामयित्वाऽऽहवनीयं प्रति प्रत्यञ्चमानीय तेनैव पादेन तदेव पदमाक्रमयति प्रत्यङ्मुखम् । एतत्सर्वं चक्रस्य त्रिः परिवर्तनमध्य एव कर्तव्यम् । अर्वन्निति मन्त्रान्तः । द्वेष्यस्य षट्कृत्व इति प्रतिषेधार्थः ।

अश्वाभावेऽनडुहः पद आदधीत स तु पूर्ववाडेव स्यात्तस्य सदेव बन्धुः ।

अनः शकटं वहति तस्य वृषभस्य पदेऽग्निमादधीत तस्यानडुहः प्रतिनिधिरूपत्वेनाश्वलिङ्गस्य न निवृत्तिर्नानडुहः । सोऽनडुत्पूर्ववाट्पूर्ववयस्कः । तथोक्तं बौधायने-

न्नाश्वं पूर्ववहमिति युवानमित्येव तदुक्तं भवतीति । एवमनडुह्यपि ज्ञेयः । तस्य पूर्ववाहोऽश्वस्य पूर्ववाडेवानडुत्सदा बन्धुः समान इव (?) ।

प्रत्यङ्मुखे नियते धार्यमाणे ।

अश्वे वाऽनडुहि वा प्रत्यङ्मुख एवाऽऽहवनीयायतनदत्तपदे नियमेन कृते सति पुरुषान्तरैरध्वर्युः ।

यदिदं दिवो यददः पृथिव्याः संविदाने रोदसी संबभूवतुः । तयोः पृष्ठे सीदतु जातवेदाः शंभूः प्रजाभ्यस्तनुवे स्योन इत्यभिमन्त्र्य ।

अग्निमिति शेषः । आपस्तम्बेनोक्तम्—कमण्डलुपद आदधीतेति । बह्वृचब्राह्मणमजस्य पद आदधीतेति वाजसनेयकमिति । कमण्डलुशब्दोऽपि चतुष्पदपशुजातिवाची शाङ्गिरकैरुदाहियते कामण्डलेय इतिरूपसिद्धये । आकार्यकृत्यसिद्धये (?) ।

सर्वाभिर्व्याहृतीभिर्यथर्ष्याधानेन प्रथमोत्तमाभ्याᳬ सार्पराज्ञीभ्यामुत्तमेन[1] च घर्मशिरसा प्राणं त्वामृत आदधाम्यन्नादमन्नाद्याय गोप्तारं गुप्त्यै । अग्ने सम्राडजैकपादाहवनीयदिवः पृथिव्याः पर्यन्तरिक्षाल्लोकं विन्द यजमानाय पृथिव्यास्त्वा मूर्धन्सीद यज्ञिये लोके यो नो अग्ने निष्ट्यो यो निष्ट्योऽभिदासतीदमहं तं त्वयाऽभि निदधामी[2]त्याहवनीयायतने संभारेषु प्रतिष्ठापयति यज्ञायज्ञिये बृहति श्यैते च गीयमाने निहिते वारवन्तीयं गायति प्रतिषिद्धान्येके[3]षामग्न्याधेये सामानि ।

तमिध्ममिति शेषः । तिष्ठन्नेवाऽऽदधाति । यजमान आनशे व्या० व्यानश इत्याहितमाहवनीयमुपतिष्ठते तथाऽऽधानमन्त्रैश्च प्राणं त्वेतिवर्जम् । ये ते अग्ने० दध इति शिवाभिस्तनूभिराहितमाहवनीयमुपतिष्ठते । आधीयमान इति ब्राह्मणे दर्शनात्सूत्रे पुनर्यज्ञायज्ञिये गीयमान इत्यादिनिर्देशात्साम्नामाहवनीयाधानस्य सहभावोऽवगम्यते । आहवनीयाधानं चाल्पकालसाध्यमिति यज्ञायज्ञियबृहच्छ्यैतानां बहुकालसाध्यत्वादुद्धरणानन्तरमेवैषामारम्भो यावत्प्रतिष्ठापयत्यायतन आहवनीयम् । अत एव बौधायनेनोक्तं बृहति गीयमान आदधते । एकेषां शाखिनां प्रतिषिद्धान्याधानसंबन्धीनि

---

१ क. ख. ग. च. छ. ट. ठ. ण. 'न घ' । २ क. ख. ग. च. छ. ट. ठ. ण. °ति प्र° । ३ क. ख. ग. च. छ. ट ठ. ण. 'केषां सा° ।

सामानि तेन विहितप्रषिद्धत्वाद्विकल्प इति पर्यवस्यतीत्यर्थः । निहित आहवनीये वारवन्तीयं साम गायति । एतस्यापि विकल्पः ।

आनशे व्यानशे सर्वमायुर्व्यानश इत्याहितमाहवनीयमुपतिष्ठते ।

अध्वर्योरुपस्थानम् ।

नानभिहुतमुपस्पृशति ।

शमनहोमात्पूर्वमग्निस्पर्शनं न कुर्यात् ।

आज्येनौषधीभिश्च शमयितव्यः ।

अग्नय इत्यर्थः । शमनमेतेषामनेन कर्मणा भवतीति कर्माङ्गं ज्ञानम् ।

ओषधीराज्येऽवधाय या ते अग्ने पवमाना पशुषु प्रिया तनूर्या पृथिव्यां याऽग्नौ या रथंतरे या गायत्रे छन्दसीदं ते तामवरुन्धे तस्यै ते स्वाहा या ते अग्ने पावकाऽप्सु प्रिया तनूर्याऽन्तरिक्षे या वायौ या वामदेव्ये या त्रैष्टुभे छन्दसीदं ते ताम-वरुन्धे तस्यै ते स्वाहा । या ते अग्ने सूर्ये शुचिः प्रिया तनूर्या दिवि याऽऽदित्ये या बृहति या स्तनयित्नौ या जागते छन्दसीदं ते ताम-वरुन्धे तस्यै ते स्वाहेति तिस्रः पवमानाहुतीर्हुत्वा ।

अग्निः पवमानो देवता । पवमाननामिका आहुतीः । ओषधीर्यथाशक्ति संपादिताः सर्वा आज्ये लौकिके मिश्रयित्वा जुहोति । शमनहोमः सर्वेषु । नानभिहुतमित्याहव-नीयविषये ।

सभ्यावसथ्ययोराधानं वचनाभावान्न गार्हपत्यादपि तु—

लौकिकमग्निमाहृत्य मथित्वाऽऽहव-नीयाद्वा सभ्यावसथ्यावादधाति ।

अत्राऽऽपस्तम्बेनोक्तं यथर्ष्याधानमिति तस्मात्तावानेव मन्त्रः । स्पष्टमन्यत् ।

प्रतिषिद्धौ सभ्यावसथ्यावेकेषाम् ।

तस्माद्विकल्प इत्यर्थः ।

अग्न आयूꣳषि पवस इति तिसृभि-राश्वत्थीस्तिस्रः समिध आदधाति ।

न स्वाहाकारो देवता लिङ्गोक्ताः ।

---

१ घ. ङ. ज. झ. म. ढ. 'ज्येन चौष° । २ घ. ढ. °त्वा वाऽऽह° ।

सर्वा एकैकस्मिन् ॥ १० ॥

सर्वास्तिस्र एकैकस्मिन्नग्नौ गार्हपत्यादिक्रमेण । अदृष्टार्थत्वाद्यथाक्रममेकैकाधानं मा भूदित्यर्थः ।

अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः ।
तमीमहे महागयमिति तृतीयामेके समामनन्ति ।

अग्ने पावकेत्यस्याः स्थान इत्यर्थः ।

समुद्रादूर्मिर्मधुमाꣳ उदारदुपाꣳशुना सममृतत्वमानट् । घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः । वयं नाम प्रब्रवामा घृतेनास्मिन्यज्ञे धारयामा नमोभिः । उप ब्रह्माशृणवच्छस्यमानं चतुःशृङ्गो वमीद्गौर एतत् । चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याꣳ आविवेश स्वाहेति शमीमयीर्घृतान्वक्ताः सर्वा एकैकस्मिन् ।

समिध इत्यनुवृत्तिः । अग्निर्देवता । स्पष्टम् ।

प्रेद्धो अग्ने दीदिहि पुरो न इत्यौदुम्बरीꣳ समिधमादधाति विधेम ते परमे जन्मन्नग्न इति वैकङ्कतीं ताꣳ सवितुर्वरेण्यस्य चित्रामिति शमीमयीꣳ शमीमयीं पूर्वामेके समामनन्ति वैकङ्कतीमुत्तराम् ।

प्रत्येकमग्निषु ।

प्रातरग्निहोत्रस्याऽऽवृता तूष्णीं प्रातरग्निहोत्रं जुहोति ।

नेदमग्निहोत्रमपि तु कर्मान्तरमाधानाङ्गमिति वक्तुं प्रातरग्निहोत्रस्याऽऽवृतेत्युक्तम् । अग्निहोत्रवज्जुहोतीत्याध्वर्यवमेव सर्वं मन्त्रवर्जम् ।

जुहूꣳ स्रुवं च संमृज्य ।

त्रिवृच्च स्रौहितिश्चेत्यादिना यजमान आहवनीयमुपतिष्ठते विराजक्रमैश्च सर्वा यथालिङ्गम् ।

---

१ क. ख. ग. छ. ट. ण. °ता प्रा° ।

**चतुर्गृहीतेनाष्टगृहीतेन द्वादशगृहीतेन वा स्रुचं पूरयित्वा सप्त त इति पूर्णाहुतिं जुहोति ।**

अग्रेणाऽऽहवनीयं गत्वा दक्षिणतस्तिष्ठञ्जुहोति दर्विहोमत्वात्परिस्तरणसमन्त्रपरिषेकसमिदाधानपूर्वकं जुहोति स्वाहाकारेण पूर्णाहुतिनाम(मि)कामाहुतिम् । अग्निर्देवता ।

**तामेकेषां तूष्णीमग्निहोत्रमित्यधिकुरुते ।**

तां पूर्णाहुतिमेव तूष्णीमग्निहोत्रमिति अत्र स्थामेऽधिकुरुते नान्यत्तूष्णीमग्निहोत्रलक्षणं कर्मेत्येकेषां शाखिनाम् ।

**ये अग्नयो दिवो ये पृथिव्याः समागच्छन्तीषमूर्जं दुहानाः । ते अस्मा अग्नयो द्रविणं दत्त्वेष्टाः प्रीता आहुतिभाजो भूत्वा यथालोकं पुनरस्तं परेत स्वाहेति द्वितीयाम् ॥ ११ ॥**

**इति हिरण्यकेशिसूत्रे तृतीयप्रश्ने चतुर्थः पटलः ।**

---

द्वितीयां पूर्णाहुतिं जुहोति । अग्नयो देवताः ।

**इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैजयन्त्यां तृतीयप्रश्ने चतुर्थः पटलः ॥ ४ ॥**

---

अथ तृतीयप्रश्ने पञ्चमः पटलः ।

---

**तदानीमेवाऽऽग्नेयस्याष्टाकपालस्यान्वाधानादीनि कर्माणि प्रतिपद्यते ।**

तदानीमेवेति सद्यः पूर्णाहुत्यनन्तरमेव नतु पवमानहविर्वत्कालान्तरेऽपीत्युक्तम् । अन्वाधानादीनीति विकृतिस्वरूपं प्रदर्शितम् । प्रतिपद्यन्ते त एवर्त्विजः ।

**यत्प्राक्प्रोक्षणात्तत्कृत्वा ।**

उत्तरकर्मारम्भार्थमनुवादोऽवधेः ।

**सभायां मध्येऽधिदेवनमुद्धत्यावोक्ष्याक्षान्न्युप्य व्यूह्य (व्यु) समू(मु)ह्य मथयित्वाऽक्षेषु हिरण्यं निधाय निषसाद धृतव्रत इति जुहोति ।**

सभाऽऽस्थानप्रेक्षकास्तस्यां मध्येऽधिदीव्यन्त्यस्मिन्स्थाने तदधिदेवनं स्थानं तदुद्धत्यावोक्ष्य तत्र स्थानेऽक्षान्विभीतकान्न्युप्यैकत्र स्थापयित्वा व्यू(व्यु)ह्य विसृज्य समू(मु)ह्य

---

१ घ. ङ. ज. झ. ञ. ढ. °स्याग्न्यन्वाधानप्रभृतीनि ।

संहृत्य प्रथयित्वा प्रसार्य तेषु हिरण्यं स्थापयित्वा ब्रह्मयजमानयोरग्रेण गत्वा स्थितः । परिस्तरणपरिषेकौ न समित् । दर्विहोमधर्मेण जुहोति । सुकृतुः स्वाहेति मन्त्रान्तः । वरुणो देवता ।

आवसथे मध्ये परिषदो हिरण्यं निधाय प्रनूनं ब्रह्मण-
स्पतिर्मन्त्रं वदत्युक्थ्यम् । यस्मिन्निन्द्रो वरुणो मित्रो
अर्यमा देवा ओकांसि चक्रिर इति जुहोति ।

पूर्ववन्मन्त्रोक्ता देवताः । आवसथो(थ उ)क्तशाला । ब्रह्मयजमानयोरग्रेण गत्वा स्थितयोर्दक्षिणतः ।

उत नोऽहिर्बुध्नियः शृणोत्वज एकपात्पृथिवी समुद्रः ।
विश्वे देवा ऋतावृधो हुवानाः स्तुता मन्त्राः कविशस्ता
वहन्त्वेना राजन्हविषा मादयस्वेत्यावसथमभिमन्त्र्य ।

गतम् ।

शतमक्षान्यजमानाय प्रयच्छति ।

बिभीतकान् ।

तेषु कृतं विजित्य ।

तेष्वक्षेषु कृतं पणं मो(?) यजमाने विजित्य तत्कृतं विजयते । न्युप्तेष्वक्षेषु चतुष्कशो विभज्यमानेषु यत्र सर्वे भागाः समा भवन्ति स द्यूतप्रकारः कृतमित्युच्यते । यत्र त्रयोऽधिकाः स त्रेता । यत्र प्रबन्धिकौ स द्वापरः । यत्रैका स कलिरिति तस्य प्रकारास्तत्र कृतं विजयत इत्यर्थः । इदं याजमाने वक्ष्यमाणमनूदितम् । तत्रोक्तम्—कृतं विजित्य सभासद्भ्यः प्रयच्छति ते यज्ञयन्ति तदुभयमन्नं संस्कृत्य ब्राह्मणान्भोजयित्वेति ।

सभासद्भ्यः प्रदीयमानेषु व्रीहिभ्यो गां दीव्यता-
हिंश्सन्तः पर्वाणि विशसतेति संप्रेष्यति ।

यजमानेन प्रदीयमानेष्वक्षेष्वध्वर्युः प्रतितिरत्व(?)न्यद्याजमान एवोक्तम् । व्रीहिभ्यः प्रयोजनभूतेभ्यो गा दीव्यत पणं कुरुतेति कितवानाह । तथा तां गामसंज्ञपयन्तोऽवयवान्विशसत पृथक्पृथक्कुरुत जीवन्त्या एवाङ्गानि तवेदं ममेदमेवंप्रकारेण विभजतेति लक्षणयोच्यते । इदं कर्म राजन्यस्य यजमानस्य । तथैव वैखानसापस्तम्बाभ्या-

---

१ क. ख. ग. च. छ. ट. ठ. ण. °षदि हि° । २ ग घ. ङ. ज. झ. ञ. इ. °न्द्रो मित्रो वरुणो अ° ।

मुक्तं सभ्यावसथ्याधानाङ्गविषयमिति गम्यते। यत्सभायां वि० ते। तेन सो० तः। यदावसथे० प्रीत इति श्रुतेश्च। तदभावे तु नैतत्कर्म।

**कल्पेतां द्यावापृथिवी येऽग्नय इति**
**यथर्तु कृत्तिसामनसीभ्यामग्नीनुपतिष्ठते।**

सव्रता इति प्रथमस्यान्तः। विशन्त्वित्ति द्वितीयस्य। कृत्तिसामनस्यौ नाम। कथमुपस्थानं तत्राऽऽह यथर्तु यस्मिन्नृतावाधानं स एव शैशिरावित्येतत्पदस्थाने प्रयोक्तव्यः। अन्तरा द्यावापृथिवी वासन्तिकावृतू अभिकल्पमाना इति। अग्नय इति बहुवचनश्रवणाद्गार्हपत्यस्य पश्चादवस्थाय सर्वान्सकृदेवोपतिष्ठते।

**प्रोक्षणप्रभृतीन्याग्नेयस्य कर्माणि प्रतिपद्यते सिद्धꣳ संतिष्ठते।**

सिद्धं प्रकृतौ सिद्धं संतिष्ठते समाप्यते। दक्षिणास्तु याजमाने व्याख्यास्यन्ते।

**पवमानहविर्भिर्यजते संवत्सर ऋतौ मासेऽर्धमासे**
**द्वादशाहे चतुरहे त्र्यहे द्व्यहे श्वोभूते सद्यो वा।**

द्व्यह इत्युक्त्वा पुनः श्वोभूत इति वदता द्व्यहे व्यतीत इत्युक्तम्। तद्वत्संवत्सरेऽतीत इत्यपि ज्ञेयम्। बौधायनो द्वादशसु व्युष्टास्वित्याह। पवमानसंज्ञकैः। स्पष्टम्।

**सोमेन यक्ष्यमाणस्याऽऽदधानस्य पवमानहविषां सांवत्सरिकः कल्पः।**

सोमपूर्वाधाने तु पूर्वोक्ता विकल्पा न भवन्त्येव किं तु सोमेनेष्ट्वा संवत्सरान्ते पवमानहविर्भिर्यजते। अत्राऽऽपस्तम्बमते विकल्पः—निर्वपेदित्येके यदि निर्वपेदग्नये पवमानायाग्नये पावकायाग्नये शुचय इति तिस्र आज्याहुतीः सोमदेवताभ्यो वा हुत्वा निर्वपेदिति। प्राक्पवमानहविर्भ्यः सायंप्रातरग्निहोत्रं न होतव्यमिति न्यायविदः सूत्रकृतां मतमिति।

**अग्नये पवमानाय पुरोडाशमष्टाकपालं**
**निर्वपेदग्नये पावकायाग्नये शुचये।**

निर्वपेदष्टाकपालमिति चानुवर्तते।

**समानबर्हिषि नानाबर्हिषि वा।**

बर्हिःसमानत्वेनैकतन्त्रता लक्ष्यते। समानतन्त्राणि नानातन्त्राणि वेत्यर्थः।

**प्रथमं वा निरुप्योत्तरे समस्येत्।**

अग्नये पवमानाय पृथङ्निरुप्याग्नये पावकायाग्नये शुचये च समस्येत्समानतन्त्रेण निर्वपेदित्यर्थः।

**आग्नेयेन वाऽष्टाकपालेन समानतन्त्राणि कुर्यात्।**

पूर्वोक्तेन सहैतानि त्रीणि मिलित्वा चत्वार्यपि समानतन्त्राण्येव कुर्यात्। दक्षिणास्तु

याजमाने वक्ष्यन्ते । यदा सद्यः पवमानहवींषि तदाऽऽग्नेयेन समानतन्त्रता नान्यदाऽऽग्नेयस्य कालान्तराभावात् । सिद्धमिष्टिः संतिष्ठते ।

**अग्नीषोमीयमेकादशकपालमनुनिर्वपत्याग्नावैष्णवमेकादशकपालमैन्द्राग्नमेकादशकपालमादित्यै घृते चरुं विष्णवे शिपिविष्टाय त्र्यु ( त्र्यू (?)- द्धौ घृते चरुं सप्तदशाऽऽदित्यस्य सामिधेन्यो भवन्त्यादित्यस्येडाभागं ब्रह्मणे परिहृत्य सर्वे प्राश्नन्ति तथा चातुर्धाकरणिकानि ।**

पञ्च हवींषि समानतन्त्राणि पवमानहविषामनुनिर्वाप्यानि । त्र्युद्धौ[1] तिस्र ऋद्धयो यस्य पात्रस्य तस्मिन्पात्रे घृते । ऋद्धयः परित उन्नतता । सप्तदश सामिधेन्यो नियताः । पौर्णमासं तन्त्रं मुख्यात्वाद्भूयस्त्वाच्च । आदित्यस्य चरोरिडाभागप्राशनं पृथगेव ब्रह्मणो विधीयत इति । नान्यस्य भक्षणं तदर्थं तत्परिहृत्य पृथगिडायां स्थापयित्वा तथा चतुर्धाकरणभागोऽपि ब्रह्मणे पृथगेव तस्यापि चतुर्धाकरणसमये सर्वमादित्यं ब्रह्मार्थं प्रथम एव भागे निदध्यादिडाप्राशनं तत्सर्वं सहैव सर्वे प्राश्नन्तीति वचनात्काले । अत्र याजमानं व्याख्यायते दक्षिणार्थम् । आग्नेयस्य दक्षिणाकालेऽजं पूर्णपात्रं सार्वसूत्रमश्वं रथं वासः पट् च गा द्वादश चतुर्विंशतिमपरिमिता वा वर्धमाना वा ददाति । पूर्णपात्रमिति रूढः पुष्कलचतुष्टय(लाष्टक) संमितो व्रीह्यादिः ।

अष्टमुष्टि भवेत्किंचित्किंचिदष्टौ तु पुष्कलम् ।
पुष्कलैरष्टभिश्चैकः पूर्णपात्र उदीरितः ॥

उपबर्हणमुपधानं तत्सार्वसूत्रमित्यनेकवर्णसूत्रैर्नियतमुपबर्हणम् । स्पष्टान्यन्यानि । तासां धेनुरनड्वान्मिथुनौ चाऽऽदिष्टरूपाणि । आग्नेयस्य दक्षिणाऽन्वाहार्यस्तत्समये ततः पूर्वमित्यर्थादग्न्याधेयदक्षिणा इति क्रमोऽत एव बौधायनवैखानसौ—आग्नेयस्यान्वाहार्यमासाद्याग्न्याधेयस्याऽऽद्वादशभ्यो दक्षिणा ददातीति । तमासादितस्याग्न्याधेयदक्षिणाभ्योऽनन्तरं ददातीत्युक्तम् । अवश्यमन्वाहार्यपचनं कार्यमन्यथाऽऽधानसिद्धिर्न स्यात् । यदन्वाहार्यपचनेऽन्वाहार्यं पचन्ति तेन सोऽस्याभीष्टः प्रीत इत्यभिधानात् । तासां षडादिसंख्यानां गवां मध्ये धेनुर्धयन्ती वत्समथाऽऽकर्षति वर्धमाना इत्युक्तम् । उत्तरोत्तरमुपयोगं गच्छन्तीर्देया इत्युक्तत्वाद्विना वत्सं वर्धमानत्वाभावाल्लिङ्गं च क्रये नव द्रव्याणि विधाय दश संपद्यन्त इत्याह । तत्र धेन्वा क्रीणातीति वत्सोऽप्यनुकृष्टो विज्ञायते । अनः शकटं तेन वाही बलीवर्दः स्त्रीपुंसौ गावौ मिथुनौ

---

[1] ख. त्र्यृद्धौ ।

चत्वार्येतानि तु या गावः षडादिसंख्याकाः स्वरूपमात्रेणोक्तास्तास्वेव चतस्रो निर्दिष्ट-रूपा ब्राह्मणेन तु ताभ्योऽन्या ब्राह्मणे निर्दिष्टरूपाः । अयमाशयः—ब्राह्मणे ह्या द्वादशभ्यो ददाति काममूर्ध्वं देयमिति श्रूयते तत्राजादिवासोन्तानि षण्निर्दिष्टरूपाणि धेनु९ होत्र इत्यादिना धेनुरनड्वांश्च निर्दिष्टौ तथा मिथुनौ ददातीति चत्वारि वस्तूनि। तथा च दश संपन्नानि। तत्र षड्ददातीति श्रूयते तत्रैता दशभ्योऽधिका अपि त्वादि-ष्टरूपा एव चतस्रः षण्णां मध्ये द्वे अनादिष्टरूपे । तस्माद्ब्राह्मणे द्वादशपूरणार्थे ज्ञेये काममूर्ध्वमिति तु सति वैभवेऽधिकं तस्यैव व्याख्यानं शाखान्तरे द्वादशेत्यादि-कल्पेन ता अपि चतस्रो नित्या एवान्या वैकल्पिक्य इति । अजं पूर्णपात्रमुप-बर्हणमग्नीधे ददात्यश्वं ब्रह्मणे धेनुं होत्रे गार्हपत्यदेशेऽनड्वाहमाहवनीयदेशेऽध्वर्यवे शेषो यः स साधारणास्त्रिंशन्माने पूर्वयोः पवमानहविषोर्हिरण्यं दक्षिणां ददाति । चत्वारिंशन्मानमुत्तमे, अनुनिर्वाप्येषु प्रभूतान्वाहार्यो धेनुमादित्ये, एता दक्षिणा ददाति। अत्राऽऽपस्तम्बः—अनाढ्योऽग्नीनादधीत काममेकां दद्यात्सा सर्वासां गवां प्रत्या-म्नायो भवतीति। वैखानसस्तु सर्वदक्षिणानां प्रत्याम्नाय इत्याह । अग्न्याधेयदक्षि-णानामेवाऽऽग्नेयेऽन्वाहार्यः पवमानहविष्षु पुरोक्ता एवाऽऽदित्ये चान्येषामन्वाहार्य इति ज्ञेयम् । त्रिंशन्मानं [नि]यतादिमिस्त्रिंशता मितसुवर्णं पवमानहविषां तत्र शत-मानमेकं शाखान्तरे दृष्टम् ॥ इत्याधानं समाप्तम् ॥

**अथाग्निहोत्रारम्भः** । यजमानः सपत्नीकः प्राणानायम्याग्निहोत्रमारप्स्यमानो दशहोतारं सग्रहं होष्यामीति संकल्प्याग्निहोत्रापूर्वादन्यापूर्वप्रयुक्तत्वात् । आलप्स्यमान इति भविष्यत्कालमग्निहोत्रस्य निर्देशाद्दशहोतृहोमानन्तरमग्निहोत्रसंकल्प इति ज्ञेयम्। हुत्वाऽग्निहोत्रं सायंप्रातर्होष्यामि यावज्जीवमिति संकल्पः । सत्यां कामनायां स्वर्ग-कामः पत्नी स्वर्गकामेत्यधिकं न वाऽत्र त्रिंशद्वर्षादिविधानं यथा दर्शपूर्णमासयोर्वन-स्थाऽपि तु यत्प्रव्रजिते निवृत्तिरनधिकारा यथा विधुरे पत्न्यर्थे प्रव्रजिते च पत्नी पात्राणि सर्वाण्यरणी च बिभृयाद्यावज्जीवम् । कर्मादिष्वेतैर्जुहुयादिति श्रुतेर्भाष्यकार-वचनाच्चाऽऽहवनीये कूष्माण्डहोमः ।

**अग्निहोत्रमारप्स्यमानो दशहोतारं मनसाऽनु-**
**द्रुत्य सग्रह९ हुत्वा सायमग्निहोत्रस्याऽऽवृता**
**मन्त्रेण सायमग्निहोत्रं जुहोति व्याहृतीभिः प्रथ-**
**ममग्निहोत्रमुपसादयति तथा संवत्सरे ॥ १२ ॥**

वक्तव्यमन्यद्याजमाने वक्ष्यति तथाऽपि पावमानेष्टीनां सानुनिर्वाप्याणां समाप्त्य-नन्तरमग्निहोत्रारम्भो मन्त्रेणेति च द्वयं विधातुं प्रथमारम्भेऽपि काममन्यो जुहुयादिति वक्ष्यमाणत्वादाध्वर्यवे पाठः । उद्धरणपक्षेऽपि द्वादश रात्रीर्धार्येष्वेवाग्निषु होम इति

क्ष्यमाणत्वान्नानुगमनं नोद्धरणं च पवमानहविषां व्यवधानपक्षेऽपि यावदग्निहो-
ारम्भस्तावदजस्राणामेव धारणमाश्वपदिक एव द्वादश रात्रीर्होमविधानापरिसमाप्ते
ाऽऽधाने मध्येऽग्निधारणमेव यागमध्येऽनुगमने प्रायश्चित्तं प्राप्नोत्येवेत्युक्तम्। ततो
ादश रात्रीः सायंप्रातर्होमार्थमपि धारणमिति निर्णय आश्वपदिक एव प्रथमाग्निहो-
स्याऽऽरम्भविधानादविशेषेण सोमाधानेऽवभृथानन्तरं तस्मिन्नेवाग्नावग्निहोत्रारम्भ इष्टि-
र्वाधानेऽप्यनन्तरमिष्टेः प्रतिपदि रात्रावारम्भः। अग्निहोत्रमारप्स्यमानः सेष्ट्याधाना-
न्तरं रात्रौ चित्तिः स्रुगिति मनसोक्त्वा वाचस्पत इति ग्रहमन्त्रेण सह यथा भवति
था स्वाहान्तेन दर्विहोमधर्मेण जुहोति सायमग्निहोत्रस्याऽऽवृता विधिना वक्ष्यमाणे-
त्यर्थः। मन्त्रेणेति वचनं पूर्वं पवमानहविषां तूष्णीमग्निहोत्रं होतव्यमग्निहोत्रं न
ोतव्यमित्युपक्रम्य तूष्णीमेव होतव्यमिति श्रुतेः। तथा च कात्यायनः—अग्निहोत्रं
ष्णीं श्रुतेरिति। तथा प्रारम्भानन्तरं मा भूदिति मन्त्रग्रहणेन ज्ञापितं प्रथमं सायम-
ग्निहोत्रमुपक्रम्यते न प्रातरारम्भ इत्यर्थः। तिसृभिर्व्याहृतीभिः सायमग्निहोत्रद्रव्यं पश्चा-
ाहवनीयमुपसाद्यते। आयुर्मे यच्छेत्येतस्य स्थाने व्याहृतीभिरुपसादयेत्। संवत्सर-
यान्ते यस्यां तिथौ रात्रावग्निहोत्रारम्भस्तस्यां तिथौ प्रातरग्निहोत्रेऽपि व्याहृतीभिरेवो-
सादनम्। संवत्सरे पर्यागत एताभिरेवोपसादयेद्ब्रह्मणैवोभयतः संवत्सरं परिगृह्णातीति
ंवत्सरस्याऽऽद्यन्तयोर्विधानमुपसादनस्येति वक्तुं परीत्युक्तं तथा च संवत्सरान्तेऽग्नि-
ऽग्निहोत्र इत्यर्थः। सायंप्रातःकालसाध्याग्निहोत्रस्यैकप्रयोगत्वाद्यत्र तिथौ सायमा-
ब्धं तस्यामेव प्रातः सांवत्सरिकप्रयोगसमाप्तिस्ततः सायंप्रभृति द्वितीयसंवत्सरारम्भ
ति ज्ञेयम्। विशेषस्तु याजमाने वक्ष्यते।

अथ दर्शपूर्णमासयोरारम्भः।

अत्रापि कामनायां पूर्ववदेव संकल्पोऽन्यदा तु दर्शपूर्णमासाभ्यां यक्ष्ये त्रिंशतं
र्षाणि यावज्जरसं यावज्जीवमिति वा संकल्पोऽङ्गीकृतत्रिंशदादिपक्षैर्यक्ष्ये दाक्षायण-
ज्ञेन चेत्पञ्चदशेत्यपि ज्ञेयम्।

**दर्शपूर्णमासावारभमाणः पूर्वस्य पर्वण औपवसथ्येऽ-**
**हनि चतुर्होतारं मनसाऽनुद्रुत्य स्रग्रह१ हुत्वा पूर्णा**
**पश्चाद्यत्ते देवा अदधुरिति सारस्वतौ होमौ हुत्वा।**

आरम्भोऽत्र पञ्चदश्यां भवितेति पूर्वेद्युरारभमाण इति वचनात्संकल्पेनाऽऽरम्भे
वतीति ज्ञेयम्। तथा चाऽऽदौ दर्शपूर्णमाससंकल्पहोमादिकर्म तदर्थं च पुनः संकल्प
ारभमाणे होष्यामीत्यादि पूर्वं पर्व पञ्चदशी प्रतिपदोऽपि पर्वत्वात्पूर्वस्येत्युक्तं तस्या
ौपवसथ्यमहश्चतुर्दशी तस्यामित्यर्थः। औपवसथ्यं यद्यप्यन्वाधानदिनं तथाऽपि
ेन पूर्वदिनं लक्षणयोच्यते। पञ्चदश्याः पूर्वदिन इत्येव वक्तव्ये पर्वग्रहणं यागकाल-

प्रदर्शनार्थममावास्यानिवृत्तिस्तु पूर्वा पौर्णमास्युत्तराऽमावास्येति पूर्णमास्यामेवाऽऽरम्भसिद्धेरारम्भाङ्गत्वेन चतुर्होतारमित्यादि पूर्ववत् । पूर्णा पश्चादिति द्वे ऋचौ ताभ्यां द्विर्गृहीत्वा जुहोति तौ पार्वणौ होमौ पर्वदेवताकमन्त्रसाधनत्वात् ।

अन्वारम्भणीयामिष्टिं निर्वपति ।

हुत्वा निर्वपतीति वचनाद्धोतृहोमपार्वणहोमयोरन्वारम्भणीयाङ्गत्वमुक्तमिति भाति तत्र दर्शपूर्णमासावारभमाण इत्येव सर्वत्र संबध्यतेऽन्यथा होमयोरपि परस्परमङ्गाङ्गिभावः स्याद्धोमाविष्टिरन्वारम्भणीया चाऽऽरम्भाङ्गमेवेष्यते । दर्शपूर्णमासावारभमाण इति चतुर्होतारि सारस्वतौ होमौ पुरस्ताज्जुहुयादिति । तथाऽऽग्नावैष्णवमेकादशकपालं पुरस्तान्निर्वपेदिति प्रत्येकं दर्शपूर्णमासप्राग्भावितावगमात्तेन प्रत्येकमग्न्युद्धरणं यथाश्वपदिके द्वादश रात्रीर्होमः समाप्तो होमपूर्वाधाने । तथा सोमपूर्वाधाने पवमानहविःषु जातेष्वनन्तरं द्वादश रात्रीरजस्रेष्वेव होमे सति प्रत्येकमुद्धरणं यदि न होमानां समाप्तिरथ मध्ये चेत्पौर्णमासी तदाऽप्यजस्रेष्वेवान्वारम्भणीयादिकमिति ज्ञेयम् । व्याख्यातृभिः कैश्चिदन्यथाऽपि किंचिद्व्याख्यातं तद्दूषणे विलम्बभियोपरम्यते । अन्वारम्भणीयामिष्टिमन्वारभ्येते प्रारभ्येते संस्तूयेते दर्शपूर्णमासौ यजमानाय यया साऽन्वारम्भणीया तां निर्वपति करोति ।

आग्नावैष्णवमेकादशकपालꣳ सरस्वत्यै चरुꣳ सरस्वते द्वादशकपालमग्नये भगिनेऽष्टाकपालं यः कामयेत भगवान्नादः स्यामिति नित्यवदेके भगिने समामनन्ति ।

अयं सत्यां कामनायां कार्योऽन्यदा विकल्पः । स्पष्टमन्यत् ।

पुरस्तात्स्विष्टकृतश्चित्तं च स्वाहा चित्तिश्च स्वाहेति द्वादशगृहीतेन द्वादश जयाञ्जुहोति ।

गणहोमे यावदाहुतिग्रहणे प्राप्तेऽपि पुनर्वचनं परिसंख्यार्थं त्रयोदश ग्रहणानि मा भूवन्निति । जयनामकानुपहोमान्दर्विहोमधर्मेण । न समित्परिस्तरणपरिषेकास्तन्त्रान्तर्गतत्वात् ।

प्रजापतिर्जयानिन्द्रायेति त्रयोदशीम् ।

पृथग्गृहीतेन होम इत्येवमर्थमारम्भः । एतदाज्यं स्थालीगतमिति भाष्यकृतोक्तं मन्त्रापूर्वदर्विहोमत्वेन तूष्णीकं प्राप्तं तदर्थवादः(?) प्रसङ्गप्राप्तेन स्थालीगतेन क्रियत इत्यभिप्रायः । आहवनीय आज्यार्था ध्रुवाया इति परिभाषितं तत्तु दर्शपूर्णमासतन्त्र एव । उपहोमत्वेन च नारिष्ठसाम्यं च ध्रुवायामेव ग्राह्यम् ।

अग्ने बलद सह ओज आक्रममाणाय मेऽदाः । अभिशस्तिकृतेऽनभिशस्तेन्यायास्यै जनतायै श्रैष्ठ्यायेति चतुर्दशीं यां जनतां द्वि-

ष्याच्चि(च्छ्रि)त्रं तस्यां जनतायां भव-
त्विति शबलमिव तस्याऽऽत्मञ्जायते ।

काम्या चतुर्दश्याहुतिर्या जनतां जनसमुदायं द्विष्याद्यजमानश्चि(नः श्वि)त्रं कुष्ठं स्यां भवत्विति यजमानेन संकल्पे कृते चतुर्दशीं जुहोतीत्यन्वयः । तस्य फलं शबल-वेत्र श्वैत्यमिव जायते तस्याऽऽत्मनि द्वेष्यस्याऽऽत्मनि मुख इति फलम् ।

अपि वा नान्वारम्भणीयां कुर्वीताऽऽग्नेयमष्टाकपालं निर्वपेत् ।

अन्वारम्भणीयास्थाने विकल्पः । अत्रापि दर्शपूर्णमासावारप्स्यमान इत्येव । नन्वि-मप्यारम्भप्रयुक्ताऽन्वारम्भणीयैवेति कथं नान्वारम्भणीयां कुर्वीतेति । सत्यम् । अन्वा-म्भणीयाभिन्नाऽऽग्नेयी तु दर्शपूर्णमासावारप्स्यमानेन क्रियमाणाऽऽरम्भणीयैव । ननु ो विशेषः । अस्ति विशेषः । आधानादनन्तरमेव प्रारम्भार्थं क्रियते साऽन्वारम्भ-ीया । या त्विष्टिर्मध्ये होमं कृत्वाऽऽरभ्यते साऽऽधानादनु न भवतीति नान्वारम्भ-ीया । कुत एतत् । उत्तरसूत्रपर्यालोचनयेति ब्रूमः । अत्रापि तावत्सूत्रे नान्वारम्भ-ीयां कुर्वीतेति न वक्तव्यं किंतु भगिने समामनन्तीत्युक्त्वाऽऽग्नेयमेवाष्टाकपालं निर्व-दित्येव वक्तव्यं तथा सति लाघवं स्यात् । एवं च सत्याग्नेयेऽप्युपहोमाश्चित्तमित्या-दिकाः स्युः । एवं सत्यपि गुरुनिर्देशेनाऽऽग्नेये संज्ञयोपहोमा मा भूवन्निति तां ज्ञामपि निवारयन्नाहापि वा नान्वारम्भणीयां कुर्वीतेति । ननु तर्ह्याग्नेये दर्शपूर्णमासा-रभमाण इति विप्रकृष्टमसंबद्धं व्यवहितं च किमर्थमन्वेत्विति चेत्सत्यम् । तदेय-ग्नेयी निरधिकारा सती केनान्वेतु कल्पनीयमेतस्यां भवेत् । असमाप्तं च दर्शपूर्णमा-रम्भप्रकरणमतो दर्शपूर्णमासावारभमाण इत्येवं संबध्यते तेनैव सूत्रेण सहाऽऽग्नेयम-कपालं निर्वपेदमावास्यायामादधानस्यैतदविकृतम्[1] । अमावास्याधान आग्नेय्येषा विशेषेण प्राप्ताऽन्वारम्भणीया साऽमावास्यायामपि वेति सूत्रेण प्रतिषिद्धा प्राप्ति-वारणेनैव । तथा च पौर्णमास्याधाने विकल्पं वक्तुमुक्तमपि वेति स विकल्पोऽमावा-स्यायामपि प्रसज्येत तदर्थमुक्तमेतदविकृतमिति । अमावास्यायामेवाऽऽधाने कृते पञ्च-दश्यामेव पवमानेष्टिसमाप्तिरागामिपौर्णमास्याः पूर्वदिने चतुर्दश्यामाग्नेय्येव नान्वारम्भ-ीया । अथवोत्तरसूत्रे सेष्टयपवृज्य तदानीमेव सारस्वतौ होमावन्वारम्भणीयां च कुरुत ते पुनर्विधानमन्वारम्भणीयायाः पौर्णिमाधाने नियमो न विकल्पस्तेन पौर्णमास्याम-ारम्भणीयैवामावास्यायां त्वाग्नेय्येवेति सिद्धम् । न चैतत्कल्पनामात्रमित्यनादरणीयम् । ानसेन तथैवाभिधानात्—अमावास्यायामादधानस्य नान्वारम्भणीयाऽऽग्नेयमष्टाक-लं निर्वपेदिति । इदमप्येकं विचार्यते–एते इष्टी किं विकृत्यङ्गत्वेनातिदेशेन प्राप्तो

१ क. ग. च. ट. ण. °दधिकृ° ।

न वा । तदर्थं विचार्यं कीदृश्यङ्गतेति । केचिदाहुः—इयं यावज्जीवादिपक्षैरनुष्ठीयमान-स्याङ्गं तदा तत्कालमध्यपतितत्वाद्विकृतीनां प्रसङ्गेनोपकुर्वत्यौ न पुनस्तदर्थत्वेनानुष्ठेये इति । तत्र यावज्जीवता कर्तृधर्म इति मते तु न कालस्य यावज्जीवनोपलक्षितस्याङ्ग-त्वेन विधानम् । कालो हि दर्शपूर्णमासाख्य एवाङ्गत्वेन विधीयते स तु प्रतिपर्व समा-प्यत इति न प्रसङ्गसिद्धिः । तर्हि प्राप्नुतां न प्राप्नुतः । कुत एते इष्टी अनारम्याधी-तेन वाक्येन दर्शपूर्णमासावारभमाण इत्यनेन प्राप्नुतः सूत्रे समुदायानुवादात्समुदा-याङ्गं वैमृधवत् । न च समुदायाङ्गातिदेशः कुत्रचिदस्ति । विकृतिर्हि प्रत्येकमाग्नेया-दिप्रकृतीनां मध्ये यस्यैवाङ्गजातं चोदकेन गृह्णात्यन्यथा वैमृधोऽपि पौर्णमासविकारेषु प्राप्नुयात्तस्मान्न समुदायाङ्गमतिदिश्यते । वक्ष्यति चैकैकस्यैवाङ्गमित्यतिदेशविचार इति समुदायरूपप्रकृतेरसंभवात् । किं चेमे यदि प्रयोगाङ्गे स्यातां प्रतिप्रयोगमावर्तेयातां न चैवमस्ति तत्कस्य हेतोः प्रथमस्यैव प्रयोगस्य पूर्वभावित्वमात्रेण सकलप्रयोगाङ्गत्वेन प्राप्तत्वात् । कथम् । संज्ञयेति ब्रूमः । अन्वारम्भणीयारम्भणीययोः संज्ञयोरर्थादेव । न च पशावपि तथा स्यादिति तत्र पशाविष्टिरुभयतोऽन्यतरतो वेति बाह्वृचसूत्रे पश्व-ङ्गत्वमात्रश्रवणात्स्वयमपि वक्ष्यति पश्विष्टिश्च नेति । पशोरेवाङ्गं नाऽऽरम्भात्पूर्वभा-वितया सर्वप्रयोगाङ्गमिदमेव मनसि निधाय प्रयत्नो न कृतो निराकरणार्थं सूत्रकारे-ण विकृतिषु प्राप्तेरभावं मन्यमानेन । किंच ज्ञापकमप्यस्ति यत्र प्राप्तिरभूत्तत्रोक्तमेवा-ङ्गभूतेषु पशुषु षड्ढोता पश्विष्टिश्च न विद्येते । तत्र प्राप्तिं दर्शयितुं पश्विष्टिरित्युक्तम् । तत इष्टिष्वपि यदि प्राप्तिः स्याद्वदेदेव नाङ्गभूतास्विष्टिष्वन्वारम्भणीयेति ।

अमावास्यायामादधानस्यैतदविकृतम् ।

यदुक्तमाधानं तदमावास्यायामविकृतं यथोक्तं तत्तथैव । अमावास्यायामाधानं कृत्वा तस्मिन्नेव दिवसे सेष्ट्यपवर्ग इत्यर्थः । नक्षत्राधानस्याप्युपलक्षणं तत्रापि यस्मिन्नक्षत्रे प्रातरादधीत तस्मिन्नेव दिने सेष्टिसमाप्तिराधानस्य । एतद्यदि पवमानहवींषि तदैव निर्वपेन्नो चेत्तद्दिनैवाऽऽग्नेयं कृत्वा विरमेदिति पक्षस्तु नक्षत्रामावास्याधाने ।

पौर्णमास्यां तु पूर्वस्य पर्वण औपव-सथ्येऽहन्यग्नीनाधाय सेष्ट्यपवृज्य ।

पूर्वस्य पर्वणः पौर्णमास्या औपवसथ्येऽहनि चतुर्दश्यां प्रातराधानं सेष्टि समाप्तिं नीत्वा तस्मिन्नेव दिने ।

तदानीमेव चतुर्होतारं सारस्वतौ होमावन्वारम्भणीयां च कुरुते ।

चतुर्दश्यामेव सर्वं कुरुते । चतुर्होतारं चतुर्होतृहोमम् ।

---

१ क. ग. ठ. ण. °वास्याङ्ग° । २ ख. च. छ. ट. °ह्वृच्यसू° ।

श्वोभूते पौर्णमासेन यजते व्याहृतीभिर्ह-
वींष्यासादयति तथा संवत्सरे ॥ १३ ॥
इति हिरण्यकेशिसूत्रे तृतीयप्रश्ने पञ्चमः पटलः ।

---

श्वोभूतेऽन्वाधानादि प्रतिपदि यजते तत्र वेद्यां हविरासादनं कुर्यात्तथा संवत्सर-समाप्तिर्यस्याममावास्यायां तस्यामपि व्याहृतीभिरासादनमितःपरं संवत्सरान्तरे न वीप्साया अश्रवणात् ।

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोग-
वैजयन्त्यां तृतीयप्रश्ने पञ्चमः पटलः ॥ ५ ॥

---

अथ षष्ठः पटलः ।

---

चतुर्भिः पटलैरुक्तमाधानमधुनोच्यते ।
पुनराधानमेकेनाथाग्निहोत्रं द्वयेन च ॥

पुनराधेयं व्याख्यास्यामस्तस्याग्न्याधेयेन कल्पो व्याख्यातः ।

पुनरग्नयो येन कर्मणाऽऽधीयन्ते तत्पुनराधेयमग्न्याधेयं तु पूर्वोक्तं तस्य विकारः । वक्ष्यति ह्याग्न्याधेयिकीर्दत्त्वा पुनराधेयिकीर्दक्षिणा ददातीति । सत्येवाग्न्याधेयत्वे गुणेन विकृतं पुनराधेयमतस्तेन कल्प इतिकर्तव्यता व्याख्यातेत्यर्थः ।

अग्नीनाधायैतस्मिन्संवत्सरे ज्यानिं पुत्रमर्त्यौ वाऽभ्येति स्वेन वाऽङ्गेन विरुध्यते न वर्ध्नोति स पुनराधेयं कुर्वीत ।

ज्यानिर्हानिर्द्रव्यादेः पुत्रमरणं वेति स्वीयेन वाऽङ्गेन विरुध्यते विरोधं गच्छति स्वाङ्गविकलो भवति न वा समृद्धिमधिकां प्राप्नोति । एतेषामन्यतमस्मिन्नि(मे नि)मित्ते प्रथमसंवत्सरमध्ये सति पुनराधेयं कुर्वीत । आपस्तम्बेनोक्तं प्रजाकामः पशुकामो वेति कामनायां यदा कदाऽपीति । भरद्वाजस्तु यावज्जीवं पुनराधेयस्य कालो नास्ते-तीत्याश्मरथ्यः संवत्सर इत्यालेखन इति कदाऽपीति ।

पौर्णमास्येष्ट्वाऽमावास्यायामाग्नेयमष्टाकपालं निर्वपेद्वै-
श्वानरं द्वादशकपालमग्निपुद्वासयिष्यान्नित्येकेषाम् ।

वैश्वानरगुणविशिष्टोऽस्याग्निर्देवता ।

---

१ घ. ङ. अ. ञ. ञ. ठ. °मासीं च° । २ घ. ङ. अ. ञ. ञ. ठ. वाऽन्वेति । ३ क. ग. ट. °तस्मि° । ४ क. ख. ग. छ. ट. ठ. °वास्यया वाऽऽमे° ।

अग्नीषोमीयमेकादशकपालमनुनिर्वपे-
दग्नयेऽप्सुमतेऽष्टाकपालं मैत्रं चरुम् ।

निर्वपेदाग्निमुद्वासयिष्यन्नुद्वासननिमित्तवैश्वानरस्य स्वशाखीयं वाक्यं पठितं तत्र द्वे एव हविषी इत्यर्थः । एकेषामेकस्यां शाखायां परस्यां सर्वाणि पञ्चेत्यर्थः ।

पुरस्तात्स्विष्टकृतो या ते अग्न उत्सीदतः पवमाना पशुषु प्रिया तनूस्तया सह पृथिवीमाविश रथंतरेण साम्ना गायत्रेण छन्दसा ततो नो मह आवह या ते अग्ने पावका या मनसा प्रेयसी प्रिया तनूस्तया सहान्तरिक्षमाविश वामदेव्येन[1] साम्ना त्रैष्टुभेन छन्दसा ततो न ऊर्जमा कृधि गृहमेधीयं च वर्धय या ते अग्ने सूर्ये शुचिः प्रिया तनूस्तया सह दिवमाविश बृहता साम्ना जागतेन छन्दसा ततो नो वृष्ट्याऽवधि यास्ते अग्ने विभक्तीरिन्द्र सूकर आभर तासु शोचिषु सीदेह भस्म वैश्वानरस्य यत् । यास्ते अग्ने कामदुघा विभक्तीरनुसंभृताः। ताभिर्नः कामान्धुक्ष्वेह प्रजां पुष्टिमथो धनम् । ये ते अग्ने वानस्पत्याः संभाराः संभृताः सह तेभिर्गच्छ वनस्पतीन्स्वां योनिं यथातथम् । अगन्नग्निर्यथा लोकमसदत्सदने स्वे । अवीरहत्यं देवेषूपागां मनसा सहेति सप्ताऽऽहुतीर्हुत्वा ज्वलतोऽग्नीनवसृजति यावद्दर्शपूर्णमासावभिहुतौ[2] तावच्चिरमवसृष्टाग्निर्भवति ॥ १४ ॥ संवत्सरं द्वादशाहं वा ।

निमित्तानन्तरं यत्पर्व तेनेष्ट्वाऽनन्तरं प्रतिपदि योत्सर्गेष्टिस्तस्याः स्विष्टकृतः पूर्वं सप्ताऽऽहुतीर्हुत्वा संस्थाप्येष्टिं प्रदीप्तानग्नीनवसृजत्युद्वासयन्तीत्यर्थः । उद्वास्य पुनरादधीतेतिश्रुतेः, उद्वासयिष्यन्निति च श्रुतेः । अवसृजति विसृजति । यदर्थतयाऽऽहितास्तत्संबन्धं विमोच्य स्वस्य निजं स्थानं यत आगतास्तत्र प्रापणं देवपूजादौ विसर्जनं दृश्यते तत्करोतीत्यर्थोऽवगम्यते । वर्षासु शरदि वा पुनराधेयकालस्तावत्पर्यन्तमवसृष्टाग्निर्भवतीति वक्तव्ये यावद्दर्शपूर्णमासावित्याद्युक्तं तत्तु वर्षासु कस्मिन्नपि पर्वणि रोहिण्यादिनक्षत्रत्रयान्यतरस्मिन्वा स्वेच्छया पुनराधानमिति मा भूत्किंतु सौरेण चान्द्रेण वा मानेन वर्षर्तौ प्रवृत्तं यत्प्रथमं पर्व तत्र नित्येष्टिलोपो मा भूदिति । तत्र वर्षर्तौ प्रवृत्ते यदि पुनराधेयनक्षत्रं स्यात्तदैव पुनराधेयं कार्यं नो चेत्प्रथमपर्वण्येव पञ्चदश्यामेव । ततः पूर्वं शक्त्यनुसारेण कमपि पक्षमाश्रित्य ब्रह्मौदनं प्रथमं श्रपयित्वा ततः श्व

१ घ. ङ. ढ. °मेगि च । २ ङ. ज. झ. °भिहितौ । ञ. °भिहतौ ।

आधास्यमानो नक्षत्रात्पूर्वदिने द्वितीयं ततो नक्षत्रे पुनराधेयं कार्यं कृत्वा ततो नित्ये- ष्टिरित्यर्थः । तत्रावधिरुक्तः संवत्सरमिति । तत्र संवत्सरपर्यन्तमवसृष्टाग्निरिति न विधीयते किं तु संवत्सरं परं नावसृजेदित्यर्थः । तदाहाऽऽपस्तम्बः—संवत्सरं परार्धमु- त्सृष्टाग्निर्भवतीति । परं परोऽवधिरित्यर्थः । तदा शरदनन्तरं निमित्ते सति चोत्सर्गे कृते यावद्वर्षर्तुरागच्छति तावदवसृष्टाग्निस्ततः परं पूर्ववत् । दैवान्मानुषाद्वा प्रथमपर्वात्यये सति उत्सर्गेष्टिं पर्वणोऽनन्तरं यावत्त्रयोदशो मासो न प्रवर्तते ततः पूर्वमेव पुनराधेयम् । तदतिक्रमे प्रायश्चित्तमग्नित्यागनिमित्तमित्यर्थः । वर्षर्तौ शरदि वा निमित्तेनोत्सर्गे दैवान्मानुषाद्वा पुनराधेयस्य तयोर्ऋत्वोरसंभवेऽपि द्वादशमासातिक्रमो न कार्यः । कृते प्रायश्चित्तमित्यपि ज्ञेयम् । द्वादशाहं वेत्यनेन निमित्तानन्तरपर्वण्येवोत्सर्गेष्टिरिति न, किंतु वर्षर्तोः प्रथमपर्वणः पूर्वं पुनराधेयनक्षत्रे प्राप्ते सति ततः पूर्वं द्वादशदिनमध्य- एव पर्वणि पूर्ववदुत्सृज्य नक्षत्रे पुनराधेयं ततः पूर्वं नित्येष्ट्यादिकं कार्यमेवेति मतान्तरं दर्शितमिति ज्ञेयम् । एवं च शरदि प्राप्तेन निमित्तेन पुनराधेयप्राप्तौ शरदन्तिमे पर्वणि नित्येष्टिपूर्वकमुत्सर्गेष्टिं कृत्वा तदैव प्रतिपदि रात्रौ ब्रह्मौदनद्वयं विधाय द्वितीयायां पुनराधानं तदपि प्रतिपद्युपक्रमाद्भवत्येव पर्वाधानम् । तदिदं स्पष्टं बौधायनकात्यायनवैखानसैरुक्तम्—'तदानीमेव वाऽद्भिरग्नीनभ्युक्ष्य ब्रह्मौदनं श्रपयि- त्वोपवसति' इति । श्व आधानमित्यर्थः । एतेषां पक्ष एक एव ब्रह्मौदनः सद्यस्काले । अयं तैः सर्वपक्षैर्विकल्प उक्तः स संकोचे व्याख्यातः । यत्तु निमित्तानन्तरमेवेत्यना- दृतं तदा तावन्नित्येष्ट्यादि निमित्तानन्तरं कृत्वा ततो वर्षर्तुप्रवृत्तौ पर्वणः पूर्वं नक्षत्रं न लभ्यते तदा प्रथमपर्वण्येव नित्येष्ट्युत्सर्गेष्टी कृत्वा तदैव ब्रह्मौदनादि पूर्ववज्ज्ञेयम् । अयमपि पक्षो द्वादशाहं वेत्येवं वदता सूत्रकृताऽप्यनुज्ञात एवं निवेदितव्यम् ।

श्लोकाः—अरण्यादिप्रणाशेन वह्नीनां नाश आगते ।

तन्मध्ये पुनराधेयनिमित्ते सति चाऽऽगते ॥ १ ॥

प्रायश्चित्ताधानतोऽग्नीनुत्पाद्य तदनन्तरम् ।

पुनराधेयविधिना कुर्यादुत्सर्गपूर्वकम् ॥ २ ॥

एवं च पुनराधाननिमित्ते सति केनचित् ।

निमित्तेनाग्निनाशे प्रायश्चित्ताधानमिष्यते ॥ ३ ॥

ततस्तु पुनराधानं कुर्यादुत्सर्गपूर्वकम् ।

नाशे सति तु वह्नीनामुत्सर्गेष्टिः क्व वा भवेत् ॥ ४ ॥

तस्यामनुष्ठितायां तु पुनराधानमिष्यते ।

उद्वास्य पुनराधेय इति श्रुत्या विधीयते ॥ ५ ॥

उद्वासनोपलक्ष्यश्चोद्वासनेष्टिरिहोच्यते ।

उद्वासनं चेष्टिपूर्वं द्वे अङ्गे पुनराहितेः ॥ ६ ॥

इष्टिः पुरुषसंस्कारश्चार्थवादाद्धि गम्यते ।
तथा च संस्कृतः कुर्यात्पुनराधानमेव वै ॥ ७ ॥
उद्वासनं तु वह्नीनां संस्कृतिर्न तु नाशनम् ।
इष्ट्यर्थवह्नेरङ्गं सत्प्रतिपत्तिर्यतो विधिः ॥ ८ ॥
उद्वास्येतिल्यपोद्वासः पुनराधान एव हि ।
अङ्गमुक्तस्ततोऽग्नीनां संस्कारः परिकीर्तितः ॥ ९ ॥
न चोद्वासनतो नष्टेष्वग्निषु क्व च संस्कृतिः ।
उच्यते न हि नाशोऽयमुद्वासनमुदीर्यताम् ॥ १० ॥
किं तु क्रियाङ्गतां तेषां विसृज्य स्वस्वयोनिषु ।
स्थापनं शक्तिरूपेण पृथिव्यादिषु तत्त्विह ॥ ११ ॥
या ते अग्न एवमुक्तहोममन्त्रैः प्रतीयते ।
स्थापितानां पुनः पूर्वावस्थया स्थापनाय हि ॥ १२ ॥
प्रत्यक्षेण स्वरूपेण पुनराधानमिष्यते ।
न चैवं पुनराधेयं प्रायश्चित्तार्थमिष्यते ॥ १३ ॥
अग्निनाश सतीष्टं तत्रोत्सर्गो हि निवर्तते ।
द्वाराभावात्ततो ह्येतदतिदिष्टं यथोचितैः ॥ १४ ॥
अङ्गैरेवोपसंहार्यं न नक्षत्रर्तुभिः सह ।
अग्न्याधेयातिदेशोऽयं यथा नक्षर्तुभिः सह ॥ १५ ॥
तस्मादाधानमेवाग्न्याधेयं मुख्यं ततोऽन्यथा ।
गौणं तथैव पुनराधानं नैमित्तिकात्पृथक् ॥
प्रायश्चित्ततया क्रियमाणं तद्धर्मलाभतः ॥ १६ ॥

इदानीं प्रायश्चित्तेषु यत्र पुनराधेयमिति नामधेयं श्रूयते तत्रैव पुनराधेयधर्मकं प्रायश्चित्ताधानं यत्राग्न्याधेयमिति कर्मनामधेयेन विधिस्तत्राग्न्याधेयधर्मकमेव प्रायश्चित्ताधानमिति नामभ्यां विध्योर्व्यवस्था । यत्र न नामधेयं तत्र पुनरादधीतेत्येवमादि यत्र क्रियापदमात्रं तत्रापि पुनराधानधर्मकमेव प्रायश्चित्ताधानं पुनःशब्दे विद्यमाने प्रत्यभिज्ञानात्पुनःशब्दे त्वविद्यमाने च पुनरविकृतमाधानमेवाऽऽदधीतेत्यस्मात्प्रतीयत इति तद्धर्मकं प्रायश्चित्ताधानमिति व्यवस्था ।

प्रकृतमनुसरामः—

**रोहिणी पुनर्वसू अनूराधाश्च पुनराधेयनक्षत्राणि ।**

एष्वेव नक्षत्रेषु पुनराधानं नान्यत्र । प्रायश्चित्ताधाने तु न नियमः, निमित्तानन्तरमेव क्रियमाणत्वात् ।

वर्षासु शरदि वाऽऽधत्ते ।

वसन्तादीनां बाधः । बौधायनेनोक्ता येयमाषाढ्याः पौर्णमास्याः पुरस्तादमावास्या भवति सा सकृत्संवत्सरस्य पुनर्वसुभ्यां संपद्यत इति ।

सर्वान्मध्यंदिने ।

पूर्वोक्तेऽर्धोदित इत्यादिकालः प्रत्यपोद्यते । सर्वग्रहणमापस्तम्बेन गार्हपत्ये यथाकात्योक्ता सा मा भूत्सर्वेषां मध्यंदिन एवाऽऽधानमष्टमे मुहूर्ते पञ्चदशधा विभक्तस्याह्नः पञ्चधा वा नवधा वा मध्यमे भागे ।

कृताकृताः संभाराः ।

कृताश्चाकृताश्च विकल्पिता इत्यर्थः । अत्र ब्राह्मणेन संभृत्याः संभारा न यजुः कर्तव्यमित्यथो खलु संभृत्या एव संभाराः कर्तव्यं यजुरिति यजुषामपि विकल्पोऽवगम्यते । तदुक्तमापस्तम्बेन–कृताकृताः संभारा यजूंषि भवन्तीति । यजूंषि यथर्ष्याधानेनेत्यादीनि । तत्र यदा संभारपक्षस्तदा यजूंषि कर्तव्यान्येव । यदा न संभारास्तदा न कर्तव्यानि संनियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिरिति न्यायात् । एवं यथर्ष्याधानप्रभृतीनि यजूंषीति व्याख्यातमापस्तम्बीयैः । वैखानसस्तु–न संभृत्याः संभाराः संभृत्या वा संभारमन्त्रा भवन्तीत्येक इति । उभयथाऽपि यजुर्मात्रमपि विकल्पेनेत्यर्थः । आचार्यस्तु यजुषां कृताकृतत्वं नोक्तवांस्तेन ज्ञापयत्याचार्यो यजूंषि संभारार्थान्येव कृताकृतानीति ब्राह्मणार्थ इति । तेन सत्सु संभारेषु कर्तव्यान्यसत्सु नेति व्यवस्थैवाङ्गीकृता । न चासत्सु संभारेषु यजुष्करणं प्राप्नुयात्तन्निवृत्त्यर्थं यत्नो न कृतः कस्मादाचार्येणेति *न वाच्यम् । द्वारलोपे तु न यजुष्करणमित्युक्तमेव परिभाषायामिति पूर्वोक्तैव व्यवस्था स्वत एव सिद्धेति नोक्तं यजुर्विषये किमप्याचार्येण । ब्राह्मणमपि न ह्यसंभारपक्षे यजुष्क्रियाऽस्तीत्येवमाहापि तु न संभृत्याः संभारा न यजुः कर्तव्यमिति शाखान्तरे संभाराणामभावेऽपि यजुष्क्रियोक्ता साऽपि संभाराभावान्नास्तीत्याह, संभारेषु सत्स्वेव भवतीत्याह, कर्तव्यं यजुरित्यनुवादमात्रं, तथा च केवलयजुष्करणपक्षो नास्त्येव ब्राह्मणसूत्रयोरिति । यथर्ष्याधानादिमन्त्रास्तु सार्पराज्ञीभिः पूर्वमपि समुच्चिता एवाऽऽधानमन्त्राणां करणमन्त्रत्वेऽपि समुच्चय एव वचनादित्येव स्थितम् ।

सर्वाभिः सार्पराज्ञीभिर्गार्हपत्यमादधाति ।

प्रथमाभ्यामित्युक्तस्यापवादः ।

---

*नेत्यधिकम् ।

---

१ क. ग. ठ. ण. °त्सादि । त° ।

दर्भैरुपोलवैः संवत्सरप्रवातैर्गार्हपत्यादाहवनीयं ज्वलन्तमुद्धरति ।

प्रणयनीयेध्मस्थाने दर्भा उपमूलं लूना लवभ्यो वोत्थिताः पूर्वच्छिन्नदर्भमूलेभ्य उत्पन्ना इति यावत्संवत्सरपर्यन्तं शुष्काः संवत्सरप्रवातास्तेषां मुष्टिं बद्ध्वा तेनोद्धरेत्स. हायार्थं द्रव्यान्तरं पश्चाद्‌ध्रियमाणं न निषिध्यते ।

यत्त्वा क्रुद्धः परो वपेति दक्षिणाग्निमाद-
धाति यत्ते मन्युपरोप्तस्येत्याहवनीयम् ।

द्वितीयतृतीययोः प्रथमोत्तमयोरेवापवादार्थम् । अन्ये मन्त्राः समुच्चीयन्त एवेत्युक्त. मेव । सभ्यावसथ्ययोस्तु यथास्थानमप्येतैरपि यजमानकार्येऽपि ।

मनो ज्योतिर्जुषतामित्याहितमाहवनीयमुपतिष्ठते ।

अध्वर्युर्बृहस्पतिवत्येत्यापस्तम्बः । पाठक्रमेण बृहस्पतिस्तनुतामित्यस्यैव प्राप्तिरिति[1] न विशेषितः

पुनस्त्वाऽऽदित्या रुद्रा वसवः समिन्धतामित्युपसमिन्धे ।

कामा इत्यन्तः ।

पुनस्त्वाऽऽदित्या रुद्रा वसवः समिन्धतामित्युपसमिन्धे पुन-
स्त्वाऽऽदित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ
यज्ञैः । या इष्टा उषसो निम्रुचश्च याज्यास्ताः संदधामि हविषा
घृतेन स्वाहेत्याहुतिं जुहोति । मनो ज्योतिर्जुषतामिति द्वितीयाम् ।

स्पष्टम् ।

जुहूं[१] स्रुवं च संमृज्य चतुर्गृहीतेनाष्टगृहीतेन द्वादशगृहीते-
न वा स्रुचं पूरयित्वा सप्त त इति पूर्णाहुतिं जुहोति ।

पूर्वाहुतिभ्यां पूर्णाहुतेर्बाधमाशङ्क्य पुनर्विहितं सप्त त इति सप्त ते अग्ने समिधः सप्त जिह्वा इत्यग्निहोत्रं जुहोतीति ब्राह्मणात्तथा परिसंख्यार्थं प्रातरग्निहोत्रहोमस्य तूष्णी- कस्यापि तत्र विकल्प उक्तोऽत्र तु प्रातरग्निहोत्रस्याप्यावृत्तिरेव । अन्यद्याजमानमा- त्र्यर्थं चाग्न्याधेयवत्सर्वं कार्यमेव ।

आग्नेयमष्टाकपालं पञ्चकपालं वाऽऽग्न्याधे-
यिकस्याष्टाकपालस्य स्थाने निर्वपति ।

अयं तु पौनराधेयिक आग्नेयः पवमानहविर्भिरसमानतन्त्र एव बहुवैलक्षण्याद्भिन्न- तन्त्रपक्षस्याप्यङ्गीकाराच्च ।

---

१ ख. च. छ. ट. 'मानेनं क्रा' । २ ट. विशेषः ।

तस्योपांशु सर्वं क्रियत औत्तमादनूयाजात् ।

ये निगदाः परप्रैषार्थास्तेषां तु सामर्थ्यादुच्चैर्भाव एवान्यदङ्गप्रधानं सर्वमुपांशु । आ, उत्तमादिति मर्यादायाम् ।

इदानीं याजुषे हौत्रे विशेषमाह—

अग्नाग्नेऽग्नावग्नेऽग्निनाऽग्नेऽग्निमग्न इति चतुर्षु प्रयाजेषु चतस्रो विभक्तीर्दधाति पुरस्ताद्वषट्कारात् ।

ननु दर्शपूर्णमासयोर्हौत्रं व्याख्यास्याम इत्येव वक्ष्यति कः प्रसङ्गो हौत्रस्येति चेत्सत्यं तथाऽपि तेनैव हौत्रेण विकृतिष्विष्टिपशुचातुर्मास्येषु सौत्रामण्यां नक्षत्रेष्टि-ष्वेवंरूपेष्वन्येष्वपि हौत्रातिदेशोऽस्त्येव । याजुषं तदग्रे व्याख्यास्यते । समिदादिषु चतुर्षु प्रयाजेषु याज्यासु विभक्तिमुक्त्वा प्रयाजेन वषट्करोतीति स्वशाखायामाह पुरस्तात्पुरस्ताद्वषट्कारात् । एवं प्रयोगः—वियन्त्वग्नाग्ने वौ० वेत्वग्नावग्ने वौ० वियन्त्व-ग्निमग्ने वौ० वेत्वग्निनाऽग्ने वौ० एवं ज्ञेयम् ।

पुनरूर्जेति पुरस्तात्प्रयाजानामाहुतिं जुहोत्युपरिष्टादेके समामनन्ति ।

यदा पुरस्तात्तदा जुह्वा व्यापृतत्वात्स्रुवेणाऽऽज्यस्थाल्या गृहीत्वा वेदमुपभृत्य दर्वि-होमधर्मेण जुहोति यदोपरिष्टात्तदा जुह्वैवाऽऽज्यस्थाल्या एव भाष्यकृतोक्तन्यायेन जयहोमवत् ।

* वृधन्वन्तमाग्नेयस्याऽऽज्यभागस्य निगमेषूपलक्षयेत् ।

अग्नये वृधन्वतेऽनुब्रूह्यग्निं वृधन्वन्तं यजाग्नेर्वृधन्वतोऽहं देवयज्ययाऽग्नेर्वृधन्वतोऽ-हमुज्जितिमिति । पुरोनुवाक्याऽऽपस्तम्बादिभिरुक्ताऽग्निं स्तोमेनेति ।

पवमानं सौम्यस्य ।

आज्यभागस्येत्यनुवर्तयित्वा(र्त्य) पूर्ववज्ज्ञेयम् ।

सह रय्येति पुरस्तादनूयाजानामाहुतिं जुहोत्युपरिष्टादेके समामनन्ति।

गतम् ।

देवो अग्नौ देवो अग्निरिति द्वयोरनूयाजयोर्द्वे विभक्ती दधाति ।

गतार्थम् । वषट्कारात्पूर्वम् ।

उच्चैरुत्तममनूयाजं[१] संप्रेष्यति ।

अनुवादमात्रमोत्तमादनूयाजादितिमर्यादाप्रदर्शनाय ।

---

* सूत्रपुस्तकेषु वृधन्वन्तामित्यस्य स्थानेऽग्निं बुधन्वन्तमिति वर्तते ।

१ क. ग. ट. ण. दिवे । ख. च छ. ट. देवे ।

ततः पवमानहवींषि निर्वपेत्तेभ्यः पश्चादग्नीषोमीयादीनामनुनिर्वाप्यानां स्थानेऽनुनिर्वाप्यामाह—

आग्निवारुणमेकादशकपालमनुनिर्वपेत् ।

अग्नीषोमीयवत्सर्वम् । समाप्तं पुराधानम् ।

अथ प्रायश्चित्ताधानम् ।

यः पराचीनं पुनराधेयादग्निमादधीत स एता-
न्होमाञ्जुहुयाल्लेकः सलेकः सुलेकः केतः सकेतः
सुकेतो विवस्वाꣳ अदितिर्देवजूतिरिति ।

योऽरण्यादिनाशादिना निमित्तेनाग्निमादधीत न पुनराधेयनिमित्तेनेति वक्तुं पराचीनमित्युक्तम् । यः पुनराधेयादन्यत्राग्निमादधीत स एतान्होमाञ्जुहुयात् । होमस्थानप्रकृतेऽग्न्याधेये पूर्णाहुत्यन्तरमेता आहुतीर्जुहोतीति भाष्यकृत् । उपहोमत्वेन पुरस्तात्स्विष्टकृतो जुहोतीत्येवं स्पष्टमाचष्ट बौधायनः । तृतीयमादधान आग्नेयस्य पञ्चकपालस्य पुरस्तात्स्विष्टकृतः स्रुवाहुतीर्जुहोति लेकः सलेक इत्याद्युक्तवान् । तृतीयमिति न तृतीयप्रयोगे किं तु अग्न्याधानं पुराधानं च द्वे मुख्ये आधाने ताभ्यामन्यदमुख्यं तदतिदिष्टधर्मकं कर्मान्तरं प्रायश्चित्ताधानं केनापि धर्मेण क्रियमाणं तृतीयमित्युच्यते । तस्य प्रथमद्वितीयतृतीयादिप्रयोगेष्वेते होमाः कर्तव्या इति फलितं भवति । ततस्तु प्रायश्चित्ताधानं पुनराधेयस्यैव विकार इत्युक्तमिति भाति यतः पञ्चकपालस्य पुरस्तादित्याह । तन्न । पुनः परिभाषायां स एवाऽऽहाथेदं तृतीयाधेयं कतरत्खल्विदमुपपतेत्प्रयत्यग्न्याधेयं पुनराधेयमिति ब्रूयात् । ततो द्वयमपीष्टम् । तत्तत्पक्षेऽष्टाकपालस्य पुरस्तात्स्विष्टकृत एते होमा ज्ञेयाः । आपस्तम्बेनाप्युक्तम्—पुनराधेयमित्याश्मरथ्योऽग्न्याधेयमित्यालेखन इति । मुख्यात्पुनराधेयादन्यत्र प्रायश्चित्तपुनराधेयेऽप्येते होमाः स्युः । अस्मदाचार्यस्येदमेवाभिप्रेतं यतो मुख्यपुनराधेयादन्यत्राग्निमादधीतेति सामान्येन विधानाद्द्विविधेऽपि प्रायश्चित्ताधाने भवन्त्येते होमा इति । न तावदयं पुनराधेये गुणविधिर्यः पराचीनं पुनराधेयादित्यभिधानात् । तर्हि येन पुनराधेयं कृतमुत्सर्गपूर्वकं तदनन्तरं क्रियमाण आधान एव प्राप्नुयात् । न । यः पराचीनं पुनराधेयादित्ययमर्थोऽभिप्रेतश्चेत्तदा बौधायनेनोक्तमेव स्यात् । कथम् । पुनराधेयानन्तरं क्रियमाणं तृतीयमेव कथं पूर्वनिमित्तभेदेन द्विः पुनराधेये सति तथा पुनराधेयानन्तरं द्विरग्न्याधेये सति । तस्मादग्न्याधेयपुनराधेयाभ्यां भिन्नं तृतीयमित्युक्तम् । बौधायनापस्तम्बवैखानसैस्त्वत्रैवाभिहितं कर्मभेदं विनैव प्रयोगभेदख्यापनाय संतिष्ठते तृतीयमाधेयमित्युक्त्वोक्तमथापहृताग्नेर्नष्टारणिकस्य ब्रह्मौदनेनैव प्रतिपद्यत इति । तथा

१ ख. ॰स्थस्य॰ । २ ख. घ. छ. ट. ॰यादिति । स॰ ।

यदरण्योः समारूढो नश्येद्यस्य चोभावनुगतावभिनिम्रोचेदभ्युदियाद्वा पुनराधेयमग्न्या-धेयं वेति । अत्र हि निमित्तफलनिरपेक्षमग्न्याधानमात्रं तृतीयं विधाय किमुद्दिश्येदं कर्मान्तरं कर्तव्यमित्यपेक्षायामथापद्धताग्नेरित्यादिना निमित्तान्युक्तानि तैरेव च कर्म-भेदः ख्यापितः । आचार्येण तु विध्यपराधे पुनराधेयमेवोक्तमतो नास्य विकल्प एषु निमित्तेषु मत इति भाति तथाऽपि शास्त्रान्तरादग्न्याधानमात्रं निमित्तैस्तु केवलं विना नामधेयं प्रायश्चित्तं विधीयते । तत्रोभयोरन्यतरद्ग्राह्यं, तदप्याचार्यस्येष्टमेव । कथम् । इत्थम्—यदयं प्रायश्चित्ताधाने तृतीये सामान्यरूपस्याग्निमादधीतेत्यस्यानुवादस्यानु-कारेण ब्राह्मणमेव सूत्रयति तेन ज्ञायते तृतीयं पुनराधेयमग्न्याधेयसदृशं कर्मान्तरं वोभयत्रापि होमा ज्ञेयाः । अन्यथैतत्तृतीयमग्न्याधेयविधानं व्यर्थं स्यात् । अतस्त्विदं प्रायश्चित्ताधानमेव न तु विध्यपराधे वक्ष्यमाणेषु निमित्तेषु, यदि न प्राप्नुयात्तदा व्यर्थमेव स्यात् । विध्यपराधेऽयं शब्दो न नामधेयं किं त्वेषु निमित्तेष्वग्निनाशे सति पुनरनेन कर्मणाऽऽधेय उत्पाद्य इति पुनराधेयशब्दार्थो विवक्षितः । किंच नैतत्तृतीय आधाने कर्मान्तरे नामधेयं संभवति किं तु पुनराधेयवदिति ·वक्तव्यं न तु पूर्वोक्तार्थे· नैवार्थवदिति न किंचिदनुपपन्नम् ।

[*आधानप्रभृति यावज्जीवं गार्हपत्यदक्षिणाग्नी धार्येते तथा सभ्यावसथ्यौ दक्षिणाग्नेस्त्वनुगतस्य मन्थनकल्पो यदि मथि-त्वाऽऽधीयते यद्याहार्य आहरणमर्थायार्थायाऽऽहवनीयं गार्हपत्यादुद्धरति नित्यं गतश्रियो धार्येत आयुष्कामस्य वा ॥ १९ ॥

इति हिरण्यकेशिसूत्रे तृतीयप्रश्ने षष्ठः पटलः । ]

---

इति तृतीयाधेयं समाप्तम् । समाप्तमग्न्याधेयप्रकरणम् ।

[ + इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैजयन्त्यां तृतीयप्रश्ने षष्ठः पटलः ॥ ६ ॥

---

अथ सप्तमः पटलः । ]

---

## अग्निहोत्रं व्याख्यास्यामः ।

अग्निहोत्रमिति कर्मनामधेयं तत्प्रख्यं चान्यशास्त्रमित्यत्र जैमिनिना निर्णीतं तस्य व्याख्यानं (न) प्रतिज्ञा । अत्रास्मच्छाखायां बहूनां मन्त्राणामनुपलम्भाद्बहूनां कर्मणां

---

* चतुष्कोणचिह्नान्तर्गतं सूत्रं व्याख्यापुस्तकेषु न विद्यते । व्याख्यानं च नोपलभ्यते पुस्तकेषु । + चतुष्कोणचिह्नान्तर्गतं पुस्तकेषु न विद्यते ।

---

१ ज. झ. ठ. धारयत्यायु॰ ।

तूष्णीकानां विधानाच्च तूष्णीकेषु प्राकृतेषु यजुरितिपरिभाषोक्तन्यायेन मन्त्रोपसं-हारक्रमं दर्शयितुं प्रतिज्ञा । आधानानन्तरमग्निहोत्रं दर्शपूर्णमासौ च नियतावि-त्युक्तमेव । तत्राऽऽधानात्पूर्वमुपोद्धातत्वेन दर्शपूर्णमासौ व्याख्याताबाधानं चातः परमग्निहोत्रमवसरप्राप्तं व्याख्यायते । यावज्जीवचोदनायां निःश्रेयसफलता स्वर्गकाम-चोदनायां स्वर्गफलता च दर्शपूर्णमासचोदनाद्वयव्याख्यानेन कृतव्याख्यानेति मत्वा प्रयोगमेव दर्शयति नात्र त्रिंशदादिविरामकाल इति विशेषः । सायंप्रातःकालं(ल)-निवर्त्य एकः प्रयोग उपक्रमप्रकारस्तु पूर्वमेव दर्शितः । यद्यपि सायमेवाग्निर्देवता तथाऽप्युभयकालसाध्य एक एव प्रयोग इति प्रातःकालीनमप्यग्निहोत्रमेवाग्नये होत्रं हविर्दानं तद्रूपं कर्माग्नेः प्रधानदेवतात्वाद्यद्यपि प्रजापतिरपि प्रधानदेवता होमाभ्या-सोऽत्र देवताद्वयानुरोधान्न कर्मभेदस्तथाऽपि प्राथम्यादग्नेरेव प्रवृत्तिनिमित्ततेति न्यायदर्श-नसंग्रहः । स्वशाखोपदेशस्तु प्रकारान्तरेण । तद्यथा—प्रजापतिरग्निमसृजतेत्युपक्रम्य तस्मा एतद्भागधेयं प्रायच्छद्यदग्निहोत्रं तस्मादग्निहोत्रमुच्यत इति च निर्वचनात्तेना-ग्निना प्रातः सूर्याय दत्तमपि नानग्निहोत्रं तथा च प्रजापतेर्द्वितीयदेवतात्वेऽपि नामधे-यमग्निहोत्रमित्येवाग्नये होत्रमस्मिन्कर्मणि कालद्वयसाध्यसमुदायरूपे तदिति वा तत्सं-बन्धाद्द्रव्ये साधनभूतेऽपि अग्निहोत्रे दर्विहोमविशेषशब्दो गौण एव जुहोतिचोदि-तत्वात्तथा चात्र साङ्गस्य निरूपणं क्रियत इति दर्शयितुं प्रतिज्ञा तेन न ते दर्विहोम-धर्मा भवन्ति । ततस्तु येषां न श्रुत्यादिनाऽङ्गजातं ते पूर्वा दर्विहोमधर्मा एवाग्रे व्याख्या-स्यन्ते । न विद्यते पूर्वमतिदेशप्रापकं प्रकृतिभूतं कर्म येषां तेऽपूर्वा इति । अयमपि न तथा श्रुत्यादिप्रमाणैः स्वधर्मा सन्नातिदेशमपेक्षते । नापि अपूर्वदर्विहोमेषु न्यायैरना-रभ्य विधिभिश्च विधास्यमानानि धर्मजातानि । प्रकृतिश्चैका साऽग्निहोत्रस्यातो नापूर्वो दर्विहोम इति होमशब्दस्य चाङ्गहीनचोदनाविहिते रूढत्वात्तस्मादग्निहोत्रे दर्वि-होमशब्दस्य व्यवहारो गौण इति ज्ञेयम् । अत्रापि संकल्पकरणं पूर्ववत्स्वर्गकामो वा सायं प्रातरग्निहोत्रं होष्यामीति संकल्प्याग्निहोत्रस्य यज्ञक्रतोरेक ऋत्विगिति श्रूयते यजुर्वेदविहितत्वादध्वर्युरेव । सूत्रान्तरे स्वयं वा जुहुयादिति दर्शनात्स्वयं होमोऽपि नाऽऽपदि किं तु मुख्य एव ।

**तस्मै सायं प्रातर्ज्वलन्तं गार्हपत्यादाहवनीयमुद्धरति ।**

तस्मा अग्निहोत्रकर्मणेऽर्थायार्थायोद्धरणं प्राप्तमपि गुणविधानार्थमनूद्यते । काल-द्वयेऽपि ज्वलन्तमेवोद्धरेदित्येष गुणो विधीयतेऽन्यैरपि गार्हपत्यमिन्धनैः प्रज्वाल्यैक-देशं ज्वलन्तमेव पात्रेण पृथक्कुर्याद्दक्षिणाग्नेर्नित्यधारणविधानादाहवनीयमित्युक्तम् ।

यः प्रधानस्य कालः सोऽङ्गानामिति परिभाषितत्वात्तदपवादमाह—

अधिवृक्षसूर्ये सायमग्निहोत्रायोषसि प्रातरग्निहोत्राय ।

उद्धरतीत्यनुकृष्यते । कालद्वयसंबन्धेन नामद्वयम् । प्रधानस्य साङ्गस्य कालात्पूर्वं तत एव कालेऽनुदितानस्तमितयोरुद्धरणमित्यर्थः । वृक्षानधिकृत्य वर्तत इत्यधिवृक्षः सूर्यो यस्मिन्काले तत्र सायमग्निहोत्रार्थमेवमुषसि प्रातरग्निहोत्रार्थम् । उदयानन्तरहोमेऽप्युषस्येवोद्धरणमेवं सायमपि ज्ञेयम् । वैखानसस्तु सायमधिवृक्षसूर्येऽप्यस्तमिते वा प्रातरुषसि प्रागुदयाद्वेत्याह । कात्यायनस्त्वनस्तमितानुदितयोरित्याह । असंभवे तदपि ग्राह्यम् । उषसि प्रातरग्निहोत्रायेत्युषःशब्द उषसि श्रूयमाणस्याग्निहोत्रस्योपलक्षणार्थम् ।

नक्तं वा धारयेयुः ।

सायमेवोद्धृतं प्रातरग्निहोत्रार्थं यजमानः पत्न्यन्यो वेति विवक्षया बहुवचनमुपक्रम एव नियमः । एतदुद्धरणं न धार्ये नापि दर्शपूर्णमासार्थमुद्धृते चासमासयोर्दर्शपूर्णमासयोरेवं पशुबन्धे विकृतेष्वपि ज्ञेयम् । तत्पूर्वं व्याख्यातमेव ।

उद्धरेति प्रेषिते वाचा त्वा होत्रा प्राणेनोद्गात्रा चक्षुषाऽध्वर्युणा मनसा ब्रह्मणा श्रोत्रेणाग्नीधैतैस्त्वा पञ्चभिर्दैव्यैर्ऋत्विग्भिरुद्धरामि जहामि मृत्युममृतेनाऽऽदधामि भूर्भुवः सुवरुद्ध्रियमाण उद्धर पाप्मनो मा यदविद्वान्यच्च विद्वाꣳश्चकार । अह्ना यदेनः कृतमस्ति पापꣳ सर्वस्मान्मोद्धृतो मुञ्च तस्मादिति सायम् ।

उद्धरतीत्यनुषङ्गः । याजमाने तूद्धरेत्युद्ध्रियमाणमनुमन्त्रयत इत्युक्तं तत्तूद्धरण आरब्ध एवोद्ध्रियमाणमिति वचनादत्र च प्रेषित उद्धरतीत्युक्तं तत्र चोद्धरेति मन्त्रलिङ्गेन च पूर्वकालताप्रतीतौ वर्तमानसामीप्ये वर्तमानवद्वेति सूत्रेणोद्धरिष्यमाणमित्यर्थस्वीकरणं युक्तं तादृशं लक्षीकृत्येत्यर्थः । अनुमन्त्रणवचनेन प्रेषित इत्युक्तं तत्र स्वयं होमेऽप्यनुमन्त्रणेन प्रैषो यथा स्यादसंनिहितेऽन्येनापि प्रैषेण संस्कृत एव कुर्यादिति प्रयोजनम् । अथ वा काष्ठादिप्रक्षेपेण प्रवृत्तमध्वर्युमनुलक्षीकृत्य मन्त्रयते प्रेष्यतीत्यर्थः । श्रुतावनुमन्त्रयतिर्दृष्टः स एवानूदितः ।

रात्र्या यदेनः कृतमस्ति पापꣳ सर्वस्मान्मोद्धृतो मुञ्च तस्मादिति प्रातः ।

वाचा त्वेत्यादि चकारेत्यन्तोऽनुषङ्ग उद्धरतीति च ।

---

१ घ. ङ. ज. झ. ञ. ड. संप्रेष्यति ।

**अमृताहुतिममृतायां जुहोम्यग्निं पृथिव्याममृतस्य जित्यै । तयाऽनन्तं काममहं जयामि प्रजापतिर्यं प्रथमो जिगायाग्निमग्नौ स्वाहेति सायमायतने प्रतिष्ठापयति ।**

आहवनीयायतने ।

**सूर्यमग्नौ स्वाहेति प्रातः ।**

अमृताहुतिमित्यादि जिगायेत्यन्तमनुषङ्गः । प्रतिष्ठापयतीति च । प्रातः प्राङ्मुखः सायं प्रत्यङ्मुख इत्यपि सूत्रान्तराणि । नक्तं धारणपक्षे सायमुद्धरणमन्त्रा एवोद्धरणस्य सायं होममात्राङ्गत्वात्तदर्थमुद्धृतं नक्तं विहितधारणं प्रातर्होमस्याङ्गं नित्यधार्यं इवात्रोद्धरणकालबाधात् ।

**प्रथमास्तमिते सायमग्निहोत्रं जुहोति नक्षत्रं दृष्ट्वा प्रदोषे वोषसि प्रातरग्निहोत्रं पुरोदयमुदिते वा यर्हि वाक्प्रवदेत्तर्हि होतव्यमित्येकेषाम् ।**

पूर्वमुद्धरणकाल उक्तस्ततोऽन्यो होमकालोऽनेन दर्शितस्तेन ज्ञायते मध्ये विरामे संध्योपास्तावपि न दोषः । प्रथमास्तमयो नाम सूर्यादर्शनानन्तरमेव नक्षत्रदर्शने वा प्रदोषे घटिकाद्वयात्मके रजनीमुखे वा सायमग्निहोत्रं जुहोति । त्रिविधोऽपि सायंकाल एव । तथा प्रातःकालोऽपि घटिकाद्वयं पूर्वमुदयाद्वोदयात्पूर्वमेव वोदिते वेति त्रिधा । तत्र प्रातरग्निहोत्रं यर्हि यदा वाक्पक्षिणां प्रवदेत्प्रकटा भवेत्तर्हि तदा प्रातरग्निहोत्रं होतव्यमित्येके शाखिनः । प्रदोषान्तः सायं संगवान्तः प्रातरिति वैखानसाश्वलायनादयः । अत्रोदयात्पूर्वमारम्भे होममध्ये चेदुदयस्तदा प्रायश्चित्तदर्शनात्पृथक्कालावुक्तौ पक्षान्तरेषु सांकर्येऽपि न दोषः । शब्दात्प्रातःकालोऽह्नः प्रथमविभागे रूढो यद्यपि प्रातरग्निहोत्रमित्यत्र निमित्तत्वेन प्राप्नोति तथाऽपि उषसि पुरोदयमित्यादिकालविधानपरेषु वाक्येषु रूढ इति प्रातःकालव्यतिरिक्तकाला अपि विहितास्तेऽपि प्रातःकालशब्देन लक्ष्यन्ते सामीप्यादेवमह्नोऽन्तिमभागवाचके सायंशब्देऽपि ज्ञेयम् । नानाकालानां भेदेन विधानं श्रुत्यनुसारेणेत्यदोषः ।

**एतस्मिन्काले सर्वकर्माणि क्रियन्तेऽन्यत्रोद्धरणात् ।**

एतस्मिन्नेकैकस्मिन्काले यः प्रधानस्य कालः सोऽङ्गानामित्युक्तं तथाऽपि विनोद्धरणं तस्योदयेऽस्तमये च प्रायश्चित्तविधानात् । अन्यान्यङ्गानि यो योऽग्निहोत्रस्य काल उक्तस्तन्मध्य एक एवाऽऽदर्तव्यस्तत्र तत्रैव कर्तव्यानि न तु होमकालेषु मध्ये कस्मिंश्चिदङ्गान्यन्यस्मिंश्च प्रधानमिति विप्रकर्षो युक्त इति नानाश्रुतिसिद्धनानाकालप्रदर्शनो-

---

१ घ. ङ. च. ज. झ. ञ. ठ. 'थममस्त° ।

कन्यायारूढमनेन सूत्रेण कृतमुद्धरणं तु पूर्वपूर्वकाल एव नियम्यते । अत्र यजमानो विहारं प्रविशति विश्वदानीमिति । यदग्न इति स्थूलमिध्ममाहवनीय उत्तरया गार्हपत्य एवमन्यत्र । तूष्णीं सभ्यावसथ्ययोः । विद्युदसीत्यप उपस्पृश्यापरेणाऽऽहवनीयं दक्षिणाऽतिक्रम्य स्वायतन उपविशति पत्न्यपि स्वस्थाने ।

ततोऽध्वर्युः—

**परिसमूहनेनाग्नीनलं करोत्यग्ने गृहपते शुन्धस्वेति गार्हपत्यमग्ने वह्ने शुन्धस्वेति दक्षिणाग्निमग्ने सम्राट् शुन्धस्वेत्याहवनीयम् ।**

परितोऽभ्युक्ष्य हस्तेन तृणाद्यपसारणेन स्निग्धताकरणं परिसमूहनं तेन लक्षितानग्नीन्पुष्पादिप्रकारेणालं करोति । तदुक्तं वैखानसेन—पर्युक्षणपरिसमूहनपरिपुष्पकरणैरग्नीनलं करोतीति । प्रत्यग्नि सकृन्मन्त्रेण पर्युक्षणादिकमेकैकत्र समापनीयम् । परिसमूहनादिकमलंकरणमेव सर्वमिति प्रधानेनालंकरणेन मन्त्रसंबन्धोऽथ वा शुन्धस्वेति लिङ्गात्पर्युक्षणानन्तरं समूहने मन्त्रस्तूष्णीमलंकरणं मलापगम एवालंकारो युक्त इत्येकापवर्गताऽपि तृतीयया दर्शिता ।

**पुरस्तादलंकाराः सायमुपरिष्टादलंकाराः प्रातः ।**

भवन्तीति शेषः । उपरिष्टाद्धोमकर्मान्ते ।

**उभयतोऽलंकारानेके समामनन्ति ।**

पूर्वं व्यवस्थयोक्तमत्र पक्षे समुच्चयः ।

**दर्भैरग्नीन्परिस्तृणाति यथा दर्शपूर्णमासयोः ।**

गतार्थम् ।

**अग्निहोत्रपात्राणि प्रयुनक्ति खादिरꣳ स्रुवं वैकङ्कतीमग्निहोत्रहवणीमचक्रावर्तामशूद्रकृतामूर्ध्वकपालामग्निहोत्रस्थालीम् ।**

दर्शपूर्णमासस्रुवव्यतिरिक्तत्वख्यापनायाग्निहोत्रपात्राणीत्युक्तम् । स्रुवाग्निहोत्रहवण्यौ व्याख्याते । कुलालचक्रेण न विद्यत आवर्तो भ्रमणं यस्याः सेति शूद्रव्यतिरिक्तेन त्रैवर्णिकेनैव कृतामित्यर्थः । ऊर्ध्वानि कपालानि सानूनि यस्याः सा । एवमग्निहोत्रद्रव्याधारभूतस्थाली मृन्मयी । त्रीण्येतानि नैतेषां द्वंद्वनियमः स ह्यैष्टिकः । अत्रापि यथा दर्शपूर्णमासयोरिति वर्तनीयम् । तथा च स्रुवमग्निहोत्रहवणीमेकमिति द्वंद्वम् । वैखानसस्तूत्तरेण गार्हपत्यं कूर्चे प्रयुनक्तीत्याह ।

**दक्षिणेन विहारं गौरवस्थिता भवति ।**

होमारम्भात्पूर्वमेवाऽऽनीता । विहारो विहृताग्निस्थलम् । एनपा विहाराददूर इत्युक्तम् । पुंवत्सामिति कात्यायनः ।

इड एह्यदित एहि सरस्वत्येहि गौरेहीति तामाहूय
पूषाऽसीति वत्समुपसृजति धावन्तं वाऽनुमन्त्रयते ।

तामवस्थितामाहूयेति धर्ममात्रम् । उपसृजति गवा संयोजयति । मुक्तं धावन्तं पूषाऽसीत्यनुमन्त्रयते ।

प्राचीमुदीचीं वाऽऽवृत्यान्यः शूद्राद्दोग्धि
न संमृशति यथोपलम्भमनूचो वा ।

वत्समपच्छिद्य शूद्रादन्यस्त्रैवर्णिको दिगन्तराभिमुखां स्थितां प्रदक्षिणमावृत्य प्राचीमुदीचीं वा स्थापयित्वा दोग्धि । न संमृशति प्रस्रवार्थं सोदकेन पाणिनाऽधो न संमृशति । सर्वथा संमर्शनप्रतिषेधो न युज्यतेऽशक्यत्वाद्यथा पय उपलभ्यते तथा स्तनान्नियमेन संमृश्य दोग्धि । तत्र नियम्यते यदि स्पृशति प्रस्रवार्थं तदा स्तनानेवानूच एव स्तनमूलादग्रपर्यन्तम् ।

पूर्वौ दुह्याज्ज्येष्ठस्य ज्यैष्ठिनेयस्य यो वा गतश्रीः स्याद-
परौ दुह्यात्कनिष्ठस्य कानिष्ठिनेयस्य यो वा बुभूषेत् ।

पूर्वौ स्तनौ तथा चापरावपि । नैमित्तिको नियमः । व्याख्यातमन्यत् । यो वा भूतिमिच्छेदयं काम्यः ।

दोहने दुग्ध्वा स्थाल्यामानयति स्थाल्यां वा दोग्धि ।

दोहने दोहनपात्रेऽग्निहोत्रस्थाल्यां वा । तद्दुग्धं पूर्वेणाऽऽहवनीयमानयेदिति कात्यायनादयः ।

द्वयोः पयसा पशुकामस्य जुहुयात्पूर्वमधिश्रित्योत्तरमानयेत् ॥ १६ ॥

पशुकामस्य यजमानस्य पूर्वदुग्धमङ्गारेषु अधिश्रित्य ततोऽन्यस्या दुग्ध्वाऽधिश्रिते पयस्यानयेत् ।

ऋतं त्वा सत्येन परिषिञ्चामीति सायं परि-
षिञ्चति सत्यं त्वर्तेन परिषिञ्चामीति प्रातः ।

प्रदक्षिणमुदकेन सिञ्चति ।

आहवनीयं परिषिच्य गार्हपत्यमथ दक्षिणाग्निं गार्ह-
पत्यं वा परिषिच्य दक्षिणाग्निमथाऽऽहवनीयम् ।

तुल्यश्रुतित्वाद्विकल्पोऽथशब्दः श्रुतिगतोऽनूदितः । अन्ते सभ्यावसथ्यौ ।

यज्ञस्य संततिरसि यज्ञस्य त्वा संतत्यै नयामि संतत्यै त्वा
यज्ञस्येति गार्हपत्यात्संततामपां धारां स्रावयत्याहवनीयात् ।

आहवनीयं मर्यादीकृत्य गार्हपत्यमारभ्याविच्छिन्नामुदकधारां करोति । आराद्उपकारकमेतत् ।

धृष्टिरसीत्युपवेषमादाय निरूढं जन्यं भय९ सह तेन यं द्विष्मः सुभूताय श्रयध्वमिति तेन गार्हपत्यादुदीचोऽङ्गारान्निरूहति।

उपवेषोऽङ्गारनिर्हरणार्थं काष्ठम्। उद्गायतनान्निःसारयति तेनोपवेषेण।

भूतकृतः स्थापोढं जन्यं भय९ सह तेन यं द्विष्म इति वा।

निर्हरणे मन्त्रो विकल्पेन।

व्यन्तान्करोति।

अन्त आयतनस्य तस्माद्विगता अङ्गारास्तादृशान्करोति गार्हपत्यायतनाद्बहिर्निर्गमयतीत्यर्थः।

इडायाः पदं घृतवच्चराचरं जातवेदो हविरिदं जुषस्व। ये ग्राम्याः पशवो विश्वरूपास्तेषा९ सप्तानामिह रन्तिरस्तु पुष्टिरिति तेष्वग्निहोत्रमधिश्रयति।

तेष्वङ्गारेष्वग्निहोत्रसंबन्धिद्रव्यमग्निहोत्रस्थाल्यां स्थितमधिश्रयति सामर्थ्यात्।

समुदन्त९ होतव्यम्।

समुदन्तं दोहानन्तरं फेनवदेवाऽऽनीयैवाधिश्रितमात्रमेवोन्नयनादिना होतव्यमित्यर्थः।

अनन्तरं वाऽधिश्रयणादुद्भवः स्थोदहं प्रजया पशुभिर्भूयासमिति तृणं प्रदीप्यावेक्षते।

अधिश्रितमेव वा पक्षे संस्कार उच्यते। तेन प्रदीप्ततृणप्रकाशेन स्थालीगतं द्रव्यमवनतो भूत्वेक्षते। गार्हपत्यादेव प्रदीपनं तस्यागश्चानन्तरमिति तु समुदन्तं होतव्यमित्यत्रावेक्षणादि नास्ति।

हस्ते मा विनैषमिति स्रुवेणाद्भिः प्रतिषिञ्चत्यमृतमसीति वा।

हस्तपात्रयोः परिसंख्यार्थं स्रुवेणेति बिन्दुमात्रपरिसंख्यार्थमद्भिरित्युक्तम्।

गोदोहनसंनेजनेन प्रतिषिच्यमेकेन स्तोकेन प्रतिषिच्यं प्रतिषिक्तं पशुकामस्य।

पशुकामस्य यजमानस्य गोदोहनपात्रस्य संनेजनं संनिज्यते प्रक्षाल्यते येनोदकेन तेन प्रतिषेचनीयं तेनैकेन बिन्दुना प्रतिषेचनीयमेवं प्रतिषिक्तं पशुकामस्य नाद्भिः प्रतिषेकोऽपि स्वयमेवेत्यर्थः। मन्त्रस्तु पूर्वयोरन्यतर एव।

अप्रतिषिक्तं तेजस्कामस्याभिचरतास्तितीर्षतो वा।

अद्भिरपि न प्रतिषिक्तं कार्यं तेजः शास्त्रादिना कामयमानस्य तथाऽभिचारमिच्छतस्तथा तितीर्षतः पाप्मादिकमनिष्टं तर्तुमतिक्रमितुमिच्छतोऽपि यजमानस्याप्रतिषिक्तमेव कुर्वन्।

य: कामयेत शूरो मे राष्ट्र आजायेतेति पुनरेव तस्यावेक्षते यथा पुरस्तात् ।

राज्ञ: कामोऽयं मे राज्ये शूर एव क्षत्रिय उत्पद्यतामिति कामस्योद्भवस्थ इति तृण-दीप्त्या नित्यावेक्षणात्पुनरवेक्षत इत्यर्थ: । एतानि काम्यानि यजमानेन संकल्पिते कार्याणि ।

अन्तरित१ँ रक्ष इत्युल्मुकेन त्रि: पर्यग्नि करोति परिवाजपतिरिति वा ।

प्रथमं तावदेव यजुराग्निहोत्रप्रकरणपठितं द्वितीया च सर्वेग्गार्हपत्याद्ग्रहणं त्यागश्च गार्हपत्ये संस्कारा इति । गतार्थम् ।

घर्मोऽसि रायस्पोषवनिरिहोर्जे यच्छेति वर्त्म कुर्वन्नुदगुद्वासयति।

अङ्गारेषु किंचित्कर्षन्निवोदगानयति स्थालीम् ।

प्रजां मे यच्छेत्यन्ते धारयति ।

अन्तेऽङ्गारप्रान्ते स्थिरी करोति अर्थसिद्धं ततो बहिरङ्गारेभ्य: स्थापनं तूष्णीमेव।

प्रत्यूढं जन्यं भय१ँ सह तेन यं द्विष्म: सुभूतमकर्तेति तेन गार्हपत्येऽङ्गारान्प्रत्यूहति भूतकृत: स्था२ध्येति सस्यं यजमानस्येति वा।

प्रत्यूहति मेलयति ।

देवस्य त्वेति स्रुवमग्निहोत्रहवर्णीं चाऽऽदाय ।

आदद इत्यन्त: । द्रव्यपृथक्त्वेऽभ्यावर्तेत इत्यावृत्तिस्त्वेकवचनाच्च ।

प्रत्युष्टमित्याहवनीये गार्हपत्ये वा निष्टपति ।

समाप्तं वाक्यं रक्ष इत्यन्तं गतम् ।

सुपर्णा त्वा सुपर्णमयी१ँ हिरण्ययष्टिरस्यमृतपालाशा: स्रोतो यज्ञानामित्याग्निहोत्रहवणी१ँ संमार्ष्टि ।

हस्तेन संमार्जनं बिलस्य दृष्टप्रयोजनं स्यादेवमभ्यासोऽपि यावदपैति बिलगतं रज: ।

अरिष्टो यजमान: पत्नी चेत्युभयम् ।

सहैव द्वयं तथा च दक्षिणेनैकैकं गृहीत्वा वामे निधाय दक्षिणेन संमार्गो याव-दुन्नयनमत्याग: । उभयमित्यवयवद्वयात्मकमेकमेव द्रव्यमिति चेष्टापृथक्त्वेऽपि न मन्त्रावृत्ति: ।

---

१ घ. ङ. ज. झ. ञ. ढ. °वेक्षेत य° । २ क. ख. ग. च. छ. ठ. ट. ण. °ध्ये स° ।

**ओमुन्नेष्यामि हव्यं देवेभ्यः पाप्म-**
**नो यजमानमिति सायमामन्त्रयते ।**

यजमाने त्वामुन्नयेति प्रसवाभिधानाद्यजमानमामन्त्रयत इत्यर्थात् ।

**ओमुन्नयामि हव्यं देवेभ्यः पाप्मनो यजमानमिति प्रातः ।**

आमन्त्रयत इत्याकृष्यते ।

**प्रवसत्योमुन्नयेति स्वयमात्मानं प्रत्येव ब्रूयात् ।**

स्वयमध्वर्युरात्मानं प्रति ब्रूयाद्यजमाने प्रवसति तथा वा तेनैव न्यायेन स्वयं होमेऽपि स्वयमात्मानमित्यपि सिद्धम् । एवं प्रैषार्थकर्तर्यनादिष्टे त्वयमेव न्यायस्तत्र तत्रास्माभिः पूर्वं दर्शित एव । हविर्देवानामित्यादि याजमानं प्रसूते च ।

**अग्नये च त्वा पृथिव्यै चोन्नयामि वाताय च त्वाऽ-**
**न्तरिक्षाय चोन्नयामि सूर्याय च त्वा दिवे चोन्न-**
**याम्यद्भ्यश्च त्वौषधीभ्यश्चोन्नयामीति चतुरः**
**स्रुवानुन्नयत्युत्तमेन द्विः पञ्चावत्तिनः ।**

एकेनेतिकरणेन विनियोगादेकमन्त्रत्वे प्राप्तेऽप्युत्तमेनेति वचनान्नानामन्त्रता । स्रुवा-स्रुवपरिमितानि द्रव्याणि स्रुवास्तान्प्रतिमन्त्रमेकैकमुन्नयेदेवं चतुःसंख्याकान् । उन्नयनं [पू]रितस्योर्ध्वमानयनं प्रापणान्तं तथाच द्विकर्मकत्वात्स्रुवमुन्नयति प्रापयति क्रियारम्भे [च]श्चः । उत्तमेनाद्भ्यश्च त्वौषधीभ्यश्चोन्नयामीत्यनेन ।

**भूरिडा भुव इडा सुवरिडा करदि-**
**डेति वा ज्वलदिडेति पञ्चावत्तिनः ।**

पूर्वे चत्वारश्चतुर्णां विकल्पार्थाः । पूर्वमावृत्तस्य विकल्पार्थः पञ्चमः पञ्चावत्तिनः ।

**यं प्रति पुत्राणां कामयेतानेनर्ध्नुयामिति तं प्रति पूर्णमुन्नयेत् ।**

पुत्राणां मध्ये यं पुत्रं यजमानोऽनेनाहमृध्नुयामृद्धिं गच्छेयं तं पुत्रं प्रति पूर्णं तं [स]मुद्दिश्यैकं स्रुवं पूर्णमन्यानपूर्णानुन्नयेत् ।

**यदि कामयेत सर्वे सदृशाः स्युरिति सर्वान्समश उन्नयेत् ।**

सदृशाः सर्वैर्ऋध्नुयामिति यदि कामयेतेत्यर्थः । समशः समान्पूर्णानित्यर्थः ।

**उन्नीतं दशहोत्राऽभिमृशति न वाऽभिमृशति ।**

उन्नीतं स्रुग्गतं दशहोत्रा चित्तिः स्रुगित्यनेन तुल्यश्रुतित्वाद्विकल्पः ।

**सजूर्देवैः सायं यावभिः सायं यावानो मा देवाः स्वस्ति**
**संपादयन्तु पशुभिः संपृचीयेति सायमुन्नीतं स्थालीं**

चाभिमृशति सजूर्देवैः प्रातर्यावभिः प्रातर्यावाणो मा देवाः स्वस्ति संपादयन्तु पशुभिः संपृचीयेति प्रातः ।

उन्नीतं स्थालीं चाभिमृशतीत्युभयत्र संबध्यते ।

पशून्मे यच्छेति यत्रोन्नयति तदुपसादयति ।

उन्नीतं यत्र तत्रैवोपसादयति । न स्थलान्तर इति वक्तुमेवमुक्तम् । उपोन्नयनस्थलसमीपे ।

प्राचीमुदीचीं वाऽऽहृत्यापरेण गार्हपत्यमुपसादयतीत्येकेषाम् ॥ १७ ॥

उन्नयनस्थलात्प्राचीं दिशं प्राचीं स्रुचं चाऽऽहृत्य नीत्वेत्यर्थ एवमुदीचीमित्यपि । गार्हपत्यपश्चाद्भाग उप समीपे विकल्पः पूर्वेणात्र कूर्च उपसादनं वैखानसप्रभृतिभिरुक्तं पितृमेधे चोपसादनीयोपावहरणीयकूर्चयोः प्रतिपत्तिविधानात्कूर्चौ ज्ञेयौ । तयोरेक एवोन्नयत्रोपसादनार्थो द्वितीयस्तु प्राग्द्रवणस्रुच उपसंग्रहेण हरणार्थ इति संज्ञाद्वयात्प्रतीयतेऽथवा भूमावेव प्रथम उपसादनं द्वितीय एवोपसादन ओषधीषूपसादयतीति विशेषविधानादाचार्यस्य कूर्चद्वयम् ।

पालाशीं[१] समिधं प्रादेशमात्रीमेकां द्वे तिस्रो वोपरिष्टात्स्रुग्दण्ड उपसंगृह्य ।

समिधः प्रादेशमात्रत्वं नियम्यते । तेनान्यत्रारत्निमात्रत्वं प्रादेशमात्रत्वं विकल्पते । स्रुग्दण्डस्योपरिष्टाद्धृत्वा विकल्पेनैकादिकाः ।

उर्वन्तरिक्षं वीहीति समया गार्हपत्यस्यार्चिर्हरति ।

गार्हपत्यस्यार्चिः समया समीपं प्रतिहरति स्रुचमिति शेषः ।

प्रोगुद्द्रवन्दशहोतारं व्याचष्टे ।

वाक्यशः पठेत् । उत्थाय प्राग्गच्छन्प्राचीं दिशं गच्छन्नित्यर्थः । कूर्चात्स्रुचं गृहीत्वोर्वन्तरिक्षमित्यर्चिःसमीपं नीत्वा तत उद्द्रवन्दशहोतारं वदेत् । शतृप्रत्ययेन मन्त्रप्रागमनयोः सहभावः । गार्हपत्यादाहवनीयं हरति । मुखमात्रे धारयन्निति कात्यायनः ।

अग्नये त्वा वैश्वानरायेति मध्यदेशे निगृह्णाति ।

मध्यदेशो गार्हपत्याहवनीययोस्तत्रदेशेऽन्तरिक्ष एव निगृह्णाति नीचां यमितां स्थिरां करोतीति यावत् ।

वाताय त्वेत्युद्यच्छाति ।

निगृहीतप्रदेशादूर्ध्वं किंचित्करोति ।

---

१ घ. क. ज. ञ. म. प्राचीं वा पोहृत्यप' । २ घ. क. ज. ञ. म. ठ. प्राद्रु' ।

आयुर्मे यच्छेत्यपरेणाऽऽहवनीयमोषधीषूपसादयति ।

ओषधयो दर्भास्ते कूर्चरूपेणावस्थितास्तेषूपसादयति । स्पष्टम् । प्रथमाग्निहोत्रं व्याहृतिभिरासादयति । संवत्सरान्ते च प्रातरग्निहोत्रमपि व्याहृतिभिः ।

एषा ते अग्ने समिदिति समिधमादधाति ।

व्यायतामित्यन्तः । मध्य आहवनीयस्येति बौधायनः । समिद्वयं तु स्रुक्संस्कारार्थं नान्यत्तस्य प्रयोजनमुक्तम् ।

हिरण्मयं त्वा वꣳशꣳ स्वर्गस्य लोकस्य संक्रमणं दधामीति वा ता अस्य सूददोहस इति वा रजतां त्वा हरितगर्भामग्निर्ज्योतिषा ज्योतिष्मतीꣳ स्वर्ग्यां कामदुघामक्षितामक्षित्या आप्त्यै व्याप्त्यै समाप्त्यै कामाय स्वर्गाय लोकायामृतत्वाय रात्रिमिष्टकामुपदध इति सायꣳ हरिणीं त्वा रजतगर्भाꣳ सूर्यो ज्योतिषा ज्योतिष्मतीꣳ स्वर्ग्यां कामदुघामक्षितामक्षित्या आप्त्यै व्याप्त्यै समाप्त्यै कामाय स्वर्गाय लोकायामृतत्वायाहरिष्टकामुपदध इति प्रातः ।

एषा त इति मन्त्रेणैतौ द्वौ समानविकल्पौ ता अस्येति पृथग्द्वौ व्यवस्थितौ । केचित्सूत्रकाराः काम्यौ द्वाविमावित्याहुः ।

विद्युदसि विद्य मे पाप्मानमृतꣳ सत्यमुपैमि मयि श्रद्धेत्यप उपस्पृश्य ।

मन्त्रेणोदकं स्पृष्ट्वा । पाप्मानमित्यन्तः । स्वशाखापठितो विकल्पते ।

यदा श्यावेवाथ जुहोति ज्वलन्त्याम् ।

श्यावेवेषच्छ्यामा तदा तस्यां ज्वालायुक्तायाम् ।

यदा वा वीतार्चिर्लेलायतीव ।

तदा वा जुहोतीति पूर्वेण विकल्पः । सम्यग्यदा श्यामवर्णा रक्तत्वमप्राप्ता ज्वलन्ती तस्यामित्येकः पक्षः । द्वितीयस्तु यदा सम्यग्दीप्ता शान्तार्चिः पश्चात्किंचिल्लेलायति वह्निशिखा विच्छिन्नां विच्छिन्नामुद्गमति तस्यां दशायामिति ।

धूपायन्त्यां ग्रामकामस्य ।

ग्रामकामस्य यजमानस्य धूपायन्त्यां वह्निना व्याप्ता यदा धूमवती तस्यां जुहोतीत्यनुषङ्गः ।

---

१ क. ग. ठ. ण. °न्यस्तरस्य । २ ख. घ. छ. ज. झ. ञ. ड. °रण्मयं ।

**व्यङ्गुले मूलात्समिधमनुस्रावयन् ।**

मूलमधस्तनोऽन्तस्तदवधि मूलमारभ्याङ्गुलद्वयं मध्ये धारां स्रावयति । प्रतिमुखं जुहोतीति बौधायनः । जुहोतीति पूर्वेणान्वयः । स्रावयन्निति वचनान्मुखेनेवेति गम्यते । प्रसेचनस्य मुखसाध्यत्वं हंसमुखप्रसेचना इत्येव प्राप्तं मुखेनेतरा इत्यपि सामान्यविधिरेव ।

एवं परिभाष्य समन्त्रं प्रधानाहुतिद्वयं व्याचष्टे—

**होत्रा भूर्भुवः सुवरग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति साय्ँ होत्रा भूर्भुवः सुवः सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः ।**

जुहोतीत्यनुवर्तते । अत्र स्रुवचतुष्टयपरिमितमुन्नीतं प्रथमाहुतिः स्रुवमात्रेण द्वितीया सपादेन स्रुवेण । भक्षार्थं पादोनस्रुवद्वयमिति व्यवस्था सेत्स्यति ।

**सःँसृष्टहोममेके समामनन्ति ।**

अग्निसूर्यदेवताप्रतिपादकमन्त्रेण संसृष्टदेवतायै होमः संसृष्टहोमस्तमेके शाखिनः । यद्यप्युभयमस्मच्छाखायां पठ्यते तथाऽप्येक इत्युक्तमादरार्थमेकेऽन्ये शाखिनः संसृष्टहोममेव समामनन्ति । ततस्त्वसंसृष्टहोमोऽस्मच्छाखायां शाखान्तरीयो निन्दितुमेवानूदितो न तु तद्विधिरस्ति । कुतः । यथा हि संसृष्टहोमस्य प्रशंसापूर्वकमितरस्य निन्दापूर्वकं विधिरस्ति नैवमसंसृष्टहोमस्यापि तु विधिमात्रं शाखान्तरीयमनूदितम् । कुतो ज्ञायते, ज्ञायते यत्र स्तौति तमसंसृष्टविधिं च संसृष्टविधिमसंसृष्टं च निन्दति नैव तद्विधानार्थं संसृष्टं वा निन्दति । तथा चास्मच्छाखायां संसृष्टविधान एव तात्पर्यमिति सूत्रकाराभिप्रायः । ततस्तूदितानुदितहोमयोः परस्परं निन्दयोभयस्तुतिपूर्वकमुभयोर्विधिदर्शनादुभयत्र तात्पर्यात्समविकल्पः ।

संसृष्टं देवतामन्त्रं दर्शयति—

**अग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहेति सायं सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति प्रातः ।**

जुहोतीति पूर्ववत् । अत्र मीमांसकमतेऽग्निरेव केवलो देवतोभयविधेऽपि मन्त्रे यदग्नये च प्रजापतये च सायं जुहोति यत्सूर्याय च प्रजापतये च प्रातरिति वाक्यमुत्पत्तिविधिरिति ते दर्शयन्ति । स्वशाखोपदेशस्तु(शे तु) तथोभाभ्याःँ सायःँ हूयते, उभाभ्यां प्रातरिति संसृष्टदेवताविधानादग्नये सूर्यायेदं सूर्यायाग्नय इदम् । याज्ञिकास्त्वग्नये ज्योतिषे सूर्यायेदं विपरीतं प्रातराहुस्तन्मान्त्रवर्णिकदेवतत्त्वस्य मीमांसकैर्निराकरणाच्चिन्त्यम् ।

**वर्चो मे यच्छेति पुनरोषधीषूपसादयति ।**

स्पष्टम् ।

---

१ घ. ङ. ज. झ. ञ ठ. ढ. 'नरेवौष' ।

लेपमादायौषधीभ्यस्त्वौषधीर्जि-
न्वेत्युत्तरतो बर्हिषि लेपं निमार्ष्टि ।

न हि स्रुग्गतं लेपो भवति तस्माद्धूयमानं यदग्रे प्रणाल्यां च लग्नं स लेपस्तमङ्गुलिभिरादाय गृहीत्वा मन्त्रेण बर्हिषि कूर्चे ओषधीष्विति यावदुत्तरभागे तं लेपं निमार्ष्टि नीचा हस्तेन निमार्ष्टि लिम्पति । ओषधीभ्य इदम् ।

अग्ने गृहपते मा मा संताप्सीरात्मन्नमृतम-
धिषि प्रजा ज्योतिरशीयेति गार्हपत्यमवेक्षते ।

दक्षिणावृदिति वैखानसकात्यायनादयस्तदस्माकं प्रदक्षिणं यज्ञे कर्माणीति सिद्धम् ।

अतिहाय तूष्णीमुत्तराꣳ समिधि भूयसीं जुहोति ।

आहुतिमिति शेषः । जुहोतिचोदितत्वेन प्रजापतये स्वाहेति प्राप्तौ शाखान्तराच्च व्याहृतिप्राप्तावुक्तं तूष्णीमिति । देवता च प्रजापतिरेव विधानबलात्तदिदं दर्शितमेव । अतिहाय पूर्वाहुतिस्थानं पूर्वाहुतेः सकाशाद्भूयसीमधिकामुत्तरां द्वितीयां केचिदुत्तरामुत्तरे भागे चेत्याहुस्तदर्थमुक्तं समिधीति । उत्तरार्धे समिधीति शाखान्तरम् । समिधः प्रागग्रता मध्ये निधानं चाऽऽचारादेव सिद्धम् । अत्र याजमानमुपस्थानम् ।

अथ निमित्ते सत्यग्निहोत्रविकृतिं गुणकृतां दर्शयति—

सजूर्जातवेदो[२] दिव आ पृथिव्या जुषाणो अस्य हविषो घृतस्य वीहि स्वाहेत्याज्येन जुहुयाद्यत्र पशुपतिः पशूञ्छामयेत् ।

पशुपती रुद्रो यत्र स्थाने यस्य यजमानस्य गृहे ग्रामे राष्ट्रे वाऽथवा षष्ठ्यर्थे यत्रेत्यथ वा यस्मिन्स्वामिनि सति पशवो गवाश्वप्रभृतयस्ताञ्छामयेत्पीडयेत्तस्य यजमानस्थानेन मन्त्रेणाऽऽज्येन जुहुयात्सायं प्रातस्तेनैव नित्याकरणप्रत्यवायपरिहारोऽपि तस्य गुणविकृतत्वेऽपि चाग्निहोत्रत्वात् ।

अग्ने[४] दुशीततनो घृतस्य[५] स्वाहेति जुहुयाद्यदि तदतिहन्यात् ।

यदि कृतेऽपि होमे तदतिशयेन पीडयेत्तत्र तदाऽऽज्येनैव सायं प्रातरनेन मन्त्रेणेति विशेषः ।

द्वादश रात्रीः सायꣳ सायं जुहुयाद्यदि[६] तदतिहन्यात् ।

पूर्वोक्तेनाग्न इत्यनेनैवाऽऽज्येन प्रत्यहं सायं सायं होममेव यद्येतावताऽपि न शान्तिरित्यर्थः । प्रातर्होमस्तु प्राकृतेनैव द्रव्येण ।

---

१ घ. ङ. ज. झ. ञ. ढ. °पत्यं प्रत्यवे° । २ घ. ङ. ज. झ. ञ. ढ. °हेति घृतस्य जु° । ३ घ. ङ. ज. झ. ञ. °शूञ्छमायेत । ढ. °शूमछमयेत् । ४ ग. °मे दुःशीततमो° । ५ क. ख. ग. च. छ. ट. ठ. ण. जुषस्व । ६ क. ख ग. च. छ. ट. ठ. ण. °यात्तद° ।

* द्वयोः पयसां जुहुयात्पूर्वमधिश्रित्योत्तरमानयेद्यदि तदतिहन्यात् ।

पूर्वं प्रथमस्या दुग्धमधिश्रित्योत्तरमानयेदुत्तरस्या द्वितीयस्या दुग्धमानयेदधिश्रिते निमित्तं पूर्ववत् ।

नाऽऽद्दत्यम् ।

इतः परमपि तदतिहन्यान्नाऽऽदृत्यमनादरणीयमनेनैव न पुनर्होतव्यं किं तु नित्य-विधिनैव । राजन्यस्य पर्वण्येवाग्निहोत्रं तस्य नैमित्तिकमपर्वणीति ज्ञेयम् ।

एवं शाखान्तरेऽग्निहोत्रप्रकरणे नैमित्तिकं समाम्नातं तत्समाप्य प्राकृतमाह—

इषे त्वेति सायं लेपमवमार्ष्टि ।

अग्रादारभ्यार्वाक्कर्षन्प्रणालीगतं लेपमवगमयति ।

ऊर्जे त्वेति प्रातरुन्मार्ष्टि ।

बिलादारभ्योर्ध्वं पूर्ववत् ।

यं कामयेतावतरां पापीयान्स्यादिति भूय-स्तस्य पूर्व१ हुत्वोत्तरं कनीयो जुहुयात् ।

निन्दार्थवादोऽयं पूर्वाहुतिं भूयसीं द्वितीयां कनीयसीं न जुहुयादित्येवमर्थम् ।

यं कामयेत न पापीयान्न श्रेयान्स्यादिति समं तस्य जुहुयात् ।

इदं च निन्दयैवोक्तम् । न हि यजमानस्य श्रेयो न कामयत इत्यध्वर्युरस्ति । तस्मान्निन्दैव ।

यं कामयेत वसीयाँन्स्यादिति कनीय-स्तस्य पूर्व१ हुत्वोत्तरं भूयो जुहुयात् ।

अयं प्रशंसार्थोऽर्थवादः प्रकारान्तरेण नित्यकल्पस्याभावात् । एतेऽर्थवादाः कर्माङ्ग-ज्ञानार्थमुपदिष्टाः । कनीयो भूय इति द्रव्यविशेषणं क्रियाविशेषणं वाऽऽहुतेः प्रकृ-तत्या असंभवात् । भवतु वा तृतीयो नित्योऽपि सत्यां कामनायां काम्यकल्पः ।

भूयो भक्षायावशिनष्टि ।

द्वितीयाहुतेः प्रकृतत्वात्तद्द्रव्यापक्षयैवाधिकम् । आहुतिद्वयं हि चतुरुन्नयनस्य प्रयोजकं तदसमाप्तौ स्कन्नादिना नाश उत्पाद्यमेव पुनर्द्रव्यं भक्षणार्थस्य नाशे तु नोत्पत्तिर्द्र-व्यस्य पुनः शेषकार्यलोप एवेत्यावेदितमेव तदिदं ज्ञापितमवशेषयतीति भक्षणप्राति-पत्तये शेषं कुर्यादित्यर्थो न विधीयते शेषस्यानुनिष्पादितत्वेनानुत्पाद्यत्वाद्यद्यस्ति तत्प्र-

* इदं सूत्रं सूत्रपुस्तकेषु द्वादश रात्रीरितिसूत्रात्प्राग्वर्तते ।

१ घ. ङ. ज. झ. ञ. ढ. 'सा सायमग्निहोत्रं जु°' । २ ख. च. छ. ट °न पु' । ३ ङ. ज. झ. ञ. ढ. 'याञ्छ्रेयान्स्या' । ४ क. ग. च ट. ठ ण. °रेणाग्नि° ।

तिपत्तिमात्रमेव विधेयम्। तदुक्तं कात्यायनेन-स्थाल्यां यत्परिशिनष्टि तद्ब्राह्मणः पिबेत्। तद्धै नाब्राह्मणः पिबेदिति श्रुतेरिति। अतः प्रतिपत्तिस्तु स्रुच्यवशिष्टस्यैव विधेया न स्थालीगतस्य तथा चाग्निहोत्रोच्छेषणमातञ्चनार्थं निदधातीति विधीयमान-मुच्छेषणनिधानं स्रुग्गतमेवास्यैव प्रधानाग्निहोत्रार्थमुन्नीतस्य शिष्टत्वात्। तथा च वाज-सनेयिनां श्रुतिः-स यत्स्रुचि परिशिनष्टि तदग्निहोत्रोच्छिष्टमिति। तस्याऽऽतञ्चने भक्षलोपः।

हुत्वा महदभिवीक्षेत।

हुत्वेत्यव्यवधानार्थमुक्तं लेपमार्जनात्पूर्वमेव यथा स्यात्स्थानाल्लेपमार्जनानन्तरं मा भूदिति। तर्हि तत्रैव कुतो नोक्तम्। अत्रोक्तं श्रुतिपाठक्रमेणेत्यदोषः। महदिति व्यापित्वादाकाशमिति केचिन्न तु न कर्मासमवेतार्थविक्षणेन दृष्टार्थता स्यादतोऽवशिष्टं भूयो महदित्यन्ये। तदपि भूयःशब्दावशिष्टशब्दप्रयोगाभावान्महच्छब्देनाभिधानं कथं स्यात्। बहुशब्दविकारो भूयःशब्दः संसृष्टानेकद्रव्यसंख्यावचनः। महच्छब्दो द्रव्यपरिमाणवाची। न हि महच्छब्देनाभिधेये भूयःशब्दो युज्यते। तस्माद्ब्रह्मैव महच्छब्दवाच्यं व्यापकदृष्ट्या ध्येयं, अत एव नपुंसकता च। बृहत्त्वाद्बृंहणत्वा-च्चाऽऽत्मैव ब्रह्म। एवमात्मनः संस्कारे कर्तृसंस्कारत्वेन दृष्टार्थता ब्रह्मरूपत्वेन कर्तृत्वेन ब्रह्मार्पणं प्रायश्चित्तं चेत्यनेकानि प्रयोजनानि सिध्यन्तीत्ययं साधीयान्पक्षः। तथैवोक्तं वैखानसेन भक्षाय भूयः कुर्याद्धुत्वा भूमानं विष्णुं ध्यायेदिति भूमानं यो वै भूमेति श्रुतेरात्मानं विष्णुं व्यापकं ध्यायेदिति।

रुद्र मृडानार्भव मृड धूर्तमृड नमस्ते अस्तु पशुपते मा मा हिꣳसीरिति स्रुचा त्रिरुदश्चमग्निमति वल्गयति।

सकृन्मन्त्रो द्विस्तूष्णीम्। अग्निमग्निज्वालामुदीचीं वल्गयति प्रेरयति कम्पयतीति यावत्। तदाह कात्ययनो द्विः प्रकम्पयतीति।

स्रुचं निधाय लेपमादाय।

लेपं प्रणालीगतमङ्गुलीभिरादाय।

पितृभ्यस्त्वा पितॄञ्जिन्वेति दक्षिणतः स्थण्डिले लेपं निमार्ष्टि।

स्रुचो दक्षिणे भागे स्थले। स्थण्डिलग्रहणं कूर्चे पूर्ववन्मा भूदिति। नीचा हस्तेनेति वैखानसः। उत्तानेनेति कात्यायनः।

अप उपस्पृश्य।

श्रौतमुदकस्पर्शनम्। वृष्टिरसि वृश्च मे पाप्मानमिति हुत्वोपस्पृशतीति ब्राह्मणं यथा होष्यद्विद्युदसि विद्य मे पाप्मानमिति शाखान्तरीयोऽधिकोऽत्राधिकस्यापाठात्। याजमाने पठ्यमानस्तत्रैव विकल्पते नात्र तस्याद्याप्यपठितस्याबुद्धिस्थत्वात्।

पूषाऽसीति द्विरङ्गुल्या प्राश्याऽऽचम्य पुनः प्राश्नाति ।

भक्षायावशेषितं द्रव्यमङ्गुल्या यया कयाचिदेकयैव विधेयविशेषणस्यैकत्वस्य विवक्षितत्वात् । अनामिकयेति वैखानसकात्यायनावाहतुस्तदप्यविरुद्धम् । प्राश्याऽऽचम्य पुनः प्राश्नातीत्यनेनैव द्विःप्राशने सिद्धे द्विरितिग्रहणं मन्त्रद्विरुक्त्यर्थं द्विःप्राशने प्रत्येकमयमेव मन्त्रो न तु गर्भेभ्यस्त्वेति द्वितीये प्राशने भरद्वाजदर्शित इति अङ्गुल्याऽऽदाय तत्रैव प्राश्याऽऽचम्योदकं सकृत्पीत्वा ततो बहिर्गत्वा शुद्ध्यर्थमाचम्य पुनरादाय मन्त्रेण प्राश्य बहिर्गत्वा शुद्ध्यर्थमाचामति । शुद्ध्यर्थमाचमनं स्मृत्यैव प्राप्तं मध्ये चाऽऽचमनं तु न शुद्ध्यर्थं विधीयते स्मृत्यैव प्राप्तेरतोऽपां पानमेव कर्माङ्गं विधीयते प्रथमभक्षणपानयोर्मध्ये तु न स्मार्तं शुद्ध्यर्थमाचमनं प्राणाहुतिमध्ये त्वशुद्धतोच्छिष्टकृता नास्तीति स्मरणात् । न चोदकपानद्वितीयभक्षणमध्येऽपि न शुद्ध्यर्थमाचमनमिति वाच्यम् । उदकपानं पुनः स्रुग्गतं नोच्छिष्टेन स्प्रष्टुं शक्यमिति शुद्ध्यर्थमाचमनं ततो द्वितीयं भक्षणम् । अङ्गुल्या गृहीतं यन्मन्त्रेण भक्षितं तदेव मन्त्रेण संस्कृतमिति तद्भक्षणार्थं पुनर्मन्त्रः । अत्र भक्षणे शब्दकरणं दन्तस्पर्शनं चाऽऽपस्तम्बवैखानसकात्यायनैर्निषिद्धमस्माकमप्यविरुद्धम् ।

स्रुचं दर्भाꣳश्चाऽऽदायोदङ्ङुत्सृप्य ।

दर्भान्कूर्चमित्याहुस्तददृष्टार्थमापद्येतातो दर्भैः प्रक्षालनं विधास्यत्येतदर्थं दर्भानपि । भरद्वाजेन तु बर्हिषोपयम्येत्युक्त्वा बर्हिषि लेपं निमार्ष्टि, इत्युक्त्वाऽग्र आहवनीये बर्हिरनुप्रहरतीत्युक्तं कूर्चस्यानुप्रहरणाभावात् । किं चौषधीषूपसादनमुक्तम् । दर्भानिति शब्देनान्य एव प्रक्षालनार्थे दर्भा इति गम्यते । स्रुचं गृहीत्वोदग्दिशं प्रति विहाराद्बहिः पृष्ठतो विहारं कृत्वा गमनं पर्यावर्तने तु विहारस्य पृष्ठतः करणं परिभाषायां निषिद्धमत्र वचनात्क्रियते ।

आग्नेयꣳ रेतः प्रजननं मे अस्तु दशवीरꣳ सर्वगणꣳ स्वस्तये ।
आत्मसनि प्रजासनि पशुसन्यभयसनि लोकसनि वृष्टिसनि ।
अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धत्त । रायस्पोषमिषमूर्जमस्मासु दीधरदिति ॥ १८ ॥
प्राग्दण्डयोदग्दण्डया वा स्रुचा द्विराचामति द्विश्च निर्लेढि ।

स्रुचा धारया स्रुग्गतमेकवारं किंचित्पीत्वाऽन्तर्गते तस्मिन्पुनः पीत्वा तां स्रुचं निःशेषं जिह्वया स्वादयति । तदपि द्विः । चकारस्तु सकृत्प्राशनं द्विर्लेहनं विपरीतं सकृद्द्वयमपीत्यनेकानर्थानाहुः सूत्रकृतस्ता(स्त)न्निरासार्थमुपात्तो द्विश्च द्विरेवाऽऽचामति

---

१ घ. ङ. ज. म. ढ. °रत्स्वाहेति ।

निर्लेढि द्विरेवेति । मन्त्रस्त्वाचमने प्रथमे द्वितीयं तूष्णीं संसृष्टद्रव्यस्य स्रुग्गतस्य संस्कार्यत्वान्न तु पृथक्करणमङ्गुल्यैव विहितमस्ति । यत्रैकस्मिन्निति न्यायेन सकृदेव मन्त्रो द्वितीयं तूष्णीं लेहनं द्विस्तूष्णीमेव मन्त्रस्य प्रथमं धात्वर्थेन संबद्धस्य चरितार्थत्वाद्भिन्नेन नान्येन संबध्यते । अत्र स्मृतावग्निहोत्रहवण्याः कलौ लेहनप्रतिषेधात्तयाऽऽचमनमपि प्रतिषिद्धमतो हस्तेनेत्याह भाष्यकृत् । ततः स्रुग्गतं सर्वं सकृद्धस्तेन ग्रहीतुमशक्यं चेत्तदा पात्रान्तरेण गृहीत्वोत्सृप्य धारया भक्षणं लेहनं च पात्रस्यैव । पात्रं ताम्रातिरिक्तधातुकृतम् । अन्यस्योच्छिष्टस्य पुनर्ग्रहीतुमयोग्यत्वात् । अथ वा स्रुचा चुलकपूरणमात्रं गृहीत्वा द्विराचम्य द्विर्निर्लेढि हस्तमेवात्र पात्रान्तरणैव गृहीत्वोत्सृप्य हस्तेन भक्षणं लेहनं च ।

गर्भेभ्यस्त्वा गर्भान्प्रीणीहीति वा ।

पूर्वेण विकल्पः ।

*सौर्यं रेतः प्रजननं मे अस्त्विति प्रातः ।

अयं च पूर्वेणापि विकल्पते प्रातरपि सौर्यमित्यनेन सूर्यः प्रजामित्यपि पाठः प्रदर्शितः । भरद्वाजस्तु स्वाहाकारस्तु प्रदानेषु भक्षे विद्यत इत्यपरमित्याह, तन्नेष्टमाचार्यस्य जुहोतिचोदित एव विधानात् । एवं पयोऽव्यतिरिक्तद्रव्ये तु गर्भेभ्य इत्येव मन्त्र ऊहानापादकत्वात्सायं प्रातश्च पयसि विकल्पः ।

स्रुचमद्भिः पूरयित्वा सर्पेभ्यस्त्वा सर्पाञ्जिन्वेति विप्रुक्षति ।

पूरितमुदकं भूमौ त्यजत्युत्तरेणाऽऽहवनीयमुच्छिष्टभाजो जिन्वेत्युत्तरेणाऽऽहवनीयमपो विसृजेदिति वैखानसोक्तेर्हस्तेन भक्षितेऽपि स्रुच एव पूरणं विसर्जनं च । दृश्यते च कात्यायनीयानां पात्रान्तरेण भक्षणेऽपि स्रुचैवापां विसर्गः । तत्सूत्रानुसारेण पात्रान्तरेण हस्तेन वा भक्षणेऽपि स्रुचमेवाद्भिः पूरयेत् ।

आचम्य ।

स्मृत्या प्राप्तमपि पूरणात्पूर्वं मा भूदिति तस्माद्भक्षणानन्तरमनाचान्त एव स्रुचं निनीयाऽऽचामेदिति नियमः । अथ वा यथा लेहनप्रतिषेध एवमुच्छिष्टेन स्रुचः संस्पर्शप्रतिषेधकल्पनायामाचमनमयमेव पक्षः साधीयान् । प्रथमनिनयने सति पश्चाद्यदाचमनं विहितं सूत्रकृता तस्य पूर्वमेव जातत्वान्न पुनः क्रिया । तस्य श्रौतत्वे तु पुनरपि क्रियताम् ।

स्रुचं दर्भैः प्रक्षाल्य ।

अद्भिरेव प्रक्षालनं लेपापकर्षणं तु दर्भैः ।

---

* इदं सूत्रं सूत्रपुस्तकेषु गर्भेभ्य इति सूत्रात्प्राग्दृश्यते ।

पूरयित्वा सर्पान्पिपीलिकाञ्जिन्वेत्यप उत्सिञ्चति ।

स्रुचमिति पूर्वमनुकृष्यते । ऊर्ध्वं सिञ्चति त्यजति पूरितैकदेशोत्सेचनं वक्ष्यम इत्युक्तम् ।

सर्पदेवजनाञ्जिन्वेति द्वितीयां भूतेभ्यस्त्वेति
तृतीयां महते देवायेति चतुर्थीम् ।

स्रुचं द्वितीयामित्यादि ज्ञेयमुत्सिञ्चति स्रुग्गतम् । आपस्तु ता उत्सिञ्चति पूरणप्रत्यया अपि विशेषणं, तथा च पूर्वमुत्सिक्तास्ततो द्वितीया इत्यादि ज्ञेयम् । अत एव भरद्वाजः प्रथमं द्वितीयामित्याद्येव क्रियाया विशेषणमेवाऽऽह । न च द्वितीयान्तं पूरयित्वेत्यने-नानुषज्यमानेनापि संबध्यते । यद्येवं तर्ह्यग्रे पुनः स्रुचं पूरयित्वेति न वदेत्पञ्चमीमि-त्येव ब्रूयात् । तस्मात्पूरितैकैव चतुर्धोत्सिञ्चतीत्येव सिद्धम् ।

स्रुचमद्भिः पूरयित्वा पृथिव्याममृतं जुहोमि स्वा-
हेत्यपरेणाऽऽहवनीयमपरेण वा गार्हपत्यं निनयति ।

निनयति रेचयति तदर्धमेव ।

गृहेभ्यस्त्वा गृहान्प्रीणीहीति तस्यैकदेशमञ्जलौ पत्न्याः ।

निनयतीति पूर्वमाकृष्यते । एकदेशम् ।

पत्नी यदि नान्वास्ते सर्वं पृथिव्याम् ।

निनयतीति पूर्ववत् । अनालम्भुकाऽनार्जवादिना न संनिहिता तदाऽपरेणाऽऽहव-नीयं गार्हपत्यं वा सर्वं द्वितीयमेकदेशं गृहेभ्यस्त्वेति पृथिव्यामेव निनयेत् । देवपत्नी-रुद्दिश्य निनीयते तत्र यजमानपत्न्यञ्जलिरधिकरणं तदपगमे तु न प्रधानलोप इति । न च यजमानपत्नीसंस्कारोऽयं द्वितीयादिश्रुतेरश्रवणादत एव न प्रतिपत्तिं विभज्य निनयनं तस्यैकदेशमञ्जलौ पत्न्याः पत्नी यदि नान्वास्त सर्वं पृथिव्यामिति तस्यैक-देशं सर्वमञ्जलौ यदि नान्वास्ते तदा पृथिव्यामिति संबन्धः । सर्वग्रहणं च प्रति-पत्त्यावृत्तिनिरासार्थं, परार्थान्येकेन क्रियेरन्निति न्यायस्य परार्थे संस्कार एव प्रवृ-त्तिरिति मा भूदपि तर्हि स्वार्थे यत्र भवत्येवं रूपे चादृष्टार्थेऽपि कर्मणि तथा चैकयैव पत्न्या सिध्यति निनयनमिति वक्तुं सर्वमित्युक्तम् । पृथिव्यामित्यपि न प्रकृतं परामृश्यतेऽपि तु पत्न्यञ्जलिप्रतिनिधित्वेन विधीयते । पत्न्यञ्जलिकरणे याऽधस्ता-त्पृथिवी तस्यामित्यर्थः । आपस्तम्बस्तु पत्न्यायतन इति । दर्शयति च तत्रापि यजमानस्य देवानां चेति विकल्पसंभवात् । अस्माकमपि मन्त्रवर्णप्राप्त्युपस्था-पित एव पत्नीस्थानमपि पृथिवीशब्देनोपस्थाप्यत इति । अत एव भरद्वाजो द्विः पृथिव्यामिति । द्विरिति ग्रहणादेकत्र स्थल इति गम्यते । स्थलं च प्रकृतमपरेण गार्हपत्यं ततः स्थलविकल्पः ।

**हस्तं प्रताप्य स्रुच्यवदधाति स्रुचं वा निष्टप्य हस्तेऽव-**
**दधाति सप्तर्षिभ्यस्त्वा सप्तर्षीञ्जिन्वेति स्रुचोदगुद्दिशति ।**

आहवनीये प्रतपनं प्रत्येत्येत्यभिधास्यमानत्वात् । स्रुक्स्रुवमाहवनीये प्रतितप्य निदधातीति कात्यायनः । उदग्दिशं प्रति हस्तसंसृष्टया स्रुचोद्दिशति मनसा च दर्शयति ।

**स्रुचं निधाय प्रत्येत्य स्रुवेण गार्हपत्यदक्षि-**
**णाग्न्योर्जुहोति प्रत्याहुति समिधोऽभ्याधाय ।**

समाख्याप्राप्तजुहूबाधार्थं स्रुवेणेत्युक्तं, द्रव्यं च प्रकृतं स्थालीगतं तस्य शेषभूतस्य प्रतिपत्तिसापेक्षत्वात् । शेषाज्जुहोतीति भरद्वाजः । द्रव्यविधेः प्रधानार्थत्वादाहवनीय आहुतिद्वयमेव प्रधानमतः स्थालीगतस्य नाशे तु न पुनरुत्पत्तिरपि तु होमाभाव एवापराग्न्योः । सभ्यावसथ्ययोस्तु नास्त्येव होमो विना संभवात् । होमावशिष्टं तु यदि पिबेत्तदा ब्राह्मण एवेति दर्शितम् । जुहोतिचोदितत्वेन दर्विहोमत्वेऽपि प्रत्याहुतीत्युक्तं तदितरधर्मनिवृत्त्यर्थम् ।

**मयि पुष्टिं पुष्टिपतिर्दधातु रायस्पोषमिषमूर्जमस्मासु**
**दीधरत् । अग्नये गृहपतये रयिपतये पशुपतये पुष्टिपतये**
**कामायान्नाद्याय स्वाहेति द्वे गार्हपत्ये जुहोति ।**

आहुती इति शेषः ।

**अन्नपतेऽन्नस्य नो देहीति द्वे दक्षिणाग्नौ ।**

ऋगियं जुहोतिना चोदितत्वात्स्वाहान्तया होमः ।

**अपि वा चतस्रो गार्हपत्ये जुहुयाच्चतस्रो दक्षिणाग्नौ ।**

गुरुनिर्देशः सभ्यावसथ्यनिवृत्त्यर्थः ।

**न वा जुहुयात् ।**

प्रकृतयोर्होमाभाव एवैकः पक्षः ।

**अपिप्रेऽग्निः स्वां तनुवमयाद्द्यावापृथिवी ऊर्जमस्मासु**
**धेहीति स्थाल्यां तृणमङ्क्त्वाऽऽहवनीयेऽनुप्रहरति न वा ।**

न बर्हिरनुप्रहरतीति श्रुतेः । यजमानसंस्थितौ मृताग्निहोत्र एव तृणप्रहरणं नान्यदाऽसꣳस्थितो वा एष यज्ञ इति वचनात् । आहवनीये बर्हिरनुप्रहरतीति वाजसनेयिश्रुतेश्च विकल्पः ।

---

१ घ. ङ. ज. झ. ञ. °ति द्विर्गार्ह°। २ क. ख. ग. छ. ण. ट. ठ. °त्ये । आ° । ३ घ. ङ. ज. झ. ञ. °ति द्विर्दक्षि° । ४ क. ख. ग. छ. ट. ठ. ण °त्ये चत° । ५ क. ग. च. ट. ठ. ण. प्रकृतयो° । ६ क. ग. ट. ठ. ण. एकैकः ।

अग्निहोत्रस्थालीं प्रक्षाल्य—

द्यावापृथिवीभ्यां त्वा द्यावापृथिवी जिन्वेत्यन्तर्वेद्या१ संक्षालनं निनयति ।

वेदिस्थाने मध्ये स्पष्टम् ।

परिषिञ्चति यथा पुरस्तात् ।

गतार्थम् ।

दीदिहि दीद्यासं दीदिद्धमेसीत्युपसमिन्धे ।

हुत्वोपसमिन्ध इति श्रुतेर्होम एकत्र कृते तत्रैवोपसमिन्धनं सर्वत्र होमे तत्रापि सर्वत्रोपसमिन्धनमिध्माधानवत् । परिस्तरणापगमनं च पुनः प्रयोगदर्शनात् । अलं करणं पूर्वं व्याख्यातम् । याजमानं वृष्टिरसीति अनाज्ञातजपो विष्णुस्मृतिश्च । प्रायश्चित्तमनाज्ञाते यजमानो यथेतं गच्छति ।

आज्येन जुहुयात्तेजस्कामस्य पयसा पशुकामस्य दध्नेन्द्रियकामस्य तण्डुलैरोजस्कामस्य यवाग्वा ग्रामकामस्यौदनेनान्नाद्यकामस्य मा२ंसेन वीर्यकामस्य सोमेन ब्रह्मवर्चसकामस्य ।

जुहुयादिति सर्वत्रानुषज्यते नित्यद्रव्यस्य स्थान उक्तकामः सायंप्रातः सकृदुक्तकामसंकल्पपूर्वकं जुहुयात् । तत्राऽऽह कात्यायनः संवत्सरपक्षेण पूर्वपक्षयित्वा सायं प्रातर्वेति । तस्मात्काम्यः सकृदेव प्रयोगः । तेजः शरीरशोभा परैरधृष्यता वा । पशुकामस्येति स्पष्टम् । इन्द्रियमिन्द्रियपाटवं मनःपाटवं, ग्रामः सजातसमुदाये ष्वाधिक्यम् । अन्नाद्यमन्नसंपत्तिर्भोजनसंपत्तिश्च । वीर्यं बलं रेतोधिकता वा । ब्रह्मवर्चसमध्यापनादिना तद्ब्राह्मणस्यैव । इत्येतानि काम्यानि । पैङ्ग्यस्तु नित्यमपि दश द्रव्याणि नित्यानि काम्यानि चेत्याहुरन्ये तैलमापश्चेति अद्भिर्वृष्टिकामस्य तैलेनाभिचरत इति पैङ्गिश्रुतेः ।

यदन्यदधिश्रयणा३त्प्रतिषेचनाच्च तद्दध्नस्तण्डुलाना२ सोमस्य च क्रियते ।

श्रौतप्रतिषेधादधिश्रयणमङ्गारेषु नास्ति तन्निमित्तः प्रतिषेकोऽपि नास्ति । दधि लौकिकं तण्डुलाश्च तथा व्रीहीणां तत्र प्रसिद्धेः । सोमस्य रस एव न वल्ली पूतीकास्तु यागार्थ एव प्रतिनिधिर्वाचनिको न सर्वत्र ।

---

१ घ. ङ. झ. ञ. °न्वेति °स्थाली२ संक्षाल्यान्तर्वेदि नि° । ज. ढ. °न्वेति स्थालीं° प्रक्षाल्यान्त° र्वेदि नि° । २ घ. ङ. ज. झ. ञ. ढ. °मेसि स्वाहेत्यु° । ३ क. ख. ग. च. छ. ट. ठ. ण. °णात्परिषेकाच्च ।

अपां प्रत्यसनकाले दर्भतृणाभ्यामाज्यं प्रत्यस्येत्प्रति-
षेकं यवागूः श्रपयति । यथा यवागूरेवं मांसम् ।

आज्यं प्रत्यस्येत्तृणे हरस्ते मा विनैषमितिमन्त्रेणोदकप्रतिषेको नास्ति । आदौ निषेकं कृत्वा पश्चादुद्भवः स्थेति कार्यं न पुनः प्रतिषेको यवाग्वां मांसेऽपि तथैव मांसं मेध्यं क्रयादिलब्धं न तु हिंसया तस्या अविधानात् । मांसं च यदुदकपचनीयं तदेवेति वक्तुं गुरुनिर्देशः । यवागूर्यथोदकपाकार्हा सा तथा मांसमुदकपाकार्हं तदेव तथाऽन्यस्य नान्ये संस्काराः समाना एव सर्वेषु द्रव्येषु ।

पर्वणि राजन्यस्याग्निहोत्रं जुहुयान्नान्तराले ।

राजन्यो राजजातीयस्तस्य पर्वण्येव नान्यदा ।

यत्त्वस्य गृहेऽन्नं क्रियते तस्माद्ब्राह्मणाय मुखतो हरन्ति
तद्धुतमस्याग्निहोत्रं भवति य ऋतः सत्यमिव वदन्नी-
जानः सोमेन स्यात्तस्य सदाऽग्निहोत्रं जुहुयात् ॥ १९ ॥

इति हिरण्यकेशिसूत्रे तृतीयप्रश्ने सप्तमः पटलः ।

---

तुशब्दो विशेषमाहाग्निहोत्राकरणे राजन्यस्य गृहे यत्पच्यतेऽन्नं त[स्मा]त्प्रथमतो ब्राह्मणाय हरन्ति भार्यादयो दद्युस्तेन दानेनैक(वा)स्य राजन्या(न्यस्या)ग्निहोत्रकर्म हुतं कृतं भवति नित्याग्निहोत्रस्थान इत्यर्थः ।

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैज-
यन्त्यां तृतीयप्रश्ने सप्तमः पटलः ॥ ७ ॥
अग्निहोत्रं च समाप्तम् ।

---

अथाष्टमः पटलः ।

---

अष्टमेन पटलेन नानाकर्मव्याख्या तत्र नियतानि द्वेधाऽऽधानादनन्तरमेव नियतो-पक्रमाणि तानि प्रकृतिभूतानि व्याख्यायाऽऽधानादनियतोपक्रमाणि नियतानि विकृति-रूपाणि व्याचिख्यासुर्मध्ये नैमित्तिकमपि नियतमेवेति नियतत्वेन प्राप्तं यजमानस्य देशा-न्तरगमनं तत्र विधिं व्याचिख्यासुर्गमनद्वैविध्येन प्रतिनियतं विधिद्वयं वक्तुं गमनं विशिनष्टि—

---

१ घ. ङ. ज. झ. ञ. ढ. 'र्भतरुणा' । २ घ. ङ. ज. झ. ञ. ढ. जुहोति नान्त° । ३ क. ख. ग. च. छ. ट. ठ. ण. °न्ति । तु ।

**ऋते गृहस्य प्रवासं व्याख्यास्यामः ।**

विना भार्यया यजमानस्य ग्रामसीमातिक्रमेण वसतिः प्रवासः । तत्र विधेयाजमानत्वा-द्याजमानप्रश्नं व्याख्यास्याम इत्यर्थः । ऋते विना गृहस्य भार्यायास्तृतीयार्थे पञ्चम्यर्थे वा षष्ठी ।

न प्रवसति न प्रयातीति पृथगर्थनिर्देशात्प्रवासो विना भार्यया सीमातिक्रमणे वसतौ रूढः । सह भार्यया तत्रैव प्रयाणशब्दस्तत्र प्रयाणनिमित्तो विधिर्यदहुत्वा वास्तोष्पतीयं प्रयायादिति प्राप्तो न प्रवासे प्राप्नोति पृथक्कर्मत्वादित्याशयेन विषयभेदं प्रदर्श्याऽऽध्वर्यवत्वेनात्र प्रयाणविधिं व्याचष्टे—

**सगृहस्तु प्रयास्यन्यत्र पञ्च नव दश वा सꣳहिता वसति यत्र वा नव-रात्रं वास्तु पुनरभ्येत्येकां वसति तत्र वास्तोष्पतीयं जुहोति ।**

सगृहः प्रयास्यञ्जुहोति । तुशब्दः प्रवासाद्वैलक्षण्यार्थः । सभार्यः सीमातिक्रमेण वसतिं करिष्यन्प्रयास्यन्नित्यनेनाग्निसहभाव उक्तो न ह्यग्नीन्परित्यज्य सभार्यस्य गमनं विहितं तथात्वेऽग्निहोत्रकाले दंपत्योः सीमान्तरस्थत्वेऽग्निनाश एवेति नाग्नीन्विहायाय-मुभयोः प्रयाणविधिः । बहुभार्यस्यैकया सह भावेऽपि न दोषः । प्रवसति यजमाने तु भार्यान्विना भार्याया अपि साग्निकायाः प्रयाणे तत्राप्ययमेव विधिः । ग्रामाद्ग्रामान्तरग-मनं प्रयाणं न गृहाद्गृहान्तरगमनम् । प्रयास्यन्ग्रामान्तरं गमिष्यन् । तत्किमविशेषेण नेत्याह—यत्रेत्यादि । यत्र ग्रामे पञ्च नवेति शाखान्तरीयं दर्शयति स्वशाखीयं तस्माद्यत्र दशोषित्वा प्रयातीति श्रुतेरर्वाचीने सति वासे ततः प्रयाणे न होमः । यत-तोऽर्वाचीनं न वास्तु यत्र पञ्च वसामीति संकल्प्य पञ्चरात्रिषु संहितासु कालान्तराव्य-वहितासु वासे ततः प्रयास्यन्न्यूनत्वे तु न होमः । एवं नव दशेति संकल्पाद्विकल्पो व्यवस्थितो दर्शितः । प्रथमं संकल्पाभावेऽपि पञ्चाद्यन्यतमपक्षेण प्रयाणे होमो ज्ञेयः । न हि गृही स्वगृहे वासार्थं संकल्पं करोति तस्मात्प्रयाणमध्ये यत्र वसतिस्तत्र संकल्पे कृतेऽन्यतमपक्षस्वीकारो नान्यत्र । यत्र दशेति संकल्प्य नवरात्रं वास्तु ततो दैवात्स्व-गृहे स्थानान्तरं वा गत्वा पुनर्नवरात्रोषितस्थलमेत्येकां रात्रिमुषित्वा ततः प्रयास्यञ्जु-होतीति विशेषविधिः । केचित्पञ्चनवसंकल्पेऽपि ज्ञेयं संकल्पितरात्रिषु काश्चिदुषित्वा पुनरागत्यावशिष्टामुषित्वा जुहोतीति स व्यर्थं न[1]चेत्युपलक्षणमेकामिति च संकल्पित-न्यूनत्वस्य च विशिष्टपूरणस्य चेत्याहुस्तन्न विधिमात्रगम्योऽर्थोऽसति विधौ न प्राप्नोति।

होमनिमित्तं व्याख्याय प्रयाण इतिकर्तव्यताहोमात्पूर्वं कर्तव्यमाह —

**सर्वं भाण्डं यानेष्वादधाति ।**

नेतव्यं भाण्डजातं रथशकटबलीवर्दपुरुषेषु यथोपपन्नेषु यानेषु याति तद्भाण्डजातं प्रापयति यैस्तानि यानानि प्रवहणानि तेषु तेषु स्थापयतीत्यर्थः ।

---

१ क. ख. ग. च. छ. ट ठ. ण. °तिर्यत्र न°।

यदन्यज्जिहीर्षन्ति पूर्वं तत्प्रवहन्ति ।

भाण्डेभ्योऽन्यद्यत्किंचिद्यजमानस्य निनीषितं पुरुषास्तद्धोमात्पूर्वमेव गृहाद्बहिः प्रवहन्ति नेतुं शिरआदिषु गृह्णन्ति ।

अहुते वाऽपोद्धरन्ति तस्माद्देशात् ।

यन्निनीषितं पुरुषाः प्रवोढुमथ तदैवाशक्ता भवन्ति तदा तत्स्थानतो बहिरपोद्धरन्ति बहिः स्थापयन्ति । होमे त्वहुत एव पश्चाध्दुते बहिर्निर्गमितं यथाकालं नयेयुर्न तु होमकाले गृहेषु स्थापयेयुः ।

सर्वेषु युक्तेषु दक्षिणोऽग्निष्ठस्य युक्तो भवति सव्यस्य योक्त्रं परिहृतमनूत्सक्तमथ वास्तोष्पतीयमनुद्रुत्योत्तरया जुहोति ।

यानवाहनेषु बलीवर्दाश्वगाम्यादिषु यथोपपन्नेषु योजितेषु योक्त्रैर्बलीवर्देषु सत्सु ततोऽग्निष्ठस्याग्निशब्देन समारूढाग्निका अरण्य उच्यन्ते । एता यत्र संस्थाप्य नीयन्ते तच्छकटं रथो वाऽग्निष्ठस्तस्य च दक्षिणो धुर्यो युक्तो भवति । सव्यस्य योक्त्रं पूर्वमेव शम्याकुम्बात्परिहृतं निर्गमितं तच्छम्याकुम्बे तूत्सक्तमासञ्जितं ततोऽग्निं विहृत्याध्वर्युराज्यं संस्कृत्य दर्विहोमधर्मेण वास्तोष्पते प्रतिजानीहीत्यृचमनुद्रुत्य पठित्वा वास्तोष्पते शग्मयेति जुहोति । वास्तोष्पतिर्देवता रुद्रः खलु वै वास्तोष्पतिरिति श्रुतेः । तदीयो होमो वास्तोष्पतीयं कर्म पुरोनुवाक्यामनूच्य याज्यया जुहोतीति । यद्यपि पुरोनुवाक्यान्त ओं कर्तव्यो याज्यान्ते वषट्कार इति प्राप्तं तथाऽपि जुहोतिचोदितत्वेन दर्विहोमत्वान्न यागत्वम् । पुरोनुवाक्यामनूच्य याज्ययेति तृतीयया मन्त्रस्य करणत्वात्स्वाहाकारान्तो मन्त्रः प्रणवान्तताऽपि न पुरोनुवाक्यायां दर्विहोमत्वादिष्यत इति वक्तुमनुद्रुत्योत्तरया जुहोतीत्युक्तम् । अत्र द्वाभ्यामृग्भ्यामेको होमः साध्य इत्येव पर्यवस्यति । यथा द्वाभ्यां जुहोतीत्युक्ते यत्र मन्त्रगणेन होमस्तत्र प्रतिमन्त्रं होमभेदः स्यादतोऽनुद्रुत्येति । एवं सर्वत्रानुद्रुत्येत्यत्र द्रष्टव्यम् ।

न हुतेऽभ्यादधाति ।

हुते सत्यग्नौ काष्ठतृणपर्णघृतादि किमपि न प्रक्षिपति ।

नावक्षाणान्यसंप्रक्षाप्य प्रयाति ।

समारोपानन्तरं सत्स्ववक्षाणेषु दह्यमानकाष्ठादिषु तान्यसंप्रक्षाप्यादग्ध्वा न प्रयाति किं तु दग्ध्वैव ।

---

१ घ. ङ. ज. ञ. °दन्याजिही° । २ घ. ङ. ज. झ. ञ. ढ. प्रयुक्तो । ३ घ. ङ. ज. झ. ञ. ढ. °ष्पत इत्यनु° । ४ क. ख. ग. च. छ. ट. ठ. ण. °शमया ।

एवं स्थिते—

**अयं ते योनिर्ऋत्विय इति पृथगरणीष्वग्नीन्समारोप्य प्रयाति ।**

रयिमिति मन्त्रान्तः । नित्यधार्यौ द्वौ चतुरो वाऽऽहवनीयधार्यपक्षे त्रीन्पञ्च वा पृथगरण्योर्द्वये द्वये मन्त्रेण समारोप्याऽऽधानसंस्कृतारण्योर्गार्हपत्यमन्या लौकिक्यस्त-त्रेतरान् । गृह्याग्नौ सति तमपि समारोप्य प्रत्यग्नि मन्त्रावृत्त्याऽरण्योः प्रतपनं समारो-हणमुक्तं बाह्वृच्ये । अयं ते योनिर्ऋत्विय इत्यरणी प्रतपतीति पृथगिति प्रत्यग्नि द्वयो-र्द्वयोररण्योराधानक्रमेणाऽऽरोपयति ।

**अथो खल्वाहुर्यदरण्योः समारूढो नश्येदुदस्याग्निः सीदेत्पुनराधेयः स्यादिति या ते अग्ने यज्ञिया तनूस्तये-ह्यारोहाऽऽत्माऽऽत्मानमच्छा वसूनि कृण्वन्नस्मे नर्या पुरूणि । यज्ञो भूत्वा यज्ञमासीद स्वां योनिं जातवेदो भुव आजायमानः स क्षय एहीत्यात्मन्समारोप्य प्रयाति ।**

अथो खल्वाहुः पक्षान्तरमित्यर्थः । पूर्वविकल्पार्थमर्थवादप्रदर्शनमुत्तरार्थवादोपलक्ष-णमाध्वर्यवकाण्डपठितत्वेन याजमानसंज्ञाभावेऽपि निर्देशादन्य इति न्यायप्रदर्शनेन यज-मानकर्तृकत्वज्ञापनार्थम् । तथा हि दृश्यतेऽध्वर्योरन्यस्य यजमानस्य निर्देशो यजमानो वा अग्नेर्योनिः स्वायामेवैनं योन्याऽ समारोहयत इत्यात्मनेपदं च यजमानकर्तृकत्व-माह समारुयाया आत्मनेपदश्रुत्या स्वायां योन्यामिति सप्तमीश्रुत्या वा सीद स्वां योनिमितिलिङ्गसनाथया बाधादिति । आत्मसमारोपणं तु हस्तप्रतपनं हस्तद्वयस्ये-त्यन्ये प्रताप्य तदूष्माणं मुखेन गृह्णातीत्यन्ये तूष्णीं प्रताप्योष्मग्रहणे मन्त्र इत्यपरे । यजमानो हस्तं प्रताप्य मुखाय हरत इति वैखानसः । चोरादिभयेऽपि समारोपणमि-च्छन्ति न तत्र होमस्तस्य प्रयाणनिमित्तत्वात् । स्मरन्ति व्याधिते प्रोषितेऽपि समारो-पणमध्वर्युणा तदसंनिधौ भार्ययाऽपि यजमानप्रतिनिधेः प्रतिषेधेऽपि स्वसंस्कारव्यति-रिक्तकर्मसु भवेदेव प्रतिनिधिरिति स्थापितत्वादात्मसमारोपोऽपि भार्यया तस्यामप्यो-ग्यायामध्वर्युणाऽपि कार्य इति न्यायादवगम्यते प्रयाणमुभयोरेव । यदि प्रयाणप्राप्तावं-संनिहिते यजमानेऽध्वर्युणाऽरणीसमारोपो भार्यया वाऽऽत्मसमारोप इत्यादि ज्ञेयम् । ग्रामसीमातिक्रमे च दंपती अरण्यन्वारम्भं कुरुतोऽकरणेऽग्निनाशः । नानासीमास्वपि प्रथमान्त्ययोरिति केचित् । आपदि यजमानासंनिधौ भार्यैवान्वारभते । प्रोषिते यज-माने तु होमकाले पत्न्या ग्रामान्तरगमने नदीतरणे चाग्नीनां लौकिकत्वमेव ।

**यत्र वसति तत्र प्रागस्तमयान्मन्थति ।**

रात्रौ प्रयाणे तु प्रागुदयादित्यपि ज्ञेयम् । असंस्कृतारण्योरभावे बौधायनेनारण्यो-राधानकृतयोरेव सर्वाग्नीनां समारोपणमपि विहितं क्रमेण समारोप्य क्रमेण मथितेषू-पावरोहणमथवा सकृन्मथित्वा विभज्य प्रत्येकमुपावरोहणं तदापदि ज्ञेयम् ।

उपावरोह जातवेदः पुनस्त्वं देवेभ्यो हव्यं वहतः प्रजा-
नन् । आयुः प्रजाᳫं रयिमस्मासु धेह्यजस्रो दीदिहि नो
दुरोण इत्यात्मन्समारूढमरण्योरुपावरोह्य मन्थति ।

मन्थतीत्युभयविध्यर्थमात्मन्समारूढमरण्योरुपावरोह्येत्यात्मसमारोपपक्षे ।

लौकिकं वाऽग्निमाहृत्य तस्मिन्नुपावरोहयते ।

आत्मारूढं शुद्धमग्निमाहृत्य पूर्वोक्तमन्त्रेणोपावरोहयते । अत्यन्तापदीदमिति भाष्यकृत् । उपावरोहणमनुप्राणनमिति भाष्यकृत् । हस्तप्रतापनपक्षे तु मन्त्रेण स्पर्शनमरण्योरुपावरोहणं मुखेन ग्रहणं मुखवातस्पर्शनम् । गार्हपत्यं मथित्वाऽऽ-यतने निधाय दक्षिणाग्निं तथैव तत आहवनीयं विहृत्य मथित्वा वाऽऽयतनेषु निधा-याग्नीनरण्योः समारोपणपक्षेऽपि मथित उपावरोहणमन्त्रजप इत्याचारः सोऽप्य-विरुद्धः प्रमाणं ततोऽग्निहोत्रं जुहोति ।

इदᳫं श्रेयोऽवसानं यदगात्स्योनो मे द्यावापृथिवी
अभूताम् । अनमीवाः प्रदिशः सन्तु मह्यं गोमद्धनवदश्व-
वद्धिरण्यवत्पुरुषवत्सुवीरवत्स्वाहेत्यवसिते जुहोति ।

प्रयाणेऽवसितेऽवसानं गते समाप्ते यत्र पञ्च सप्तदश वा रात्रीर्वसामीत्यवसितेऽ-तः परं न प्रयाणमस्तीति स्थितेऽपि दर्विहोमधर्मेण जुहोति । तथा च मध्ये मध्येऽ-र्वाचीनवसतावपि न होमोऽपि तूद्दिष्टे स्थाने प्राप्त एव वास्तोष्पतिहोमः ।

अतिदेशोपदेशाभ्यामाज्याद्यङ्गाप्राप्तौ कथं जुहोतीत्याकाङ्क्षायां दर्विहोमधर्मप्राप्तं व्याचिख्यासुः प्रतिजानीते —

दर्विहोमान्व्याख्यास्यामः ।

अव्याख्यातानामङ्गालाभादनुष्ठानमशक्यमिति गौरवं दर्शयितुं प्रतिज्ञाकरणम् । रूढ्या संज्ञेयम् । न हि दर्विद्रव्यस्य होमः स्यात्संततं विग्राहं चतुर्गृहीतादि वा दर्व्याः परिवेषणकाष्ठस्य संभवति । नापि दर्व्या साधनेन जुह्वादिसाधनविरोधात् ।

कथं तर्हि दर्विहोमा ज्ञेया इत्यत आह —

जुहोतीति चोद्यमाने दर्विहोमो यत्र च स्वाहाकारः[1] ।

जुहोतिना विधिप्रत्ययान्तेन विधीयमाने कर्मणि दर्विहोमे होमनामधेयं ज्ञेयम् । तत्र चतुरवत्तं जुहोतीत्यत्र दर्विहोमत्वमाशङ्क्योक्तं यत्रेत्यादि । जुहोतीति हुधातो-र्जुहोतीति रूपं तेन विहितं कर्म प्रक्षेपान्तं दानं तत्र दाने हि रूढ्या जुहोतीति भावव्युत्पत्त्या होमशब्दः प्रयुज्यते न तु जुहोतिचोदितेऽददाति चोदिते वा दाने

---

१ घ. ङ. ज झ. स्वाहाकाराः ।

वा तत्रैव प्रक्षेपान्तद्दानार्थस्स्वाहाकारः प्रयुज्यते रूढ्यैव । स्वाहाकारेण वषट्कारेण वा देवताये हविर्दीयत इति श्रुत्या ह्यविशेषेणोभयोर्दानार्थत्वमेवोक्तं तथाऽपि यजतिदाने वषट्कार एव रूढ्या श्रुत्या च यथा वै समृतसोमा इत्यनुवाकेन प्रजापतिर्देवासुरानसृजतेत्यनेन चाङ्गत्वेन विहितः प्रतीयते । तद्वज्जुहोतिचोदित एव दाने स्वाहाशब्दो दानार्थः प्रयुज्यते रूढ्या वागम्यवददित्यादिना श्रुत्या च तद्दर्शितमेव प्रयाजव्याख्याने । तथा च चतुरवत्तं जुहोतीत्यादौ जुहोतिना चोदितस्य दानस्य वषट्कारेण कृतस्य पुनः स्वाहाकारेण करणायोगात्तत्र प्रक्षेपमात्रेणोक्तो जुहोतिरिस्येतस्यार्थस्यासंभवान्न स दर्विहोमशब्दवाच्योऽस्वाहाकारत्वादिति भावः । ननु किमत्र व्याख्येयं दानसामान्येन दर्शपूर्णमासविध्यन्तेन साङ्गा एव होमा भविष्यन्ति । अस्ति तदङ्गमपि । यत्कीटावपन्नं जुहुयादित्यादिनाऽग्निहोत्रेऽपि दृश्यतेऽन्तःपरिधि निनयनं प्रायश्चित्तार्थं तदस्मर्यातिदेशे परिधिवत्तत्वं न स्यादिति भवत्येव लिङ्गमितिशङ्कानिरासार्थं दर्विहोम इति विशिष्टमुक्तम् । ये श्रुतौ दर्विहोमत्वेनाप्रकृत्यविकृतिरूपा रूढ्या दर्विहोमशब्दवाच्यास्तान्व्याख्यास्यामस्तेषां च स्वरूपं जुहोतीत्यादिनोक्तं ज्ञेयमित्युक्तं भवति । ननु कथं सति सादृश्ये चाप्रकृत्यविकृतिरूपा लिङ्गविरोधेऽपीति चेदुच्यते—लिङ्गं च परिधिप्रदेशलक्षणोऽ(णेऽ)न्यथैव सिद्धमित्येतत्प्रपञ्चितं जैमिनीयैस्ततो ज्ञेयम् । अग्निचयने वैश्वानरं द्वादशकपालं निर्वपेदित्यत्र निर्वपतिना यज्यनुमाने दर्शपूर्णमासविध्यन्तप्राप्तौ तत्प्रतिषेधार्थं दर्विहोमं करोतीति दर्विहोमसादृश्येन प्रयाजाद्यङ्गजात प्रतिषिद्धं तदर्थवदिव । यत्प्रयाजानूयाजान्कुर्याद्विकस्तिः सा यज्ञस्येति प्राप्तप्रयाजादिमत्तां निन्दित्वा तद्विहितं दार्विहोममेव कुर्यादिति चोपसंहृतमतो ज्ञायते न दर्शादिविध्यन्तो होमेषु । तथा यदेकया जुहुयादिति दर्विहोममनूद्य दर्विहोमत्वं निन्दित्वा च द्रव्यसाध्यया साम्येन स्तुत्वा पुरोनुवाक्यामनूच्येत्यादिना च द्रव्यसाध्यहोमेऽपि दानमस्तीत्युक्तम् । ततो न होमा विकृतयः, नापि प्रकृतयः स्वधर्मविरहात् । वक्ष्यति हि स्वधर्मवत्त्वे च प्रकृतित्वम् । यदप्यस्ति स्वधर्मवत्त्वमग्निहोत्रपिण्डपितृयज्ञादौ तदपि नातिदेशे प्रयोजकम् । अस्वधर्मेषु होमेषु स्वधर्माणामनेकेषां विद्यमानत्वाच्च कस्यातिदेशः स्यात् । सर्वोपसंहारस्य चाशक्यत्वाद्विकल्पस्याष्टदोषदूषितत्वात् । किं च न स्वधर्माणां सादृश्यमात्रेणातिदेशोऽपि तु लिङ्गेनातिदेशोऽनुमिते यश्चा(स्चा)नस्यातिकल्पनिरासार्थं सादृश्येन नियममात्रं क्रियतेऽन्यथा विहितक्रियाऽन्यन सामान्येन परस्परं प्रकृतिविकृतिभावः सर्वेषामपि विधिलक्षणानां कर्मणां स्यात् , तच्चानिष्टमतः सति लिङ्गेऽतिदेशो मृग्यते । न चात्र स्वधर्मशीलमङ्गदर्शनमस्वधर्मेषु होमेषु कचिदस्ति । तस्मान्न ते प्रकृतयस्तेषामत एव नान्ये विकृतयोऽपरेषामिति । तत्र दर्विहोमशब्दो रूढ इत्युक्तं भवति । तस्मादङ्गावेदकं प्रमाणं व्याख्येयमित्याशयः । यदपि वक्ष्यनात्कौण्डपायिनामयनगते कर्मणि मासमग्निहोत्रं

जुहोतीत्येतस्मादग्निहोत्रस्य प्रकृतित्वं तत्र होमस्य च विकृतित्वं तत्र दर्विहोमत्वबि-
घातकं किं तु साधकमेव। यदि सादृश्यादतिदेशः स्यात्तदा संज्ञयाऽतिदेशो न स्यात्।
एवं च हुत्वाऽग्नौ पितृयज्ञवदितिस्मृत्युक्तातिदेशो ज्ञेयः । अथ वक्ष्यमाणदर्विहोम-
धर्माणामग्निहोत्रेऽपि प्राप्तौ गार्हपत्यदाक्षिणाग्न्योर्होमे चाऽऽहुतिद्वये च समिद्द्वय-
प्राप्तौ पुनर्वचनमितरधर्मपरिसंख्यार्थमतो न तत्र दर्विहोमधर्माः । तथा पिण्डपितृ-
यज्ञेऽपि दक्षिणं जान्वाच्येति विधानान्नियमविधानादितरधर्माणां फलतः परिसंख्ये-
त्यादि ज्ञेयम् । दर्शपूर्णमासयोरङ्गहोमेषु न * दर्विहोमनिवृत्तये ज्ञापकान्युक्तान्येवेति
अलमतिप्रसङ्गेन ।

**तांस्तूष्णीकेनाऽऽज्येन सकृद्गृहीतेनाग्रेणाऽऽहवनीयं परीत्य
दक्षिणतस्तिष्ठञ्जुह्वाऽऽहवनीयेऽध्वर्युः स्वाहाकारेण जुहोति ।**

इदमनादेश एष्टव्यमिति यद्यपि तथाऽपि विशेषविधिर्बाध उत्सर्गस्य भवेदिति
पर्यवसानादनादेश इत्येवावतिष्ठते । तत्राऽऽज्यं द्रव्यमनादेश एतद्वा अग्नेः प्रिया तनू-
रित्यर्थवादादपि खलु क्षिप्रसंस्कारमाज्यं ब्रुवत इति बौधायनोक्तेराज्यशब्दस्य जाति-
वाचित्वेऽपि वचनात्संस्कारोऽस्त्येव यः श्रौतः स दर्शपूर्णमासप्रकरणगत इति तूष्णीके-
नापूर्वदर्विहोमेषु प्राप्तिरत उक्तं तूष्णीकेनेति तूष्णीको मन्त्रवर्जितो यथा स्मार्तो
भवतीत्यर्थः । विशेषानभिधाने सकृद्ग्रहणमर्थवादाच्चतुरुन्नयेत् द्विर्जुहोतीति इत्यर्थ-
वादे द्विरुन्नयनं द्विर्होमे विनियुक्तमतश्चतुरुन्नयने द्विरुन्नयनमधिकमित्युक्तं सकृ-
द्धोमे सकृदेवेत्यतोऽत्र सकृदिति स्रुवेणाऽऽज्यस्थाल्याः सकृद्गृहीतेन । अग्रेणेति
प्रादक्षिण्यविधिवशादुक्तमध्वर्युकर्मणामासनस्थाननियमाभावान्नियमार्थमुक्तं तिष्ठन्निति ।
जुह्वेति यौगिक्या संज्ञयोक्तमाहवनीय इति चापि तथा यदाहवनीये जुहो-
तीति श्रुतेश्च सर्वहोमार्थत्वेन जुह्वाऽऽहवनीय इत्यनेन प्राप्तमनूद्यते तयोः परिसंख्या
मा भूदिति अध्वर्युग्रहणं सूत्रान्तर आश्वलायनीये जुहोतीति चोदिते प्रायश्चित्ते
ब्रह्माणं कर्तारं प्रतीयादिति तन्मतनिराकरणेन प्रायश्चित्तदर्विहोमेष्वपि ज्ञापनार्थम-
न्यथा यजुर्वेदविहितत्वेनैवाध्वर्युकर्तृकत्वसिद्धेः स्वाहाकारेणेति स्वाहाकारेण हविर्दीयत
इति श्रुतेर्दानार्थं प्रयोगः । एवं च स्वाहाकारं प्रायोगिका मिनयति संस्रावयति प्रहर-
त्यादधातीत्यादावपि मन्त्रान्ते स्वाहाकारं प्रयुञ्जते । तदयुक्तं स्वाहाकारस्य जुहोति-
चोदनायामेव विधानात् । किंच चतुरवत्तं जुहोतीति जुहोतिचोदनायामपि न
स्वाहाकारप्राप्तिर्गौणमुख्ययोर्मध्ये मुख्ये कार्यसंप्रत्यय इति न्यायाद्यागाङ्गप्राप्ति-
श्रुते होमे दानस्य वषट्कारेणैव सिद्धत्वाज्जुहोतिना प्रक्षेपमात्रं लक्ष्यत इति गौणता

* नेतिपदमधिकं प्रतिभाति ।

चतुरवत्तादिहोमस्य । एवं जातवेदो वपयेत्यादावपि न स्वाहाकार इति सिद्धम् । तान्होमान्होमैरिति वाचोऽग्निहोत्रं जुहोतीत्यादौ द्विर्नामाश्रवणानुवृत्तिविधिर्होमं कुर्यादित्यर्थावगमादत्र प्रत्ययेनैव तत्प्राप्तेस्तस्मादनुवादार्थं जुहोतिप्रयोग इति उपांशुहोमेन यजत इत्यादौ तृतीयायागेषु होमेषु प्रायेण द्विर्नामैव सा पूर्वोक्तरीत्या नेया । ननु स्वाहान्तेन मन्त्रेणैव कर्मणो दानरूपस्य समाप्तत्वादस्य न कर्मसंनिपात इति चेत् । उच्यते—स्वाहान्तेन ददत्प्रक्षिपतीत्यर्थस्य विवक्षितत्वाज्जुहोतेश्च प्रक्षेपावसानदानवाचित्वरूढेः स्वाहाकारस्यापि तथात्वात्तत्र सामर्थ्यात्स्वाहान्तेन दानस्य जातत्वात्तेन मन्त्रान्तस्य संनिपातायोगात्तदेकदेशेन प्रक्षेपणेन मन्त्रान्तसंनिपात इत्यनिच्छताऽप्यङ्गीकार्यम् । तथा च यत्र संभवः कर्मादिसंनिपातस्य तत्र तथाऽन्यत्र स्वैकदेशेनापि तदप्यसंभवे स्वसंनिपातोऽपि यथा वषट्कारान्तया याज्यया यागसिद्धेरवशेषाभावादेकदेशेनापि न संनिपातः । वषट्कारस्तु दानमात्रे रूढ इति यजतेरपि तथात्वाच्च वषट्कारान्तया याज्यया प्रक्षेपोऽपि तु प्रक्षेपस्य पृथक्करणेन वषट्कारोपलक्षिते काले प्रक्षेपांशो विधीयते न तु तं प्रति वषट्कारान्तस्य साधनतेति प्रपञ्चितं परिभाषायामेव ।

द्विप्रभृत्याहुतिगणेषु प्रत्याहुति गृहीत्वा प्रत्याहुति समिधोऽभ्याधाय विग्राहं जुहोति ।

द्विप्रभृतय आहुतिगणाः समुदायास्तत्र प्रत्याहुति यावत्य आहुतयस्तावत्संख्ययाऽऽज्यानि गृहीत्वा प्राप्तिस्तु चतुरुन्नेषी[२] द्विर्जुहोती[२] इत्यर्थवादादेव । प्रत्याहुति समिध इत्यप्यग्निहोत्रे यद्द्वे समिधावादध्याद्भ्रातृव्यमस्मै जनयेदिति समिद्द्वयनिन्दायां प्राप्ते हि निन्दाऽतः प्रत्याहुति समित्प्राप्तिरिति सकृदेवाऽऽधाय विग्राहं विगृह्य विगृह्याऽऽहुतिपर्याप्तं विच्छिद्य विच्छिद्य जुहोति पूर्वोक्तधर्मेण । तन्त्रानन्तर्गतेऽपि परिस्तरणपरिषेकौ धर्मोक्तौ सामयाचारिकावित्यत्र नोक्तौ । तन्त्रान्तर्गतोपहोमानां स्वाहवनीय आहुतयो हूयन्त इति समिधामपि परिसंख्या द्वे आहुती जुहोति तिलाश्चतस्र इत्याद्याहुतिगणा ज्ञेयाः ।

यत्र मन्त्रगणेन कर्म चोदयेत्प्रतिमन्त्रं तत्र जुहुयात् ।

द्वाभ्यां जुहोति वैष्णवीभ्यामृग्भ्यां कूश्माण्डैरित्यादिमन्त्रसमुदायेन कर्म होमाख्यं विदध्याद्वेदः कर्ता तत्र कर्माण्येकमन्त्राणीति परिभाषया नानामन्त्रेषु संख्यायुक्तेष्वप्येकमन्त्रतोक्ता । तत्र गुणकर्मत्वेन गुणकर्मगता संख्या न भेदिका कर्मणः संस्कारकत्वेनापूर्वानुत्पादकत्वादपूर्वभेदप्रयुक्तो न कर्मभेद इति यद्येकं कर्माभ्यस्तमप्येकमन्त्रं च

१ ख. क. ज. झ. म. ठ. °भृतिष्वाहु° । २ क. ख. ग. च. छ. ट. °सोऽहं ति° ।

स्यात्तथा न होमेषु कुतः । होमानां स्वप्राधान्येन विहितानामपूर्वीयत्वात्तस्यैकत्वान-वगमाच्च गुणगतसंख्यया गुणभेदात्कर्मभेदे प्रतिकर्मैकैको मन्त्रस्तेन साध्यानि तावन्त्येव कर्माणि यथा सप्तदश प्राजापत्यान्पशूनालभत इत्यत्र पशुगता संख्या यागानां भेदिका। तद्वत् । एकद्रव्येणैक एव संस्कारोऽवक्लृप्तते स चैकेनैव कर्मणा भवति सामर्थ्यात्संख्यया वाऽभ्यासस्तस्यैव कर्मणो न तु कर्मभेद इत्यवश्यं मन्त्रान्तरं संनिपातार्थे नानाम-न्त्रेष्वेकमन्त्रेनैवाभ्यासं प्रत्यनङ्गत्वाच्च मन्त्राणामित्युक्तमेवेत्याशयः । किंच यदेकया जुहुयाद्दर्विहोमं कुर्यादिति निन्दया यत्र समुच्चयस्य प्रत्याख्यातत्वात्प्रथमस्य द्वारा-न्तरेण विनियोगं वक्तुं पुरोनुवाक्यातो न स्तुतिः । ततो न दर्विहोमेषु मन्त्रसमुच्चय इति सिद्धम् ।

जुहोतिशब्दे प्रदेशान्व्याख्यास्यामः ।

जुहोतिः शब्दः श्रुतिर्विधायको यस्य कर्मणो होमलक्षणस्य तत्र कर्मण्युत्सर्गप्राप्ता-हवनीयापवादेन प्रदेशानधिकरणभूतान्देशग्रहणेन न त आहवनीयप्रतिनिधयोऽपि तु सत्यप्याहवनीयेऽपवादेन विधीयन्त इति ते देशाः स्थानान्येव स्वातन्त्र्येणाधिकरणमिति दर्शितम् ।

स्वकृत इरिणे प्रदरे दर्भस्तम्बे स्थाणाविति ॥ २० ॥

इतिकरणः प्रकारवाची । स्वकृत इरिणे जुहोति प्रदरे वाऽभिषेचनीयेऽवभृथादुदे-त्यापां नप्त्र इति दर्भस्तम्ब ऊर्जो नप्त्र इति स्थाणौ जुहोति । स्वकृतमिरिणं स्वभावो-षरभूमिर्भूमिगर्तः प्रदर इतिकरणाद्वल्मीकवपायां जुहोतीत्यादि ज्ञेयम् ।

आहवनीयप्रतिनिधिषु विशेषमाह—

आहवनीयापनयोऽनग्नौ तस्मिन्नेव देशे जुहोति ।

यत्राऽऽहवनीयस्यापनयोऽपह्नवोऽप्राप्तिस्तत्र तस्मिन्नेव देश आहवनीयायतनदेश एव। तत्र तद्वजादिकमानीयाजकर्णादौ होतव्यम् । न तु यत्र तिष्ठति तत्र होतव्यमजाद्या-हवनीयाग्नेः प्रतिनिधिर्न तु तदायतनप्रदेशस्य तस्य साक्षादेव संभवात्सूत्रारम्भस्तु यदि मथ्यमानो न जायते यत्रान्यं पश्येत्तत आहृत्य होतव्यमिति वदन्त्यन्येषु तथाऽऽहृत्य होतव्यमित्यनभिधानात्तथा न स्यादिति तन्मा भूदिति ।

एवमप्रकृतिविकृत्यात्मकान्दर्विहोमान्व्याख्यायेदानीं दर्शपूर्णमासविकृतिषु व्याख्या-तासु व्याचिख्यासितासु धर्मलाभायातिदेशाख्यं प्रमाणं व्याचष्टे—

दार्शपौर्णमासिकानि प्रधानान्युत्तरस्यां ततौ
चोद्यन्तेऽन्यत्र सोमाद्धर्माद्दर्विहोमेभ्यश्च ।

दर्शपूर्णमासयोः कर्मसमुदाययोः समुदायित्वेन भवानि दार्शपौर्णमासिकानि प्रधा-

नान्याग्नेयादीनि उत्तरस्यां दर्शपूर्णमासौ हि संहितायामिषे त्वेति प्रपाठके पठितमन्त्रौ पुरोडाशप्रश्नाभ्यां व्याख्यातौ। तथा सं त्वेति प्रश्नेन पाकयज्ञमित्यादितोऽनुवाकैः यज्ञैर्विश्वरूप इति समिध इति च प्रश्नाभ्यां याजयाकाण्डेन च व्याख्यातौ। तयोः काण्डं प्रथममिषे त्वेत्युपक्रमवशात्पूर्वत्वं तत उत्तरत्र शाखायां यानि विधीयन्ते तान्युत्तरोत्तराणि। तानि सर्वाणि व्यस्तान्येवेति वैमृधादिप्रवर्ग्यान्तया संतत्या संतानेन क्रमेण सूत्रकृता व्याख्यातानि। तान्युत्तरा ततिस्तस्यां चोद्यन्तेऽतिदिश्यन्ते। सोमो ज्योतिष्टोम एकाहाहीनसत्राणि। धर्मः प्रवर्ग्यो दर्विहोमाः पिण्डपितृयज्ञोऽग्निहोत्रादयस्तेभ्योऽन्यस्यां ततौ। ननु दर्शपूर्णमासौ ह्यतिदिश्यमानौ परस्परविलक्षणनानाधर्मसमुदायात्मकौ तौ कथं धर्मनियामकौ स्यातामिति शङ्का तदर्थसमुदायिग्रहणान्ते हि सामान्यधर्मैर्धर्मवन्तः प्रतिनियतधर्मकाश्चैकैक एकैकत्र कर्मण्यतिदिश्यत इत्यर्थः। ननु समुदायो हि फलसाधनं फलापूर्वकरणेतिकर्तव्यता सहकारिणी सा प्रत्येकं कथं स्यादत आह—प्रधानानीति। उत्पत्तिविधयो हि प्रातिस्विकास्तैर्विहितेष्वेवेतिकर्तव्यताग्रहणात्प्रत्येकं साङ्गता प्रधानता च। प्रधानसमुदायो हि फलार्थं विधीयतेऽतः प्रत्येकं प्रधानमुत्तरततिगते कर्मण्येकैकस्मिन्नेवातिदिश्यत इति भावः।

ननु दार्शपौर्णमासिकान्येवातिदिश्यन्ते सोमादिभ्योऽन्येष्वेवेति नियमौ कस्मात्तथा च प्रधानेष्वतिदिष्टेषु कथमङ्गप्राप्तिर्न हि प्रधानान्यङ्गानि भवन्तीत्यत आह—

तानि स्वधर्माणि।

स्वस्वसंबन्धेन विहिताः स्वीया धर्मा अङ्गानि येषां तानि तथा यतस्तानि तानि स्वधर्मपूर्णानि। यद्धि पूर्णधर्मकं तदपूर्णधर्मकेऽतिदिश्यते। दर्शपूर्णमासावुपदिष्टधर्मकौ वैमृधादिष्वनुपदिष्टधर्मकेष्वेव सापेक्षेष्वेवातिदेष्टव्यौ न तु सोमादिषूपदिष्टपूर्णधर्मकेष्वपि निरपेक्षेषु। यत्र चाऽऽग्नेयवत्कर्तव्यमित्युच्यते तत्र वत्प्रत्ययेन तत्प्रकारकं कर्तव्यमिति गम्यते न तु तदिदं कर्तव्यमित्यतिदिश्यते विरोधात्। सति ह्यङ्गसापेक्षे कर्मणि तदपेक्षानिवर्तनार्थं तद्वदित्युच्यते। तदेव चेदेतस्य स्थाने स्याद्वतिप्रयोगो विरुध्येत। तस्मात्प्रधानान्यतिदिश्यमानान्यप्यर्थात्स्वधर्माणि स्वधर्मयुक्तान्यतिदिश्यन्ते। तथा च तद्धर्मयुक्तमेतत्कर्तव्यमित्यर्थो भवतीत्यर्थः। लोके हि बालो व्युत्पाद्यते यदा वर्णग्रहणे तदा ककारे व्यञ्जनेऽकारादिस्वरान्योजयित्वा वदति खकारोऽपि तद्वदिति तदा बालोऽप्यविद्यमानान्खकारे ककारे दृष्टानकारादीन्योजयति तद्वदिहापि। किंच न हि कृतं पुनः कर्तुं शक्यं किं तु तादृशं तथाऽङ्गान्यपि कृतानि पुनरत्र तान्येव न कर्तुं शक्यन्ते किंतु तज्जातीयानीत्येव। कर्म तु शब्दान्तरादिनिर्भिन्नजातीयत्वेनावगतं तत्र तज्जातीयता त्वशक्या कर्तुमिति च ज्ञेयम्।

ननु ज्योतिष्टोममात्रस्य स्वधर्मत्वेऽप्येकाहादीनामतथात्वात्तत्र दर्शपूर्णमासातिदेशः कथं न स्यात्तथाऽत्र यदि दार्शपौर्णमासिककर्मपरिणामो नोत्तरततिस्तदा कथं प्रकृतिविकृतिता स्यान्मृद्घटयोरेव तथात्वदर्शनात्तथा च सर्वाण्युत्तरततावतिदिश्यन्ते तदाऽपि धर्माणां विरोधो वा विकल्पो वा स्यादत आह—

सादृश्याद्विकारः ।

अहीनादयः साकाङ्क्षा अपि ज्योतिष्टोमादेवाव्यक्तचोदनात्वेन सादृश्यात्तस्य विकारा न तु दार्शपौर्णमासिकानां व्यक्तचोदनानां, तस्मादिष्टिपशुबन्धा एव द्रव्यदेवतासंबन्धेनोत्पन्ना व्यक्तचोदनात्वेन सादृश्याद्विकारा न तु विना द्रव्यदेवतासंबन्धमुत्पन्नस्य ज्योतिष्टोमस्येत्यपि सिध्यति । तथा दार्शपौर्णमासिकप्रधानसादृश्यादेव विकारो न तु त्रिक्षणस्थितिस्वभावानि कर्माण्यन्याकारेण परिणतिं गच्छेयुरतो गौणः प्रकृतिविकृतिभावो न तु मुख्यो मृद्घटवत्साङ्गदर्शपूर्णमासयोरर्थेऽवयवा इव येऽवयवा अङ्गानि तान्युत्तरततौ विद्यन्त इति स विकारः । न च सर्वाणि सर्वत्रातिदिश्यन्तेऽपि तु परस्परमवान्तरसादृश्यादेकस्यैवैकत्रातिदेश इति त्रेधाऽऽवृत्त्या सूत्रं योज्यम् । तथा सादृश्यात्तद्वदिदं कार्यमिति वाक्यमतिदेश इतीयता सूत्रसंदर्भेणोक्तम् । तदुक्तमभियुक्तैः—

‘ अन्यत्रैव प्रतीतायाः कृत्स्नाया धर्मसंततेः ।
अन्यत्र कार्यतः प्राप्तिरतिदेशोऽभिधीयते ’ ॥ इति ।
‘ प्राकृतात्कर्मणो यस्मात्तत्समानेषु कर्मसु ।
धर्मप्रदेशो येन स्यात्सोऽतिदेश इति स्मृतः ’ ॥ इति च ।

ननु वैदिकं कर्म यथा चोदितं तथा च फलायालं न तु तद्वत्कर्तव्यमिति विधिरस्ति न च कल्प्यः प्रमाणाभावादित्याशङ्क्याऽऽह—

स लिङ्गेन गम्येत ।

सादृश्याद्विकारो लिङ्गेन लिङ्गदर्शनेन ज्ञातव्यः । विशेषलिङ्गे सति विशेषे ततस्तु सुतरामतिदेशसद्भावः सिद्ध एवेत्यर्थः । तथा हि—प्रयाजे प्रयाजे कृष्णलं जुहोतीति प्रयाजानुवाद इष्टौ तथाऽऽप्रारमात्रार्थपशु[१] समनक्तीति पशौ चाऽऽप्रारानुवादो नैवमेकाहादिषु । तस्माज्ज्ञायते स्थालीपुलकन्यायेन वाचनिकातिदेशेषु च सर्वाङ्गोपसंहारेणातिदेशदर्शनाच्च दार्शपौर्णमासिकप्रधानधर्मा इष्टिषु पशुषु च । तथा ज्योतिष्टोमधर्माः स्तोत्रशस्त्रादयस्तावत्क्वचिदेकाहाहीनादिष्वनूद्य गुणा विधीयन्तेऽतो ज्ञायते ज्योतिष्टोमविकारा इति ।

---

१ घ. क. ज. झ. ञ. ट. सामान्यादि° ।

ननु सादृश्याद्विकार इत्युक्तं भूयोवयवसामान्यं सादृश्यं न तत्कर्मणि संभवति यदि करणभूतधातुसाम्येन सादृश्यं विवक्षितं तस्यानुमितस्य यजिधातोः सर्वैः समानं स्यात्किंकृतः प्रातिस्विकप्रकृतिविकृतिभावः स्यादथ देवतासामान्यं हविःसामान्यं वा सादृश्यकारणं तदपि न । न हि जात्या किंचिद्धविर्वा देवता वाऽस्ति नापीतिकर्तव्यतासामान्येन तस्याद्याप्यसिद्धेरित्याशङ्क्याऽऽह —

*देवतासामान्येन हविःसामान्येन वा यत्र हविः प्रदीयते ।

सादृश्याद्विकार इति व्यवहितमपि योग्यमनुषज्यते । देवतासामान्येन हविःसामान्येन वा यत्सादृश्यं कर्मणि तस्माद्विकारनियम इत्यर्थः । ननु न जात्या देवता नापि हविरस्तीत्यत उक्तं यत्रेति यस्मिन्कर्मणि यस्यै यद्दीयते सा देवता तच्च हविस्तयोरन्तरङ्गयोरुभयसामान्येनान्यतरसामान्येन वा सादृश्यात्प्रकृतिविकृतिविशेषानियम इत्युक्तम् । हविर्हि जातिशब्दनिर्दिष्टं प्रदेयत्वेन लोकप्रसिद्धमेव विधीयते पुरोडाशादिकं देवता तु न लोकप्रसिद्धा सा शब्दमात्रगम्या नापि वेदेऽपि जात्या प्रसिद्धाऽतो येन शब्देन या विहिता तच्छब्दगतं सामान्यमत्र देवतासामान्यं विवक्षितमिति ज्ञेयम् । प्रदीयते तदेव हविर्न तु तेन शब्देन गृहीतमात्रं, यथा पृषदाज्यार्थं गृहीतं दधि न दीयतेऽतो न दधिधर्माँल्लभत इत्युक्तं भवति व्यतिरेकेण । ननु पुरोडाशशब्देन चोदितस्य पुरोडाशेषु सामान्यं भवेन्न तु चरुयवागूधानाकरम्भादिषु तथाऽऽज्यपयोदधिद्रव्याणां तज्जातीयेषु तैलमधुषु पश्वामिक्षयोर्वाजिने च तथा देवताग्न्यादिशब्दमात्रसामान्येन सादृश्यं कथं सूर्यादिना सादृश्यं चेति चेत् । उच्यते—नात्र सामान्यशब्देन जातिमात्रं विवक्षितमपि तु तद्गतधर्ममात्रं तत्रान्तरङ्गबहिरङ्गभेदेन यद्यत्र संभवति तेन सादृश्यकल्पना सुकरैव सति सामान्यातिदेशे स तु लिङ्गेनाऽऽकाङ्क्षितेतिकर्तव्यतावगमकेन साधित एवेति सूत्रकृदेवेदं स्पष्टयिष्यति । चर्वादिषु पुरोडाशत्वाभावेऽप्यौषधद्रव्यत्वेन पुरोडाशसादृश्यं कृष्णलेष्वपशुप्रभवत्वे सति काठिन्येन पुरोडाशसादृश्यं स्वयमेव वक्ष्यति कृष्णलेष्वौषधवत्कल्प इति । तथा संसृष्टद्रव्यकप्राजापत्येष्टावाज्यविकारो मधूदके संसृष्टे इति । अप्सु मधुनि चाश्वेतत्वे सति द्रवद्रव्यत्वेनाऽऽज्यसादृश्यं पशौ साक्षात्पशुप्रभवत्वेन पयःसादृश्यमामिक्षायां च पशुप्रभवत्वे सति श्वेतत्वे सति मधुरत्वेन पयःसादृश्यं वाजिने चाम्लत्वेन दधिसादृश्यं तत्सर्वं मीमांसातोऽवगन्तव्यं, देवतायां तु देवतैक्यानेकत्ववर्णसाम्यादीनि यानि सादृश्यनिमित्तानीति सूत्रेष्वेव दर्शयिष्यन्ते । ननु किमिदं प्रमाणमतिदेश इति । उच्यते—वैकृतस्य कर्मण उपकाराकाङ्क्षावशात्पूर्वकर्मणः सकाशादुपकारककर्मकलापसंनिधायको वाक्याध्याहारोऽतिदेशः । तत्सहकृतो विधिरेव प्रमाणमवगन्तव्यं न हि

* सूत्रपुस्तकेषु तु हविःसामान्येन देवतासामान्येनेति विपरीतं दृश्यते ।

विधिलक्षणके कर्मण्यन्यत्प्रमाणमस्ति । विधिविहितस्य कर्मणो ह्याकाङ्क्षा जायते कथमिष्टं भावनीयमिति । तत्र संनिधौ नोपकारकं पश्यत्पूर्वस्मात्सदृशात्तल्लाभं दृष्ट्वोपकारकाणामङ्गानामङ्गिनिबद्धानामनेकेषां नानोपकारकाणां प्रत्येकं संनिधापनेऽतिगौरवं स्यादिति प्रकृतं प्रधानकर्मैव संनिधाप्यते । तदिदमप्युक्तं दार्शपौर्णमासिकानि प्रधानान्येव पूर्वं विहितान्युत्तरततावनुषज्यन्ते । तत्रोपकारकमात्रमङ्गजातं गृहीतं स्वसादृश्यप्रतियोगितया प्रधानमपि गृह्यते नोपकारकत्वेन प्रधानस्य प्रधानोपकारकत्वेन क्लृप्तत्वात्तदप्युक्तं सादृश्यमात्रेण विकृतिभावो न तु ताद्रूप्येण दृष्टोऽस्ति तदङ्गसदृशान्यङ्गानि गृहीत्वा पूर्वमङ्गाङ्गित्वेन परिणतो विकृतिर्भवति । प्रत्यक्षानिर्देशे ह्येवमेव वाक्यं दृश्यते । तथा हिसमानमितरच्छ्येनेनेति वाक्यस्य वेषुसंज्ञक एकाहे श्रुतस्य श्येनयागेतिकर्तव्यतासदृशीतिकर्तव्यतोचिताऽपि कर्तव्येति वाक्यार्थावगमादिहापि तादृशमेव वाक्यमनुमीयेतेत्युक्तमाग्नेयवत्सौर्य इत्यादि । तथा चैतद्ब्राह्मणान्येव पञ्च हवींश्षि भवन्त्येतद्ब्राह्मण ऐन्द्राग्न एतद्ब्राह्मण एककपाल इति प्रत्यक्षवाक्यानि(णि) मासमग्निहोत्रमिति गौणवृत्त्या पर्यवसन्नदृष्टान्तानि लिङ्गानि पूर्वोक्तातिदेशवाक्याध्याहारे देवतासामान्येन हविःसामान्येनेतीष्टिपशुविषयत्वेनोक्तं सोमे त्वव्यक्तचोदनाऽपि वक्ष्यते । ननूक्तमुत्तरततिगतेष्टिपशुबन्धानां दार्शपौर्णमासिकान्येव प्रधानानि प्रकृतिरेतद्ब्राह्मणान्येव पञ्च हवींषि भवन्तीत्यत्र वैश्वदेवहवींषि वरुणप्रघासादिहविषां प्रकृतित्वेन श्रूयन्ते मासाग्निहोत्रे दर्विहोमेऽपि प्राकृताग्निहोत्रविकृतित्वं दृश्यत इति चेत् । सत्यम्, न्यायेनातिदेशे हि दार्शपौर्णमासिकानीत्यादिनियमो वचनेनान्यथात्वेऽपि न दोषः । दर्शपूर्णमासप्रकृतिकत्वे सत्येवान्यप्रकृतिकत्वं पञ्चपशुव्यतिरिक्तपशुष्वपि लिङ्गदर्शनेन पञ्चपशुप्रकृतिकत्वं चापि । तस्मादुक्तलक्षणवाक्याध्याहारसहितकर्मविधिरेवातिदेशाख्यं प्रमाणमभियुक्तवाक्ययोरप्येवमेवार्थः । तथा हि अन्यत्रैवं दर्शपूर्णमासयोर्ज्योतिष्टोमे च प्रतीताया विहितायाः कृत्स्नाया धर्मसंततेरङ्गकमस्यान्यत्र धर्मसंततिरहितेषु कार्यत उपकारद्वारा प्राप्तिः प्रापकं वचनमतिदेश इत्यर्थः । तथा प्राकृतात्प्रकृतिभूताद्यस्माद्धर्मयुक्तात्तत्समानेषु समानधर्मयुक्तेषु धर्मविहीनेषु साकाङ्क्षेषु धर्मप्रदेशो धर्मप्राप्तिर्येन वाक्येन सन्निधिकेन भवेत्तत्सविधिकमध्याहारवाक्यमतिदेश इत्यनेन रूपेणावस्थिता इत्यर्थः ।

एवमतिदेशस्वरूपमभिधायेदानीं तद्बलाबलचिन्ता क्रियते—

विप्रतिषेधे हविःसामान्यं बलीयः ।

देवतासामान्यहविःसामान्ययोर्विरोधे हविःसामान्येन यत्र सादृश्यं तद्बलीयो हविषो यागक्रियाश्रयत्वेनान्तरङ्गत्वाद्देवतायास्तु प्रतिग्रहीतृत्वेन बहिरङ्गत्वात्सर्वत्र हविर्विशेषणत्वाच्च देवतायास्तद्धिते चतुर्थ्यन्ते च विशेष्यं तु रूढीतिबुद्ध्यारूढं भवतीति भावः ।

उदाहरति—

यथा वैष्णवः पुरोडाशः ।

विष्णुरुपांशुयागदेवतोऽत आज्यधर्माः प्राप्ताः पुरोडाशधर्मेण बाध्यन्ते । एवमाग्नावैष्णवमेकादशकपालं निर्वपेदत्रापि विष्णोर्देवतात्वमन्यत्र प्रकृतिदेवताभ्य इत्येकदेशेऽपि देवतात्वस्य वक्ष्यमाणत्वात् ।

एकदेवतास्त्वाग्नेयविकारा अन्यत्र प्रकृतिदेवताभ्यो यथा सौम्यश्चरुरैन्द्रः पुरोडाश इति ।

एकवचनान्तशब्दप्रतिपाद्या देवताऽस्यासावेकदेवतः कर्मविशेषः । एकदेवतश्चैकदेवतश्चेति पश्चादेकशेषेण बहुवचनान्तता । औषधद्रव्यं पुरोडाशचरुयवागवादि तत्सामान्यमाग्नेयाग्नीषोमीयैन्द्राग्नेषु साधारणं तत्र विकल्पं प्रसक्तं निवारयति द्विदेवत्येभ्यस्तुशब्देन ये चैकदेवताविकृतिविशेषा आग्नेयस्यैव विकारा नेतरयोर्द्विदेवत्ययोः द्विदेवतयोरपि चावयवगतं सामान्यमेकदेवतत्वबाधकमिति वक्तुमन्यत्रेति । प्रकृतौ सोमश्चेन्द्रश्च द्विदेवतावयवभूतावपि यत्र साक्षाद्देवते तत्रैकत्वसंख्याकृतं सामान्यं बहिरङ्गद्विदेवतावयवगतेनापि भूयोवयवसामान्येन शीघ्रमुपस्थितेन देवतासामान्येन बाध्यतेऽतो द्विदेवत्यविकारौ सौम्यश्चरुरैन्द्रः पुरोडाशः प्रकृतिगता देवता प्रकृतिः सा देवता यस्यासौ तथा तत एकशेषः । यद्यपि न ते द्वे देवते द्वंद्वाच्चतुर्थ्या तद्धितेन वा द्वयोरेकदेवतात्वमेवावगम्यते तथाऽपि द्विवचनेन द्विदेवतत्वप्रसिद्धेरवयवेऽपि देवतात्वमुक्तम् । उदाहरणे स्पष्टे । इतिकरण ऐन्द्रवैमृधप्रभृतिविशिष्टदेवता परिग्रहार्थः ।

सोमेन्द्रस्यैन्द्रासोमीयस्यावयवमुख्यत्वेनैव व्यवस्थेति दर्शयन्नाह—

अथेतरेऽग्नीषोमीयस्यैन्द्राग्नस्य वा ।

विकारा इति पूर्वतः । अथ प्रकृतादेकदेवतादन्येऽनेकदेवतत्वसामान्येनानेकदेवतयोरग्नीषोमीयैन्द्राग्नयोर्विकाराः । वाशब्दो व्यवस्थाविकल्पार्थो यतोऽनियमो नियमे सति न युक्त इति । तत्र देवताविग्रहस्येष्टत्वेऽपि शब्दस्य विशेषणता न त्यज्यते । यतो येन शब्देन या यत्रोक्ता सा तेनैव शब्देन युक्ता तत्र देवताऽतस्तु शब्दगतवर्णसंख्यागतं सामान्यमपि व्यवस्थाहेतुरिष्टं यथा शब्दावयवगतं सौम्यत्वादि । देवतासामान्यं च सर्वं शब्दकृतमेवेति दर्शितम् । तस्मादत्रापि शब्दगतवर्णसंख्यया सामान्यं यथा पदगतैकत्वानेकत्वाभ्यां न हि देवता प्रत्यक्षा यद्गतमेकत्वाद्यवगम्येत प्रमाणान्तरेण । अत एव कात्यायनः-त्र्यक्षरादूर्ध्वं तेऽग्नीषोमीयस्य त्र्यक्षरा ऐन्द्राग्नस्येति । ऊर्ध्वशब्दप्रतियोगिनोऽधःशब्दस्याप्यध्याहारः । त्र्यक्षरादधस्ते त्र्यक्षराश्च

१ ख. °ता. आ° ।

चतुरक्षरन्यूनत्वसामान्येनैन्द्राग्नविकारा इत्यर्थः। सोमेन्द्रे तु त्र्यक्षरेऽपि सोमप्राथम्येन शीघ्रबुद्धिस्थेनासंजातविरोधिनाऽग्नीषोमविकारता ज्ञेया। तथैन्द्रासोमीये त्र्यक्षरादाधिक्येऽप्यैन्द्राग्नविकारताऽपि ज्ञेया। एवमाग्नेयविकारेऽपि कालसामान्यकृता व्यवस्थेष्टा यतः पशौ वक्ष्यति कालसामान्यादिति। तत्त्वे तत्राऽऽग्नेयविकारे पौर्णमास्यां तस्याः समीपे वा कृते पौर्णमासं तन्त्रम्। एवमामावास्यमपि। सर्पपितृस्वात्यादिदेवता विशेष्याक्षरैरैन्द्राग्नसमाना भिन्नलिङ्गवचनानां विशेष्याणां बहिरङ्गत्वात्।

विकृतीरुक्त्वा तदङ्गबलाबलमाह—

**प्रकृतौ विशिष्टधर्माणामुत्तरस्यां ततौ समवेतानामङ्गविप्रतिषेधे मुख्यत्वं बलीयः।**

प्रकृतौ दर्शपूर्णमासरूपायां तथा विकृतिरूपायामपि स्वधर्मवत्यामिष्टिपशुबन्धरूपायां च यानि विशिष्टधर्माणि प्रधानानि विशिष्टाः परस्परव्यावृत्ता धर्मा अङ्गानि येषां तानि तथा ते *विशिष्टधर्मा विपूर्वत्वाच्छिष्टपदस्य न केवलत्वमिति धर्मादनिच्केवलादिति नानिच्। उत्तरस्यां ततौ विकृतिरूपेष्टिपशुबन्धरूपायां समवेतानां चोदकेन प्रापितानामङ्गविप्रतिषेधे प्रत्येकं वैकृते प्रधाने प्रत्येकं प्राकृतं प्राकृतं प्रधानं समवेतम्। तेषां तन्त्रेणानुष्ठाने परस्परं विरोधे प्रसङ्गेन वा स्वातन्त्र्येण वाऽनुष्ठाने प्रधानैः सहाङ्गानां विरोधे समुच्चयायोगाद्विकल्पे प्राप्ते तत्रानुष्ठाननिर्वाहायान्यतरबोधकं प्रमाणमाह मुख्यत्वमिति। प्रकृतिभूते प्रधाने मुख्यत्वं मुखैः प्रथममनुष्ठानं प्रकृतौ यस्याविरोध्यङ्गं प्रथमप्रकृतावनुष्ठीयते तत्प्रधानमङ्गद्वारा मुखे प्रवृत्तं मुख्यं तस्य भावस्तत्त्वं तद्धर्मस्तल्लिङ्गं बलीयोऽन्येषां तत्रानुष्ठानविघटकानामङ्गानां बाधकमित्यर्थः। चातुर्मास्येषु वैश्वदेवपर्वणि अष्टौ प्रधानानि तन्त्रेणानुष्ठेयानि तेषु चातिदेशेन प्रापितानि दार्शपौर्णमासिकानि प्रधानानि। तत्राऽऽग्नेयविकाराणि चत्वारि तानि न विरोधीनि पौर्णमासे दर्शे च समानत्वात्। सौम्यद्यावापृथिव्यये।रग्नीषोमीयः प्रकृतिर्मारुतस्यैन्द्राग्नः। आमिक्षायाः प्रातर्दोहः। प्रथमस्य पौर्णमासं तन्त्रम्। ऐन्द्राग्नप्रातर्दोहयोरामावास्यं तन्त्रम्। तन्त्रेणानुष्ठातुमशक्यम्। तत्राग्नीषोमीये प्रथममन्वाधानमुभयत्र साधारणम्। बर्हिराहरणमनन्तरमसाधारणम्। ऐन्द्राग्ने वेदिकरणम्। सांनाय्ये शाखाहरणम्। तत्र दाक्षायणे यज्ञे पौर्णमास्यां संनयतश्चोभयं प्राप्नोति पौर्णमासप्रयुक्तं पूर्वं बर्हिःसंनयनप्रयुक्तं शाखाविप्रतिषेधे मुख्यत्वं बलीयः। कथम्। इषे त्वेति मन्त्रब्राह्मणपाठेनाऽऽदौ शाखाहरणमनन्तरं बर्हिराहरणं यज्ञस्य घोषदसीत्यादिनोक्तम्। तत्र पौर्वापर्येण वैश्वदेवपर्वण्यपि शाखाहरणं बर्हिराहरणं चेति क्रमे सति भूयस्त्वादिविशेषकाभावान्मुख्यत्वेन पूर्वबुद्धिस्थत्वलक्षणेन

---

* सर्वपुस्तकेषु विशिष्टधर्माण इति विद्यते तत्प्रामादिकम्।

दार्शमेव तन्त्रं प्रयच्छत्यैन्द्राग्नः सांनाय्यं च। सांनाय्ययोर्यागद्वित्वेऽपि सायंदोहस्याऽऽमिक्षार्थत्वान्न प्रधानद्रव्यत्वमिति नाङ्गाकाङ्क्षित्वमिति न तेन भूयस्त्वमाशङ्कनीयम्। वैकृतानि प्रधानानि युगपदेवाङ्गाकाङ्क्षाणि तेषु युगपदेव प्राकृतानि प्रधानानि संबध्यन्ते। तत्रैक आग्नेयो वाऽग्नीषोमीयो वाऽनेकेषु युगपदन्वयं नार्हति। तथा च प्रतिवैकृतत्वं तु प्रधानमावृत्तावैन्द्राग्न ऐन्द्रश्च नाऽऽवृत्तावतो न भूयस्त्वमुत्तरयोराशङ्कनीयम्। एवं च प्रकृतिप्रधानगतमेव मुख्यत्वं भूयस्त्वं वा ज्ञेयम्। न तु विकृतिप्रधानगतम्।

## मुख्यत्वाद्भूयस्त्वम्।

पूर्वसूत्रं मुख्यत्वपदव्यतिरेकेणानुषञ्जनीयं सर्वत्रातः परम्। भूयस्त्वमधिकता सजातीयप्रधानानाम्। यस्यां कोटौ समानप्रकृतिकानि प्रधानानि न्यूनानि सा कोटिरधिकप्रधानकोट्या बाध्यते। अयमाशयः—विकृतिसमुदाय आदावुत्पत्तिविधिभिः स्वरूपमात्रेण चावगतस्तस्यातिदेशप्राप्तये स्वरूपावधारणवेलायामेवाल्पत्वाधिकत्वे वाऽवगते तत्र बह्वनुग्रहो न्याय इति विरोधिस्फूर्तिदशायामेवाल्पत्वाधिकत्वेन निर्णये सति क्रमोऽनुष्ठानं पश्चाद्बुद्धिस्थं तत्रत्यं मुख्यत्वं बाधितं न पुनः प्रभवति बाधकमधिकत्व(त्वं) बाधितुमिति। यथा दधि मधु घृतमापो धानाः संसृष्टं प्राजापत्यं हविस्तत्र दध्नो मुख्यत्वं शाखाहरणेन यावता ज्ञायते तावता पूर्वमेव मध्वादित्रयस्याऽऽज्यविकारत्वमवगतं तद्भूयस्त्वादनन्तरावगतस्य मुख्यत्वस्य बाधकम्।

## भूयस्त्वात्स्थानम्।

अग्निष्टोमादौ सवनीयपशुतन्त्रमध्ये विहितानां धानाः करम्भ इत्यादिकानां सवनीयहविषां वाजपेयादावग्नीषोमीयपशुपुरोडाशमनुनिर्वाप्याणामग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपतीत्यादिकाष्टयागानां दर्शपूर्णमासतन्त्राणां भूयस्त्वात्पशुतन्त्रमेकादशप्रयाजत्वादि बाध्यमिति प्राप्ते स्थानं बलीय इत्युक्तम्। स्थानं पाठसादेश्यमनुष्ठानसादेश्यमिति द्वेधा। तत्र प्रकृतेऽनुष्ठानसादेश्यं स्थानं सवनीयस्याग्नीषोमीयस्य च तत्र प्रदेशेऽनुष्ठानकाले सवनीयाऽग्नीषोमीया प्रक्रान्ताऽनुष्ठीयेते। तदुपक्रमे सवनीयानुनिर्वाप्याणामबुद्धिस्थत्वात्। तत्र पशुरेव तस्य तन्त्रानुष्ठितकतिपयविरुद्धाङ्गस्य तन्त्रमध्ये पश्चाद्बुद्धिस्थानां बहूनां प्रारब्धतन्त्रबाधे न प्रयोजकत्वम्। तस्मात्पशुतन्त्रं प्रसङ्गेनोपकरोति पुरोडाशान्।

## स्थानाद्विधिः।

स्थानानुमितो विधिरन्यः प्रत्यक्षेण विधिना बाध्यते। अग्नीषोमीयस्य स्थानमौपवसथ्य-

---

१ ख. च. छ. ट. ॰कृतित्वं।

ग्रहः सार्यस्केषु सह पशूनालभत इति श्रूयते। तत्र सहश्रुत्याऽग्नीषोमीयाग्नेयानूबन्ध्या-पशूनां सहालम्भेऽवगतेऽग्नीषोमीयस्य सवनीयात्पूर्वस्थानसामान्येन तत्संनिकृष्टतयैवाव्य-वधानेन प्राप्तं पूर्वभावित्वं तत्प्रकृतौ श्रुतेनाऽऽश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवी-याऽऽग्नेयं सवनीयं पशुमुपाकरोतीति त्वाप्रत्ययसनाथेन विधिनाऽऽश्विनग्रहानन्तर्यं विहितं तद्विकृतौ चोदकेन तथैव प्राप्तमनेनाग्नीषोमीयस्य स्थानं बाध्यते। विधिर्हि प्राप्तयोर्ग्रहग्रहणाग्नेयालम्भयोरानन्तर्यमात्रं विधत्ते प्रत्यक्षो विधिः। अग्नीषोमीयस्य स्थानानुमितो यद्यपि विधिरेव प्रमाणं तथाऽपि स स्थानमतिदिष्टमुपजीव्यानुमीयते। स्थाने बाधिते सोऽपि बाधित एवेति स्थानाद्विधिरित्युक्तम्। न च सहश्रुतिसहकृतो विधिरौपदेशिको(क आ)तिदेशिकं बाधेतेति सह श्रूयते संनिकर्षमात्रं वाच्यं न पौर्वापर्य-मपि। न च स्थानसहकृतः सहालम्भविधिरौपदेशिको येन प्रबलो भवति। किं च प्राप्त आलम्भे गुणद्वयं साहित्यं पूर्वभावित्वं न विधातुं शक्यते। तस्मात्स्थानानुमित एव बाधितो विधिः।

## विधेरङ्गम्।

विधिनाऽऽश्विनानन्तर्यमवगतं साङ्गस्य सवनीयालम्भस्य तन्मध्ये यथाऽग्नीषोमीया-लम्भस्य नावकाशोऽस्ति तद्वदेव तदङ्गानामपीत्येवं प्राप्ते विधेरङ्गं साहित्यविधेरा-लम्भानां संनिकर्षावगमे सति तत्तदालम्भलक्षणसंज्ञपनस्याङ्गमननुष्ठायाऽऽलम्भः कर्तुं शक्यते। तस्मादङ्गविधिना साहित्यविधिर्बाध्यते। न च तेषां सर्वेषां तत्तदालम्भात्पूर्व-मेव करणं युक्तमौत्सर्गिकपदार्थानुसमयबाधितसंसृष्टान्येकापवर्गाणीत्यभिहिते काण्डा-नुसमये तु न प्रमाणमस्ति। तस्मात्साहित्यावगतैरङ्गैः पदार्थानुसमयेनाग्नीषोमीयाल-म्भाङ्गैराश्विनानन्तर्यं साङ्गसवनीयालम्भस्यातिदिष्टं बाधितम्।

## अङ्गात्प्रधानम्।

ऐन्द्रावरुणः पुरोडाश ऐन्द्रावरुणी चाऽऽमिक्षा पापयक्ष्मगृहीतस्य श्रूयते। काम्ये-ष्टिभिश्च दर्शपूर्णमासौ संस्थाप्य यजेतेति श्रूयते। ततः प्रतिपदि सद्यस्काला एव सांनाय्यवत्यो द्व्यहकाला इति सांनाय्यविकृतेर्द्व्यहकालतेति नित्येन हविषेष्ट्वा सायंदोहं कृत्वा द्वितीयायां याग इति प्राप्तेऽङ्गात्प्रधानमित्युक्तमङ्गस्य कालः प्रधानकालेन पर्वणा बाध्य इति।

चतुर्दश्यां दोहः पञ्चदश्यां यागो वैश्वदेवपर्वणि तथा दृष्टत्वादित्याशङ्क्य नित्येन हविषेष्ट्वेति काम्येष्टिपशुबन्धानां नित्येष्ट्यनन्तरमनुष्ठानं श्रुतिप्रामाण्या[दा]ह—

१ ख. ट. ठ. 'यस्केषु।

दर्शपूर्णमासयोर्विकृतेश्च संनिपाते दर्शपूर्णमासौ बलीयांसौ ।

दर्शस्य पौर्णमासस्य च प्रत्येकं विकृतेरिष्टिरूपायाः पशुबन्धरूपाया वा संनिपाते कालैक्येन सहानुष्ठाने प्राप्तेऽङ्गविप्रतिषेध एव । दर्शे पूर्णमासतन्त्रा विकृतिर्वैपरीत्ये वा विकृतेष्टेर्विप्रतिषेधे सति प्रकृतेरौपदेशिकाङ्गत्वाद्विकृतेरनुमितातिदेशेन प्राप्तान्यङ्गानि बाध्यन्ते । बलीयांसौ बाधकौ । एवं च कदाचिद्विकृतेश्च पृथङ्महापूर्वाया अपि तन्त्रमस्तीति ज्ञायते । पशुबन्धस्यामावास्यातन्त्रस्यैव पौर्णमास्यां तन्त्रेण क्रियमाणस्य पौर्णमासतन्त्रता । न चेदं तन्त्राविधायकमपि तु पौर्वापर्यस्य विधायकमिति वाच्यम् । प्रकारान्तरमुत्तरसूत्रेण विरुध्येत प्रकारान्तरस्य पौर्वापर्यादिरूपस्य तत्र तत्र निर्णयाच्च । स्पष्टमेवोक्तं भरद्वाजेन—समानतन्त्रा वा विकृतिर्दर्शपूर्णमासौ चेति । एवं च विकृतीनां मध्ये समानतन्त्रा विकृतिस्तु सद्यस्काला सद्यस्कालया पौर्णमास्यैव संभवति नान्यथा । व्यहकाला च व्यहकालया चतुर्दश्युपक्रमाणि चातुर्मास्यपर्वाणि व्यहप्रकृत्या न समानतन्त्राणि सद्यस्काला प्रकृतिः समानतन्त्रा न संभवति पूर्वेद्युरुपक्रान्तया विकृत्या । एवं च विकृतिः प्रधानयागात्पूर्वमेव कार्येत्यादि व्यवस्था ज्ञेया । एवं च काम्येष्टिपशुबन्धानां सांनाय्यवत्सांनाय्यविकृतीनां व्यहकालत्वविधानेन नित्येष्ट्यनन्तरानुष्ठानविधानेन साङ्गयोः पौर्वापर्यासंभवात्तन्त्रानुष्ठाने च प्रधानमात्रयोः पौर्वापर्याबाधात्तन्त्रेणानुष्ठानं नियतमेव । तत्र च बलमप्युक्तं दर्शपूर्णमासयोर्विकृतेश्चेति क्रमपाठेनेति भावः ।

यानि त्विष्टिपशुबन्धानां प्रत्यक्षाणि तानि तत्र ।

बलीयांसीति विपरिणमनुकृष्यते । यानि प्रत्यक्षाणीति श्रुत्यादिप्रमाणैर्विकृत्यर्थत्वेन प्रापितानि दर्शपूर्णमासचोदकव्यतिरिक्तप्रमाणेन प्रापितानीति यावत् । न हि सर्वत्र प्रत्यक्षश्रुतिविहितान्येव संभवन्ति । तुशब्देन पूर्वन्यायबाध उक्तः । कथमित्थम् । उभयोरौपदेशिकत्वेऽपि येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवतीति प्राप्त एवातिदेशे विकृतौ प्रत्यक्षाण्यङ्गान्यातिदेशिकाङ्गविरुद्धानि कानिचिदतिदेशबाधेनैवोत्पद्यन्ते नान्यथा । तथोक्तं पूर्वं परमजातत्वादबाधित्वैव जायते परस्यानन्यथीत्पादानां न त्वबाधनसंभव इति । अत उभयोरौपदेशिकत्वेऽपि विकृत्यङ्गान्येव बलीयांसीति वैकृत ऐन्द्राग्न आश्विने वा समानतन्त्रे प्रत्यक्षाङ्गता नास्ति तथाऽपि सामान्यतः पूर्वमेवातिदेशाद्दार्शपूर्णमासिकप्राप्ता एवायं पाशुकोऽतिदेशः प्रवृत्तः प्रबलः पूर्वोक्तन्यायेनैव । न च दर्शपूर्णमासातिदेशमात्रेण वैकृतः पशुर्निराकाङ्क्षो भवति । सामयाचारिकाङ्गजातपूर्वाङ्गजातलाभाद्यावत्यापेक्षणात्तस्य च पूर्वातिदेशबाधेन प्रवृत्तस्य बाधको दर्शपूर्णमासातिदेश एव कथं स्यात्प्रवृत्तस्य पुनःप्रवृत्त्ययोगात् । नैवैकादशप्रयाजादिभिः पञ्चप्रयाजताऽपि बाध्यतेऽभ्यस्तेषु पञ्चप्रयाजत्वानपायात् ।

दार्शपौर्णमासिकानीत्यादिनाऽतिदेशं तद्बलाबलं चोक्त्वाऽधुनाऽऽमिक्षावभृथपशुबन्धेषु केषुचिच्चातिदेशहेतोरस्वधर्मत्वस्याभावान्न विकृतित्वम् । तदन्यामिक्षापशुबन्धास्तु हविःसंज्ञासाम्येन तन्मात्रविकारा इति दर्शपूर्णमासविकृतिरुत्तरा ततिरविशेषेणोक्ता तत्संकोचनीयम् । कुतः, स्वधर्मा प्रकृतिरस्वधर्मा विकृतिरिति विभागहेतुत्वोक्तानि स्वधर्माणीति सूत्रावयवात्फलितयोर्विद्यमानत्वादित्याशङ्क्याऽऽह —

**दर्शपूर्णमासप्रकृतय इष्टिपशुबन्धास्ते स्वधर्माणः सामान्याद्विकाराः ।**

त एव स्वधर्माणः सामान्यात्तद्विकारश्चेष्टिपशुबन्धा ये सर्वेऽप्यविशेषेण दर्शपूर्णमासप्रकृतय एवोक्ताः । दर्शपूर्णमासौ प्रकृतिर्येषामिति विग्रहः । निर्वपतिना चोदिता इष्टय आलभतिना चोदिताः पशुबन्धाः । तत्र लिङ्गेनातिदेशोऽस्तीत्येतावदेव सिद्धमातिदेशप्रयोजकं तु सादृश्यं तच्चापूर्वे कर्मणि देवतासामान्येन हविःसामान्येन च । ततस्तु देवतासाम्यं यद्यप्यव्यापकं तथाऽपि हविःसामान्यं तु व्यापकमेव । यद्यपि चौषधत्वमाज्यत्वं दधित्वं पयस्त्वमेव जातिरूपं सामान्यमव्यापकं तथाऽपि तदसंभवे चोपाधिरूपं च सामान्यं सर्वत्र संभवत्येव । तच्च कठिनद्रव्यत्वेन कृष्णलेषु द्रवद्रव्यत्वेन मध्वप्सु च पूर्वं दर्शितमेव । तथा च सर्वेष्टीनामेकैकदर्शपूर्णमासप्रधानसामान्येन सादृश्यं व्यापकमतिदेशप्रयोजकमस्त्येव । पशौ च लिङ्गेनातिदेशे सिद्धे तत्रापि पशुप्रभवत्वेन सामान्येन सादृश्यं सर्वपशुबन्धसाधारणमतिदेशप्रयोजकमस्त्येव । प्रकृतित्वे प्रयोजकं चोपदिष्टसकलाङ्गवत्त्वम् । तच्च सर्वं दार्शपौर्णमासिकप्रधानानुगामयेव । विकृतित्वे प्रयोजकं सर्वेष्टिषु च दर्शपूर्णमासाङ्गहीनत्वमतो दर्शपूर्णमासप्रकृतय इष्टिपशुबन्धाः सर्वेऽप्यविशेषेणोपदेशदर्शितास्त एव स्वधर्माणस्तेऽपि न दर्शपूर्णमासधर्मैर्धर्मवन्तोऽतो दर्शपूर्णमासविकृतयः सन्तः स्वधर्माणोऽपि भवन्ति । ये स्वधर्मैः स्वधर्माणस्तद्धर्महीनानामेव प्रकृतयस्तद्धर्महीनाश्च तावत्यतिदेशलाभेन तावता च तद्विकृतयो न तु तद्विकृतय एव । दार्शपौर्णमासाङ्गानां तेभ्योऽतिदेशाभावात् । न चातिदिष्टाङ्गसहिताः स्वधर्माण एव संपूर्णातिदेशप्रयोजकाः स्युः । तथात्वे वा दर्शपूर्णमासानुष्ठानानन्तरमनुष्ठीयमाना विकृतिः सकलाङ्गपूर्णा तदनन्तरमनुष्ठीयमानाया(या) विकृतेः प्रकृतिः सा च तदनन्तरमनुष्ठीयमानाया इत्यापद्येत । न च तत्रातिदेशप्रयोजकं सामान्यं नियतमस्ति । न च सर्वपुरुषसाधारण्येनेष्टिपशुबन्धानामनुष्ठानक्रमोऽस्ति । तथा चाव्यवस्था स्यात् । क्रमानुष्ठितकर्मसु चातिदेशप्रयोजनं सामान्यं च दुर्लभमेव । तस्माद्दर्शपूर्णमासावेवाऽऽद्यौ सर्वेषां प्रकृतिः । तत्सामान्ये तदितरा विकृतिः सर्वाऽपीति लाघवम् । किं च विकृतिः स्वधर्माऽपि दर्शपूर्णमासातिदेशेनाङ्गानि प्राप्यान्यस्मै प्रयच्छतीति वाच्यम् । विशिष्टातिदेशेऽपि दर्शपूर्णमासातिदेशे बुद्धिस्थे सति पश्चात्स्वधर्मवैशिष्ट्ये बुद्धिस्थे सति पश्चाद्विकृतिविकृतिषु विशिष्टातिदेशस्तद्वरं सार्वत्रिक एकोऽतिदेशो द्वितीयः स्वधर्मविकृतेरपीति लाघवम् । विशिष्टातिदेशे चातिदेशयोर्विकृतिविकृतिषु

च पौर्वापर्यं च न सिध्यति। अतिदेशद्वये च पौर्वापर्यं सिध्यत्येव तच्चेष्टम्। कथम्। स्वधर्मविकृतिषु च कथंभावाकाङ्क्षासु पूर्वमतिदिष्टाङ्गानामन्वयः पश्चादुपदिष्टाङ्गानाम्। कथंभावो ह्युपकाराकाङ्क्षा। सा कृतोपकारद्वाराऽतिदिष्टान्येवाङ्गानि प्रथमं गृह्णाति। औपदेशिकेषु तु नाद्याप्युपकारः कृतः। उपदेशान्यथानुपपत्त्या च दृष्टार्थानामाकाङ्क्षयाऽङ्गिनि ह्युपकाराकाङ्क्षोत्थाप्या। तत उभयाकाङ्क्षया चाङ्गसंबन्धेऽवगते तेभ्य उपकारः कल्प्यः। दृष्टार्थेष्वप्यङ्गसंबन्धोत्तरकालं यथायोग्यं दृष्टोपकारकल्पना। तस्मादुपरिष्टानामङ्गानां पश्चादतिदिष्टेभ्य एवान्वयः। तेनैव क्रमेण कृतेन विकृतिविकृतिष्वप्यातिदेशयोः क्रमः सिध्यति सर्वसाधारणातिदेशस्य चाऽऽदौ बुद्धिस्थत्वात्। पश्चाद्विशेषसामान्येन पूर्वमदृष्टेनाधुनैव कल्प्येन विशेषातिदेश इति क्रमयोरतिदेशोऽपि सिद्धो भवति। अत एवाऽऽहुर्वृद्धाः—न हि भिक्षुको भिक्षुकाद्याचत इति। विकृतिर्हि भिक्षुकोऽत्यन्तो(न्यतो)ऽलब्धाङ्गत्वात्। स तु स्वपुष्ट्यर्थमेव चाङ्गानि लभते न तु परस्मै दातुमपीति न्यायार्थः। एवं नियतप्रकृतिविकृतिभावे च सिद्धे पौर्वापर्ये चाऽऽमिक्षा विकृतिविकृतिष्वपि चाङ्गव्यवस्था सिध्यति। तथा हि सर्वा अप्यामिक्षाः प्रातर्दोहविकृतयो दर्शविकारा भवन्ति। पश्चाद्वैश्वदेवामिक्षा स्वधर्मा तस्यां व्युद्धरणाद्यङ्गजातस्य हौत्रस्य चास्मच्छाखायां विधानात्। दाक्षायणयज्ञे चाऽऽमिक्षाऽपि स्वधर्मा। तथा च तां प्रकृत्याऽऽह कात्यायनः—तत्रैव दोहनं शृते वा दध्यानयति। वाजिनं निषिच्योत्करे करोत्याज्यलिप्तं वा प्रहृत्य तृणं तेन प्रचरति विमुच्य वा स्रुचौ बर्हिरवसिञ्चन्गृह्णाति। तद्धर्मेषु रेतो दधातीति श्रुतेरिति। अस्मत्सूत्रकृता तु स्वशाखानुसारेण दाक्षायणयज्ञामिक्षाधर्मोपदेशोऽपि वैश्वदेव्यामेव व्याख्यातः। यथाऽग्नीषोमीयादिपशुधर्मोपदेशो निरूढ एवैवमिहापि। एवं च दाक्षायणयज्ञामिक्षायां वैश्वदेव्यतिदेशेन नवप्रयाजादिप्राप्तमपि तस्यां दर्शशब्दवाच्यायां पञ्चप्रयाजादिकेनौपदेशिकेन बाध्यते। तथा पञ्चप्रयाजादिकं वैश्वदेव्यामतिदेशेन प्राप्तं नवप्रयाजादिकेनोपदेशेन बाध्यते। तथैव वरुणप्रघासामिक्षयोरपि। तत्राप्येतद्ब्राह्मणान्येव पञ्च हवींषि भवन्तीति पञ्चानां नवप्रयाजादिकं वाचनिकातिदेशेन प्राप्तं तेषां भूयस्त्वादामिक्षयोरपि पञ्चप्रयाजादिकं तेन बाध्यते। इतरामिक्षासु वैश्वदेव्यतिदेशान्नवप्रयाजादि प्राप्नोति दाक्षायणयज्ञामिक्षातिदेशेन पञ्चप्रयाजतादि प्राप्नोति। तथा दर्शपयोविकारत्वेनापि पञ्चप्रयाजतादिकं प्रथमत एव प्राप्तमुपजीव्य दाक्षायणामिक्षातिदेश एव प्रबल इति पञ्चप्रयाजादिकं सिध्यति। सोमे सवनीयामिक्षासु तु पशुबन्धस्य सवनीयस्यैकादशप्रयाजादिना तन्त्रेण स्थानिना सवनीयपुरोडाशानामप्युपकुर्वता न तन्त्रं बाधितमेवेति ज्ञेयम्।

एवं दार्शपौर्णमासिकानि प्रधानानीत्यादिनाऽतिदेशं(श)बलाबलमुक्त्वाऽतिदेशाप-

कर्मसंयुक्तानि द्रव्याणि प्रकृतौ तत्संयोगाद्धर्मं लभन्ते कर्मण्यविद्यमाने सहधर्मद्रव्यं निवर्तते ।

अथातिदिष्टाङ्गबाधो द्वाराभावादर्थवत्तावदत्रसूत्रे तत्स्थानेऽङ्गान्तरविधानात् । प्रतिषेधादेतौ क्रमेण द्वाभ्यां सूत्राभ्यामग्रिमाभ्यामुच्येते । कृष्णलेष्टावनौषधद्रव्यासिद्धिषु चिन्त्यते—किमविशेषेण स्फ्यादिद्रव्याणामङ्गता तद्धर्माणां च, अथवा विशेषेणोपयुक्तानामेव कर्मणीति । तत्र स्फ्यादीनां यज्ञायुधत्वेन संस्तवाद्येषां दृष्ट उपकारो नास्ति तेषामदृष्टार्थत्वेनाङ्गता ततस्तद्धर्माणामपि तथेति प्रकृतिवद्विकृतिः कर्तव्येत्यतिदेशेनाविशेषण प्राप्तानि कपालशूर्पादीनि विहायाङ्गहीनेष्टिः कथं फलं साधयेत् । ततस्तान्यप्यङ्गानीति प्राप्तेऽभिधीयते कर्मसंयुक्तानीत्यादिनोत्तरम् । कर्मसंयुक्तानि द्रव्याणि प्रकृतावङ्गत्वेन विधीयन्ते न स्वरूपेणेति शेषः । अयमर्थः—साङ्गे यज्ञे त्रिभिर्वेदैर्विधीयमाने तु न किंचिदपि विधिना त्वपरिगृहीतं प्रधानं चाङ्गं चास्ति । न च केवले द्रव्ये विधिः संभवति । विधिर्हि कर्तव्यतामावेदयन्कर्तव्यस्येष्टसाधनतां वेदयति । न च द्रव्यं सिद्धं कर्तव्येनाऽऽवेदयितुं शक्यते । येनेष्टसाधनतया चानियतौ चापूर्वजननद्वारेष्टसाधनं स्यात् । न च विधिं विनाऽऽन्यत्कर्मकाण्डे प्रमाणमस्ति, अत एवोक्तं विधिलक्षणानि कर्माणीति । न चैवं सति द्रव्याणामविधेयत्वादनङ्गत्वादनङ्गत्वमेवेति वाच्यम् । कर्मसंयुक्तान्येव द्रव्याण्यपि विधेयानि । यद्यपि स्वरूपेणासाध्यानि । तथाऽपि क्रियासंयुक्तानि तया साधनभूतत्वेन क्रियानिष्ठानि भवन्त्येव साध्यानि । अतस्तु सर्वत्रापूर्वसाधनत्वेन क्रियाया अपि विधेयत्वेन श्रेयःसाधनत्वं न स्वरूपेणापि । स्वरूपमात्रस्य प्रमाणान्तरगम्यत्वादनधिगतार्थगोचरस्य विधेः कर्मस्वरूपमपि विषयो न स्यादित्युक्तमेव । अत एव जैमिनिः(निना) भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतेति क्रियाया एवापूर्वसाधनत्वमुक्तम् । तद्भूतानां क्रियार्थेन समन्वय इति यदेकस्मादपूर्वं तदितरेस्तदर्थमिति वदञ्जैमिनिः क्रियात एवापूर्वं तत्संबन्धाद्द्रव्येभ्योऽपीत्युक्तवान् । अपूर्वजनकत्वेनाङ्गता प्रधानता च न स्वरूपेणेत्यसकृदुक्तम् । ततस्तु साक्षाद्वा परम्परया वा त्वपूर्वोत्पादके कर्मण्यविद्यमाने तत्साधनत्वमात्रेणाङ्गद्रव्यमपि तदनङ्गं सन्निवर्तत इत्याह कर्मण्यविद्यमाने द्रव्यं निवर्तते । न च कृष्णलेषु कपालशूर्पादिसाध्यं कर्मास्ति । न च प्रकृतौ कपालशूर्पादिकमदृष्टार्थं कर्मसाधनत्वेन क्लृप्तमस्ति किं तु दृष्टार्थं कर्मसाधनतया क्लृप्तं कपालशूर्पादि । तद्धि नियमापूर्वसाधनमिति विधेयम् । ननु तर्हि कपालशूर्पादीनां प्रक्षालनसंमर्शनप्रोक्षणसाधनत्वेनाङ्गत्वात्प्रयोगोऽस्त्विति चेत् । तत्राऽऽह—प्रकृतौ तत्संबन्धाद्धर्मं लभन्ते कर्मण्यविद्यमाने सहधर्मद्रव्यं निवर्तत इति ।

---

१ ख. छ. समाम्नाय । २ छ. °रत्तद° ।

न ह्यत्र प्रकृतौ प्रक्षालनादि साधनत्वेन द्रव्यं विधीयते पात्राणि प्रक्षालयेत्यादिना द्विती-याश्रुत्या प्रधानत्वेनोद्देश्यत्वप्रतीतेर्न साधनता प्रक्षालनादिक्रियां प्रति द्रव्याणां किंतु कर्मत्वेनोद्देश्यत्वम् । कर्तुरीप्सिततमं कर्म कर्मणि द्वितीयेति पाणिनिस्मरणात् । तथा चेप्सिततमत्वमपूर्वार्थकर्मणां साधनत्वेन वाच्यम् । तत्साधनता कपालेष्वधिश्रयतीत्या-दिना कपालशूर्पादिषु चाधिश्रयणोद्वपनादिविधानात्साधनता तेषां प्रतीयते । तत्साधन-त्वेनेप्सिततमत्वात्कर्मत्वं प्रक्षालनादिकर्माणि प्रति । अतः प्रक्षालनादीनां साधनत्वं नास्ति किं तु तत्तत्साध्यक्रियासंबन्धाद्धर्मं प्रक्षालनादिरूपं लभन्ते द्रव्याणि । धर्मश-ब्देन संस्कारकर्मत्वेनाङ्गत्वमुक्तं द्रव्यं प्रति । ततस्तु द्रव्यं चेदन्यत्रोपयुक्तं तर्हि संस्कारमर्हति नान्यथा । भूतभाव्युपयोगं हि द्रव्यं संस्कारमर्हतीति न्यायात् । संस्कार-कर्मणां न साक्षादपूर्वोत्पादकत्वं येन विधेयत्वमङ्गत्वेन स्यात् । किं तु यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेतेति जैमिन्युक्तन्यायेनापूर्वोत्पादकत्वं किं तु साक्षात्प-रम्परया वा तदपूर्वोत्पादककर्मसाधनेषु दृष्टमुपकारं जनयन्त्यपि नियमद्वारा वाऽऽधेयश-क्तिलक्षणादृष्टमपि द्रव्येषु जनयन्ति । प्रोक्षणादेः केवलमदृष्टमेव जन्यं द्रव्ये द्रव्यं चादृष्टशक्तिमत्साक्षादपूर्वसाधनीभूतां क्रियां साधयति । यथा प्रयाजादिरूपाङ्गाणां द्रव्यं किंचिद्द्रव्यं तु परम्परयाऽपूर्वसाधनीभूतक्रियासाधनक्रियां प्रत्यङ्गं सत्तद्वारा वा दृष्टश-क्तिमदपूर्वसाधनक्रियां साधयति यथा प्रक्षालनादिसंस्कृतद्रव्यं चापूर्वसाधनप्रधान-क्रियासाधनीभूतावहननादिकं साधयदपूर्वसाधनक्रियां साधयति । न च कृष्णलादिद्रव्यं चावहननादिकं क्लृप्तदृष्टोपकारकमर्थयतेऽतिदेशेनादृष्टोपकारस्य च तेभ्योऽक्लृप्तत्वात् । तस्मादक्लृप्तोपकाराणि कर्माणि निवर्तन्तेऽतस्तत्साधनानि द्रव्याणि च निवर्तन्ते तद्द्रव्यसं-स्कारकर्मापि स्वाश्रयाभावान्निवर्तते । विकृतिर्हि । न प्रकृत्यतिदेशेनाङ्गानि गृहीत्वा यथोचितं दृष्टमदृष्टं चोपकारं गृह्णाति किं तु दृष्टमदृष्टं चोपकारमाकाङ्क्षमाणा तद-र्थान्यङ्गानि गृह्णाति । तत्राऽऽरादुपकारकाणामदृष्टोपकारजनकानामङ्गानामेवाविशेषेण ग्राहिका सती यावदपेक्षितदृष्टोपकारकाण्येव संनिपत्योपकाराणि गृह्णाति न तु निष्प्र-योजनान्यपि । तस्मान्निष्प्रयोजनानि द्रव्याणि निवर्तन्त एवं संस्कारा अपि निष्प्रयो-जना निवर्तन्त इति । सूत्रार्थः ।

उदाहरति—

**यथा कृष्णलेष्ववहननम् ।**

यो मृत्योर्बिभीयात्तस्मा एतां प्राजापत्यां शतकृष्णलां निर्वपेदिति कृष्णलानां सौवर्णानां कठिनद्रव्यत्वेनौषधविकाराणामपि वितुषीकरणलक्षणदृष्टसंस्कारानपेक्षणादव-हननं निवर्तत इति शेषः । कर्मण्यविद्यमाने सह धर्मद्रव्यं निवर्तत इति पूर्वसूत्रादनु-षङ्गः ।

ननु चर्विष्टौ कपालेष्वपि ग्रहणे निवृत्ते कपालानि सधर्मकाणि निवर्तन्ते तथा श्यामाकेष्टौ व्रीहिनिर्वापे निवृत्ते व्रीहिषु सधर्मकेषु निवृत्तेषु स्थाल्यां श्यामाकेषु च तद्धर्मा न स्युरत आह—

अन्यस्मिंश्च द्रव्ये तेनार्थेन संयुज्यमाने धर्मावेशः ।

प्राकृताद्द्रव्यादन्यस्मिन्द्रव्ये तेन प्राकृतेन प्राकृतद्रव्यसाध्येनार्थेनापूर्वप्रयोजनवता कर्मणा संयुज्यमानेऽङ्गत्वेन विधीयमाने तत्रापि धर्माणामावेशोऽतिदेशेन प्रादुर्भावः । अयमाशयः—न ह्यत्र पाकनिवृत्त्या कपालनिवृत्तिः किं तु सामर्थ्यसिद्धया स्थाल्या कपालस्थानापन्नया पाको हि चरोः प्राप्तः । तत्रापूर्वसाधनीभूता क्रिया न निवृत्ता । तस्याश्च साधनं जात्यन्तरविशिष्टमपि प्राप्तं, तत्स्थानापन्नं तद्बाधकं च तदेव पाकजन्यापूर्वसाधनतयाऽङ्गं तस्मिन्नेवापूर्वप्रयुक्ताङ्गे धर्मा अपि भवन्त्येव । एवं पाणिनिः स्थानिवदादेश इत्याह—अन्यथा तदपूर्वमेव तस्मान्नोत्पद्येतेति ।

उदाहरति—

स्थाल्यां कपालधर्मः श्यामाकेषु व्रीहिधर्मः ।

अतिदिश्यत इति शेषः । अप्राकृतेऽपि द्रव्येऽतिदेशनिरूपणमनेन स्पष्टम् ।

द्रव्यसाध्यक्रियाया अनिवृत्तौ तत्स्थानापन्ने द्रव्यान्तरेऽपि धर्मातिदेशे चातिप्रसङ्गमाशङ्क्याऽऽह—

यज्ञोत्पत्तौ प्रतिषिद्धे सर्वं प्रतिषिध्येत ।

यज्ञाय यज्ञकर्मणोऽङ्गभूतात्कर्मण उत्पद्यतेऽथवा यज्ञाय प्रयोजनायोत्पद्यते तत्तथा । द्रव्य इत्यनुवर्तते । उत्पत्त्या प्रयोजनयोग्यताप्राप्तिर्लक्ष्यते ।
यस्मात्कर्मणे द्रव्यं संस्कृतं प्रयोजनयोग्यं भवति तत्कर्मविशिष्टद्रव्ये प्रतिषिद्धे तत्साध्यं प्रयोजनमपूर्वसाधनीभूतं कर्म तत्प्रयुक्तम् । अन्यदपि धर्मजातमपि प्रतिषिध्येत । यूपो हि खातमानलक्षणेन कर्मणोत्पद्यते यज्ञप्रयोजनाय पशुनियोजनाय योग्यत्वेन प्राप्यः प्राप्तिविशिष्टे तस्मिन्प्रतिषिद्धे संस्कारा अपि प्रतिषिद्धेयुः । न च न दध्यधिश्रयतीतिवन्मानमात्रं प्रतिषिद्धमन्यसंस्कारविशिष्टं न प्रतिषिद्धं तत्र नियोजनमपि न प्रतिषिद्धमिति मानं विनाऽन्यैः संस्कारैः संस्कृतैः परिधावुल्मुके बर्हिषि वा पशुनियोजनमस्त्विति वाच्यम् । यद्येवं तर्हि यूपस्थानापन्नेषु परिध्यादिष्वेव न मिन्वन्तीत्येतावदेव वक्तव्यम् । यूपग्रहणमनर्थकम् । न च यूपवन्न मिन्वन्तीत्यर्थो भवेदिति वाच्यम् । परिध्यादिषु पशुप्रयोजनयोग्यतास्वरूपमपि भज्येत । अतः स्वस्वरूपप्रयुक्तरूपाबाधेनैव पशुनियोजनं तेषु विधीयत इति मानं स्वत एव निवृत्तं किमर्थं प्रतिषेधस्तस्माद्यूपस्य सकर्मकस्य प्रयोजनस्य स्थानिन एव प्रतिषेध इति द्रव्यान्तरमपूर्वमेव विधेयम् । न च तस्योपदेशातिदेशाभ्यामन्ये संस्काराः स्युः । प्राकृतद्रव्यप्राप्तौ तत्स्थानिनस्तु तत्संस्काराः

प्राप्नुवन्ति नान्यथा। तस्य प्रतिषेधादतिदेश एव प्रतिषिद्धः। उपदेशस्तु नास्त्येव। यद्यपि नियोजनं प्राकृतं स्यात्तत्रातिदेशेन तथाऽपि न ते नियोजनसाधनमात्रप्रयुक्ता अन्यथा नियोजनसाधनेऽध्वर्यावपि प्रसज्येरन्। अतो यूपप्रतिषेधे यूपधर्माः प्रतिषिद्धा एव। उत्तरवेदिर्हि प्राकृताहवनीयस्थाने विधीयते। तस्याः प्रतिषेधे च प्राकृताहवनीय एव होमाधिकरणत्वेन। आहवनीय इति संज्ञया यदाहवनीये जुहुतीति श्रुत्या च यथा प्रकृत्यर्थत्वेन प्राप्तस्तथा विकृत्यर्थेनापि प्राप्त एव विधिना कल्पिते नानारभ्याधीतेन। तथा च तस्मिन्नप्यतिदेशाभावोत्तरवेदिधर्माणां नियोजनमपूर्वद्रव्यान्तरविशिष्टं विहितं तत्र नातिदेशप्राप्तिः। अत्र यद्यप्याहवनीयायतनं न विहितं तथाऽपि सामर्थ्यात्संज्ञयैव प्राप्तमपूर्वमेव। न हि सोमाहुतिषु होमाश्रयत्वेनाऽऽहवनीयायतनं प्राप्तमस्तीति पूर्वेण समानन्यायं सोमचातुर्मास्येषु प्रथमे वैश्वदेवपर्वणि श्रूयते त्रिवृदग्निष्टोमो वैश्वदेवः पशुः सवनीयो बार्हस्पत्यानूबन्ध्या।

न यूपं मिन्वन्ति नोत्तरवेदिमुपवपन्ति।

परिधौ पशुं नियुञ्जन्त्युल्मुके बर्हिषि वेतीष्टिचातुर्मास्येषु वैश्वदेवपर्वणि नोत्तरवेदिमुपवतीति व्याख्यातमेतत्।

इदानीं यत्र प्रतिषेधो नास्ति तत्रोभयापूर्वप्रयुक्ता धर्मा विकल्पेरन्निति प्राप्त आह-

अन्यस्मिꣳश्च द्रव्ये तेनार्थेन संयुज्यमाने धर्मावेष उत्करे वाजिनमासादयन्त्यश्वे पशून्नियुञ्जन्ति परिधौ पशून्नियुञ्जन्ति।

अन्यस्मिन्निति सूत्रेणान्तरितेनैवार्थसिद्धौ सत्यामप्युभयापूर्वप्रयुक्ता उभयेऽपि संस्कारा भवन्त्येव। न हि स्वरूपयुक्ता धर्मा अपि त्वपूर्वप्रयुक्ता अपूर्वं च कर्मभेदेन भिद्यतेऽत उभयकर्मापूर्वप्रयुक्ता अन्यतरेण्वकृतेषु नोभयापूर्वोत्पत्तिं वक्तुं पुनः सूत्रारम्भः। अन्यस्मिन्द्रव्येऽन्यापूर्वयुक्तसंस्कारसंस्कृतेऽपि तेनार्थेन प्रयोजनान्तरेण संयुज्यमाने प्रयोजनान्तरापूर्वप्रयुक्ता धर्मा भवन्त्येव। प्रथमपर्वणि वाक्यमुत्करे वाजिनमासादयतीति। तथाऽश्वमेधेऽश्वे पशून्नियुञ्जन्तीति गतार्थमेतत्।

एवमतिदेशनिरूपणं व्याख्याय विकृतिविषय एव विशेषानुष्ठानन्यायान्तराणि दर्शयति विकल्पेरन्नविकल्पो वेत्यन्तेन।

सामिधेनीषुं वर्धमानासु ॥२१॥ काष्ठानि वर्धन्ते सꣳह्रियमाणासु यथाप्रकृति।

समिध्यमानोऽग्निर्याभिः प्रकाश्यते ता ऋचः सामिधेन्यस्तासु कामेन वर्णविशेषेण विकृ-

१ क. ख. ग. घ. छ. ज. झ. ञ. ट. ठ. ण. °यत्यश्वे। २ क. ख. ग. घ. छ. ट. ठ. ण. पशुं नियुञ्जन्तीति। अ°। ३ क. ङ. च. झ. ञ. ट. °षु विव°।

तिविशेषेण वा सप्तदशानुब्रूयादित्यादिविधिभिर्वर्धमानासु पञ्चदशभ्योऽधिकासु विधीयमानासु तासां प्रणवे प्रणवे निधीयमानानीध्मकाष्ठानि समिधस्तत्संख्यया कार्याणि । यद्यपि न सामिधेन्यङ्गानि काष्ठानीति वर्धन्ते प्रधानानुरोधेनेति न भवति तथाऽपि सामिधेनीनामुपकारकाणि भवन्ति । कथम् । उच्यते–समिधं गृहीत्वाऽग्नौ प्रक्षिपति । प्रणवे तावत्समिध्यमान इत्युच्यत इत्युक्तमेव नहि तया गृहीतयाऽनारब्धे समिन्धनेऽग्नेः समिध्यमानत्वं, यद्वा प्रतिसामिधेनीत्ययं पक्षोऽन्ययोः पक्षयोः पूर्वं निहितसमिधैकैकयैव समिध्यमानः प्रकाश्य एकैकया सामिधेन्या न तु बह्वीभिः समिद्भिरिध्यमान एकैकया प्रकाश्यः पञ्चदशेध्मदारूण्यभ्यादधातीत्यादिना विहितैकविंशतिसंख्याकेध्मकाष्ठानां प्रत्येकं कर्मणि विनियोगात् । तथैकया समिध्यमान एकया प्रकाशितो नान्यया प्रकाश्यते । हौत्रे मन्त्रसमुच्चयोऽप्यनेकोद्देश्यत्वासंभवे न तु सर्वत्र । तस्मात्प्रतिसामिधेन्यैकैकस्या एव समिध उपकारकत्वात्तदुपकाराय समिधोऽपि वर्धन्ते । नत्वे(न्वे)वं तिस्र एव सामिधेनीरन्वूच्येत्यत्रैकामन्वाहेत्यत्र च समिधां ह्रासः स्यादत उक्तं संह्रियमाणास्विति । प्रकृतौ दृष्टा संख्याऽऽधिक्ये न बाध्यते ह्रासे तु बाध्येत तद्बाधो मा भूदिति यथाप्रकृतिपञ्चदशैवाभ्यादधाति । एकया समिध्यमान एकया प्रकाश्यत इति नियमो बाध्यते वचनान्महापितृयज्ञ एकामन्वाहेत्यत्र त्रेधेध्मं विभज्येति स्वयमेव वचनं दर्शयिष्यति । तथोपसत्सु तिस्र एव सामिधेनीरनूच्येत्यत्र च नवधेध्मं विभज्येति दर्शयिष्यति । पठ्यते सौत्रे एव वचने तथाऽपि श्रुतपञ्चदशसंख्याबाधो न सामर्थ्येन कर्तुं शक्य इति न पञ्चदशत्वबाधः ।

## यथार्थमूहः ।

विकृतौ कार्य इत्यध्याहारः । काष्ठविवृद्धौ मन्त्र ऊहनीय एकविंशतिधेत्ययमित्यूहस्य बुद्धिस्थत्वे व्याख्यायते । यथाऽर्थो विद्यते कर्मणि समवेतस्तथोहोऽर्थाभिधायकपदप्रयोगो लौकिको मन्त्रे कार्यः । ननु कथं लौकिकपदप्रयोगेण मन्त्राऽऽम्नानाभावान्मन्त्रपदेन योगेन लक्षणया चार्थप्रकाशनसंभवादिति चेत् । उच्यते—विकृतौ मन्त्रोऽतिदेशेनाऽऽनुमानिकेन प्राप्नोति न श्रुत्या यथापदिष्टं ब्राह्मणवन्त इत्यत्र परिभाषितत्वात् । अश्रुतिप्राप्ते तु यदि नाभिधा प्रभवति तदा पदमनर्थकमुत्कृष्य तत्स्थाने समर्थं लौकिकं प्रयोक्तव्यम् । तत्रार्थप्रकाशनं दृष्टप्रयोजनं सिध्यति न मन्त्रेणैव प्रकाशनमिति नियमाभावमात्रमापतति । मन्त्रपदे त्वसमर्थे न प्रकाशनं नापि तद्द्वारको नियम इति द्वयमपि बाध्येत । किंच न पिता वर्धनं न मातेति हौत्रेऽन्वेनं माता मन्यतामनु पितेति मन्त्रे तस्मादेवं नोहेदिति चोहप्रतिषेधादन्यत्रोह इति मीमांसातो विस्तरतो ज्ञेयम् ।

## न प्रकृतावूहो विद्यते ।

यदि मन्त्रः प्रकृतावेवासमर्थस्तदा श्रौतविनियोगानुसारेण कयाऽपि विवक्षया समर्थनीयः

क्वचित्प्रकृत्यन्तरे पदलोपो वा विकृतिमात्रगामित्वं चेत्यादि ज्ञेयम् । सर्वथाऽप्यसमर्थे क्वचित्समर्थं पदमभिधया क्वचिद्वृत्त्यन्तरेण समर्थं स्यात्प्रकृत्यर्थो मन्त्रस्तत्रासमर्थोऽ- न्यत्र समर्थः स्यादिति न प्रकृतावूहः ।

पत्नी॰ संनह्योपहूतोऽयं यजमान इति ।

बहुपत्नीकयजमानेऽष्टौ पत्नीं संनह्येति मन्त्रे बहुवचनान्तत्वेन नोहः । पत्नीत्वजातेः पदार्थत्वेन समर्पणीयत्वात् । पत्नीसंयाजेषु चोपहूतोऽयं यजमान इति याजुषे होत्रे नोहः । लिङ्गाविवक्षयाऽधिकारिमात्रविवक्षया समर्पणीयत्वादित्याशयः । श्वो यज्ञाय रमतामित्यत्र सद्यस्कालपूर्णमासे बाधोऽपि श्वः पदस्येत्यादि ज्ञेयम् ।

तथोत्तरस्यां ततौ यथासमाम्नातम् ।

उत्तरततौ विकृतौ यः प्रकृतौ नोहितो मन्त्रः स विकृतावपि तेनैव प्रकारेण समर्प- णीयो न तूहनीय इति तथा यथा प्रकृतौ यथासमाम्नातं यथाप्रकृतिपाठं पौर्णमासतन्त्रस- द्यस्कालविकृतावपि श्वःपदेनाद्येतिपदमूह्यं प्रकृतिपाठेन लुप्तपदेनैव प्रयोग इति च ज्ञेयं समानन्यायत्वात् ।

प्रतिनिधिष्वर्थलुप्तानि न क्रियेरन्यथा
लूने लवनमन्त्रश्छिन्ने छेदनमन्त्रः ।

प्रतिनिधिषूहो नास्तीति द्वितीयप्रश्नप्रथमपटलान्त उक्तमत्र नोक्तम् । अत्र तु मन्त्रा- णामूहप्रसङ्गेन बाधोऽप्युच्यते भरद्वाजादियजुष्क्रियापक्षप्रतिक्षेपार्थम् । अर्थलुप्तानि दृष्टं प्रयोजनमर्थस्तस्माल्लुप्तानि कर्माणि द्रव्याणि यजूंषि वा न क्रियेरन्न प्रयुज्येरन्स्वयं कृता यथा बर्हिषि प्रतिनिधित्वेन गृहीते पूर्वमेव तथा यूपे छिन्ने लवनच्छेदनप्रकाशक- योर्मन्त्रयोर्नप्रयोग एवं लवनच्छेदनाद्यपि दृष्टार्थत्वेन क्लृप्तं तदभावे तेषु न कार्यम् ।

यत्र पयः श्रपणार्थेन श्रूयते देवस्त्वा
सवितोत्पुनात्वित्युत्पवनं संनमति पयो
देवाग्रेष्वग्र इत्यभिमन्त्रणमेवमाज्ये ।

यत्रेष्ट्यां हविः श्रपणप्रयोजनेन पयो दुग्धं विधीयते तत्र देवस्त्वेत्यूहेनोत्पवनमुत्पू- यतेऽनेन मन्त्रेण तं परिणमयति । विभक्त्यूहमुक्त्वा पदोहार्थं पयो देवा इत्याद्युक्तम् । अभिमन्त्र्यतेऽनेनेत्यभिमन्त्रणं मन्त्रमिमं यज्ञं नय यज्ञपतिं धेहि त्वामिन्द्रः त्वमिन्द्रमवृणी- थाः प्रोक्षितमसीत्यवशिष्टमूह्यः । आज्यं देवा इत्याज्ये श्रपणार्थेन श्रूयत इति शेषोऽन्य- स्पयोवत् । प्रणीताधर्मेण संस्कारप्राप्ताविदमुक्तम् । तत्रेदं चिन्त्यते—कथं प्रणीताधर्म- प्राप्तिर्न तावत्पयः प्रणयत्याज्यं प्रणयतीति श्रूयते नापि संयवनार्थत्वेन श्रवणं येन संयवनार्थानामपां प्रयोजनसंबद्धत्वादन्यस्मिन्द्रव्ये तेनार्थेन संयुज्यमाने धर्मावेश इति

प्राप्नोति । संयवनं श्रपणं भवति पिष्टेष्वानयतीति पिष्टाश्रितसंयवनार्थत्वेन मदन्तीनामेव श्रुतत्वान्न च मदन्त्यर्थे प्रणीताग्रहणे विधिरस्ति । तस्मान्न श्रपणार्थता प्रयोजनमिति । तत्र सिद्धान्तः सूत्रकारेण यत्र पयः श्रपणार्थेनेति वदता प्रणीताभिर्हवींषि श्रपयतीति श्रुतिमूलं प्रणीताविनियोगेऽङ्गीकृतं पिष्टेषु संयवनार्थं प्रणीता एव विहिता इति च ज्ञापितम् । प्रकृतौ पिष्टान्येव श्रपणीयानीति तथोक्तम् । व्यक्तमापस्तम्बेनोक्तम्—प्रणीताभिः संयौतीति । संयवनेन पिण्डो भवति तस्य च पाक इति संयवनं पाकार्थमेव ।

चरुकल्पान्व्यास्यामः ।

प्रकृतितोऽप्राप्तमूहं विकृतौ व्याख्यायेदानीं तथैवान्यानपि प्रकृतितोऽप्राप्ताञ्चरौ धर्मान्व्याख्यातुं प्रतिज्ञा न्यायमूलत्वख्यापनायाऽव्याख्याने त्वप्राप्तेः । कल्पान्न्यायकल्पितान्धर्मान् ।

स्थालीं कपालानाᳬ स्थाने प्रयुनक्ति ।

स्थाली लोकप्रसिद्धा कपालानां स्थाने कपालानामतिदेशप्राप्तानां चरुपाकासमर्थानां स्थाने तत्प्रयोजन उद्देश्ये पात्रप्रयोगकाले प्रयुनक्त्युत्तरसंस्कारानपि तुल्यान्कपालवदित्यर्थोऽन्यस्मिन्निति तत्सूत्र उदाहृत एव ।

तस्य प्रसिद्धमात्रिष्फलीकृतेभ्यः ।

तस्य चरोः समासे निविष्टस्यापि बुद्ध्याकृष्टस्य तस्येति निर्देशः । तस्य संबन्धिभ्योऽतिदिष्टेभ्यस्तण्डुलेभ्यस्त्रिष्फलीकृतेभ्योऽभिव्याप्य प्रकृतित एव सिद्धं प्राप्तं कार्यमिति शेषः । प्रक्षालननिनयनान्तं त्रिष्फलीकरणेन लक्षितम् ।

प्रथमेन कपालमन्त्रेण स्थालीमुपधाय ।

प्रथमेन ध्रुवमसीत्यनेन ध्रुवासीत्येवमूहितेन । कपालमन्त्राणामनेकत्वादनेके विकल्पेन प्राप्तास्तत्र प्रथमेनैवोपधानम् । स्थाली प्रथमा प्रथमकपालधर्मेणोपधेया । कृतप्रयोजना इतरे निवर्तन्ते । उपधायेति पूर्वसंस्कारसाहित्यं यथाप्रकृतीति दर्शितम् । उपवेषादिनाऽङ्गारनिर्वर्तननिरसनावस्थापनानि पूर्वाङ्गाण्यपि । उपधानानन्तरमुपर्यङ्गाराध्यूहनमुपरितापार्थं नास्ति चरौ तस्य प्रयोजनाभावादित्यावेदयितुमुपधायेति ल्यपा निर्दिशति ।

शूर्पादेव तण्डुलान्समोप्योत्पूयाधिश्रयणमन्त्रेणोप्य पर्यग्निकृत्वा श्रपयित्वाऽभिघार्य स्थाल्यैवोद्वासयति ।

पदार्थानुपूर्वीकथनं विशेषप्रदर्शनार्थं मध्ये पदार्थनिवृत्त्यर्थं च । शूर्पादेवेति कृष्णाजिनव्यवधाननिवृत्त्यर्थं ज्वलनपर्यन्तं भाष्यकृता त्वङ्गीकृतमेव । तदुपरि न भवेदपि तु परितः सामर्थ्यात् । संवपामीत्यन्तेन तिरःपवित्रं पात्र्यामुत्पूय हर्योस्त्वेत्यनेन । प्रणी-

१ ख. क. ज. झ. म. ट. 'श्रेणाधिश्रित्य प'।

तानामानयनं मदन्तीभिः संयवनं च समोप्य नाङ्गारापोहनं घर्मोऽसीति मन्त्रः कपालेषु पाकार्थमधिश्रयणलक्षणावस्थापनार्थं तेनोप्यावधाय स्थास्यामित्यर्थात् । घर्मशब्दे तद्विशेषणे विश्वायुः शब्देऽपि नोहो घर्मत्वेन हविष एव संस्तुतत्वात् । प्रथनपरिमार्जने न स्तः । पर्यग्नि कृत्वाऽन्तरितमित्यनेनाभिज्वलनमुपरिज्वालाकरणं दृष्टार्थमेव व्याख्यातम् । तदत्रोपरिपाकासंभवान्न स्यात् । सं ब्रह्मणेत्यपि विरोधान्न स्यात् । नाभिज्वलयति दर्भैः । अस्त्यग्निस्त इति । सं ब्रह्मणेति नास्ति । अविदहन्ते(न्त इ)त्यस्ति श्रपयित्वेति अग्निस्त इत्युल्मुकैः प्रतितप्यैवं श्रपयित्वेत्यर्थः । प्रायोगिकास्तूपधानानन्तरमेव तूष्णीं प्रणीता आनयन्ति भाष्यकृत्संमतं च । तथात्वेऽप्यत्र समोप्योत्पूय समन्त्रमानयनं कर्तव्यमेव न पूर्वमेवाऽऽनयने मन्त्र इति वाच्यम् । संमृजध्वं संपृच्यध्वमिति लिङ्गविरोधात् । अविदहन्तः श्रपयतेति संप्रेष्यत्यत्र वाचं विसृजत इत्यस्त्येव । अङ्गुलिप्रक्षालनपात्रीनिर्णेजनयोरभावान्न निनयनमेकतायेति । वेदिकरणादि यथाप्रकृति विष्णूनीत्यन्तम् । इदमहमिति नास्ति । सूर्यं ज्योतिरित्यस्ति । स्योनं त इति नास्ति । अभिघार्येति यथा प्रकृत्याऽऽप्यायतामिति तूष्णीं वा । स्थाल्यै वोद्वासयति । आर्द्रः प्रथस्नुरिति मन्त्रेणाभिन्दन्नपर्यावर्तयन्नित्युद्वासन उक्तत्वान्मध्यादिदेशभेदलोपमिया च स्थाल्येत्युक्तम् । एवकारस्तु तस्मिन्सीदेति पाठ्यामुद्वासनप्रतिषेधार्थः ।

पुरोडाशेन पुरोडाशगणे ।

केवलेन पुरोडाशेन पुरोडाशजातीयेनान्येनानन्तरितेन त्र्यादिगणे समुदाये सति ।

यथाभागं व्यावर्तध्वमित्येकैकं पिण्डमपच्छिनत्ति यथाभागं व्यावर्तेथामित्यवशिष्टौ ।

त्रिषु सकृदेवान्येषु यावद्द्वाववशिष्येते तावद्बहुवचनान्तमन्त्रप्राप्त्यर्थं वीप्सैकैकमिति । पिण्डं पिण्डभागं पृथक्करोति । द्वयोरवशिष्टयोर्यथाभागं व्यावर्तेथामिति द्वौ पृथक्करोति ।

तयोरेव देवतादेशनम् ।

तयोर्न पूर्वेष्वपि । इदममुष्मा इदममुष्मा इति स्वशाखीयानाममुष्मै त्वाऽमुष्मा इति वा । पूर्वेष्वपच्छेदक्रमेण प्रथमादिदेवतार्थत्वेन क्रमेऽवगतेऽन्त्ययोर्युगपदवच्छेदक्रमाभावात्क्रमेणाऽऽदेशनं कार्यम् ।

चरुपुरोडाशयान्प्रागधिवपनाद्विभज्येरंस्तत्र विभागमन्त्रं जपति समान्द्वैधं करोति विषमान्यथाभागम् ।

चरुपुरोडाशार्थनिरुप्ता देवस्य त्वेत्यनेनाधिवपामीत्यन्तेनाधिवपनं तस्मात्प्रागेव विभागः । कथं तत्राऽऽह-तत्र विभागार्थं मन्त्रं द्विवचनान्तं द्वयोर्बहुवचनान्तं बहु

१ घ. ङ. ज. झ. म. °डाशानां प्राग° । ढ. °डाशीयानां प्राग° ।

सकृदेव पाठं वक्तुं जपतीत्युक्तम्। न ह्यत्र प्रतिदैवतं भागः क्रियते येन करणमन्त्रत्वेनाऽऽवृत्तिरपि तु राशिद्वयेनैवातो मन्त्रस्य सकृदेव जपः। यावन्तश्चरवस्तावन्त एव चेत्पुरोडाशास्तर्हि राशिद्वयेन समप्रमाणानेव द्वैधं विभजति। यद्येकेऽधिकास्तर्हि तावता परिमाणेन विषमानेव द्वैधं करोति।

**इदममुष्मै चामुष्मै चेत्येकैकस्मिन्राशावेकैकां देवतामुपलक्षयेत्।**

राश्योर्मध्य एकत्र प्रथमा देवता चर्वर्था चेत्तदा चरुराशौ चरुदेवतामुपलक्ष्य पश्चात्पुरोडाशदेवतामुपलक्षयेत्। वैपरीत्ये वैपरीत्येनेत्येवं वक्तुमेकैकस्मिन्राशावित्युक्तम्। अत्रेयं देवतेति जानीयात्।

**पौष्णमपच्छिद्य सह पुरोडाश्यैः पिनष्टि।**

चरुराशेः सकाशात्पौष्णं पृथक्कृत्वा पुरोडाश्ये मेळयित्वा तैः सहैव पिनष्टि। अधिवपनादि पिण्डकरणान्तं करोतीत्यर्थः।

**अधिश्रयणकाले मिथो विभज्येरन्।**

अधिश्रपणकाले प्राप्ते सति मिथः परस्परं पिण्डांस्तण्डुलांश्च विभजति।

**तत्र विभागमन्त्रं जपति।**

राशिद्वयेऽपि सकृदेवोक्तार्थमन्यत्। न पुनर्देवतादेशो जातत्वात्।

**नानाबीजेषु समवेतेष्वेकमुलूखलं मुसलꣳ शूर्पं कृष्णाजिनं च।**

भरद्वाजादिपरमतव्युदासार्थं नानाजातीयेषु नानाधर्मेषु च। यथा श्यामाकव्रीहियवेषु। कृष्णव्रीहिमहाव्रीह्याशुव्रीहिषु समवेतेषु समानतन्त्रेषु सत्सु न्यायसिद्धमेषामेकत्वं बीजेषु चरुपुरोडाश्येषु ग्राम्यारण्यौषधेषु।

**प्रथमे बीजे हविष्कृतमाह्वयत्युत्तमे वाचं विसृजते।**

प्रथमबीजाह्वानेनैव हविष्कृदागमने सिद्धे न पुनराह्वानं प्रयोजनाभावात्। अन्तिमे बीजे त्रिष्फलीकरणसंप्रैषे सति वाचं विसृजते प्रथम एव विसर्गेऽन्येषामवहननमनियतेनैव कर्त्रा कृतमवैधं स्यात्। अवहननं च दृष्टतण्डुलीभावकरणार्थं यावत्त्रिष्फलीकरणं तावत्तण्डुलीभावोऽतः संसृष्टानि त्वेकापवर्गाणीति काण्डानुसमयोऽत्र द्रष्टव्यः।

**सोमेनाऽऽग्रयणेष्ट्या पशुबन्धेन वाऽमावास्यायां पौर्णमास्यां वा यजेत।**

सोमार्थोऽपूर्वविधिरन्ययोस्तु प्राप्तानुवादः। श्रुतिरेवेयम्। किमर्थमनुवादः। उच्यते—

---

१ क. ख. ग. घ. छ. ट. ण. °ता उ°। २ क. ख. ग. च. छ. ट. ण. °ता उ°। ३ घ. ङ. ज. झ. ञ. ठ. °तममोप्य वा°।

दर्शपूर्णमासयोर्विकृतेश्च संनिपाते दर्शपूर्णमासौ बलीयांसावित्युक्तम् । तत्र पञ्चदशी- प्रतिपदोरुभयोरपि प्रातःकालौ प्रकृत्यावरुद्धौ तथा चातिदेशतःप्राप्तौ विकृतौ कालौ प्रकृत्या बाधितौ स्याताम् । न च प्रकृतौ सोमस्य विकृतेष्टीनां च कालविधानं स्वतन्त्र- पशोश्चान्वाधानं कृत्वा विकृतेरन्वाधानं क्रियेत यागानन्तरं याग इति वाच्यम् । न कर्मणि कर्मारम्भो न्याय्यस्तस्माद्विकृतिरपर्वणि च । प्रकृतियागानन्तरमेव चाऽऽपद्येत तदर्थमतिदेशप्राप्तस्य प्रत्यक्षश्रुत्याऽनुवादस्ततश्च यानि त्विष्टिपशुबन्धानां प्रत्यक्षाम्ना- तानि तानि तत्र बलीयांसीत्युक्तेन न्यायेन पञ्चदश्यां प्रकृतौ प्रातःकालबाधेन प्रवर्तेते विकृतिर्यजनीये वा प्रकृतियागोत्तरकालं विकृतेर्द्व्यहकालताऽऽनुमानिकी सा गत्यन्तरा- भावाद्बाध्यते प्रकृत्येति पूर्वं वा परं वा विकृत्यनुष्ठानं सिद्धं भवति । तत्र काम्येष्टयः सद्यस्काला उपांशुतन्त्राः पशवश्चेति वक्ष्यति । तथाऽऽमावास्येन पौर्णमासेन वा हवि- षेष्ट्वा काम्यैः पशुभिरिष्टिभिर्वा यजेतेति वक्ष्यति न तथाऽन्यपक्षिष्टिषु यदि श्वः काल इति पशौ द्व्यहकालताविकल्पं च वक्ष्यति । तत्र पूर्वेद्युरन्वाधानमित्यर्थादुक्तं, वदति च पूर्वस्य पर्वण औपवसथ्येऽहनीति पूर्वपर्वाणि पञ्चदश्यां क्रियमाणयागस्यौपवसथ्यमह- श्चतुर्दश्यपीति । तच्चेष्टामपि वैकल्पिकं ज्ञेयम् । अस्ति च पञ्चदशीप्रतिपदोरुभयोरपि पर्वत्वं यथा पञ्चदश्या दर्शत्वमेवं प्रतिपदोऽपि तथा पौर्णमासीत्वमपि तत्प्रथमपटले विस्तारितमिह संक्षेपतः स्मर्येत । अमावास्याशब्दः सूर्याचन्द्रमसोः परमसंनिकर्षनिमित्तः पौर्णमासीशब्दश्च परमविप्रकर्षनिमित्तोऽतः संनिकर्षविप्रकर्षौ संधिमध्यमक्षणमात्रं तच्च पञ्चदशीप्रतिपदोः समानमेवेति तयोर्द्वयोरपि ग्रहणममावास्यापौर्णमासीशब्दाभ्यां तथो- भयत्र विकृतिविधानार्थं सूत्रितम् । अत्र केचिदाहुरमावास्यायां पौर्णमास्यां चेति व्यत्ययेनाभिधानममावास्यापौर्णमासीमध्यगस्य कालस्य यागाङ्गत्वख्यापनार्थम् । यं कामयेत वसीयान्स्यादिति तं पूर्वपक्षे याजयेद्यं कामयेत पापीयान्स्यादिति तमपरपक्ष इति विधिप्रतिषेधश्रुतिरप्यनुगृहीता स्यात्तथा छान्दोग्यसूत्रमनादेश उदगयन आपूर्यमाणपक्ष इति चेति । तथा दर्शपूर्णमासाभ्यामेकं फलापूर्वं साध्यत इति द्वयोरेकप्रयोगता तत्र च कर्मणि कर्मारम्भ इति न्यायोऽप्यनुगृहीत इति । तन्नेष्टम् । आमावास्येन पौर्णमासेन वा हविषेष्ट्वा काम्ययागविधानात्सोमे चामावास्यायां यजनीये वाऽहनि पौर्णमास्यां यज- नीये वाऽहनि दीक्षासुत्ययोर्विधानस्य मानत्वादस्ति च श्रुतिरप्यामावास्येन पौर्णमासेन वा हविषेष्ट्वा दीक्षेतेति प्रत्यक्षश्रुत्या सोमे पूर्वपक्षयागनियमश्रुतिर्बाधितैव तथा मध्ये चाव्यवधानमपि । छान्दोगसूत्रमनादेश इत्येवात्राऽऽदेशात्त तथा छान्दोगसूत्रं यं काम- येतेति श्रुतिरप्यनादेश एव सावकाशा । वक्ष्यति च गृह्ये पाकयज्ञेष्वापूर्यमाणपक्ष इति न कर्मणि कर्मारम्भ इत्यारम्भमात्रप्रतिषेधः । किंच ब्राह्मणभोजनान्ते प्रयोगे प्रयोगान्तरं प्रतिषिध्यतेऽन्यथा चातुर्मास्येषु मध्य आग्रयणेष्टिलोपः स्यादित्यलमतिप्रसङ्गेन ।

**सप्तदशानुब्रूयादिष्याः पशुबन्धस्य वा पञ्च-**
**दशभिर्विकल्पेरन्नविकल्पो वा ॥ २२ ॥**

सप्तदशानुब्रूयादित्यनारभ्य श्रूयते तत्तु दर्शपूर्णमासप्रकरणेन प्राप्तपञ्चदशत्वस्य न बाधकं नापि वैकल्पिकमतो विकृतेष्टेः पशोर्वा सप्तदश सामिधेनीरनुब्रूयादिति शाखान्तरे श्रूयमाणमुपसंहृतमतिदेशप्राप्तसामिधेनीपञ्चदशत्वविकल्पार्थमिति परमतमविकल्प इति स्वमतं नित्यमेव साप्तदश्यं पशुबन्धे विकृतेष्टिषु यत्र श्रूयते तत्राऽऽनुमानिकपञ्चदशत्वनिवृत्तिः प्रत्यक्षश्रुतेः प्रबलत्वात् ।

**आग्रायणेष्टिं व्याख्यास्यामः ।**

नानान्यायातिदेशैः प्रयोगसिद्धिरित्यव्याख्याने तु न सिध्यतीत्यर्थः ।

**तया नानिष्ट्वा नवानामोषधीनां फला-**
**न्यश्नाति ग्राम्याणामारण्यानां च ।**

तयाऽनिष्ट्वा नाश्नातीत्यन्वयः । अग्रेऽग्रपाके सति तस्य देवताभ्यो हविरित्यनेनेत्यौ-ग्रायणं कर्मः तत्राऽऽद्ये दीर्घता छान्दसी । तया चासति यागे पूर्वं ग्राम्यारण्यौषधीनां फलानि नाश्नाति तस्मादभ्यासः । प्रतिपाकं तयाऽनिष्ट्वा नवानामशने पथिकृतेष्टेः प्रायश्चित्तत्वेन विधानान्नित्यैवेयमग्रपाकेनाशननिमित्ता । तथा च भरद्वाजोऽनया याव-ज्जीवं यजेतेति नियतोपक्रमा वाऽऽधानानन्तरमित्यपि ज्ञेयम् । आधाने पवमानहविषामु-त्कर्षे कात्यायनेन प्रतिनिषिद्धत्वेनाऽऽग्रयणविधानात् । नवानामिति वृष्ट्या यदुत्पद्यते वर्षा आरभ्याऽऽवसन्तं तत्रैव नवत्वप्रसिद्धिः । न वृक्षाणां फलानां प्रतिषेधो नाप्यौ-षधीनां फलव्यतिरिक्तमूलकन्दपत्रपुष्पादीनां प्रतिषेधः । तदिदं व्यक्तमापस्तम्बभरद्वा-जादिभिरुक्तम् । हरितयवानां शिम्बीधान्यस्यादनलब्धफलानामनुग्रहस्तैरेवोक्तः । देव-मातृकाणां हि प्रायेण प्रथमा व्रीहियवानां शरद्वसन्तयोरेवोत्पत्तिः । श्रुतिरपि तयो-रेव । शरद्वसन्तयोराग्रयणमिति वैखानसेनाऽऽपस्तम्बेन भरद्वाजेन च शरदि व्रीहिभि-र्वसन्ते यवैर्वर्षासु श्यामाकैरिति कुल्या धान्यानामन्यदाऽपि पाकदर्शनात्सर्वदाऽपि नवत्वमस्तीति शरद्वसन्तग्रहणमनर्थकं स्यात् । तथा च व्रीहिश्यामाकानामाग्रयणं नियतं तथा च बह्वृचानां यवाग्रयणं कृताकृतमिति ।

**व्रीहीणामग्रपाकस्य यजते तथा श्या-**
**माकानां यवानामग्रपाकस्य यजते ।**

प्रथमपक्वानामेव तदा वा शरदि वा यागः शरदं तु नातीयात्तथा तत्रैव तन्त्रेणेत्यर्थः । श्यामाकानां प्रथमपक्वानां वर्षासु शरदि वा समानतन्त्रेण यागस्तदाऽग्रपाकाभावे यदाऽ-

---

१ क. ख. ग. घ. ङ. ट. ठ. आग्रय° । २ घ. ङ. ञ. ड. म. वा । ३ घ. ङ. च. °त्याग्रय° ।

ग्रपाकस्तदैव भिन्नतन्त्रेण । यवानां तु भिन्नतन्त्रेणैव । अग्रपाकशब्देन तत्कालपाकस्य-ग्रहणम् । न च व्रीहियवानामेककालेऽग्रपाकता संभवति ।

**तथा व्रीहीणां निर्वपणकाले पुराणानां व्रीहीणा-मामेयमष्टाकपालं निर्वपति नवानामितराणि ।**

तथा च समानतन्त्रभिन्नतन्त्रव्यवस्थायां सत्यां व्रीहीणां निर्वपणकाले व्रीह्याग्रयण-निर्वपणकाले त्वाग्नेयस्य वैशेषिकविधानं न तु भिन्नतन्त्रे श्यामाके यवाग्रयणे वा पुराण-व्रीह्याग्नेयोऽस्तीति । इतराणि वक्ष्यमाणानि नवानामेव । तत्र श्यामाके देवताविशे-षिताऽन्ययोऽस्तु देवतात्रयं समानमेव । न यवाग्रयणे पुराणानां व्रीहीणां यवानां वाऽऽग्नेयो नापि नवानाम् । तथा श्यामाके भिन्नतन्त्रेऽप्येकैव देवता नाऽऽग्नेयः । तदुक्तं वैखानसेन वसन्ते यवैर्यजेत तेषां व्रीह्याग्रयणवत्कल्पो नाऽऽग्नेयश्यामाकाविष्येते इत्यापस्तम्बेनापि तथा चोक्तम् ।

**आग्नेन्द्रमैन्द्राग्नं वा द्वादशकपालं वैश्वदेवं चरुं पयसि शृतꣳ सौम्यꣳ श्यामाकं चरुं द्यावापृथिव्यमेककपालम् ।**

निर्वपतीति पूर्वस्यानुषङ्गः ।

**नानातन्त्रꣳ श्यामाकमेके समामनन्ति ।**

पूर्वमुक्तस्य समानतन्त्रतैवोक्ता श्यामाकमेकमेव भिन्नतन्त्रं न तत्र देवतान्तरमस्ती-त्यर्थः ।

**उपसन्ने हविष्यप्रोक्षिते शतायुधायेति पञ्चाज्यानीर्जुहोति ।**

अदित्या व उपस्थे सादयामीत्युपसन्ने देवस्य त्वेत्यनेनाप्रोक्षिते सति शतायुधा० ये च त्वा० ग्रीष्मो हेम० इदुवत्स० भद्रान्न इति पञ्चभिर्ऋग्भिः पञ्च गृहीत्वा जुहोत्या-ग्रयणं निरुप्यैता आहुतीर्जुहोतीति श्रुतेः ।

**पुरस्तात्स्विष्टकृत एके समामनन्ति ।**

स्विष्टकृतः पूर्वं शतायुधायेत्यादिना जुहोतीत्येके शाखिनस्तुल्यश्रुतित्वाद्विकल्पः । उभयत्रापि दर्विहोमधर्मेण ।

**एककपालानां वैश्वदेवीयेनैककपालेन कल्पो व्याख्यातः ।**

सर्वेषामेककपालानामनुपदिष्टधर्माणामेव न तूपदिष्टधर्मस्य वारुणस्यावभृथीयस्यापि । वैश्वदेवं चातुर्मास्ये प्रथमं पर्व तत्र भवेनैककपालेन कल्पो विधिस्तस्मादतिदिष्टाङ्गाना-मन्त्राङ्गोपसंहारो ज्ञेयो न त्ववभृथैककपालात् । ननु कथमत्र तस्यातिदेशो यावता दर्शपूर्णमासप्रकृतित्वं विकृतीष्टीनामुक्तम् । न च भिक्षुको भिक्षुकाद्याचत इति न्यायाच्च न विकृतेर्विकृतिरस्ति विना वचनम् । तस्मादग्नीषोमीयमात्रविकृतित्वं हविः-सामान्यादेककपालस्य । न च स्वधर्माणो विकृतयोऽन्यासामस्वधर्माणां प्रकृतयः साङ्ग-

श्यादिति वाच्यम् । न चात्र सादृश्यमस्ति । न चैककपालत्वसामान्यं देवतासामान्यं देवतासामान्यस्य हविःसामान्यस्यैवाङ्गीकारात् । एककपालत्वं हविर्विशेषणं न तु हविस्तेन हविर्हविर्विशेषणसामान्ययोर्विरोधे मुख्यमेव बलीयो न गुणः । यदि स्यादेककपालत्वेन सादृश्यं तदा वरुणप्रघासादौ वचनेनैतद्ब्राह्मण एककपाल इति वचनमनर्थकं स्यात् । न च द्यावापृथिव्यत्वं देवतासामान्यमस्तीति वाच्यम् । न हि सर्वे ए(वैस्मिन्ने)ककपाले तदस्ति दुर्बलं चेत्युक्तम् । नचेदमेककपाल इति नामधेयं येन मासमग्निहोत्रमिवात्राप्यतिदेशः स्यात्तस्मान्नात्रातिदेशप्राप्तिरिति चेत् । उच्यते—स लिङ्गेन गम्येतेत्यतिदेशप्रकरण उक्तं विशेषातिदेशे लिङ्गं नियामकं तदत्राप्यस्ति । तदाऽऽह कात्यायनः–लिङ्गदर्शनादिति । लिङ्गं च व्याख्यातम् । वाजसनेयिशाखागतं वचनं तथा हि श्रूयते—तस्य परिचक्षा यस्यै चैकस्यै च देवतायै हविर्गृह्यते सर्वत्रैव स्विष्टकृदन्वाभक्तोऽथैतं सर्वमेव जुहोति न स्विष्टकृतेऽवद्यति सा परिचक्षा हुतो हुतः पर्यावर्तते सा द्वितीया परिचक्षा । तच्चैतदुभयमप्यनिष्टमित्याज्यस्यैव यागः कर्तव्य इति वचनमाग्रयणेऽष्टौ श्रूयत आज्ययागप्रशंसार्थमेककपालस्य वैश्वदेवीयस्य धर्मौ सर्वाहुतित्वं पर्यावृत्तिश्च । न चाप्राप्तयोर्निन्दा तत्रैव च सर्वहुतं जुहोत्यपर्यावर्तयञ्जुहोतीति च श्रुतौ धर्मावाऽग्रयणेष्ट्यैककपाले निन्दार्थमनूदितावतोऽत्रापि तद्धर्मातिदेशे सति तथा च सर्वहुतमपर्यावृत्तिरतिदिष्टतयैवान्यैर्हविर्भिरविरुद्धा धर्मास्तेऽप्यतिदिश्यन्ते । त्रेधा बर्हिः संनद्धं भवतीति प्राकृते बर्हिष्यधिको गुणो नेतरैर्बहुभिर्विरुध्यत इति केचिदाहुस्तन्न । एकधा संनहनेन त्रेधा संनहनं विरुद्धमेव । नवप्रयाजत्वमपि । तथा तस्याभ्यस्तस्येन्द्रादिभिर्विरोधो भवति प्राकृतगुणपरित्यागात् । वैश्वदेववत्प्रणयनं निर्मन्थ्यप्रचारश्च सर्वहुतत्वप्रतिष्ठितत्वादिकं क्रियते विधावपराधे विध्यपराधप्रायश्चित्तं तत एवावभृथैककपाले स्वधर्माणि नातिदेशोऽतो न तद्विकारतेत्यपि सिद्धम् ।

नाऽऽविः पृ(विष्पृ)ष्ठं करोति ।

तत्राऽऽविः पृ(विष्पृ)ष्ठता विहिता साऽत्र शाखान्तरात्प्रतिषिध्यते । न च न्यायेन प्रतिषेधो भवति द्यावापृथिवीयैककपालमात्रधर्मत्वेनेतरविरोधाभावाच्च । तस्मादप्राप्तप्रतिषेधायोगादवश्यमतिदेशेनैव प्राप्तिरिति लिङ्गमप्यनेनोक्तम् ।

न मासनामभिरभिजुहोति ।

चतुर्भिर्मासनामभिरभिहोमोऽत्र प्राप्तः । स चाऽऽग्न्यान्तरालिकानामप्रयुक्तस्तदभावे तस्मादेव वा शास्त्रात्प्रतिषिध्यते ।

व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेताऽऽयवेभ्यो यवैरिष्ट्वा यवैरेव यजेताऽऽव्रीहिभ्यः ।

प्रकृतौ व्रीहिमयवमद्वा शाकटमवस्थाप्येति व्रीहिभिर्यजेत यवैर्वेति शास्त्रमव्यवस्थया

प्रवृत्समाश्रित्येच्छाविकल्प उक्त इदानीं व्यवस्थितशास्त्रमाश्रित्योच्यते । व्यवस्था व्रीह्याग्रयणेनेष्ट्वा यावद्यवाग्रयणेष्टिर्जायते तावत्पर्यन्तं दर्शपूर्णमासौ व्रीहिभिरेव कार्यौ । विकृतावनियमो दर्शपूर्णमासावित्येव भरद्वाजादिभिरभिधानात् । एवं यवाग्रयणेऽपि । आयवेभ्यः पक्वेभ्यः पूर्वं मर्यादार्थ आङ् । यदा यवाग्रयणक्रिया तदैवायं पक्षोऽक्रि-यायां तु स्वेच्छापक्ष एव । यवाग्रयणे कृतेऽपि स्वेच्छया यागे श्रुतिरापस्तम्बेन दर्शि-ताऽपि वा व्रीहिभिरेवोभयत्र ते ह वै भूयवरतमा भवन्तीति बह्वृचब्राह्मणमिति । सुखेनोपचाराद्धि वितुषीभावादि सुखसाध्यमित्यर्थः ।

वेणुयवानां९ श्यामाकमेके समामनन्ति ।

वेणूनां पाकेन यवसदृशं धान्यं वेणुयवास्तेषामग्रपाके सतीत्यध्याहारस्तदा श्यामा-केष्टिमेके शाखिनः पठन्ति । श्यामाकानपक्वानस्थापयित्वा यदा वेणुयवपाकस्तदैव श्यामाकेष्टिरारण्यकभक्षणाधिकारार्था । तदुक्तं कात्यायनेन—'श्यामाकं चाऽऽरण्य-स्याग्रपाके' इति । एते श्यामाका आरण्यका एवाथवा वेणुयवानामग्रपाकस्याऽऽ-ग्रयणमित्यध्याहारो वेणुयवानामाग्रयणं श्यामाकं श्यामाकवन्मासमग्निहोत्रमितिवत् । तदुक्तं वैखानसेन—प्रियङ्गुवेणुयवानां यथर्तु श्यामाकवदिति । तथा च चरोः सोम एव देवतेति नियमः । आपस्तम्बेन प्रजापत्यादिनानादेवता विकल्प उक्तः । अथ वा वेणुयवानामेव श्यामाकशब्दाभिधेयानां चरुमेके । यवहाधिकरणे हि यत्रान्या ओषधयो म्लायन्तेऽथैते मोदमानास्तिष्ठन्तीति वाक्यशेषाद्यवशब्देन दीर्घशूका एव गृह्यन्ते न श्यामाका यवशब्देन व्यवह्रियमाणा अपि । तत्तु ग्राम्ययवेष्वेव निर्णायकं नत्वारण्यकवे-णुयवेषु । तस्मात्त एव श्यामाकशब्दवाच्यास्तेषामेव चरुरिति फलमनन्तरपक्षसमानमेव ।

अपि वा नाऽऽग्रयणेष्टिं कुर्वीत नवै-
रेवामावास्यायां पौर्णमास्यां वा यजेत ।

अपि वा नवैरेवामावास्यायां पौर्णमास्यां वा यजेतेति लाघवेन वक्तव्ये न कुर्वीतेति प्रतिषेधः प्राप्तेष्टिविकल्पार्थ उत्तरत्र वक्ष्यमाण पक्षाः प्राप्तेष्टेरपि समानविकल्पार्था नवैर्वाऽग्निहोत्रं जुहुयादित्यादिकास्ततस्त्वप्रारब्धदर्शपूर्णमासस्येदं विधानमित्याहुस्त-स्मिरस्तं नित्येष्टिमेवान्यतरस्मिन्पर्वणि नवैः कुर्यात्तावतैवाऽऽग्रयणं कृतमित्यर्थः । आपस्तम्बेन समानतन्त्राऽप्युक्ता साऽपि दर्शपूर्णमासयोर्विकृतेश्च संनिपात इत्यत्रैव व्याख्याता । तत्राऽऽग्नेयो न क्रियते पृथक्पुराणैर्व्रीहिभिर्नित्याग्नेय एव कर्तव्य-स्तथा चैन्द्राग्नादीनेव चतुरो नवैर्व्रीहिभिः श्यामाकैर्यवैर्वा निरुप्य नित्यं हविर्नवैः पुराणैर्वा निर्वपेत् । नानातन्त्रे श्यामाके तु तां निरुप्य नित्येष्टिं निर्वपेत् । श्यामाक-मन्यदा भिन्नतन्त्रं वा समानतन्त्रं नित्येन वा हविषा तदा तमेकमेव निरुप्य नित्यह-

१ क. ग. च. ट. ठ. ण. °के । पदहा° ।

विर्निर्वपेत् । आग्रयणेष्टावामाग्नेयः कृताकृत एवाऽऽपस्तम्बभरद्वाजादिभिरङ्गीकृतः । अनुमतश्चास्मदाचार्येणापि यदयं वक्ष्यत्याग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्यो हुत्वेति तथा सोमेन सह चतस्र एवाऽऽग्रयणदेवता इति ।

नवैर्वाऽग्निहोत्रं जुहुयादग्निहोत्रीं वा नवानादयित्वा तस्याः क्षीरेण जुहुयाच्चतुःशरावमोदनं वा पक्त्वाऽऽग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्यो हुत्वा तमग्रजनं भोजयति भोजयति॥२१॥

इति सत्याषाढहिरण्यकेशिसूत्रे तृतीयप्रश्नेऽष्टमः पटलः ॥ ८ ॥

---

इति हिरण्यकेशिसूत्रे तृतीयः प्रश्नः ॥ ३ ॥

---

एतेऽनुकल्पा अप्रारब्धदर्शपूर्णमासस्याऽऽग्रयणकाल आगते नियता एवान्यस्याश- क्तावेव नवैस्तण्डुलैरेव व्रीहीणां यवानां वा सायंप्रातस्तथैवोक्तमापस्तम्बादिभिरेकापूर्व- साधनत्वं न तथैव सिध्यतीति नोक्तमाचार्येण क्षीरहोमिणस्त्वग्निहोत्रीं गां व्रीहीञ्श्यामाकान्यवान्वा भक्षयित्वा तस्यै भक्षणार्थं दत्त्वा तत्परिणामे सति सायं प्रातस्तस्याः पयसा जुहुयात्प्रातरग्निहोत्रस्यैतौ पक्षौ यदा दर्शपूर्णमासावनारम्भौ स्यातामाग्रयणकाल उपस्थिते नियतावेवान्यस्यप्याशक्तौ प्राप्तप्रतिषेधबलादित्युक्तमेव । चतुःशरावस्तु व्याख्यात आधाने तस्य पाको गार्हपत्य इत्यापस्तम्ब औपासनेऽपि वेति वैखानसः । होमो वा भोजनं वेति विकल्पेनान्यैरुक्तमाचार्यस्तु हुत्वा तस्यावशिष्टमोदनं कृत्वाऽ- न्यैर्व्यञ्जनैश्च ब्राह्मणान्यथाशक्ति भोजयेत् । अयं पक्षस्तु पवमानहविषामुत्कर्षे नियतोऽ- न्यस्याशक्तौ । अग्निहोत्रहोमपक्षयोर्न पर्वनियमश्चतुःशरावस्य चाऽऽग्रयणदेवताभ्य आग्रयणेष्टिप्रत्याम्नायस्य पर्वनियमः । द्विरुक्तिः प्रश्नसमाप्त्यर्था । अत्र कात्यायनेन विशेषा उक्ताः—नवाशितायाः पयसाऽग्निहोत्रमित्यभिधाय दीक्षितव्रतं चोपसत्सु रौहिणौ सुत्यासु सवनीया इति । तत्राग्निनाधायाकृताग्रयणो वसन्ते दीक्षेताऽऽग्रयणका- लातिपत्तौ प्राप्तायामिदमुक्तं शरदि वाऽनीजान आग्रयणेन वाजपेयाय दीक्षेत तदा- प्येवमाग्रयणसंपत्तिः कार्या ॥

इति श्रीहिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैज- यन्त्यां तृतीयाधानप्रश्नेऽष्टमः पटलः ॥ ८ ॥

॥ प्रश्नश्च समाप्तः ॥

इति हिरण्यकेशिसूत्रव्याख्यायां तृतीयः प्रश्नः ॥ ३ ॥

---

१ घ. ङ. ज. झ. म. ढ. 'नं प' ।

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ५३

महादेवकृतवैजयन्तीव्याख्यासमेतम्

आद्यप्रश्नषट्कात्मकं

# सत्याषाढविरचितं श्रौतसूत्रम् ।

तत्र चतुर्थपञ्चमषष्ठप्रश्नात्मको द्वितीयो भागः ।

एतत्पुस्तकं

वे. शा. सं. रा. " काशीनाथशास्त्री आगाशे "

इत्येतैः संशोधितम् । 100,

तच्च

हरि नारायण आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८२९

खिस्ताब्दाः १९०७



मूल्यमाणकदशकाधिको रूपकः ( १८१० )

ॐ तत्सद्ब्रह्मणे नमः।

# सत्याषाढविरचितं श्रौतसूत्रं

## महादेवकृतवैजयन्तीव्याख्यासमेतम्।




अथ चतुर्थप्रश्नप्रारम्भः।

तत्र प्रथमः पटलः।

हविर्यज्ञेषु नियतोपक्रमास्तु निरूपिताः॥
दर्शाद्या इष्टिपर्यन्ताश्चत्वारोऽथ निरूप्यते।
नित्याभ्यासः पशुः पूर्वमनित्याभ्यासकर्मतः।
चातुर्मास्येभ्य एवैवं सौत्रामण्याश्च पूर्वतः॥
प्रश्ने चतुर्थ ऐन्द्राग्नो निरूढो विकृतैः सह।

सर्वेभ्यः कामेभ्यः पशुबन्धोऽपि विधीयमानो दर्शितो बौधायनेनार्थवादफ्[1] आपस्तम्बेनात्र पक्षेषु प्रथमप्रश्ने प्रथम पटल एवाधिकारिनिर्णयो दर्शपूर्णमासवदेव वृत्तोऽतो न व्याख्यायते। अभ्यासचोदनायां यावज्जीवचोदनासमानाधिकारोऽपि तृतीयप्रश्न आद्यपटल एव वृत्तस्तस्मात्प्रयोगमेव व्याचष्टे—

**ऐन्द्राग्नेन पशुना षाण्मास्ये षाण्मास्ये यजत आवृत्तिमुख आवृत्तिमुखे संवत्सरे संवत्सरे वा।**

इन्द्राग्नी देवते यस्य स तथा। पशुशब्देन च्छागोऽभिधीयते। छागस्य वपाया इति लिङ्गात्। अनादेशे छाग इति बौधायनः। उत्पत्तिविधिरयं कालविधिश्च। फलतो जीवनं वा न विकल्पादूर्ध्व कर्म पशुद्रव्यको यागः पशुशब्देनोच्यते। पशुबन्धाख्यं कर्मोच्यते पशुर्बध्यते यस्मिन्निति। षण्मासा एव षाण्मास्यं समुदाये षट्सु षट्सु मासेषु व्यतीतेषु यत्र पर्वणि प्रथमः पशुबन्धस्तस्मात्। अत्रोदगयनमेव विशेषानभिधानादनादेश उदगयनमिति वचनात्। वीप्सया कालावधेरभावाद्यावज्जीवमिति गम्यते। आवृत्तिः सूर्यस्यायने इत्ययनयोर्मुखे संक्रान्त्यनन्तरपर्वणि केचिन्मुख इति संक्रान्त्यनन्तरदिन इत्याहुः। अत्राप्युदगयन एवाऽऽरम्भः। संवत्सरपक्षेऽपि तथैव।

१ क. ख. च. छ. ट. 'दफ'।

सौर्यः प्राजापत्यो वा ।

पशुरेषु कालेषु कर्तव्य इति शेषः । सूर्यदेवताकः प्रजापतिदेवताको वा पूर्वेण विकल्प एतयोः शाखान्तरीययोरुपक्रमनियमः कात्यायनेनोक्तः । सोऽस्माकमपीष्टः ।

त्रिविधं पशुबन्धम्—

तं व्याख्यास्यामः ।

पश्वङ्गानि ज्योतिष्टोमाङ्गैः संकीर्णानीति तान्युत्कृष्य संभूय निरूढ एव व्याख्यायन्त इत्यर्थः । यद्यपि सौमिकाग्नीषोमीयादिपशुष्वाध्वर्यवसामान्यमिह निरूढेऽतिदेशात एव प्राप्तं तथाऽपि हौत्रस्याञ्जन्ति त्वेत्यादेरस्मच्छाखायां निरूढ ऐन्द्राग्न एवोपदेशात्सोऽपि प्रकृतिरिति सर्वाण्यतिदिष्टान्यप्याध्वर्यवाण्यत्रैव व्याख्यायन्ते । तानि पशुत्रये समानानि यूपवेद्यादीनि चौपदेशिकानि यानि वैशेषिकाणि तान्यूह्यानि । सौर्यप्राजापत्ययोरूह्यानीन्द्राग्निभ्यां त्वा जुष्टमुपाकरोमीत्यादीनि । एवं त्रयस्य व्याख्यानम् । अत्रोद्वसानस्याविधानाद्गृहेष्वेव पशुबन्धः । गृहेष्विति कात्यायनः । दर्शपूर्णमासप्रकृतित्वाच्च गृहेष्वेवान्यत्र पाशुकं विहारं कल्पयित्वा कृतस्य वाऽग्रे सति संभवे ।

सूर्यं ते चक्षुरिति षड्ढोतारं मनसाऽनुद्रुत्य सग्रह्ँ हुत्वाऽन्वारम्भणीयामिष्टिं निर्वपति ।

शरीरैरित्यन्तः षड्ढोतृनामको मन्त्रस्तं मनसा पठित्वा वाचस्पत इति ग्रहनामको मन्त्रः । ग्रहो भवतीति श्रुतेः । तमुपांशु पठित्वाऽन्ते होमस्तूष्णीकेनाऽऽज्येन सग्रहमिति ग्रहस्तत्सहकारी षड्ढोता होममन्त्रः । त्वाप्रत्ययेन पौर्वापर्यमुक्तं नाङ्गतेष्टिं प्रति । पशुबन्धेन यक्ष्यमाणः षड्ढोतारं मनसाऽनुद्रुत्याऽऽहवनीये जुहुयादिति यक्ष्यमाण इति यागारम्भात्पूर्वतोक्ता । तस्मादन्यं प्रणीयान्वारम्भणीयामिष्टिं निर्वपति । इदमेव प्रणयनं प्रधानार्थं यः प्रधानार्थं प्रणीतस्तत्रैव तदङ्गानि प्रधानस्याग्निः सोऽङ्गानामित्युक्तत्वान्नत्वङ्गार्थं प्रणीते प्रधानमिष्टिस्तु प्रधानार्थं प्रणीत एव कार्या । अन्वारम्भणीयाशब्देन वा प्रधानार्थस्याग्नेरन्वारम्भोऽनयेति तथा तेन धारयत्याहवनीयमिति वक्ष्यमाणमुपपद्यते । इदमेव चान्वारम्भणीयानामधेयप्रयोजनं ननु दर्शपूर्णमासान्वारम्भणीयातिदेशतः प्राप्ता तस्या बाधेनेयं विधीयतेऽतोऽन्वारम्भणीयाकार्यकारणत्वादन्वारम्भणीया । सा चाऽऽरम्भनिमित्तेति चेत् । न । तथात्वे धारयत्याहवनीयमिति न युक्तं स्यात्तस्मादग्निसंस्कारार्थेयम् । अत एवाऽऽपस्तम्बोऽग्न्यन्वाधानस्येयं प्रत्याम्नाय इति । तस्य मतेऽन्वाधानमग्निसंस्कारार्थमिति तस्य निवृत्तिरस्मन्मते देवतापरिग्रहार्थं वेष्टितो देवतापरिग्रहस्याभावात्क्रियते[2] वाऽन्वाधानमपि । तथाऽन्वारम्भणीया यदीयमारम्भाङ्गं स्यात्तदाऽऽरभमाण इति वेदेद्वितीयप्रयोगादौ तदा न प्राप्नुयादिष्यते च । ननु आरम्भनि-

१ ग. ङ. ण. °ष्टः । सं त्रि° । २ ग. ठ. ण. °ते चान्वा° ।

मित्तातिदेशेनान्वारम्भणीयाऽपि प्राप्ता सा तर्हि केन निवार्यतामिति चेत्, न। अतो हि दर्शपूर्णमासयोर्नचान्वारम्भणीया दर्शपूर्णमासावपि त्वारम्भनिमित्ता नचाऽऽरम्भो दर्शपूर्णमासौ। अथवा प्रथमप्रयोगाङ्गं न च विकृत्यां प्रथमप्रयोगस्यातिदेशोऽपेक्षितोऽपि तु प्रथमद्वितीयसाधारणस्य प्रयोगस्य। न च प्रथमत्वेन साम्यात्प्रथमप्रयोगो विकृतेर्भवेत्सान्वारम्भण इति वाच्यम्। तदा यासां विकृतीनां नियतः सांतत्येन प्रयोगस्तासां पश्वाग्रयणचातुर्मास्यानामेव स्यान्नतु सर्वविकृतीनां, न हि सर्वविकृतीनां नैमित्तिककाम्याङ्गभूतानां सांतत्यप्रयोगोऽस्ति। न चासति तस्मिन्प्रथमप्रयोगता संभवति। यदाऽनेकेषामेकदैव संकल्पस्तदा प्रथमद्वितीयादिविभागः। ननु सकृत्प्रयोगेऽपि फलस्य निमित्तस्य चोद्देशेन संकल्पेऽप्यारम्भशब्ददर्शनान्न च प्रथमारम्भ एवेति चेत्। सत्यम्। तथा सूत्रकृतः पुनर्नेष्टा न्यायेनापि न संगता। तथा हि—अस्ति च लिङ्गं न सर्वविकृतिष्वन्वारम्भणीयेति यदयं सोमेऽङ्गभूतेषु पशुषु नान्वारम्भणीयेति वदत्येवं नाङ्गभूता स्विष्टिष्वित्यपि ब्रूयादतिदिष्टाया उभयत्रापि प्राप्तत्वात्। या तु निषिध्यते सा निरूढे दृष्टा। निरूढपशुबन्धेन कल्पो व्याख्यात इत्यग्नीषोमीये पशौ वक्ष्यति। तेन निरूढवत्प्राप्तिमाशङ्क्य निषेधति नाङ्भूतेष्विति अङ्गेऽग्नीषोमीयादौ। तत्र चातुर्मास्येषु तान्यालभमान इति प्रकृत्य पञ्चहोतारं मनसाऽनुद्रुत्य सग्रहं हुत्वाऽन्वारम्भणीयामिष्टिं निर्वपतीत्युक्तम्। तत्राऽऽरम्भनिमित्तत्वान्मुख्यैवान्वारम्भणीया न तु दार्शपौर्णमासिकान्वारम्भणीयातिदेशप्राप्त्यर्थोऽन्वारम्भणीयाशब्दो मुख्ये संभवत्यमुख्यस्वीकारस्यान्याय्यत्वात्। तथा च सौत्रामणीवद्विविधाऽपि मुख्यैव यदि चेत्तस्याः स्थाने देवतान्तरं विधित्सितं तदा फाल्गुन्यां चैत्र्यां वा वैश्वदेवेन यजते तत्रान्वारम्भणीयां वैश्वानरं द्वादशकपालं पार्जन्यं चरुं निर्वपेदिति लाघवेन ब्रूयान्नतु तान्यालभमानस्येति प्रकृतित एव प्राप्तत्वान्नोपदेशः स्यात्। तस्मादप्राप्ताऽन्वारम्भणीया तस्या निमित्तं कालं च पृथङ्निर्दिश्येष्टिमपूर्वामेव विधत्त इति पशौ नोक्तमेवं तेन तस्या अन्यत्कार्यं पश्विष्टेरन्यदिति ज्ञापयति। तत्रातिदेशेनान्या नेष्टा चातुर्मास्येष्विवात्रापि तथाऽऽग्रयणेष्टावपीति सूत्रतात्पर्यम्। अत्रोपपत्तिः-दर्शपूर्णमासौ हि पशुचातुर्मास्याग्रयणेष्टीनां पूर्वं तत्र कृताऽन्वारम्भणीया पुरुषसंस्कारः। स किं कर्तुर्यजमानस्य भोक्तुर्वा विनाऽपि संस्कारं कर्तृत्वसिद्धेर्भोक्तुरिति वाच्यम्। तेन सा सकलप्रधानार्थैवेति सिध्यति। प्रधानं च यावज्जीवमनुष्ठीयमानम्। तथा दर्शपूर्णमासौ चिकीर्षन्प्रथमप्रयोगेऽन्वारमणीयां कुर्यात्सा च प्रयोगाद्बहिरेव। तत्र कृता यावज्जीवमुत्पद्यमाने फलापूर्वे स्वामिनं संस्करोति नतु प्रथमप्रयोगफलापूर्वमात्रे। नहि पूर्णमासमात्रेण फलापूर्वमुत्पद्यतेऽपि तु दर्शपूर्णमासाभ्याम्। न च पूर्णमासे कृता प्रथमं दर्शस्याङ्गं भवति। तस्मात्प्रयोगाद्बहिरेव पूर्णमासस्य प्रथमस्य संनिधावनुष्ठीयमाना। यथा दर्शाङ्गमेवं यावज्जीवं कृतकर्माङ्गं तन्त्रेणानुष्ठीयमाना भवति। नच काल-

व्यवधानं तत्र विघटकं वचनाद्यथा दर्श एवमुत्तरेषामपीति संतोष्टव्यम् । तथा च तन्त्रेण दर्शपूर्णमासयोरेवं प्रसङ्गेनेतरेषां यावज्जीवं ह्यन्वारम्भणीयापूर्वं न समाप्यते तत्संस्कृते स्वामिनि पश्चाद्विकृतीनामपि फलापूर्वमुत्पद्यतां वचनाच्च चातुर्मास्यफलापूर्वेणापूर्वान्तरापेक्षायामन्वारम्भणीयान्तरेऽपि न काचिदनुपपत्तिर्वचनं किं न कुर्यात् । युक्त्यन्तराणि दर्शपूर्णमासान्वारम्भणीयानिरूपण एव दर्शितानि । किंच प्रथमप्रयोगेऽपि न प्रयोगान्तःपातिन्यन्वारम्भणीया । कथम् । अन्वारम्भणीया वैमृधश्च विकृती तत्र दर्शपूर्णमासौ सर्वाङ्गोपसंहृतौ पश्चाद्विकृतिभ्योऽतिदेशेनाङ्गं प्रयच्छतो नासमाप्तौ । यद्यन्वारम्भणीयावैमृधौ गृह्णीतस्तदा प्रयोगः साङ्गः स्यात्तथाऽन्वारम्भणीयावैमृधावुपकाराकाङ्क्षौ दर्शपूर्णमासातिदिष्टाङ्गैः साङ्गौ सन्तौ तदङ्गतां प्राप्नुतोऽत्र साङ्गोपकारस्य च दर्शपूर्णमासयोरद्याप्यसिद्धेरुपकारद्वारा विकृतावङ्गग्रहणमसमञ्जसम् । अन्वारम्भणीयाशब्दोऽत्र व्युत्पन्नोऽन्वारभ्यते पशुबन्धार्थोऽग्निरनयेति । इष्टिं निर्वपति करोतीत्यर्थः ।

कथं तत्राऽऽह—

आग्नावैष्णवमेकादशकपालम् ।

निर्वपतीत्यनुकृष्यते । आग्नावैष्णवमन्वारम्भणीदेवतामेकादशकपालपुरोडाशद्रव्यामिष्टिं कुर्यादित्यर्थः ।

सिद्ध[1] संतिष्ठते ।

दर्शपूर्णमासाभ्यां सिद्धं यथा भवति तथाऽग्नीषोमीयविकारत्वेनेत्यर्थः । संतिष्ठते समाप्नोति । न दक्षिणा प्रधानदक्षिणयैवर्त्विजां परिक्रयसिद्धेर्विशेषविधानाभावाच्च । यजुशं चेत्यपि नेति ज्ञेयम् ।

अपि वा चतुर्गृहीतमाज्यमाग्नावैष्णव्यर्चाऽऽहवनीये जुहोति ।

इष्टिस्थाने तूष्णीं संस्कृतेनाऽऽज्येन चतुर्गृहीतेन जुहोति । आहवनीय इति दर्विहोमत्वेन प्राप्तेऽपि वचनं प्रधानार्थमुद्धृत एव यथा स्यात्तत्स्य त्यागेनान्यस्योद्धरणम् । प्रधानार्थाग्निसंस्कारार्थे होम इष्ट्या समानकार्यत्वात्तस्याः संस्कार्यत्वमुक्तं तप्ते प्रातर्दोह इतिवत् । इष्टिहोमयोरपि संस्कारकत्वं कर्मत्वं च दीक्षणीयेष्टिवत् ।

शेषमाज्यस्य करोति धारयत्याहवनीयम् ।

इष्टिहोमयोरन्यतरस्याऽऽज्यशेषं करोति यूपाहुत्यर्थम् । इष्ट्यां होमे चाऽऽहवनीयस्य प्रधानार्थमुद्धृतस्यैवाङ्गता शेषं करोतीति वचनाच्छेषनाशे पुनर्होमेनोत्पाद्यं न किंतु प्रतिनिधिना कार्यं नतु होमलोपे सति शेष इति ।

---

१ ख. ग. ठ. ण. °टकव° ।

उरु विष्णो विक्रमस्वेति स्रुवे-
णाऽऽहवनीये यूपाहुतिं जुहोति ।

अत्राऽऽहवनीयग्रहणं यूपसमीपेऽरणीमथिते मा भूदिति कात्यायनीये मथितेऽपि तथाऽग्नीषोमीये विधानात् । दर्विहोमत्वेन जुहूप्राप्तिनिवारणार्थं स्रुवेण जुहोतीतिश्रुतिप्राप्तमुक्तम् । युपाहूतिसंज्ञकामाहुतिम् । सोमे दीक्षायूपच्छेदेऽपूर्वेणाऽऽज्येन होमः । अन्वारम्भणीयाहोमयोरभावाच्छेषाभावात् ।

आज्यशेषं स्रुवं चाऽऽदत्ते तक्ष्णे परशुं प्रयच्छति
तद्गच्छन्ति यत्र यूपं छेत्स्यन्तो भवन्ति ।

तदरण्यं गच्छन्ति ब्रह्मयजमानाध्वर्यवः । यत्र यूप्या वृक्षाः कृप्तास्तान्परिकर्मिणस्तक्षा(क्ष)वच्छेत्स्यन्तो भवन्ति । स्पष्टमन्यत् । परशुं प्रयच्छतीति नाऽऽग्नो बर्हिरर्थे स्वीकृतो दर्शपूर्णमासयोः ।

पालाशः खादिरो बैल्वो रौहीतकश्च यूप्या वृक्षाः ।

यूप्या यूपार्हा यूप्याः ।

पालाशं ब्रह्मवर्चसकामस्यान्नाद्यकामस्य वा खादिरं[1] स्वर्गकामस्य बैल्वं ब्रह्मवर्चसकामस्य रौहीतकं प्रजाकामस्य ।

यूपं कुर्यादिति शेषः । एते सत्यां कामनायां तथा संकल्प्य कुर्यादन्यथा नित्या एवोभयार्थाश्चैते । रोहितको वटसदृशः किंचित्सूक्ष्मपर्णः ।

त्र्यवराध्यान्यूप्यान्वृक्षानतिक्रम्य ।

यूपयोग्यान्वृक्षानतिक्रम्य । त्र्यवराध्यान् , त्रयोऽवरोऽर्ध्यो भागो(?)येषां ते वृक्षास्तथा ततोऽप्यधिकानप्यतिक्रम्य त्यक्त्वा ।

य ऋजुरूर्ध्व ऊर्ध्वशकल ऊर्ध्वशाखः समे भूम्यै स्वाद्योने रूढः ।

तं वृश्चेदिति वक्ष्यमाणेन संबन्धः । अवक्रोऽतिर्यगवृद्धो न वेष्टितशकल ऊर्ध्वाग्रशाख इति क्रमादर्थः । समे देशे भूम्यै भूमेः सकाशान्नतु पाषाणादौ रूढः । स्वाद्योनेः स्वीयोपादानान्नतु शाखायां रूढः । अत आपस्तम्बोपशाखजमिति प्रथमकाण्ड एव रूढ इति ।

यं कामयेताप्रतिष्ठितः स्यादित्यारोहं तस्मै वृश्चेद्यं कामयेतापशुः स्यादित्यपर्णं तस्मै शुष्काग्रं कामयेत पशुमान्स्यादिति बहुपर्णं तस्मै बहुशाखमशुष्काग्रम् ।

यं कामयेतेति निन्दार्थवादस्तृतीयः काम्यः पक्षः । आरोहो वृक्षमारूढः शाखाज इति यावत् । स्पष्टमन्यत् ।

---

१ ख. ग. ठ. ण. °वृक्षो न ।

प्रतिष्ठितं प्रतिष्ठाकामस्य ।

समे भूम्या इत्यादिब्राह्मणोक्तो नित्यः काम्यश्चेत्यर्थः ।

यः प्रत्यङ्ङुपनतस्तं वृश्चेद्यः प्राङ्ङुदङ्ङ्वोपनतः ।

ऋजुरूर्ध्वं इत्यस्य विकल्पार्थं पक्षत्रये वा शब्दस्त्रिभिः संबन्ध्यते । उपनतो नम्रः ।

यस्य चर्जोः सत ईषदिवाग्रमुपनतम् ।

पूर्वमृजुरूर्ध्वं इत्यनयोर्बाधेन विकल्प उक्त इदानीं तयोरेव गुणान्तरं यः प्रत्यङ्ङु-पनत इत्यनेनोक्त इति व्याख्यातुमेतत्सूत्रं प्रत्यङ्ङुपनतोऽग्र ईषदिवेति, तेनोर्ध्वमृजुत्वं न बाधितमित्यर्थः ।

एवं रूपं वृश्चेच्छिन्द्यादित्युक्तं तत्प्रकारमाह—

अत्यन्यानगामिति ॥ १ ॥ यं जोषयते तमुपतिष्ठते ।

यज्याया इत्यन्तः । यं यूप्यत्वेन प्रीतिकरं मन्यते तमुपतिष्ठते यूप्यं वृक्षमि-त्यर्थः ।

देवस्त्वा सविता मध्वाऽनक्त्विति स्रुवेण गुल्फदघ्ने जानुदघ्ने वा पर्यणक्ति ।

गुल्फः पादग्रन्थिः । ऊरुजङ्घयोः संधिर्जानु तन्मितमधस्तात्त्यक्त्वाऽनन्तरे देशे परितोऽनक्ति । हस्तव्यावृत्तये स्रुवेणेत्युक्तम् ।

ओषधे त्रायस्वैनमित्यूर्ध्वाग्रामोषधिमन्तर्दधाति स्वधिते मैनꣳ हिꣳसीरिति परशुना प्रहरति यः प्रथमः शकलः परापतति तमुपयच्छते ।

उपयच्छते स्थापयति । स्पष्टमन्यत् ।

अनक्षसङ्गꣳ स्थाणुमुच्छिꣳषन्वृश्चति गुल्फदघ्नं वा ।

अनक्षसङ्गं वृश्चेदिति ब्राह्मणार्थमुच्छिꣳषन्स्थाणुमित्युक्तवान् । अक्षः शकटरथ-योस्तेन यथा स्थाणुर्न सज्जते तथा स्थाणुमवशेषयन्नित्येव गुल्फदघ्न इति पूर्वोक्तेन विकल्पः । छेदनदेशस्य देवस्त्वेति सूत्रेणाञ्जनस्थानमुक्तम् । तत्र प्रहारेण शकलं ग्राह्यम् । अञ्जनस्थानं तु शकलार्थमित्यवगम्यते यूपच्छेदस्थानस्य पुनरुक्तत्वात् ।

दिवमग्रेणेति प्राञ्चमुदञ्चं वा प्रहापयति ।

पृथिव्या संभवेति मन्त्रान्तः । हापयति पातयति ।

वनस्पते शतवल्शो विरोहेत्याव्रश्चने जुहोति सह-स्रवल्शा वि वयꣳ रुहेमेत्यात्मानं प्रत्यभिमृशति ।

आव्रश्चनं स्थाणुः । जुहोति दर्विहोमधर्मेणाऽऽज्यशेषस्यैव । गतार्थमन्यत् ।

१ घ. ङ. ज. झ. न. ढ. °भपावन° ।

यं त्वाऽयꣳ स्वधितिरित्यनुलोमं परशुनाऽङ्गान्कल्पयति ।

सौभगायेत्यन्तः । अङ्गान्यूपशाखा अनुलोममधस्तदारभ्योर्ध्वं छेदनेन कल्पयति छिनत्ति ।

आच्छिन्नो रायः सुवीर इत्यग्रं परिवासयति ।

छिनत्ति यूपाग्रं मानेन यत्र यूपाग्रं भवति तत्रैव । संस्कारोऽयम् । * अत एव कात्यायनः (नेन) परिवास्याच्छेदनं पुनरिति पुनश्छेदनप्रतिषेधात् ।

एकारत्निप्रभृतीनि ब्राह्मणव्याख्यातानि काम्यानि यूपप्रमाणानि तेषां याथाकामी ।

स यत्पशुना यक्ष्यमाण एकारत्निं यूपं कुरुत इममेव तेन लोकं जयत्यथ यद्द्व्यरत्निमन्तारिक्षमेव तेन लोकं जयतीत्यादि वाजसनेयब्राह्मणम् । पञ्चारत्निं तेजस्कामस्येत्याद्येकविंशत्यरत्निपर्यन्तानि स्वब्राह्मणव्याख्यातानि तानि काम्यान्येव सति कामेऽङ्गीकार्याणि ।

सहोपरेण संख्या स्यादा त्रयस्त्रिꣳशदरत्नेः ।

उपरो भूमिखातं तदर्हः प्रदेशोऽतक्षो मूलभागो यावान्भूमिमध्ये गच्छति तेन सह यूपपरिमाणं वेदितव्यमा त्रयस्त्रिंशत्संख्यापर्यन्तम् ।

त्र्यरत्निर्वा चतुररत्निर्वा पालाशो निरूढपशुबन्धस्य यूपोऽतोऽन्ये सौम्यस्याध्वरस्य ।

ये पूर्वमविशेषेण यूपवृक्षा उक्ता यानि यूपमानानि तन्मध्ये त्र्यरत्निश्चतुररत्निर्वा पालाशो निरूढो नित्य ऐन्द्राग्नः सौर्यः प्राजापत्यो वा पशुबन्धस्तस्यान्यमानयुक्ता अन्यवृक्षजाश्च सौम्यस्याध्वरस्याग्निष्टोमप्रभृतेः । एवं हि श्रूयते स वा एष त्र्यरत्निर्वैव चतुररत्निर्वा पशुबन्धयूपो भवतीति वाजसनेयकम् । तथा तत्रैव पालाशमेव यूपं कुर्वीतेति नियमः ।

अष्टाश्रिं तक्ष्णोति नातिस्थूलं नात्यणुमतष्टमुपरम् ।

अष्टाश्रयो धारा यस्य तथा तक्ष्णोत्येवं तक्षण आनयनं दृष्टार्थं स्यात् । उपरार्हप्रदेशं न तक्ष्णोति । स्पष्ट मन्यत् ।

पुरःपुरोणीयाꣳसं गोपुच्छं वा ।

उपरादूर्ध्वं यावदग्रं किंचित्किंचिदणुपरिणाहं गोपुच्छसदृशं वोपरादूर्ध्वं किंचिन्न्यूनं ततः किंचित्स्थूलं ततः किंचित्किंचिदणुपरिणाहं तथैव गोपुच्छम् ।

---

* अत एवेत्यसंगतम् ।

---

१ ग. ठ. ण. 'स्याग्नीषोम° ।

**तस्यैव वृक्षस्याग्रतश्चषालं करोति ।**

यस्य यूपस्तस्य वृक्षस्य चषालनामकं परिवासितादग्रभागादुपरितनस्यावशिष्टस्यावयवस्य नान्यवृक्षस्य ।

कथं कार्यं त(येत्त)दाह—

**अष्टाश्रि पृथुमात्रं मध्ये संनतम् ।**

अष्टावश्रयो धारा यस्य तत्त(स त)था । पृथुराकुञ्चिताङ्गुलिकरस्य मणिबन्धप्रारभ्याङ्गुल्यग्रपर्यन्तं पृथुः । पृथुरूर्ध्वो दशाङ्गुल इति बौधायनः । दशाङ्गुलं दीर्घं मध्ये संनतं पूर्वापरभागापेक्षया ।

**यावदिदं प्रथममङ्गुलि काण्डं ताव-**
**दूर्ध्वं चषालाद्यूपस्यातिरेचयति ।**

तर्जन्याः प्रथमं पर्व तत्परिमाणं दीर्घं चषालादूर्ध्वं यूपस्याग्रमतिरिक्तं भवति तथोर्ध्वमुखे चषाले कृतवेधे प्रवेशयति ।

**अङ्गुलिमात्रं कनीयो वाऽङ्गुलेः ।**

यूपाग्रं प्रवेशनीयं स्थूलमङ्गुलिप्रमाणम् । ततोऽपि वा सूक्ष्मं प्रतिमोचनं वक्ष्यति ।

**त्र्यङ्गुलं ऽयङ्गुलं चतुरङ्गुलं वैतेषा-**
**मेव तक्षणानां स्वरुं करोति ।**

एतेषामेव तक्षणानां तक्षणजनितशकलानामन्यतरेणैकेन त्र्यङ्गुलादिप्रमाणं स्वरनामकं शकलं करोति ।

**यं कामयेतान्योऽस्य लोकमभ्यारोहेदित्य-**
**न्यवृक्षस्य स्वरुं चषालं च कुर्यात् ।**

निन्दार्थवादोऽयम् । अस्य यजमानस्य लोकं स्थानमन्यो भ्रातृव्योऽभ्यारोहतीति तेन तस्यैव वृक्षस्य कुर्यादित्यर्थः ।

**वेदं कृत्वाऽग्रेणाऽऽहवनीयम् ॥ २ ॥ रथमात्रीं वेदिं करोति ।**

वेदेः पूर्वं वेदकरणं प्राप्तमेव क्रमार्थमनुवादः । आहवनीयग्रहणमतिदेशप्राप्तगार्हपत्यव्यावृत्त्यर्थम् ।

रथमात्रीमित्युक्तं तद्व्याचष्टे—

**रथेषामात्रीं प्राचीꣳ रथाक्षमात्रीं पश्चात्ति-**
**रश्चीं विपथयुगमात्रीं पुरस्तादुदीचीम् ।**

ईषादिप्रमाणं तु शुल्बे वक्ष्यति अष्टाशीतिशतमीषा तिर्यगक्षश्चतुःशतं षडशीतिर्युगमाहुरिति । युगस्य बाह्यच्छिद्रयोर्मध्यो विपथयुग आहवनीयप्राग्रेखामध्यात्प्राची-

१ घ. ङ. झ. म. ड. एतस्यैव । २ घ. ङ. ज. झ. म ड. °न्यस्य वृ° । ३ घ. ङ. ज. झ. म. ड. °स्तात्तिरश्चीम् ।

मष्टाशीत्युत्तरैकशताङ्गुलां पश्चाद्भागे दक्षिणोत्तरमानेन चतुरधिकं शतं प्राग्भागे दक्षिणोत्तरमानेन षडधिकाशीतिरेवं प्रमाणां निरूढे वेदिं कुर्यात् ।

अपि वा षडरत्निं प्राचीं चतुररत्निं पश्चात्ति-
रश्चीं त्र्यरत्निं पुरस्तात्तिरश्चीमसंनता भवति ।

वेदिशब्दः संस्कारनिमित्त इति प्रकृते वेदिशब्दाभिहिता ससंस्कारा प्राप्ता मध्ये संनामोऽपि प्राप्तः स उपदेशेन निवर्त्यते न संनताऽसंनतेत्युभयोरपि । गतार्थमन्यत् ।

यत्प्रागुत्तरस्मात्परिग्राहात्तत्कृत्वा
पूर्वार्धे वेदेर्यूपावटायावकाशमव-
शिष्य शम्ययोत्तरवेदिं विमिमीते ।

यदित्यनुवादश्चोदकप्राप्तस्योत्तरवेदिकालविधानार्थः । पूर्वार्धः पूर्वो भागस्तस्य प्राग्रेखामध्य एव यूपावटो यूपोच्छ्रयणे खातं तदर्थमवकाशं स्थापयित्वा तस्य पश्चाच्छम्या मानेनोत्तरवेदिनामिकां वेदिं विस्तारेण मितां करोति । संचरार्थमव-शिष्येत्यपि ज्ञेयं सूत्रान्तरे दर्शनाच्च ।

विमानप्रकारमाह—

पुरस्तादुदीचीनकुम्बाꣳ शम्यां निधाय वित्तायनी
मेऽसीति स्फ्येनोदीचीं लेखां लिखति ।

वेदिमानं शम्यामात्रमेव । तत्र चिकीर्षिते स्थले पुरस्ताद्भाग उदीचीनं कुम्बमस्या-स्तादृशीं निधाय स्फ्यस्याग्रेणोदगपवर्गां शम्यामानेन लिखेदन्तरत इत्यग्रे वक्ष्यति । शम्याग्रं कुम्बं व्याख्यातं दर्शपूर्णमासव्याख्याने ।

दक्षिणतःप्राचीनकुम्बां निधाय तिक्तायनी मेऽसीति
दक्षिणतः प्राचीं पश्चादुदीचीनकुम्बां निधायावतान्मा
नाथितमिति पश्चादुदीचीमुत्तरतः प्राचीनकुम्बां निधाया-
वतान्मा व्यथितमित्युत्तरतः प्राचीमभ्यन्तरं परिलिखति ।

शम्यां स्फ्येन लेखां लिखतीति पदचतुष्टयमावर्तते । यल्लिखति तदभ्यन्तरमिति तु पूर्वेण सह चतुर्भिः संबध्यते । उत्तरतो गमनमप्रदक्षिणं गतार्थमन्यत् ।

उत्तरेणोत्तरं वेद्यꣳसं प्रक्रमे चात्वालस्तं
परिलिखत्यनेनैव कल्पेन यदन्यन्मन्त्रेभ्यः ।

यं परिलिखति स चात्वाल इति भाविनी संस्कारनिमित्ता संज्ञा । तस्य स्थानमुत्त-

---

१ घ. ङ. ञ. झ. ञ. ठ. ण. °खत्येतेन° ।

रेणोत्तरभागे वेदेर्महावेदेरंस ईशान्यकोणस्तस्योत्तरतः प्रक्रमो व्याख्यातस्तस्मिन्नतीते चात्वालस्य दक्षिणरेखामध्यो यथा परितो लिखति प्रागारभ्य प्रदक्षिणशम्यांनिधान-स्फ्यलेखाकरणादिना कल्पेन विधिना मन्त्रविधिं विनाऽन्येन ।

**देवस्य त्वेत्यभ्रिमादाय विदेरग्निर्नभो नामेति खनति ।**

आददे इत्यन्तः । प्रकृतं चात्वालमेव सकृन्मन्त्रेण ।

**जानुदघ्नं त्रिवितस्तं वा खात्वा ।**

शम्यामानेन विस्तृतमधस्ताज्जानुदघ्नं जानुपरिमाणं वितस्तित्रयपरिमाणं वा खात्वेति क्त्वाप्रत्ययेन तावत्परिमाणमादौ खात्वा पश्चादुक्तं कार्यमाह ।

**अग्ने अङ्गिर इत्यभ्रिं प्रहरति ।**

खातायां मृदि प्रवेशयति ।

**योऽस्यां पृथिव्यामिति पांसूनपादत्ते ।**

असीत्यन्तः । पांसून्खातमृदं वा कात्यायनीये हस्तेन चेत्युक्तं सामर्थ्यात्स्फ्येन हस्तेन वाऽङ्गी करोति ।

**आयुषा नाम्नेहीति हरति ।**

पांसूनुत्तरवेदिप्रदेशं प्रति नयति । मन्त्रस्तावानेव ।

**यत्तेऽनाधृष्टमित्युत्तरवेद्यां निवपति ।**

त्वाऽऽदध इत्यन्तः । विमिते देश उत्तरवेद्याश्चिकीर्षिताया निदधाति पांसून् ।

***एवं द्वितीयं हरत्येवं तृतीयम् ॥ ३ ॥**

एवं द्वितीयं तृतीयं च हरतीति लघुवाच्ये द्वितीये मन्त्रे यो द्वितीयस्यां पृथिव्या-मित्याद्यनुषङ्गो यथा स्यात्तृतीये तु सानुषङ्गः पाठस्तत्र विधिमात्रमतिदिश्यत इति । अत्र हरतीत्येतावदतिदिष्टं तत्त्वग्ने अङ्गिर इति त्रिर्हरतीति श्रुतेः प्रहरणादि साङ्गं हरणं निर्दिष्टमिति प्रहरणाद्यपि ज्ञेयम् ।

**यो द्वितीयस्यामिति द्वितीयमपादत्ते यस्तृ-तीयस्यामिति तृतीयं तूष्णीं चतुर्थम् ।**

अग्ने अङ्गिर इति प्रहृत्य यो द्वितीयस्यामित्यादि हरणान्तं निवपनार्थत्वादर्थसिद्धं निवपनं समन्त्रमेव, तथा तृतीयं, चतुर्थं तु प्रहरणादि हरणान्तं तूष्णीं तूष्णीं निवप-नम् । कुतः । श्रुतिर्हि त्रिर्हरतीत्येतावदेव विधत्ते । सूत्रे तु निवपतीत्यन्तं व्याख्यातं तत्र मन्त्रलिङ्गान्मध्ये मन्त्रं विच्छिद्यार्थप्राप्ते नाना क्रियासु विनियोगो व्याख्यातस्तत्र

* सूत्रपुस्तकेषु एतत्सूत्रस्थाने 'एवं द्वितीयं तृतीयं च हरति' इति पाठो विद्यते ।

१ च. छ. °म्यामानेन ।

श्रुतौ हरति(तिः)प्रापणार्थत्वेन निवपतिशब्देन व्याख्यातः । प्रापणं तु मृदो वहनपूर्वकमिति स्वेन वहत्यर्थो हरतिर्मध्ये प्रयुक्त इति न विसंवादस्तथा चाऽग्ने अङ्गिर इत्यारभ्य निवपतीत्यन्तं हरत्यर्थ एवं त्रिर्मन्त्रेण तूष्णीं चतुर्थमिति सिद्धम् ।

सिꣳहीरसि महिषीरसीत्युत्तरवेदिं करोति ।

उत्तरवेदिं वेदिश्चतुरश्रा लोकप्रसिद्धा शम्यामानेनापि चतुरस्रता च यावत्खातखात्वालपांसुभिरुच्छ्रितां करोतीति यावत् । तदेव व्यूहनं कात्यायनेनोक्तम् ।

उरु प्रथस्वेति प्रथयति ।

प्रथितां यावत्कृतशम्याभ्यन्तररेखाव्यापिनीं करोति । भारद्वाजेनाप्युक्तं शम्यामात्रीं प्रथयतीति । यज्ञपतिः प्रथतामित्यन्तः ।

ध्रुवाऽसीति शम्यया सꣳहन्ति ।

संवहयति शम्यया ।

देवेभ्यः कल्पस्वेति कल्पयति ।

यथा विशीर्णा न स्यात्तथा समर्थयति प्रान्तलेपेन ।

देवेभ्यः शुन्धस्वेत्यद्भिः प्रोक्षति ।

अद्भिरित्युक्तं लौकिकीभिरेव ।

देवेभ्यः शुम्भस्वेति सिकताभिरनु प्रकिरति ।

वेदिं सिकता मृत्पांसवस्तैरनूपरिष्टात्कीर्णां युक्तां करोति ।

यत्ते क्रूरं यदास्थितमिति पुनरेवाद्भिरवोक्षति ।

शुन्धतामित्यन्तः प्रकरणान्तरान्तर्गतोऽप्यत्र शाखान्तरविहितः प्रतीकेनोपात्तः सामर्थ्याद्यावत्क्रियं गृह्यतेऽवोक्षणं तु न्युब्जेन करेण प्रोक्षणमुत्तानेन ।

उत्तरतो दक्षिणतो वा स्फ्येनैकस्फ्यां निःसार्यापो रिप्रं निर्वहतेत्यपाꣳ शेषं निनयति ।

उत्तरवेदेरित्यर्थादवगम्यते तस्या एव प्रकृतत्वाद्दक्षिणदेशे वोत्तरदेशे वा महावेद्यामेव । एका स्फ्येन कृता रेखैकस्फ्या तां निःसार्य निःसरणमुदकशेषस्य यथा स्यात्तथा कृत्वाऽवोक्षणशेषं निनयति । तस्यैव प्रकृतत्वात्प्रोक्षणस्य व्यवहितत्वात् । यद्युच्छिष्येत तर्हि निनयनमन्यथा नास्ति ।

विभ्राड्बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम् । वातजूतो यो अभिरक्षति त्मना प्रजाः पिपर्ति बहुधा विराजतीत्युत्तरवेद्या अन्तान्कल्पयति ।

मृज्जलैर्लेपनेन दृढां करोति ।

---

१ घ. ङ. ज. झ. ञ. ढ. °क्षतु त्म° ।

**चतुःशिखण्डे युवती कनीने घृतप्रतीके भुवनस्य मध्ये । तयोर्देवा अधिसंवसन्त उत्तमे नाक इह मादयन्तामिति वेदिमुत्तरवेदिं च संमृशति ।**

द्विवचनेनोभयोः सकृन्मन्त्रेण ।

**उत्तरवेद्यां मध्ये गोष्पदमात्रीमश्वशफमात्रीं प्रादेशमात्रीं वोत्तरनाभिं करोति ।**

चतुरश्रामिति भरद्वाजादयः । नाभिसंज्ञकमवयवं करोति । तस्योच्छ्रयस्तु नोक्तोऽतो यावताऽभिव्यक्तिस्तावत्येवोच्छ्रिता ।

**इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पात्विति प्रदक्षिणमनुपरिक्रामन्प्रतिदिशमुत्तरवेदिं प्रोक्षति**

सामन्तत्वख्यापनाय प्रदक्षिणमित्युक्तम् । प्रतिदिशमनुपरिक्रामन्नुत्तरवेदिं प्रोक्षति । दिग्भ्य एवैनां प्रोक्षतीति श्रुतेर्दिग्भ्यः सकाशादापः प्रोक्षणार्थाः प्रेरणीयास्ततस्तु पूर्वदिग्भागे स्थित्वा सर्वां वेदिं प्रोक्षति । दक्षिणे स्थित्वा तथैवैवं पश्चादुत्तरतश्च तल्लिङ्गैः सर्वामपि प्रोक्षति । पात्विति द्वितीयादिष्वप्यनुषङ्गो मन्त्रेषु प्रकृतनाभिव्युदासार्थं वेदिमित्युक्तम् ।

**त्वष्टा त्वा रूपैरुपरिष्टात्पात्वित्युपरिष्टात्प्रोक्षति ।**

शाखान्तरीयवाक्यशेषपाठेन पुनः प्रोक्षतीत्युक्तं वेदिमित्येव ।

**शेषं निनयति यथा पुरस्तात् ।**

प्रोक्षण्यपामेकस्फ्यायां निनयति पूर्ववत् ।

***औदुम्बरशाखाभिश्छन्नां परिवासयति यदि श्वः कालः ॥ ४ ॥**

**इति सत्याषाढहिरण्यकेशिसूत्रे चतुर्थप्रश्ने प्रथमः पटलः ॥ १ ॥**

---

छन्नामाच्छादितां परिवसति सा तादृशीं करोति निर्व्यापारेण रात्रिं गमयतीति यावत् । सद्यस्काले पशौ छादनं निवर्तते वा साङ्गत्वात्तस्य । अनेन च पशुबन्धो द्व्यहसाध्योऽप्यस्तीत्युक्तम् । तेन यजनीये चेत्सद्य एवान्यथा त्वसंभवादौपवसथ्ये चेद्विकल्पः । चतुर्दश्यामुपक्रम्य पञ्चदश्यां यागः । अत एव तत्र तत्र वदति पूर्वस्य

---

* सूत्रपुस्तकेषु तु उदुम्बरेति पाठः ।

---

१ ग. ठ. परिवासयति ।

पर्वणि औपवसथ्येऽहनीति । चतुर्दशीमन्वाधाय सद्यो वा पञ्चदशीं समानतन्त्रं दर्शेन पूर्णमासेन वेत्यपि पूर्वमुक्तम् । तत्रापि व्यहकालेति वक्तुं यदि श्वः काल इत्युक्तम् । बौधायनोऽपीष्टिपशुबन्धाः सोपवसथाः सद्यो वेति ।

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैजयन्त्यां चतुर्थप्रश्ने प्रथमः पटलः ॥ १ ॥

---

अथ चतुर्थप्रश्ने द्वितीयः पटलः ।

---

**आहवनीयेऽग्निप्रणयनान्यादीपयति ।**

अग्निः प्रणीयते यैः काष्ठैस्तान्याहवनीये प्रज्वालयति । गार्हपत्यादेवार्थायार्थाय प्राप्तमुद्धरणमपवदितुमाहवनीय इत्युक्तम् ।

**सिकताश्चोपयमनीरुपकल्पयते ।**

सिकता वालुका एवोपयमनीरुपयम्यते प्रदीप्तो याभिस्ता उपयमन्यस्ता यथोपयमनाय समर्थाः स्युस्तथा पात्रेण भृताः करोति । न च चकारादुपयमन्यो भिन्नाश्चेति वाच्यम् । उपयमनीरुपनिवपतीति सिकतानामेवोपवापयोग्यत्वाद्बहुत्वाच्च सिकता उपयमनीः कृत्वेति भरद्वाजः । सिकताभिरुपयम्येत्यापस्तम्बः ।

**उद्यच्छतीध्ममुपयच्छत्युपयमनीरुपयते धार्यमाणे ।**

यान्यपि प्रणयनान्यादीप्तानि तान्येव समुदायापन्नानीध्म इत्युच्यते । काष्ठान्येवेध्मो नतु संस्कारनिमित्त इति दर्शितम् । इध्ममग्निप्रणयनीयमित्येकत्वदर्शनेन नेध्मस्य संस्कारापेक्षा । इध्ममुपय(द्य)च्छति समूहीकृत्योर्ध्वमुत्क्षि(र्ध्वं क्षि)पति । उपयच्छति सिकताः शरावगृहीताः प्रदीप्तेध्मस्य संवरणार्थमुप समीपे यच्छत्यधस्ताद्धारयति यथोद्यम्यमानोऽग्निर्न विशीर्येताधस्ताच्च न पतेत्तेनोपयत उपयमनीभिर्यमिते धार्यमाण इध्म उपरीत्यर्थः ।

**यत्ते पावक चकृमा कच्चिदागः पूर्वो यत्सन्न परो भवासि । घृतेन त्वं तनुवो वर्धयस्व मा मा हिंसीरधिगतं पुरस्तादिति शेषे जुहोति ।**

शिष्ट आहवनीय एव नतूद्धृते मन्त्रलिङ्गादित्यर्थः । दर्विहोमत्वात्स्वाहान्तो मन्त्रः । अपादानाय पावकाग्नय इदम् ।

**अग्नये प्रणीयमानायानुब्रूहीति संप्रेष्यति प्रणीयमानायानुब्रूहीति वा ।**

होतारमित्यर्थात्तुल्यबलत्वाद्विकल्पः ।

त्रिरनूक्तायाꣳ हरत्युत्तरवेदिं प्राप्य जुह्वां पञ्चगृहीतं गृहीत्वा हिरण्यमन्तर्धायाक्ष्णयोत्तरवेदिं व्याघारयति ।

त्रिरनूक्तायां प्रथमायामिति ज्ञेयम् । ऊर्णाम्रदसं प्रथमः सीद योनिमित्यग्रे वक्ष्यमाणत्वान्न परिधानीयायां प्रथमायामित्येवाऽऽह भरद्वाजः । हरति तमग्निमुत्तरवेदिसमीपं प्राप्येति पाठप्राप्तस्य पुनर्वचनं कात्यायनादिभिर्यदुक्तं पञ्चगृहीतं गृहीत्वाऽग्निं प्रणयतीति तन्मा भूदित्येवमर्थम् । जुह्वामिति वचनं जुहोतिचोदनाभावे स्वाहान्तमन्त्रपाठेऽपि न दर्विहोम इति स्पष्टयितुं हिरण्यं सुवर्णमन्तर्धाय यत्र यत्र व्याघारयति तत्र तत्रेत्यर्थो नतु स्रुच्यवधानमन्तर्धानं हि स्थलाज्ययोर्मध्ये व्यवधानं कोणात्कोणपर्यन्तं तु प्राङ्न्यायादिना ।

सिꣳहीरसि सपत्नसाही स्वाहेति दक्षिणेऽꣳसे ।

नाभ्यतिरिक्तोंऽसस्तत्र नाभिलग्नकोणमारभ्याग्निकोणपर्यन्तमक्ष्णयेति वचनादन्यत्राप्येवम् ।

सिꣳहीरसि सुप्रजावनिः स्वाहेत्युत्तरस्याꣳ श्रोण्याम् ।

वायव्यकोणमारभ्य नाभिवायव्यकोणपर्यन्तम् ।

सिꣳहीरसि रायस्पोषवनिः स्वाहेति दक्षिणस्याꣳ श्रोण्याम् ।

नैर्ऋतकोणमारभ्य नाभिकोणपर्यन्तम् ।

सिꣳहीरस्यादित्यवनिः स्वाहेत्युत्तरेऽꣳसे ।

नाभिकोणमारभ्येशानकोणपर्यन्तम् ।

सिꣳहीरस्यावह देवान्देवयते यजमानाय स्वाहेति मध्ये ।

नाभेर्नैर्ऋतकोणमारभ्येशाननाभिकोणपर्यन्तं तत्र तत्र हिरण्यान्तर्धानपूर्वकं सर्वत्रोत्तरवेदिर्देवता तेभ्य उत्तरवेदिरित्युपक्रम्य तस्मादुत्तरवेदिं पूर्वामग्नेर्व्याघारयन्तीति श्रुतेः ।

भूतेभ्यस्त्वेति स्रुचꣳ हिरण्यं चोद्गृह्य ।

उपयुक्तप्रतिपत्तिरतो विशेषनिर्दिष्टयोर्मन्त्रावृत्त्यैवोद्गृह्योत्क्षिप्याप्राप्तत्वाद्विधिरनुमेयः । य एव देवा भूता इत्याद्यर्थवादेन च देवतात्वं स्वाहाकारेण दानाभावात् ।

पौतुद्रवैः परिधिभिः परिदधाति ।

पौतुद्रुर्देवदारुः । औदुम्बर इति केचित् । मानं वेदेर्यथा परिधीनां परस्परयोगो यथा स्यात्तावन्मात्रम् ।

विश्वायुरसीति मध्यमं ध्रुवक्षिदसीति दक्षिणार्ध्यमच्युतक्षिदसीत्युत्तरार्ध्यम् ।

परिदधातीत्यनुकृष्यते । दृꣳहेति मन्त्रान्तः ।

उपक्लृप्ताः संभारा गुग्गुलुसुगन्धितेजनं
शुक्लोर्णास्तुका पेत्वस्यान्तरा शृङ्गे या ।

पूर्वमेव संपादिताः संभाराः संभ्रियतेऽग्निर्यैस्ते । गुग्गुलुधूपपाठः । गुग्गुलिति भाषायाम् । सुगन्धितेजनमिति तृणविशेषो यस्तिक्तत्वान्न पशुभिर्भक्ष्यते । शुक्ला चासावूर्णा स्तुका चेति स्तुका छिन्नप्ररूढोर्णैव पेत्वस्य गतपुंस्कस्य मेषस्य शृङ्गयोर्मध्ये योत्पन्ना । पैत्वो वृष्णिरेवेति कात्यायनः । स्तुकामस्य च्छिन्नां छिन्नस्तुकस्येत्येकेषामिति भरद्वाजः ।

तानग्नेर्भस्मासीति सकृदेवोत्तरनाभ्यां निवपति ।

तान्संभारान् । मन्त्रेऽग्नेर्भस्मास्यग्नेः पुरीषमसीत्येकवचनश्रुतेर्गुग्गुल्वादिशब्दैः प्रत्येकं भिन्नद्रव्यत्वात्प्रतिसंभारमाधाने मन्त्रदर्शनाच्च तथा प्राप्तमुक्तं सकृदिति संभारशब्देनैव विधानादेकद्रव्यत्वादग्नेर्भस्मेत्पुरीषं यत्संभारा इत्येकवचनेन बहूनां सामानाधिकरण्यान्नाभ्यास इत्यर्थः ।

ऊर्णावन्तं प्रथमः सीद योनिमित्युच्यमाने यज्ञ प्रतितिष्ठ सुमतौ सुशेवा आ त्वा वसूनि पुरुधा विशन्तु । दीर्घमायुर्यजमानाय कृण्वन्नथामृतेन जरितारमङ्धि यज्ञः प्रत्यष्ठादिति संभारेषु प्रतिष्ठापयति ।

उच्यमाने होत्रा तं दीप्तमिध्मं न्यस्तेषु संभारेषु प्रतिष्ठापयति मन्त्रेण ।

अग्नेः कुलायमसीति दक्षिणत उपयमनीरुपनिवपति ।

उपयमनीः सिकता अग्निसमीपे निवपति ।

मनुष्वत्त्वा निधीमहि मनुष्वत्समिधीमहि । अग्ने मनुष्वदङ्गिरो देवान्देवायते यजेत्युपसमिन्धे ।

अग्निं काष्ठेन ।

अग्निर्यज्ञं नयतु प्रजानन्मैनं यज्ञहनोऽविदन् । देवेभ्यो यज्ञं प्रब्रूतात्प्रप्र यज्ञपतिं तिर स्वाहा वायुरादित्यो यज्ञो यज्ञं नयतु प्रजानन्मैनं यज्ञहनोऽविदन् । देवेभ्यो यज्ञं प्रब्रूतात्प्रप्र यज्ञपतिं तिर स्वाहेति चतस्रोऽतिमुक्तीर्हुत्वा ।

अतिमुक्तिसंज्ञिका आहुतीर्वायुर्यज्ञमित्यादि तथाऽऽदित्यो यज्ञमित्यादि मध्ययोरनुषङ्गेण स्वाहान्ताभ्यां मन्त्राभ्यां दर्विहोमधर्मेण जुहोति ।

---

१ ग. घ. ङ. ज. झ. ञ. ठ. ड. ण. [1]शृङ्गीया ।

**जुहूं१ स्रुवं च संमृज्य चतुर्गृहीतेनाष्टगृहीतेन द्वादशगृहीतेन वा स्रुचं पूरयित्वा सप्त त इति पूर्णाहुतिं जुहोति ॥ ५ ॥**

अपूर्वत्वाद्धोमस्यापूर्वं संमार्गविधानं, पूरयित्वेति वचनाद्द्वादशगृहीतेनाष्टगृहीतेन चतुर्गृहीतेन वा यथा पूर्णा भवति तथा गृह्णातीत्युक्तम्। पूर्णया स्रुचाऽऽहुतिः पूर्णाहुतिरितिसंज्ञानिर्वचनात्।

**एषोऽत्राऽऽहवनीयो यतः प्रणीयते स गार्हपत्यः।**

यत उत्तरवेद्यां प्रणीय पूर्णाहुत्यन्तेन संस्कृतः सोऽत्र पशुबन्ध एव नाग्निहोत्रहोम आहवनीयकार्यकरो यतः प्रणीयते सोऽत्र गार्हपत्यो नाग्निहोत्रे। तथा च कालेऽग्निहोत्रं कर्तव्यं तन्त्रमध्येऽपि तच्च प्राकृतेष्वेव नतूत्तरवेदिस्थे भरद्वाजेनात्र विकल्प उक्तः संस्थिते पशुबन्धे काले वेति, तन्निराकृतम्।

**आहवनीयं गार्हपत्यं दक्षिणाग्निं चान्वाधायेध्माबर्हिराहरति।**

अतिदेशप्राप्तस्यानुवादोऽयं क्रमार्थं परमतव्युदासार्थं च। अन्वाधानं देवतापरिग्रहार्थमुक्तमिष्ट्या देवतापरिग्रहसिद्धौ न वचनमस्ति तस्मात्तन्नान्वाधानसिद्धिः। तथा च भरद्वाजः—न पश्विष्ट्यामग्निं गृह्णीयादित्यपरमिति। दीक्षणीयायां हि वचनाद्देवतापरिग्रहार्थता। प्रत्येकग्रहणं तु प्राजिहितेऽन्वाधानाभावप्रदर्शनार्थम्। इष्ट्याऽऽन्वाधानसिद्धिः सांनाय्यविकारत्वाच्छाखाहरणं सूत्रान्तर उक्तं तन्मा भूदिति वक्तुमन्वाधायेध्माबर्हिरेवाऽऽनयति। द्रवद्रव्यं हि शाखया शोधनीयं न मांसं तथाऽस्मिन्नविद्यमाने सह धर्मद्रव्यं निवर्तत इत्युक्तत्वात्। व्रतग्रहणपूर्वकं वेदस्य पूर्वमेव कृतत्वान्नाप्यत्र प्लक्षशाखाहरणं तस्य न प्रकृतशाखार्थेनार्थोऽपि तु विकृतावुपदेशेनास्मरणार्थं ततस्तु बर्हिराहरणानन्तरमेवाऽऽनयति नतु तस्या आनयनविधिरस्ति बर्हिरर्थे विधानाभावात्। प्रायोगिकास्तूष्णीमानयन्ति आनयन एव वा प्राप्ते कुतस्तूष्णीमिति बर्हिः प्राकृतमेव नत्वग्नीषोमीयविकारत्वादिक्षुशलाके अपि।

**सप्तदश सामिधेन्यो न परिधीनिध्म उपसंनह्यति।**

वाचनिकं निरूढे सप्तदशत्वं विकृतौ तु विकल्प इत्येकः पक्ष उक्तोऽत्र तु नियतमेव समिधो वर्धन्त इत्युक्तं परिधिकार्यं पशौ ह्यग्निभ्रातृत्वसंस्तवाद्दृष्टार्थोऽयमुत्तरवेदिसंस्कारस्तथाऽपि प्रसङ्गेन रक्षसामपघातलक्षणोऽदृष्टसंस्कारोऽप्येभिः कर्तुं शक्यते परिधिशब्देन विधानाच्चातोऽन्ये प्राकृता निवर्तन्ते। ततस्त्वां विंशतिधेत्यूहः। त्रीन्परिधीनिति लुप्यते। यज्ञायुरनुसंचरानित्युपवेषधृष्टिशब्दविवक्षया पुंस्त्वं तद्दर्शितमेव पूर्वम्।

---

१ च. °व प्रकृ°।

अग्नीन्परिस्तीर्य पाणी प्रक्षाल्योत्तरपराजी१४ स्तीर्त्वा ।

चोदकप्राप्तानुवादः पदार्थक्रमार्थः । बर्हिराहरणानन्तरं वेदिकरणं तस्य जातत्वात् । यत्र परिस्तरणमुपवास इति क्रिया रात्रेः कालस्याभावेऽपि संस्कारलोपो नास्तीति- न्यायप्रदर्शनार्थं परिस्तरणानन्तरं पाणीप्रक्षालनमेव ।

यथार्थं पात्रुकानि पात्राणि प्रयुनक्ति ।

अतिदेशप्राप्तौ चोषधपात्राणां प्रयोजनाभाव इति वक्तुं यथार्थमित्युक्तम् । यथार्थं प्रयुनक्ति पात्रुकानि चेत्यर्थः ।

स्फ्यमग्निहोत्रहवणी१५ स्रुवस्वधिती द्वे जुहूवसाहोमह- वर्नी द्वितीयां द्वे चोपभृतौ पृषदाज्यधानीं द्वितीयां ध्रुवां द्वे आज्यस्थाल्यौ दधिधानीं द्वितीयां वेदं समवत्तधानीं द्वे रशने द्विगुणां द्विव्यायामां त्रिगुणां त्रिव्यायामां द्वे कार्ष्मर्यमय्यौ वपाश्रपण्यौ द्विशू- लामेकशूलां च कुम्भीं हृदयशूलं प्लक्षशाखां स्वरुं मैत्रावरुणदण्डं यूपं यूपशकलमरणी येन चार्थः ।

प्राकृतानि कपालशूर्पाजिनशम्यादिकं निवृत्तमौषधद्रव्याभावात् । स्वधितिं पशो- र्विशसनशस्त्रं, जुहू इति जुहूशब्दस्य न विसंज्ञा तथाऽपि जुहू इति निर्देशश्छान्दसो भाषायां जुह्वाविति भवितव्यम् । दधिधानीं द्वितीयामिति च प्रथमतो दध्येव यस्यां निरुप्यते तां दधिधानीमित्यर्थः । पृषदाज्यं यस्यां क्रियते सा च पृषदाज्यस्थाल्येव । समवत्तधानीमितीडापात्रं पात्रुकं, यूपशकलं तक्षणजातमञ्जनार्थम् । स्पष्टमन्यत् । येन चार्थः । येन सुवर्णशकलादिना । एवमन्यदपि ।

पवित्रे कृत्वा यजमानवाचं यच्छेति संप्रे- ष्यति वाग्यतः पात्राणि संमृशति ।

पवित्रकरणानन्तरं ब्रह्मन्प्रणेष्यामीत्येतद्रहस्येव । वाजसनेयकब्राह्मणेन प्रणीता- प्रतिप्रसवस्य दर्शपूर्णमासयोर्व्याख्यातमिति प्रणीताप्रणयनमामन्त्रणपूर्वकं कार्यमेव । व्याख्यातं दर्शपूर्णमासयोरेव । स्पष्टमन्यत् ।

प्रोक्षितेषु वाचं विसृजते ।

हविष्कृता वाचं विसृजत इति कालाभावात्प्रोक्षितेषु पात्रेषु । यज्ञमात्रेऽपि वाग्यतेन कर्तव्यपदार्थेषु प्राकृतेषु चोदकप्राप्तेषु मध्येऽन्ये न सन्तीति प्रोक्षितेष्वित्युक्तम् ।

उत्तरं परिग्राहं परिगृह्य संप्रैषेण प्रतिपद्यत आ- ज्येन दध्ना चोदेहीति संप्रैषस्यान्त१६ संनमति ।

स्फ्योदसमानन्तरं प्रोक्षणीरासादयेत्यादि समानं, विशेष आज्येनेत्येतस्यानन्तरं

दध्ना चेति पदमूहनीयं, संनाम ऊहः। यथार्थमूह इत्युक्तमेव तथाऽपि मध्ये स्रुवं स्वधितिमिति मा भूदित्येवमर्थं प्रैषस्यान्तमित्युक्तम्। अयमभिप्रायः—यथा स्रुचः संमार्ष्टीत्यत्र स्रुवस्यापि ग्रहणमेवमत्र स्रुवग्रहणेन स्वधितिग्रहणं सिध्यति दध्नः प्रदेयत्वाभावादाज्येन न साम्यमतोऽन्यस्मिंश्च द्रव्ये तेनार्थेन संयुज्यमाने धर्मविश इति न प्राप्नुयात्तदर्थमुक्तं संनमतीति दर्शितम्।

यत्प्रागाज्यनिर्वपणात्तत्कृत्वाऽऽज्यं
निरूप्य दधि पृषदाज्यार्थं निर्वपति।

प्राकृतपदार्थानन्तरं वैकृतस्य विनिवेशार्थं क्रमदर्शनं प्रैषानुसारेणाऽऽज्यनिर्वपणा- यत्प्राक्तत्कृत्वेति तत्र स्रुववत्स्वधितिसंमार्गोऽवदानसाधनत्वादाज्यनिर्वपणमात्रे सत्ये- वादितिरस्येति दधिस्थालीमादाय महीनामिति दधि निर्वपति। तस्य प्रयोजनं पृषदाज्यार्थमिति पृषद्गुणकमाज्यं तस्य संस्कारार्थमित्यर्थः। तेन नेदं हविरपि तु हविःसंस्कारकं तेन न दधिधर्माः सायंदोहाद्याः। यत्र हविः प्रदीयेतेति वचनादत्र नाऽऽदिष्टसामान्यमामिक्षा तथाऽपि चोक्तार्थ आज्यधर्माः।

न तु(नु) तस्मिन्न संस्कारा नहि दर्शपूर्णमासार्थाज्यस्थाने विधीयते(न्ते) येनाऽऽज्य- धर्माः स्युरिति तत्राऽऽह।

तस्मिन्नाज्यधर्माः क्रियन्ते यदन्यदधिश्रयणात्।

वाजसनेयिब्राह्मणे हि भवति द्वयं वा इदं सर्पिः संसृष्टमाज्यं चेति धर्मप्राप्तिः स्वतन्त्रद्रव्यस्यैवात उक्तं तस्मिन्नाज्यधर्माः क्रियन्त इति। तर्हि द्वयमप्यस्तु हविरिति न। पृषदाज्यमित्येकत्वं श्रुतेः। वदति च स्पष्टमेव कात्यायनः पशौ मन्त्रवर्णाच्छृते श्रेति पशौ स्वाहा देवाꣳ आज्यपान्स्वाहेति। तथा पृषदाज्यं गृह्णातीत्येकवचनश्रुतेश्च न द्रव्यद्वयं पृषदाज्यमित्याज्यशब्दादाज्यं संसृष्टं च दध्यपि तस्मादाज्यमेवैतत्। ननु द्वित्वश्रुतेरर्थवादत्वेन कुतः संस्कारप्राप्तिरिति चेन्न दध्यधिश्रयतीति वाजसनेयिनामन्या श्रुतिरधिश्रयणं निषेधति। न ह्यप्राप्तं निषिध्यतेऽतोऽवश्यं धर्मप्राप्तिरिति। किं च येन संसृष्टेन हविरुत्पद्यते तदपि हविर्धर्मैः संस्क्रियते यथा सायंदोहादि, संस्कृतेनैव दध्नाऽऽमिक्षोत्पत्तिरिति अग्नावधिश्रयणे द्रव्यनाशान्न। अत एव दध्ना चोदेहीति निगदान्तेः चोहः। न्यायमते तु न संस्कारः।

आज्यग्रहणकाले जुहूपभृतोश्चतुर्गृहीते
गृहीत्वा[1] तृतीयमाज्यस्य दधन्यानीय।

चतुर्गृहीतं प्रत्येकमाज्यस्य निरुतस्य तृतीयं भागनिर्देशात्संस्कार्यमाज्यं तृतीयमेव दधनीति गुणविभक्तेश्च।

१ क. च. छ. ट हीत्वा।

ज्योतिरसि विश्वरूपं विश्वेषां देवानाᳬ समिदिति पञ्चगृहीतं पृषदाज्यं गृह्णाति महीनां पयोऽसीति वा।

मन्त्रद्वयविधिना वा कृतमन्त्र वा मन्त्रावृत्तिश्चान्यतरस्य।

यथाप्रकृति ध्रुवायाम्।

क्रमार्थमनुवादः।

सर्वेष्वाज्येषु यूपसंमानेन प्रतिपद्यते।

वेद्यास्तरणानन्तरं प्लक्षशाखास्तरणं दक्षिणश्रोण्याम्। तथोक्तं कात्यायनीये बर्हिषि प्लक्षशाखां स्तृणाति यूपसंमानेनोपलक्षितं कर्म पूर्वं च तत्करोतीत्यर्थः।

तदाऽऽह—

देवस्यत्वेत्यभ्रिमादाय परिलिखितमिति त्रिःप्रदक्षिणं यूपावटं परिलिखत्यर्धमन्तर्वेद्यर्धं बहिर्वेदि।

कृन्तामीत्यन्तः। अवट इ(मि)त्येकत्वात्सकृन्मन्त्रो द्विस्तूष्णीं, समन्तादिति वक्तुं प्रदक्षिणमिति। यूपावटो यूपार्थे गर्तस्तं मध्याद्यावान्खननायाऽऽप्तस्तावन्तं रेखयाऽङ्कितं करोति। महावेद्यां यथार्धं खातस्य वेद्या बहिश्चार्धं यथा तथा परिलिखति। अत्र वेदिर्नार्धस्याङ्गत्वेन विधीयतेऽपि तु वेदिदेशो लक्ष्यते। तथा च द्यात्मके देशे खात इत्येवान्यथा देशविधाने वेदेरङ्गत्वविधाने वाक्यभेदः स्यादतो देशलक्षणा। तेन प्राच्यां यूपैकादशिन्यां न वेद्यामर्धमिति फलम्।

परिलिख्याग्नीधूपावटं खनोपरसंमितं त्र्यङ्गुलेन द्व्यङ्गुलेन चतुरङ्गुलेन वोपरमति खनतादिति संप्रेष्यति।

संमीयमानोऽवयव उपरशब्दवाच्योऽतस्तन्मानेऽवटे खाते ततोऽपि त्र्यङ्गुलाद्यन्यतममानेनाधिको निम्नः। अग्नीद्यथाप्रैषं करोति।

उपरमात्रं खात्वा॥ ६ ॥

अग्नीद्यथार्थं खात्वा।

यत्ते शिल्पः परावधीत्तक्षा हस्तेन वाश्या। आपस्ते तद्धस्त्रियाः पुनन्तु शुचयः शुच इति यूपं प्रक्षालयति।

स्पष्टम्।

यवमतीः प्रोक्षणीः कृत्वा पृथिव्यै त्वेति पूर्वं प्रोक्षत्यन्तरिक्षाय त्वेति मध्यं दिवे त्वेत्यग्रᳬ शुन्धतां लोकः पितृषदन इति यूपावटेऽपोऽवनयति।

१ ख. °क्षितः°।

यवयुक्ताः प्रोक्षणार्थमपः कृत्वा न संस्कारः। स्पष्टम्। 'शेषभूता अपोऽवटे' इत्येव भरद्वाजः।

यवोऽसीति यवं प्रास्यति पितृणां सदन-
मसीति प्राचा बर्हिषाऽवस्तृणाति ।

यवप्रासनं बर्हिषाऽवस्तरणं च खात एव। उदगग्रत्वनिवृत्तये प्राचेति। यवोऽसी-
त्यस्याराती रित्यन्तः।

स्वावेशोऽसीति प्रथमपरापातितꣳ शकलमधस्ता-
त्स्वक्तमवटेऽवदधाति घृतेन द्यावापृथिवी आपृणे-
थाꣳ स्वाहेति हिरण्यमन्तर्धाय स्रुवेणाभिजुहोति।

स्वाहाकारान्तो मन्त्रोऽन्यशाखीयोऽस्मच्छाखायामिहाश्रवणात्। दर्विहोमत्वाज्जु-
हूप्राप्तौ स्रुवेणेति वचनादितरधर्मनिवृत्तिः। हिरण्यं शकलेऽन्तर्धाय तत्राभिहोम आज्य-
स्थाल्याज्येन द्यावापृथिव्यौ देवते। वित्ताद्विति स्वावेश इत्यस्यान्तः।

यूपायाज्यमानायानुब्रूहीति संप्रेष्यत्यज्यमानाया-
नुब्रूहीति वाऽग्रेणाऽऽहवनीयं लौकिकेनाऽऽज्येन
पुरस्तात्प्रत्यङ्तिष्ठन्यजमानो यूपशकलेनानक्ति।

आध्वर्यवे याजमानविधानं विकल्पार्थं तथैव कात्यायनभरद्वाजाभ्यामुक्तम्। अग्रे-
णाऽऽहवनीयं विद्यमानं यूपं तस्य पुरस्ताद्भागे प्रत्यङ्मुखस्तिष्ठन्यजमानो यूपशकलेन
साधनेन हस्तेन।

लौकिकेनेति।

जातिवाचिशब्देनोभयमागच्छति तत्राऽऽज्यं स्थालीगतं मा भूदिति लौकिकेनेत्यु-
क्तम्। अञ्जनकर्मणः प्राकृत्वाभावादहोमत्वाच्च लौकिकेनेति गम्यते। होमस्तु यद्यप्य-
यमप्राकृतस्तथाऽपि होमत्वेनाऽऽहवनीयाश्रयत्वेन च स्थाल्याज्येन। अञ्जनीयं कर्म
न निर्दिष्टं तत्त्वग्रं चषालं चानक्ति चषालं प्रतिमुञ्चति स एवाधिकारात्।

देवस्त्वा सविता मध्वाऽनक्त्वित्यग्रमैन्द्रमसीति चषालम्।

अनक्तीत्यनुवर्ततेऽग्रं यूपस्य चषालं सर्वतः।

सुपिप्पलाभ्यस्त्वौषधीभ्य इति चषालं प्रतिमुञ्चति।

प्रतिमुञ्चत्यग्रे यूपस्याबध्नाति। एतदन्तं याजमानमथवा प्रतिमोचनमध्वर्योर्यजमानोऽ-
नक्तीत्येव विधानादित ऊर्ध्वं स्वञ्जनमध्वर्योरेव। यजमानमेव तेजसाऽनक्तीति यज-
मानातिरिक्तस्य वाक्यशेषे कर्तृत्वनिर्देशात्।

१ घ. छ. ट. अवयं। २ ख. ग. छ. ठ. प. 'कादिको'।

देवस्त्वा सविता मध्वाऽनक्त्वित्यान्तमग्निष्ठामभिमनक्ति ।

अन्तमभिव्याप्याऽऽन्तमग्निष्ठामाहवनीयसंमुखामश्रिं यूपस्य तामनक्ति । अभिवि-स्येव गोपरम् ।

रशनादेशे त्रिः प्रदक्षिणं परिमृशति मध्ये वा ।

यत्र रशनया परिव्ययो तत्र यूपमध्ये वा ।

अनक्तमुपरम् ।

करोतीति शेषः । पुनर्वचनं कात्यायनेनोक्तं सोपरमग्निष्ठादेशमक्त्वेति तन्मा भूदिति ।

आञ्जनप्रभृति यजमानो यूपं नानु(नू)त्सृजत्यापरिव्ययणात् ।

स्पष्टम् ।

यूपायोच्छ्रीयमाणायानुब्रूहीति संप्रेष्यत्युच्छ्रीयमाणायानुब्रूहीति वा ।

स्पष्टम् ।

उदिव५ स्तभानान्तरिक्षमित्युच्छ्रयति ।

अवटाद्बहिरेवोर्ध्वं करोति यूपमित्येव पृथिवीमुपरेण । दृ५हेत्यन्तः ।

ते ते धामानीत्यवटेऽवदधाति ।

यूपमित्येव भूरेरित्यन्तः ।

विष्णोः कर्माणि पश्यतेति द्वाभ्यां कल्प-
यत्यग्निनाऽग्निष्ठां सदिशं मिनोति ॥ ७ ॥

ततमित्यन्ताभ्यां द्वाभ्यां[1] (भ्यां)कल्पयति यथास्थानम् । अग्निनाऽऽहवनीयेनाग्नि-ष्ठेति या पूर्वमुक्ताऽतस्तां समानदिशमाहवनीयाभिमुखां मिनोति रोपयति ।

यं कामयेत तेजसैनं देवताभिरिन्द्रियेण व्यर्ध-
येयमित्यग्निष्ठां तस्याश्रिमाहवनीयादित्थं वेत्थं
वाऽतिनावयेत्तेजसैवैनं देवताभिरिन्द्रियेण व्यर्ध-
यति यं कामयेत तेजसैनं देवताभिरिन्द्रियेण सम-
र्धयेयमित्याग्निष्ठां तस्याश्रिमाहवनीयेन संमिनुयात् ।

प्रथमोऽर्थवादो नित्यमग्निष्ठामश्रिमाहवनीयाभिमुखां कुर्यादिति विधेस्तादृशस्य काम-नायां संकल्पविधानार्थं द्वितीयं कामयेतेति प्रथम आहवनीयात्सकाशादित्थं वेत्थं वाऽन्यदिशं प्रति नावयेत्नुतं कुर्याद्दोषमुक्त्वा न तथा कुर्यादिति ।

---

१ क. ग. च छ. ट. ठ. 'ध्याख्या त' । २ घ. ङ. ज. झ. म. 'भानेत्यु' । ३ ख. ग. च. छ. ट. ठ. ण. द्वाभ्यां पृ° ।

अग्निं प्रत्युपनतं बर्हिष्ठे[1] निर्णुतमनाविरुपरं[2] संमिनोति ।

अग्निमाहवनीयं प्रत्युपनतं नम्रं बहिर्भागे निर्णुतमनुन्नमनम्रमनाविरप्रगट उपरो यस्येति तादृशं संमिनोति सम्यगवस्थापयति ।

ब्रह्मवनिं त्वेति प्रदक्षिणं पुरीषेण पर्यूहति ।

पुरीषेणावटखननमृदा परितः पूरयति । पर्यूहामीत्यन्तः ।

ब्रह्मदृꣳहेति मैत्रावरुणदण्डेन परिदृꣳहति ।

पुरीषं दण्डमूलेनाधस्ताद्नमयति द्रढयतीति यावत्पोषं दृꣳहेत्यन्तः ।

उत्तभ्नान पृथिवीमिति प्रदक्षिणमपोऽनु परिषिञ्चति ।

दृतिमित्यन्तः । खातमनु यूपस्य परितः प्रदक्षिणं सिञ्चति ।

देवस्य त्वेति त्रिगुणां त्रिव्यायामां दार्भीꣳ रशनामादाय ।

आददे इत्यन्तः । त्रिभिर्गुणैर्निर्मितां दर्भमयीं प्रसारितयोर्बाह्वोर्मध्ये व्यामविस्तार-स्तत्प्रमाणाम् ।

इदं विष्णुर्विचक्रम इति सरशनेन पाणिना यूपं त्रिरुन्मार्ष्टि ।

गृहीतरशनायुक्तेन हस्तेनोर्ध्वं सकृन्मन्त्रेण द्विस्तूष्णीं मार्ष्टि । सुरे इत्यन्तः ।

तद्विष्णोः परमं पदमिति यूपस्याग्रं प्रेक्षते ।

चषालादधिकमूर्ध्वस्थितम् ।

यूपाय परिवीयमाणायानुब्रूहीति संप्रे-
ष्यति परिवीयमाणायानुब्रूहीति वा ।

स्पष्टम् ।

परिवीरसीति तया नाभिदेशे[3] त्रिः
प्रदक्षिणं परिव्ययति मध्ये वा ।

मनुष्या इत्यन्तः । वेष्टयति नाभिपरिमिते देशे यूपं मध्ये यूपस्य वा ।

उत्तरमुत्तरं गुणं करोति ।

वेष्टयन्प्रथमवेष्टनादुपरि द्वितीयं तदुपरि तृतीयं गुणं रशनावेष्टनस्य ।

यं कामयेतोर्जैनं व्यर्धयेयमित्यूर्ध्वां[4] वा तस्यावाचीं वाऽवोहेत् ।

यजमानमूर्जा वियोगं नयेयमिति योऽध्वर्युः कामयेत तस्य यजमानस्य यूपरशनाना-भिदेशे मध्ये वां परिवीतामूर्ध्वां सादयेदधस्ताद्वा प्रतिषेधार्थमेवाद(वोहन(?))मनेकार्थ[5]-मित्यर्थः ।

१ क. ज. °हिष्ठां नि° । ख. °हिष्ठे नि° । ग. भ. ठ. ण. °हिष्ठो नि° । क. ट. °हिष्ठानि° । घ. छ. ढ. °हिष्ठानि° । ञ. °हिष्ठां नि° । २ घ. ङ. ज. ञ. . ठ. ढ. °रं मि° । ३ घ. ङ. ञ. म. ढ. नाभिदघ्ने । ४ भ. ठ. ण. °मर्थवा° । ५ ग. ठ. ण. °कार्थः ।

यदि कामयेत वर्षुकः पर्जन्यः स्यादित्यवाचीमवोहेत् ।

सत्यां कामनायामेव तथा संकल्प्याधस्तात्कुर्यान्नान्यथा । वर्षुको वृष्टिप्रदानशीलः ।

यदि कामयेतावर्षुकः स्यादित्यूर्ध्वामुद्वृहेत् ।

अवृष्टौ सत्यां पूर्ववदेव ।

यं कामयेत स्त्र्यस्य जायेतेत्युपान्ते
तस्य व्यतिषज्य न प्रवेष्टयेद्यं काम-
येत पुमानस्य जायेतेत्यान्तं तस्य
प्रवेष्ट्य स्थविमदणीयसि प्रवयति ।

अस्य यजमानस्य स्त्र्यपत्यं भवत्विति यः कामयेतेति निन्दया न तथा कार्यमि-त्यर्थः । उपान्ते यूपे त्रिवेष्टितरशनायाः कृतग्रन्थेर्यौ मूलाग्रभागाववशिष्टौ तयोरुपान्ते द्वयोर्वेष्टनमकृत्वा परस्परं चाग्रौ मेलयित्वोत्सर्गो व्यतिषङ्गः स न कर्तव्य इत्यर्थः । शाखान्तरप्रसक्तस्य निन्दयोत्तरस्तुतिर्यं कामयत पुमानस्येत्येतन्नित्यं काम्यं चैतत् । प्रवे-ष्टनमेकैकस्य प्रत्येकं ततोऽवशिष्टान्तौ स्थविमदणीयसि प्रवयति स्थविष्ठं स्थूलं भागं मूलभागमणियसि सूक्ष्मे प्रवेशयति ।

दिवः सानुरसीति स्वरुमादत्ते दिवः सूनुरसीति वा दिवः
सानूपेषेति वाऽन्तरिक्षस्य त्वा सानाववगूहामीत्युत्तरे-
णाग्निष्ठां मध्यमे गुणे[1] स्वरुमुपगूहत्युत्तमे वा ॥ ८ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे चतुर्थप्रश्ने द्वितीयः पटलः ॥ २ ॥

---

अग्निष्ठाश्रेरुत्तरभागे गुणयूपयोर्मध्ये प्रवेशयति । स्पष्टमन्यत् ।

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां
प्रयोगवैजयन्त्यां चतुर्थे पशुप्रश्ने द्वितीयः पटलः ॥

---

अथ चतुर्थप्रश्ने तृतीयः पटलः ।

---

उपक्लृप्तः पशुरकूटोऽकर्णोऽकाणोऽखञ्जोऽखण्डोऽप-
ण्डोऽघृष्टोऽश्लोणोऽसप्तशफः पन्नदञ्छागो यमान्यतरो
यूथ्यो मातृमान्पितृमान्भ्रातृमान्सखिमांस्तं स्नापयति ।

पूर्वमेव तन्त्रारम्भादुपक्लृप्तः । पशुरिति सामान्यनिर्देशेऽपि च्छागस्य वपाया इत्यादि-

---

१ क. ख. ग. च. छ. ट. ठ. ण. °षजेद्यं । २ घ. ङ. ज. झ. ञ. ड. °ति शकल्मा° । ३ घ. ङ. ज. झ. ञ. ड. °हमवगू° । ४ क. °त्तरे वा । ५ घ. ङ. ज. झ. ञ. ढ. स्नापयित्वा ।

छिन्नाच्छाग इत्यग्रिमेण संबन्धः । कूटो भग्नशृङ्गः कुटिलशृङ्गोऽतोऽन्य एवमुत्तराणि परिसंख्या ज्ञेया । कर्णेन विकलोऽ(लः)कर्ण इति रूढ्या स न । काणश्चैकचक्षुः स न । लङ्गो दुर्बलपादः स न । खण्डो दन्तैर्हीनः स न । षण्ढः क्लीबः स न । घृष्टो गत्वरः स न । श्लोणो बधिरः स न । सप्तशफ एकस्मिन्पादे खुरद्वयहीनः स न । पतिता दन्ता यस्य स पन्नदन्स ग्राह्यः । आदौ पतिताः पश्चादागता इत्यर्थः । तथा च बहृचब्राह्मणे—यदा वै पशोः पुनर्दन्ता जायन्तेऽथ स मेध्यो भवतीति । तथा चाखण्डः पन्नदन्निति अनयोरविरोधो ज्ञेयः । छागोऽजः । यमयोरुत्पन्नयोर्मध्य एकः । प्रयूथ्यो यूथे समुदाये भवो नैकाकी । मातृमानित्यादिचतुष्टयं तत्कालविद्यमानं(न) मातृपितृभ्रातृसखितया ज्ञेयम् । तं स्नापयति प्रक्षालयति । अत्रानुग्रहमाह भरद्वाजः—पशुरङ्गहीनः स्याद्रूपतो वा यथाऽर्थः संपद्येत वैष्णवीमाग्नावैष्णवीं सारस्वतीं बार्हस्पत्यां चेति हुत्वा सर्वप्रायश्चित्तानि जुहुयादिति । बाधूलस्त्वाग्नेयीमाग्नावैष्णवीं प्राजापत्यामैन्द्रावायव्यामिति[2] च हुत्वोपाकुर्यादिति । यानि च सूत्रे विध्यपराधे चोक्तानि प्रायश्चित्तानि च बाधूलपक्षेऽप्यनाज्ञातादित्रयं सर्वप्रायश्चित्तं च समुच्चीयते । सर्वे होमा दर्विहोमधर्मेणाऽऽज्यस्थाल्याज्येनापूर्वा होमाः स्थाल्याज्येन होमव्यतिरिक्तमाज्यसाध्यं कर्म लौकिकाज्येनेति सर्वत्र ज्ञेयम् ।

इषे त्वेति बर्हिषी आदत्ते ।

दर्भौ द्वौ ।

उपवीरसीति प्लक्षशाखाम् ।

आदत्त इत्यनुकर्षः ।

इन्द्राग्निभ्यां त्वा जुष्टमुपाकरोम्युपो देवान्दैवीर्विशः प्रजापतेर्जायमाना इमं पशुं पशुपते त इति बर्हिर्भ्यां प्लक्षशाखया च पशुमुपाकरोति ।

दैवीर्विशः प्रागुरित्यादिरेवती रमध्वमित्यन्तः । प्रजापतेरिति च, इमं पशुमिति च मन्त्रैर्गृहीतबर्हिः प्लक्षशाखाभिः पशुं स्पृशन्देवतार्थत्वेन संकल्पयति ।

प्रजानन्त इत्युपाकृत्य पञ्च जुहोति ।

जुह्वा व्यापृतत्वादपूर्वत्वात्स्थाल्याज्यं वपाहोमहवन्यां पञ्च गृहीत्वा दर्विहोमधर्मेण प्रजानन्तः० येषामीशे० ये बध्यमान० य आरण्याः० प्रमुञ्चमाना० इति पञ्चभिर्मन्त्रैर्जुहोति । क्रमप्राप्त उपाकृत्येति वचनमुपाकरणाङ्गतां दर्शयितुं, तेनोपाकृतस्य पशोरूहः सिद्धः ।

---

१ ख. ग. ङ. ठ. ण. 'पतदन्त इ' । २ ग. ठ. ण. 'मैन्द्र वा' । ३ च. छ. ज. झ. ञ. ड. 'न्त: प्रतिगृह्णन्ति पूर्व इ' ।

पशुपतेः पशवो विरूपाः सदृशा उत । तेषां यं वव्रिरे देवा-
स्तꣳ स्वराडनुमन्यतामिति वा मध्ये पञ्चमीं जुहोति ।

प्रमुच्यमाना इत्येतस्य विकल्पार्थः ।

अग्नेर्जनित्रमसीत्यधिमन्थनशकलमादाया-
परेणाऽऽहवनीयं बर्हिषि निदधाति ।

अधिकृत्य मथ्यते येन शकलेन तत्तथा । बर्हिषि स्तीर्णे ।

वृषणौ स्थ इति प्राञ्चौ दर्भौ शकलेऽवदधाति ।

निहिते त्वधिमन्थनशकले कौचिद्दर्भौ स्थापयति । शकलसंस्कारोऽयमुपाकरण-बर्हिषोरन्यत्र विनियोक्ष्यमाणत्वात् ।

उर्वश्यसीत्यधरारणिमादत्ते पुरूरवा इत्युत्तरारणिम् ।

संस्कृते तयोरेव बुद्धिस्थत्वात् ।

घृतेनाक्ते इत्याज्यस्थाल्या बिलेऽनक्ति ।

अपूर्वाज्यनिवृत्तये चाऽऽज्यस्थाल्या इत्युक्तम् । स्रुवादीनां ग्रहणनिवृत्तये बिल इत्युक्तम् । अरणी सहैवाऽऽज्यस्थाल्या बिल एवानक्ति न धारयेति वक्तुं बिल इत्य-धिकरणोपादानम् ।

आयुरसीति समवदधाति वृषणं दधाथामिति वा ।

अरणी एकत्र संनिधापयति । अरणी समवधायेति भरद्वाजः ।

अग्नये मथ्यमानायानुब्रूहीति संप्रे-
ष्यति मथ्यमानायानुब्रूहीति वा ।

गतम् ।

त्रिरनूक्तायां गायत्रं छन्दोऽनुप्रजायस्वेत्येतैस्त्रिः
प्रदक्षिणमारभ्य यथासुखमत ऊर्ध्वं मन्थति ।

एतैरिति मन्त्रत्रित्वे च क्रमेण प्रतिमन्त्रं प्रदक्षिणं प्रदक्षिणमारम्भं कृत्वा ततो यथा-सुखं प्रदक्षिणमप्रदक्षिणं च मन्थति । मन्त्रत्रित्वकरणानुषङ्गस्त्रैष्टुभं छन्दोऽनुप्रजायस्वेति प्रथमायां त्रिरनूक्तायाम् ।

जातायानुब्रूहीति ॥ ९ ॥ जाते संप्रे-
ष्यति प्रह्रियमाणायानुब्रूहीति प्रह्रियमाणे ।

गतम् ।

---

१ च ढ विश्वरू° । २ घ. ङ. ज. ङ ञ. ढ. °ले अव° ।

भवतं नः समनसावित्यग्रेणोत्तरं परिधिसंधिं प्रहरति ।

अथ न इत्यन्तः । मथितमग्निमुत्तरवेद्यग्नौ प्रक्षिपति ।

अग्नावग्निरिति प्रहृत्य स्रुवेणाभिजुहोति ।

धेयमित्यन्तः । दर्विहोमत्वेन जुहूप्राप्तौ तस्या व्यापृतत्वेन वसाहोमहवनी समा. नार्था प्राप्ता । स्रुवेणेनीतरधर्मनिवृत्त्यर्थम् । अभिप्रहृत्मग्निं लक्षीकृत्य प्रविष्टोऽग्निर्दे. वता । अत्रानुग्रहमाह भरद्वाजः—यदि मथ्यमानो न जायते तस्य स्थाने हिरण्य. शकलं प्रहृत्याभिजुहोतीति ।

देवस्य त्वेति द्विगुणां द्विव्यायामां दार्भीं[१] रशना- मादाय तस्य रशनान्तेन दक्षिणं बाहुमुन्मार्ष्टि ।

दद इत्यन्तः । उन्मार्जनं तूष्णीम् । तस्य पशोर्दक्षिणं बाहुमित्यन्वयः ।

ऋतस्य त्वा देवहविः पाशेनाऽऽरभ इति दक्षिणे पूर्वपादेऽर्धशिरसि च प्रतिमुञ्चति ।

पाशेनेति मन्त्रलिङ्गाद्रशनया दक्षिणे बाहौ सकण्ठदक्षिणेऽर्धशिरसि शृङ्गयुक्तेव पाशरशनैकदेशकृतं प्रतिमुञ्चति रशनापाशमासञ्जयति ।

धर्षामानुषानिति पुरस्तात्प्रत्यञ्चमुदञ्चं वा यूपे नियुनक्ति ।

पशुं यूपस्य पुरस्तात्पुरोभागे प्रत्यङ्मुखमुदङ्मुखं वा यूपे नियोजयति ।

अद्भ्यस्त्वौषधीभ्यः प्रोक्षामीति प्रोक्षति ।

पशुमिति शेषः ।

अपां पेरुरसीति पाययति ।

पशुमेवोदकं पाययति यदि पिबेत्तदा मन्त्रः ।

स्वात्तं चित्सदेवमित्यधस्तादुपोक्षति ।

स्वदतैनमित्यन्तः । पशोरधस्ताद्धस्तेनोर्ध्वमुदकं मुञ्चन्प्रोक्षति ।

सामिधेनीप्रभृतीनि कर्माणि प्रतिपद्यते ।

वेदं निधायेत्यादि प्राकृतपदार्थक्रमावसरार्थम् ।

आघारमाघार्य पशुं[२] समनक्ति ।

द्वितीयाघारमाघार्यैव ध्रुवासमञ्जने प्राप्त आघारमाघार्य पशुमिति श्रुतेः पशुं समनक्ति ।

कथं तत्राऽऽह—

---

१ घ. ङ. ज. ञ. ढ. °रिधिं संधिना वाऽनुप्र° । ञ. °रिधिसंधिमनुप्र° । २ क. च. ट. °कण्ठे द° ।

**सं ते प्राण इति दक्षिणेऽर्धशिरसि सं यजत्रैरङ्गा-
नीत्यंसयोश्चारे सं यज्ञपतिराशिषेति भसदि ।**

समनक्ति जुह्वा शिरसोऽर्धमर्धशिरो दक्षिणं च तदर्धशिरश्चेति तत्र । गच्छता-मित्यन्तः प्रथमस्यान्ययोस्तु गच्छन्तामिति बहुवचनविपरिणामेन मध्यमेऽन्त्ये तु गच्छता-मित्यनुषङ्गो यज्ञपतिमेवास्याऽऽशिषं गमयतीति वाक्यशेषात् । अंसोश्चारेंऽसयोः कोष्ठयोस्तयोर्द्वित्वाद्द्विरिति मन्यन्ते । तत्रांसोश्चारशब्देन संलग्नदेशस्य ग्रहणादेकद्र-व्यत्वम् । यत्रैकस्मिन्निति न्यायत्वा(या)त्सकृदेव मन्त्रः । अंसोश्चार इत्येकवचनेन च तदेव ज्ञापितम् ।

**ध्रुवासमञ्जनप्रभृतीनि कर्माणि प्रतिपद्यते ।**

ध्रुवासमञ्जनादि प्राकृतं तद्विकृतादनन्तरमिति क्रमः सर्वत्रैवेति ज्ञापितम् ।

**प्रवरं प्रवृत्य ।**

अत्र निरूढे प्राकृतमेव प्रवरप्रवरणं मैत्रावरुणस्यापि प्रवरं प्रवृत्येत्येवाविकृता-भिधानात् ।

**मैत्रावरुणाय दण्डं प्रयच्छति ।**

अध्वर्युर्मैत्रावरुणाय दण्डं प्रयच्छति सोमे तु दण्डस्य यजमानः प्रदाता न निरूढे ।

**अविक्षुरो विखुरो भूयासमिति प्रतिगृह्णाति ।**

मैत्रावरुणः । याजुषे हौत्रे मन्त्रविधानं बाह्वृचे तदुक्तमेव मैत्रावरुणस्य होतृधर्म-त्वात् ।

**प्रयाजानूयाजेषु पशुपुरोडाशस्विष्टकृति वन-
स्पतौ पशुस्विष्टकृति च याज्यासंप्रैषस्य प्रैषाः ।**

ये प्राप्ता इति शेषः । परिगणनया च प्रयाजादिपञ्चस्वेव ये प्राप्ता याज्यासंप्रै-षस्य प्रैषाः ।

**तत्राध्वर्युराश्राव्य प्रत्याश्राविते‌ऽमुष्मै प्रेष्येति
मैत्रावरुणं प्रेष्यति स होतारं चोदयति ।**

परिगणनया पुरोडाशे वपायां पशौ चैतेषु प्रधानयागेषु प्राप्तोऽमुष्मै प्रेष्येति मैत्रा-वरुणं प्रति प्रैषः स परिसंख्यात एतेषु न कार्यः प्रयाजादिष्वेव पञ्चसु कार्य इत्यर्थः । अमुष्मा इत्येकवचनमविवक्षितं सामिध्य इत्यादि यत्र यत्प्राप्तं द्विवचनं बहुवचनं वा तत्तत्र ज्ञेयम् ।

---

* एतद्व्याख्यानानुरोधेन सूत्रे दक्षिणार्धशिरसीति पाठो ज्ञेयः ।

---

१ क. ख. ग. छ. ट. ठ. ण. °णं न मै° । २ ख. ग. ठ. ण. °नाभावात् । ३ घ. झ. म. ठ. °शे स्वि° ।

**समिद्भ्यः प्रेष्येति प्रथमं प्रयाजꣳ संप्रेष्यति प्रेष्य प्रेष्येत्युत्तरान् ।**

प्रयाजानिति शेषः । मान्त्रवर्णिक्यो देवता वसन्तादिभिरविकृतैरनुमन्त्रणम् । ननु मन्त्रवर्णे समिधो देवता नावगम्यन्ते कथमत्र तन्निमित्तं समिद्भ्य इति । उच्यते— आप्रीसूक्तेषु क्वचित्समिद्धशब्दः क्वचित्समिच्छब्दोऽस्ति तावता नामधेयोपपत्तिः । अथवा समिधः प्रथमप्रयाजस्यायं विकार इति तथा नामधेयं बहुवचनान्तं देवतानिर्देशस्तु समित्समिदिति सूक्ते समिदित्येकवचनान्तेन प्रयोगेण, समिद्धो अद्येति सूक्ते समिद्धशब्देन पुंलिङ्गेन । एवमन्येषु सूक्तेषु ज्ञेयम् । समिद्भ्य इति बहुवचनं तु विरूपैरन्यैर्नामधेयैरेकशेषात् । प्रकृतौ समिधो यद्यपि बद्धास्तथाऽपि तत्र विरूपनामधेयैस्तनूनपादादिभिरेकशेषस्याभिमतत्वात् । यतः प्रथमेन स चातिदेशं मत्वा विना तनूनपादादिनाम्ना केवलं यजेति च प्रैषं विवत्ते देवान्यजेत्यनूयाजेषु देवशब्दे सरूप एक इति प्रकृतौ समिधो यजेति प्रथमे यज यजेतीतरेषु प्राप्तेषु प्रैषेषु तदुद्देते विहिताः समानकार्यकरत्वात्तद्बाध एतैः । अत एव कात्यायनः—प्रेष्येत्याह यजस्थान इति ।

**चतुर्थे समानीयाष्टमे सर्वꣳ समानयते ।**

यत्प्रकृतौ चतुर्थे समानयनमौपभृतस्योक्तं तदत्रार्धं चतुर्थेऽवशिष्टं सर्वमष्टम उत्पत्तावेव या संख्या श्रूयते पञ्च प्रयाजान्यजतीति न संख्यागुणयुक्तेषु प्राकृतेषु यत्रान्यसंख्याविधानं विकृतौ नव प्रयाजानेकादश प्रयाजानिति तत्र प्राकृतबाधेनापि तु प्राकृताभ्यासेनैवेति न्यायमनं दर्शयितुमुक्तमष्टमे सर्वमिति वैकृतस्याभ्यस्तस्याष्टमस्यापि चतुर्थत्वमिति भावः । सर्वमित्यनूयाजार्थपवशेषाभावात् । आचार्यस्तु चतुर्थस्योपान्त्यस्याभ्यासमष्टमपर्यन्तं मन्यतेऽन्त्यस्याभ्यासेन नवमदशमैकादशान् । तद्याजमाने स्पष्टं भविष्यति । तथा च यथाप्रकृति चतुर इष्ट्वोत्तरत एव चान्यानपि चतुरस्ततस्त्रीन्मध्ये यजति ।

**दशमैकादशायाऽऽज्यमवशिष्य ।**

स्पष्टम् ।

**घृतेनाक्तावित्ति जुह्वा स्वरुस्वधिती अनक्ति ।**

अत्र द्विवचनमुपरवबहुवचनवद्यात्रूप्येयमेकैकत्र तस्यानुपपत्तेर्नच द्वयोः सहैवाञ्जनं द्रव्यपृथक्त्वाद्विः सकृदिति धर्मविशेषेणाऽऽवृत्तिदर्शनाच्च ।

**द्विः स्वरुं सकृत्स्वधितेरन्यतरां धाराम् ।**

सकृन्मन्त्रस्तूष्णीं सकृत्स्वधितेरेकामेव धारामनक्तीत्यनुकृष्यते । तत्रापि मन्त्रः स्वरुस्वधिती अनक्तीति यदुक्तं तदेव प्रपञ्चितं न पृथगनेन विधानमेकवाक्यमेकक्रियात्वम् ।

घृतेनाक्तौ पशुं त्रायेथामिति ताभ्यां पशुꣳ समनक्ति ।

सर्वमन्त्रपाठः पूर्वस्य तावन्मात्रस्वरूपापन्नार्थोऽन्ययोभयत्रापि प्रतीकोपादानेन पूर्णो मन्त्रः स्यात्पूर्वस्तु शाखान्तरीयस्तावानेव ताभ्यां प्रकृतस्वरुस्वधितिभ्याम् ।

शमितरेषा तेऽग्निः प्रज्ञाताऽसदित्यक्तां धारामादिशञ्छमित्रे स्वधितिं प्रयच्छति ।

त्वया प्रज्ञाताऽक्ता धाराऽस्तु विशसनार्थमनयैव विशाधि नान्ययेत्यर्थः ।

यथास्थानꣳ स्वरुमवगूह्य ॥ १० ॥

यस्मिन्गुणे पूर्वं स्थितस्तत्रैव नान्यत्र ।

पर्यग्नये क्रियमाणायानुब्रूहीति संप्रेष्यति पर्यग्नयेऽनुब्रूहीति वा ।

स्पष्टम् ।

आहवनीयादुल्मुकमादायाऽऽग्नीध्रः परिवाजप- तिरिति पश्च पर्यग्नि करोति पशुꣳ शामित्रदेशं चात्वालं यूपमाहवनीयं च त्रिः परिद्रवति ।

पर्यग्निकरणं व्याख्यातमत्र विशेषः परिवाजपतिरिति त्रिः समन्तादुल्मुकेन स प्रद- क्षिणं परितो गच्छन्पश्च द्रव्याणि पश्वादीनि प्रत्येकं सकृन्मन्त्रेण द्विस्तूष्णीं पर्यग्नि करोति । द्रव्यप्राधान्यात्त्रिरिति प्रत्येकमभ्यासः । अत्रोल्मुकेन सह परितो द्रवणमेव पर्यग्निकरणम् । तेन द्रवणमपि त्रिस्त्रिरेकैकस्यैव । तथैवोक्तं कात्यायनेन—उल्मुकमादा- याग्नीध्रः समन्तं पर्येति । न च सर्वेषामेकवारं परिद्रवणमिति वाच्यं, द्रव्यपृथक्त्वा- दावृत्तिरेव पश्वादिक्रमानुपपत्तेश्च ।

आज्यानि चेत्येकेषाम् ।

षष्ठमाज्यान्यपि तथैव पर्यग्नि करोतीत्येकेषां शाखिनामस्याकं विकल्पः ।

ये बध्यमानमनुबध्यमाना इति पर्यग्नौ क्रियमाणे त्रीण्यपाव्यानि जुहोति ।

पर्यग्निलक्षणे कर्मणि क्रियमाण आग्नीध्रेणाध्वर्युरपाव्यनामकान्होमानपूर्वत्वादाज्यस्था- ल्याज्येन त्रिर्गृहीतेनात्र न समिदाधानं सामिधेनीसमिद्भिः प्रसङ्गसिद्धेरन्यो दर्विहोम- धर्मोऽस्त्येव ।

आहवनीय उल्मुकं निधाय त्रिः पुनः प्रतिपर्येति ।

उल्मुकेन विना प्रतीपमप्रदक्षिणं यथाक्रमं प्रत्येकं त्रिस्त्रिः पर्येति ।

---

१ क. ख. ग. घ. ङ. च. छ. ज. झ. ञ. ट ठ. °वगूह्य ।

प्रमुच्य पशुमाश्राव्य प्रत्याश्राविते उपप्रेष्य होतर्हव्या देवेभ्य इति संप्रेष्यति ।

होतारमिति शेषः । तस्यैव प्रेषितार्थकर्तृत्वार्थमाह ।

अध्रिगुꣳ होता प्रतिपद्यते ।

अध्रिगुसंज्ञकं निगदम् ।

रेवतीर्यज्ञपतिं प्रियधाऽऽविशतेति[1] बर्हिर्भ्यां वपाश्रपणीभ्यां प्लक्षशाखया च पशुमन्वारभेते यजमानोऽध्वर्युश्च ।

त्रितयेनोभाभ्यां गृहीतेनान्वारभेते स्पृशतः ।

नानाप्राण इत्यध्वर्युर्यजमानमभिमन्त्रयते ।

कामा इत्यन्तः । स्पष्टम् ।

प्रास्मा अग्निं भरतेत्युच्यमाने तदेवोल्मुकमादायाऽऽग्नीध्रः पूर्वः प्रतिपद्यते ।

पशोः पुरतो गच्छति यत्पूर्वं पर्यग्निकरणार्थं गृहीत्वा स्थापितं तदेवाऽऽदाय ।

उरो अन्तरिक्षेत्यन्तरेण चात्वालोत्करावुदञ्चो निष्क्रामन्ति ।

निष्क्रामन्तीति बहुवचनादाग्नीध्रोऽध्वर्युर्यजमानश्च । पशुना सहेत्यर्थः । शमितैनं कण्ठे बद्ध्वा नयतीति वाजसनेयिश्रुतेस्तथा कार्यं चात्वालोत्करयोर्मध्येन निर्गच्छन्ति ।

उत्तरेण चात्वालꣳ शामित्रदेशस्तस्मिन्नुल्मुकं निधायोत्तरेण शामित्रमतिक्रामति ।

आग्नीध्र एव ।

उदीचीनाꣳ अस्य पदो निधत्तादित्युच्यमाने समस्य तनुवा भवेत्युपाकरणयोर्बर्हिषोरन्यतरत्प्रागग्रमुदगग्रं वा न्यस्यति तस्मिन्नेनं प्रत्यक्शिरसमुदीचीनपादं निघ्नन्त्यमायुं कृण्वन्तं संज्ञपयतात्[2]च्छङ्क्यं प्रब्रूतादित्युक्त्वा ।

पाहीत्यन्तः । बर्हिर्न्यसनं शामित्रस्य पश्चादिति कात्यायनः । तस्मिन्बर्हिषि निपात्य घ्नन्ति शमितारः । संगृह्य मुखं नमयन्त्यवाश्यमानमिति कात्यायनः । नमयन्ति श्वासवि(नि)रोधेन । अध्वर्युरमायुमशब्दं कुर्वन्तं शब्दमकुर्वन्तं तदेवावाश्यमानमरोरूयमाणमिति संज्ञपयतात्प्राणैर्वियोजय शङ्क्यं[3] प्रब्रूहीत्युक्त्वा ।

पराङावर्तते यजमानोऽध्वर्युश्च नानाप्राण इत्यध्वर्युर्यजमानमभिमन्त्रयते ।

पराङ्पशुपृष्ठतः परावृत्तौ येन निर्गतौ तेन विहारमागच्छतः । गतार्थमन्यत् ।

---

१ घ. ङ. ज. झ. ञ. ढ. °ति वपाश्रपणीभ्यां बर्हिर्भ्यां प्ल°। २ क. ख. ङ. च. छ. ट. °ताशक्यं प्र° । झ. ढ. °ताच्छक्यं प्र° । ३ क. ख. घ. छ. ट. ण. शक्यं । ४ ख. ङ. च. छ. ट. पशुं पृ° ।

इह पशवो विश्वरूपा रमन्तामग्निं कुलायमभि संवसानाः। अस्मा५ अवन्तु पयसा घृतेन। यासामूधश्चतुर्बिलं मधोः पूर्णं घृतस्य च। ता नः पयस्वतीः सन्त्वस्मिन्गोष्ठ ऋतावृध इति पृषदाज्यमवेक्षमाणौ वाग्यतावासाते यजमानोऽध्वर्युश्च।

पृषदाज्यं स्थालीगतम्। अत्र याजमानं स्वर्विदसि स्वर्वित्त्वेत्यादि। स्पष्टमन्यत्।

इन्द्रस्य भागः सुविते दधातनेमं यज्ञं यजमानं च सूरौ। यो नो द्वेष्ट्यनु त५ रभस्वानागसो यजमानस्य वीरा इत्यध्वर्युः पशुमभिमन्त्रयते यदि रौति॥ ११॥

इति सत्याषाढहिरण्यकेशिसूत्रे चतुर्थप्रश्ने तृतीयः पटलः॥ ३॥

---

रौति संज्ञप्यमानः शब्दं करोति। नैमित्तिको मन्त्रः।

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोग-
वैजयन्त्यां चतुर्थप्रश्ने तृतीयः पटलः॥ ३॥

---

अथ चतुर्थप्रश्ने चतुर्थः पटलः।

---

यत्पशुर्मायुमकृतेति संज्ञप्ते जुहोति।

पशौ संज्ञप्ते गतासौ सति। त्वश्हस इत्यन्तः।

शमितार उपेतनेति संज्ञप्तमुपायन्ति।

बहुवचनात्सर्वेऽप्यृत्विजो यजमानश्चोप पशुसंज्ञ[प्त]नमागच्छन्ति। परीत्यन्तः।

अदितिः पाशं प्रमुमोक्त्वेतमिति पशोः पाशं प्रमुच्यैकशूलयोपसज्ज्य चात्वालेऽवदधाति।

करोमीत्यन्तः। कण्ठे यया पशुर्बद्धः पाशेन तं पाशं निःसार्य तां रशनामेकशूलया वपाश्रपण्योपसज्ज्य गृहीत्वा चात्वालेऽवदधाति तूष्णीं निदधाति विमोचने मन्त्रो लिङ्गात्।

अभिचरतोऽरातीयन्तमधरं कृणोमीति शुष्के स्थाणौ दर्भस्तम्बे वाऽभिनिदधाति।

पाशमित्यन्तः। मन्त्रेण निदधाति। दर्भस्तम्बेऽपि शुष्क एव। वैरिणो मरणं कामयमानस्य यजमानस्य।

---

१ क. ख. ग. च. छ. ज. झ. ञ. ट. ड. ण. °वेक्ष्यमा°। २ ख. ग छ. णं. °ज्ञसमा°।

नमस्त आतानेति पत्न्यादित्यमुपतिष्ठते ।

पश्चाल्लोका वा एषा प्राच्युदानीयत इत्युक्तं प्रागानयनमित्युक्तं यस्याः पश्चादेव स्थानं सा प्राची प्राङ्मुख्यादित्याभिमुखी कथमुदानीयतेऽतोऽयनयोपस्थानस्तमना(?)-याऽऽदित्यरश्मीन्नमस्कुर्यादितिवाक्यार्थावगतेरर्थवादेनोदानयनाङ्गता प्रतीयत उपस्था-नस्येति प्रतिपत्तिसंस्काराङ्गत्वादावर्तते ।

अनर्वा प्रेहीति प्रतिप्रस्थाता पूर्णपात्रं धारयमाणां पत्नीमुदानयति।

उदकपूर्णपात्रं गृहीत्वाऽऽसीनां पत्नीमुत्थाप्याऽऽनयति चात्वालं प्रति मन्त्रेण । पोषेणेत्यन्तः । द्वितीयानिर्दिष्टपत्नीसंस्कारोऽयं प्रतिपत्त्यावर्तते । पूर्णपात्रधारण-मेकस्या एवाऽऽप्यायनार्थत्वात् ।

आपो देवीरिति चात्वालेऽपोऽवनयति ।

पूर्णपात्रगता अपो मन्त्रेण किंचिन्निक्षिपति । द्वितीयानिर्दिष्टा आपः संस्कार्या एव । भूयास्मेत्यन्तः । शुद्धा वयमिति संस्कारत्वावगतिमन्त्रलिङ्गादतः प्रतिपत्तिः ।

प्रतिषिद्धमेकेषाम् ।

अपामवनयनं विहितप्रतिषिद्धत्वाद्विकल्पते ।

एतेनैव सर्वे समुत्क्रम्य चात्वाले मार्जयन्ते ।

एतेन मन्त्रेण चात्वालप्रदेशे स्थित्वा मार्जयन्ते । एवकारेण सर्वो मन्त्रो मार्जन आप्यायनसमुत्क्रमणे च विनियुक्तः । भरद्वाजेनेदमहमित्यन्तः समुत्क्रमणे शुद्धा वय-मित्यादिर्मार्जन उक्तस्तन्मा भूदिति तथोक्तं नो चेदानर्थक्यमेवकारस्य । एतेनैव सर्वेण सह समुत्क्रम्यैतेनैव मार्जयन्त इत्यन्वये सत्येवैवकारः सार्थकः । संभूय संज्ञप्तपशोः सकाशादुत्क्रम्य निर्गत्य चात्वालमागत्य मार्जयन्ते सपत्नीका इति भरद्वाजः ।

अध्वर्युरभिषिञ्चति पत्न्याप्याययति पत्न्य-भिषिञ्चत्यध्वर्युराप्याययतीत्येकेषाम् ।

ततस्तस्थानमभिलक्षयित्वाऽ(क्षया)पः प्रक्षिपति । प्रक्षिप्तोदकस्थानाभिमर्शनमाप्यायनम् । *तं परार्थान्येकेन क्रियेरन्निति मुख्यैवाभिषेचनमाप्यायनं करोति ।

वाक्त आप्यायतामित्येतैर्यथारूपम् ।

अभिषेचनं तूष्णीमाप्यायनं मन्त्रेण । यथा यस्य मन्त्रस्य रूपमर्थोऽस्ति मन्त्रस्तदर्थ-स्याऽऽप्यायने विनियोक्तव्यः । तत्र चत्वारि स्पष्टानि । या त इति हृदयदेशमित्याप-स्तम्बो ग्रीवामिति भरद्वाजः। यत्ते क्रूरमिति भिन्नमन्त्रेणाङ्गानीति भरद्वाजकात्यायनौ

* तमिति सर्वपुस्तकेषु विद्यते परं तु असंबद्धत्वात्प्रमादिकमिति ज्ञेयम् ।

१ ठ. प. °स्तन्मना° । २ क च. ट. °क्यार्थ° । ३ घ. ङ. ञ. झ. म. ढ. °माणामु° ।

याँ श्रोत्रमित्यस्य पृथङ्मन्त्रत्वपक्षे तु तत्त आप्यायतामित्यादिकोऽनुषङ्ग उत्तरस्मा-दप्यनुषङ्गो न्यायविद्भिरुक्तः ।

**नाभिस्त आप्यायतामिति नाभिं मेढ्रं त आप्यायतामिति मेढ्रं पायुस्त आप्यायतामिति पायुꣳ शुद्धाश्चरित्रा इति संनिधाय पादाञ्छमहोभ्यामित्यनुपृष्ठꣳ शेषं निनयति ।**

आप्यायतामित्यनुषङ्गः । शाखान्तरीयमन्त्रस्य मेढ्रमित्यस्य मध्ये संनिवेशार्थं नाभिः पायुरिति पूर्वोत्तरयोः प्रदर्शनम् । मेढ्रं मेहनं प्रजननं शिश्नमिति यावत् । पायुर्गुदः(दम्) । शुद्धाश्चरित्रा इति शं पृथिव्या इत्यन्तेन संनिधाय पादान्सकृदेवाऽऽप्याययति । अनुपृष्ठं पृष्ठदैर्घ्येणाभिषेचनीयानामपां शेषं प्राक्संस्थमेव निनयति सति शेषेऽन्यथा लोपः । निनयत्यध्वर्युरभिषेक्त्री पत्नी वा । शेषनिनयनं पृथिव्यामेव पृथिव्यै शुचꣳ शमयतीति वाक्यशेषात् ।

**उत्तानं पशुमावृत्यौषधे त्रायस्वैनमित्युपाकरणयोर्बर्हिषोरवशिष्टं दक्षिणेन नाभिं त्र्यङ्गुले द्व्यङ्गुले चतुरङ्गुले वा वपादेशे निदधाति ।**

स्पष्टम् । उपाकरणार्थं ये गृहीते बर्हिषी तयोरेकं पशूपाकरणदेशे न्यस्तमवशिष्टमत्र स्पष्टमन्यत् ।

**स्वधिते मैनꣳ हिꣳसीरिति स्वधितिना तिर्यगाच्छिनत्ति ।**

प्रागग्रमेव बर्हिर्निहितं तदुपरि स्वधितेर्धारयाऽक्तया तिर्यग्दक्षिणोत्तरमाकर्षन्ननुपहरन्प्रहारेण वपादेशे छिनत्ति दीर्घच्छेदं करोति यथा वपादेशे वपा लभ्यते तावदाच्छिनत्ति ।

**छिन्नस्य तृणस्याग्रं पाणौ कृत्वा स्थविमल्लोहितेऽङ्क्त्वा रक्षसां भागोऽसीत्युत्तरापरमवान्तरदेशं निरस्याप उपस्पृश्य ।**

छिन्नस्य बर्हिषोऽग्रभागं वामे पाणाविति कात्यायनादयः । कृत्वा स्थापयित्वा स्थूलं मूलभागमाच्छेदनप्रदेशे लोहितेऽङ्क्त्वा । उभयतोऽङ्क्त्वेति कात्यायनः । मेनमथमं तमो नयामीत्यन्तेन मन्त्रेण निरस्यत्युत्तरापरं वायव्यकोणं दिङ्मात्रस्याधिकरणता मा भूदपि तु स्थलस्येति वक्तुमवान्तरदेशमित्युक्तं स्थल एव नान्तरिक्षे निरस्यतीत्यर्थः । राक्षसत्वादुदकोपस्पर्शनम् ।

---

१ ख. ङ ज. झ. ञ. ठ. ढ तेनाङ्क्त्वा ।

इषे त्वेति वपामुत्खिदत्यूर्जे त्वेति तस्मिन्नुपैकशूलयोपतृणत्ति ।

उत्खिदति लग्नां पृथक्करोति न तु सर्वां बहिः करोति । तत्स्थैकशूलया वपाश्रपण्यो- पतृणत्ति संश्लेषयति वपैकदेशमेव ।

देवेभ्यः शुन्धस्वेत्यद्भिः प्रोक्षति देवेभ्यः
शुम्भस्वेति स्वधितिना वपां निमार्ष्टि ।

नीचैर्मार्ष्टि । स्पष्टम् ।

घृतेन द्यावापृथिवी प्रोर्ण्वाथामिति
द्विशूलामेकशूलां च प्रच्छादयति ।

वपाश्रपण्यौ द्वे अप्याच्छादयति ।

इन्द्राग्निभ्यां त्वा जुष्टामुत्कृन्तामीत्युत्कृन्त-
त्यच्छिन्नो रायः सुवीर इति वा ।

पशोः सकाशात्पृथक्करोति ।

मुष्टिना शमिता वपोद्ग्रहणमभिगृह्याऽऽस्त आवपाहोमात् ।

वपोद्ग्रहणं यस्माद्देशाद्वपोद्गृहीता निर्गमिता तद्विदारितं स्थानमभ्युपरि मुष्टि- नाऽऽच्छाद्याऽऽस्ते यावद्वपाहोमः स्यात् ।

प्रत्युष्टमिति शामित्रे वपां प्रतितपति ।

शामित्राग्नौ । अरातय इत्यन्तः ।

नमः सूर्यस्य संदृशो युयोथा इत्यादित्यमुपतिष्ठते ।

गतम् ।

श्रपणार्थमग्निमवशिष्य तदेवोल्मुक-
मादायाऽऽग्नीध्रः पूर्वः प्रतिपद्यते ।

शामित्रदेशेऽग्निशेषमुल्मुकात्पाकार्थं स्थापयित्वा यदेवोल्मुकं पूर्वमानीतमेव गृही- त्वाऽऽग्नीध्र आहवनीयं प्रत्यागच्छत्यध्वर्योः पूर्वः पुरतो गच्छति ।

उर्वन्तरिक्षमिति गच्छति ।

अध्वर्युः । अन्विहीति मन्त्रान्तः । आहवनीयं प्रति ।

वपाश्रपणी पुनरन्वारभेते यजमानोऽध्वर्युश्च ॥ १२ ॥

यजमानग्रहणं प्रकृताग्नीध्रनिवृत्त्यर्थम् । ननु(नु) पुनःशब्दादालम्भकर्त्रोरेव प्रवृत्तिः स्यात्ततो द्वयोरपि ग्रहणं न कर्तव्यम् । सत्यम् । भरद्वाजेनोक्तं यजमानोऽन्वारभत

१ क. ख. च. छ. ट. वपया श्र° । २ घ. ङ. ज. झ. ञ. ठ. ड. 'पोद्धरण° । ३ ग. ठ. ण. 'पोद्धरणं । ४ घ. ङ. ज. झ. ञ. ठ. ड. [illegible]

इति तन्मा भूदिति द्वयोर्ग्रहणम् । अध्वर्युर्वपां गृहीत्वा गच्छन्वपाश्रपण्योरन्वारम्भं करोत्येवेति यजमानश्चेत्येतावदेव वक्तव्यम् । न । अध्वर्योर्वपालम्भमात्रं मा भूदपि तु वपाश्रपण्योरेवोभयोरारम्भ इति ।

उप त्वाऽग्ने दिवे दिव इति तिसृभिराहवनीयमुपायन्ति ।

राजन्तमध्वराणां स नः पितेवेति द्वे अन्ये ऋचौ । तिसृभिरेताभिराहवनीयसमीपमागच्छन्ति । प्रकृता यजमानाध्वर्य्वाग्नीध्राः ।

उपसृष्ट उल्मुके प्रत्युष्टमित्याहवनीयस्यान्तिमेऽङ्गारे वपां निगृह्णाति ।

आग्नीध्रेणाऽऽहवनीय उपसृष्टे मेलिते तस्मिन्नुल्मुके सत्यध्वर्युः प्रत्युष्टमिति समग्रेण मन्त्रेणान्तिमे यतोऽन्योऽङ्गारो बहिर्नास्ति तस्मिन्नङ्गारे निगूढे वपां निगृह्णाति नियच्छत्युत्तरत एव ।

वायो वीहि स्तोकानामिति बर्हिषोऽग्रं
प्रास्यत्यधस्ताद्वपाया उपास्यतीत्येकेषाम् ।

छिन्नस्य बर्हिषो वामपाणौ स्थितं यदग्रं तदाहवनीय एव न चेदानीमेवं वपाया अधस्तादाहवनीयोऽस्ति निग्रहणे कृते न पुनरुपर्येव वपास्त(?)माहवनीये । ए[के]षामस्माकमेव शाखिनामस्ति हि वायो वीहि स्तोकानामित्याह तस्माद्विभक्ताः स्तोका अवपद्यन्तेऽग्रं वा एतत्पशूनां यद्वपाग्रमोषधीनां बर्हिरग्रेणैवाग्रꣳ समर्धयत्यथो ओषधीष्वेव पशून्[3] प्रतिष्ठापयतीति ब्राह्मणमतो वपायाः श्रप्यमाणाया अनुद्रुतस्तोकाया एवाधस्तादिति युक्तमुत्पश्यामः । स्पष्टमिदमेवोक्तं भरद्वाजेन–प्रतिप्रस्थाता श्रपयत्याहवनीये वपामधस्ताद्वपाया बर्हिषोऽग्रं प्रास्यतीति ।

अन्तरा यूपमाहवनीयं च प्रतिप्रस्थात्रे वपां प्रयच्छति ।

यूपाहवनीययोर्मध्यतः कृत्वा दक्षिणतः स्थिताय प्रतिप्रस्थात्रे ददाति ।

दक्षिणत उदङ्ङासीनः प्रतिप्रस्थाता वपाꣳ श्रपयति[1] ।

उदङ्मुख उत्तरवेद्या दक्षिणत आसीनो वपां शृतां करोति । अत्र बर्हिरग्रस्य वपाया अधस्तान्निरसनम् ।

त्वामु ते दधिरे हव्यवाहमिति वपामभिजुहोति ।

जुह्वा व्यापृतत्वात्स्रुवेण, अभि वपायामेव जुहोत्याज्यस्थाल्याज्येनाध्वर्युरेक । जुषस्वेत्यन्तः ।

---

१ घ. ङ. ज. झ. ञ. ठ. अ॰सृष्ट । २ ग ठ. °नद्रुत° । ३ ग. ठ. ण. °ति प्रस्थात्रे वपां प्रया° ।

**प्रादुर्भूतेषु स्तोकेषु स्तोकेभ्योऽनुब्रूहीति संप्रेष्यति ।**

स्तोका वपायां श्रप्यमाणायां मध्ये मध्ये बुद्बुदा इवोन्नता येऽवयवास्ते तेषु प्रकटेषु सत्स्वेव प्रेष्यति मैत्रावरुणम् ।

**श्येनी॰ सुशृतां कृत्वा सुपिप्पला ओषधीः कृधीति दक्षिणस्यां वेदिश्रोण्यां प्लक्षशाखायां निदधाति ।**

अत्र सुशृतां कृत्वा निदधातीति समानकर्तृ[क]त्वावगतेः पाके च प्रतिप्रस्थातुः कर्तृत्वान्निधानमपि तेनैवेति भाति, तथाऽप्यग्निहोमप्रभृतिसमाख्ययाऽध्वर्योरेव कर्तृत्वादत्र क्त्वाप्रत्ययेन पूर्वकालत्वमात्रमुक्तमिति गम्यतेऽथवा श्येनीं सुशृतामध्वर्युरेव कृत्वेति ज्ञेयम् । श्येनी श्वेता श्वेता पूर्वमेवास्ति तस्य वर्णस्यानपगमे सत्येव सुशृतां कृत्वा । अत्र सांनाय्यवदभिघार्योत्तरत उद्वास्य यूपाहवनीयान्तरा नीत्वा सुपिप्पला इति बर्हिष्येव प्लक्षशाखायां महावेदिदक्षिणश्रोण्यामास्तीर्णायां निदधाति । तदुक्तं भरद्वाजेन—सांनाय्यवदभिघार्य तथोद्वास्य बर्हिषि प्लक्षशाखायां प्रतिष्ठापयतीति । सांनाय्यस्य कुम्भ्या सहोद्वासनमत्र वपाश्रपणीभ्यां सहैवोद्वास्य सहैव निदधाति ।

**प्रयुता द्वेषा॰सीति वपाश्रपणी प्रवृहति ।**

निधानानन्तरं वपाश्रपणी वपयाऽऽच्छादिते प्रवृहति वपातो निर्गमयति । यस्त आत्मा, इयमिन्द्रियम्, अनयेन्द्राय तथा देवा वपामयीत्यूह इति केचिदन्ये तन्नेच्छन्ति । हविष्ट्वेन मनस्त्वेन वा नपुंसकत्वैकवचनत्वोपपत्तेरविकृतो मन्त्रो वपा मयि श्रयतामित्येव विकृतमिति । याजमानमयं यज्ञः पञ्चहोता ।

**स्रुचौ होताऽऽदापयति घृतवतीमध्वर्यो स्रुचमास्यस्वेत्युच्यमाने जुहूपभृतावादायात्याक्रम्याऽऽश्राव्य प्रत्याश्राविते स्वाहाकृतीभ्यः प्रेष्येति संप्रेष्यति वषट्कृते हुत्वा प्रत्याक्रम्य प्रयाजशेषेण पृषदाज्यमभिघार्य वपामभिघारयति [ द्विर्वपा॰ सकृत्पृषदाज्यम् ] ।**

चोदकप्राप्तपदार्थाः प्रयाजेभ्यः पूर्वं कर्तव्यास्तेषामुत्कृष्टानामत्र कर्तव्यत्वेनानुस्मरणं स्वाहाकृतीभ्यः प्रेष्येत्येतस्मात्पूर्वविधानार्थं प्रकृता( त )प्रयाजशेषेण पृषदाज्यमभिघार्य वपामभिघारयतीत्यस्य विधानार्थं पृषदाज्यं स्थालीगतं वनस्पतियागोपयोक्ष्यमाणं न स्रुग्गतं नोपभृतमन्तत इति भरद्वाजः । तेन परिसंख्येयं वपामेवेति पृषदाज्यमभिघार्य वपामभिघारयतीति श्रुतेः पौर्वापर्यं मतूपयोगक्रमेण ।

---

१ ठ. इहमि॰ ।

ध्रुवां वा प्रथमं यद्याज्यभागौ यक्ष्य-
न्भवति कृताकृतावाज्यभागौ ।

कृताकृतौ विकल्पितौ । यदि तौ यक्ष्यन्स्यात्तदैव प्रथमं ध्रुवामपि नान्यदा । अत्रैव तयोर्यागः ।

व्याख्याते पशुहोतरि—

जुहूमुपस्तीर्य हिरण्यशकलमवधाय कृत्स्नां वपामव-
द्यत्युपरिष्टाद्धिरण्यशकलमवधायाभिघार्येन्द्राग्निभ्यां
छागस्य वपाया मेदसोऽनुब्रूहीति संप्रेष्यति ।

मध्ये शकलविधानाद्यर्थमातिदेशिकपदार्थानुवादः । द्विस्त्रिरवदानबाधाय कृत्स्नामित्युक्तं, मा भेरित्युक्त्वा सकृत्सर्वामवदाय । स्पष्टमन्यत् । उत्तरत एव स्थित एतत्सर्वं कुर्यात् । वपावदानार्थं वेदिं प्रविश्य वपाया उत्तरतः स्थित्वाऽवद्येत्तत्त्वग्रेणाऽऽहवनीयं गत्वा दक्षिणतः स्थितः । एवं हविषामवदानेष्वपि द्रष्टव्यम् ।

अत्याक्रम्य—

आश्राव्य न प्रेष्यति मैत्रावरुणो होतारं चोदयति ।

पूर्वोक्तपरिसंख्यातमेव स्मारयति । न प्रेष्यतीति मैत्रावरुणमिति शेषः । प्रेष्येति न प्रैषोऽस्त्येत्यर्थः । अप्रेषित एव मैत्रावरुणो होतारं निगदेन चोदयति प्रेरयति ।

पुरस्ताद्वपाया होमात्स्वाहा देवे-
भ्य इति पूर्वं परिवप्यं जुहोति ।

क्रमप्राप्ते पुरस्ताद्वपाया होमादिति वचनमव्यवधानख्यापनार्थं, वपायागार्थमाश्रावणादि कृत्वा पूर्वं वप्यसंज्ञकहोमं स्थाल्याज्येन हवन्या न स्रुवेण जुहोति । आपस्तम्बमते तु वपावदानात्पूर्वमेव पूर्ववप्यहोमो जुहूव तन्मा भूदित्येतदर्थं पुरस्तादित्यादिवचनं, स्रुचावन्यस्य हस्ते दत्त्वाऽग्रेणाऽऽहवनीयं गत्वा वसाहोमहवन्यामाज्यमादाय यथेतं प्रत्येत्य दर्विहोमधर्मेण हुत्वा स्रुचावादाय पुरस्तात्स्वाहाकारा वा अन्ये देवा इति श्रुतेर्न पुनरन्ते स्वाहाकारः स्वाहादेवतापदाव्यवधान एव होत्रेऽपि दर्शनात्स्वाहा वाचे स्वाहा वाचस्पतय इत्यादौ पदान्तरव्यवधाने तु स्यादन्तेऽपि स्वाहा स्वाहा त्वा सुभवः सूर्यायेत्यादौ । तत्रापि लिङ्गं स्वाहाऽऽधिमाधीतायेत्यादि । अमुमर्थं सूत्रकार एव वसाहोमे स्पष्टयिष्यति ।

जातवेदो वपया गच्छ देवानिति वषट्कृते वपां देवेभ्यः स्वाहेत्युत्तरम् ।

जुहोतीत्यनुवर्तते । देवा इति मन्त्रान्तेन वषट्कारे कृते सति वपां प्रक्षिपति । न

---

१ क. ख. ग. घ. छ. ट. ठ. ण. 'धायेन्द्रा° । २ ग. ठ. ण. °पदव्य° । ३ ग. ठ. ण. व । ४ क. च. ट. 'हा स्वा ।

चात्र स्वाहाकारो दानार्थस्तस्येन्द्राग्निभ्यामेव वषट्कारेण दत्तत्वादन्यदेवताभ्यो न स्वाहाकारेण पुनर्दानम् । अतोऽयं न दर्विहोमो जुहोतिचोदितोऽपि यदेकया जुहुया- दिति याज्यापुरोनुवाक्याभ्यां कृते तु न दर्विहोमत्वम् । तथा यत्प्रयाजानूयाजान्कु- र्यादित्विक्स्ति: सा यज्ञस्य, दर्विहोमं करोतीत्यत्रापि प्रयाजादिरहिते होमे दर्विहोमत्व- मुक्तं तत्तु न सप्रयाजादिके प्राप्नोतीति न स्वाहाकारप्राप्तिः । अत्र वषट्कृते जुहोती- त्यतिदेशप्राप्तानुवादस्तेन वषट्कारे प्रक्षेपस्तु नियतस्तथा मन्त्रान्तरसंनिपातश्च । तत्रोभयं सह प्रायिकं न नियमेन भवति । तत्र वषट्कारे प्रक्षेपाकरणे प्रायश्चित्तविधानादवश्यं प्रक्षेपः । मन्त्रस्य तु पूर्वमेव समाप्तौ पुनरारम्भणीयः कृतेऽपि प्रक्षेपे समापनीयः । तथापि(हि)—यद्यपि मन्त्रान्तेन संनिपातो न स्यात्तथाऽपि मन्त्रसंनिपातमात्रं तु सर्वथा साधनीयमेव न ह्यशक्यं विधिना विधीयतेऽतोऽत्र मन्त्रसंनिपातमात्रमप्युत्पन्तरेहक्रम- नुज्ञातमिति गम्यते । तदुक्तं कात्यायनेनानियमं वास्य इति । सर्वप्रायश्चित्तं च कार्यम् । मन्त्रासंनिपाते तु न प्रायश्चित्तम् । उत्तरं परिवप्यं जुहोतीत्यनुकृष्यते । जुह्वा स्थाल्या- ज्येन पूर्ववप्दवत् ।

प्रत्याक्रम्य स्वाहोर्ध्वनभसं मारुतं गच्छतमिति विषूची वपाश्रपणी प्रहरति प्राचीं द्विशूलां प्रतीचीमेकशूलाम् ।

विषूच्यौ चानुलोमप्रतिलोमाग्रे तत्र ।नियमार्थं प्रागग्रां द्विशूलामिति ।

संस्रावेणाभिहुत्य ।

वपाश्रपण्यावाहवनीयप्रहृते अभिसंस्रावेण जुहोति ।

चात्वाले मार्जयन्ते ॥ ११ ॥

सपत्नीकाः सर्वेऽपीत्यर्थः ।

मार्जने मन्त्रानाह—

आपो हि ष्ठा मयोभुव इति तिसृभिरिदमापः प्रवहता- वद्यं च मलं च यत् । यच्चाभिदुद्रोहानृतं यच्च शेपे अभी- रुणम् । अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः । निर्मा मुञ्चामि शपथान्निर्मा वरुणादुत । निर्मा यमस्य पड्वीशात्सर्व- स्माद्देवकिल्बिषादतो मनुष्यकिल्बिषादिति मार्जयित्वा ।

सर्वमन्त्रान्तेन मार्जनम् ।

पशुपुरोडाशस्य पात्रसंस्सादनप्रभृतीनि कर्माणि प्रतिपद्यते यथार्थमौषधपात्राणि प्रयुनक्त्येकादश

१ ख. ग. घ. ङ. च. ज. झ. म. ठ. ढ. ण. °म् । आपो मा त । २ घ. ङ. ज. झ. म. ठ. ढ. °र्थमोषधिपा° ।

द्वादश वा कपालानि तैः सह शूर्पं कृष्णाजिनꣳ शम्यामुलूखलं मुसलं दृषदुपलां कुटरुं पात्रीं मेक्षणं वेदं प्राशित्रहरणं प्रणीताप्रणयनमिडापात्रं च।

पशोरङ्गभूतः पुरोडाशः पशुयागस्याङ्गभूतपुरोडाशयागस्य पात्रसंसादनप्रमुखाण्येव नतत्वन्वाधानादिकमप्यस्ति तस्य पश्वर्थे कृतस्य प्रसङ्गेनात्राप्युपकारकत्वात्। प्रतिपद्यते करोति। पशुपात्राणां प्रयुक्तत्वात्साधारणानां स्फ्याग्निहोत्रहवण्यादीनामपि प्रयुक्तत्वादसाधारणान्यौषधपात्राण्येव प्रयुज्यन्त इत्यर्थप्राप्ते यथार्थमितिवचनादुपवेषमदन्तीवेदपरिवासनानामपि ग्रहणम्। पशावासादितस्य वेदस्याप्यासादनविधानात्स्फ्याग्निहोत्रहवण्योरासादितयोः पुनरासादनस्याविधानादेवं गम्यते यानि प्रसङ्गेनोपकुर्वन्ति तेषां यद्यपि न पुनरासादनं तथाऽपि येषां प्रातिस्विकतया यज्ञसंबन्धविचारो विहितस्तेषां पुरोडाशोपक्षीणानां पशौ पुनरुपयोक्ष्यमाणत्वाभावादन्येषामेव प्रयोगो युक्तः। प्रणीताविमोकोपवेषोदसनयोर्विधास्यमानत्वाद्वेदस्यापि होत्रा त्यागस्य दर्शनात्संतानाभावेऽपि तूष्णीकं विमुच्य विसर्जनमप्यनुज्ञायते। पुनर्वेदासादनविधानादैन्द्राग्ने पुरोडाशे सत्यप्येकादशानां द्वादशानां च विकल्पे चोदकप्राप्ते सौर्ये प्राजापत्येऽपि पशौ नाष्टाकपालतेति वक्तुं नियमः। अन्येष्वपि पशुषु नियमो ज्ञेयः। स्फ्याग्निहोत्रहवण्यावासाद्य पश्चात्पश्वर्थे सत्यपि प्रणीताप्रणयने तस्यादृष्टार्थस्यैव तदुद्देशमात्रेण कृतस्य नान्यत्र दृष्टविनियोगः। कृतविनियोगस्य च विमोकविधानादासंस्थं चालनानुपपत्तेश्च पुनः पृथक्कपालैः सह शूर्पमित्युक्तं द्वयम्। इडायाः पश्वर्थप्रयुक्ताया अद्याप्यकृतोपकाराया अन्यत्र विनियोक्तुमशक्यत्वात्प्राकृताया अत्र ग्रहणम्। पश्वर्थमपूर्वाया एवोपादानम्। समवत्तधानीशब्देन तस्या निर्देशात्। इडापात्रमुक्तमेकमेव। नान्वाहार्यो दक्षिणा प्रधानदक्षिणयैवर्त्विजां परिक्रीतत्वात्। औषधपात्राणीति प्रकृतौ पुरोडाशार्थतया गृहीतानीत्येव त्वौषधेपात्रस्य दृषदुपलयोश्चरावभावात्। ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छेति संप्रेष्यति। वाग्यतः पात्राणि संमृशति।

निर्वपणकाले व्रीहिमयं पशुपुरोडाशं निर्वपति समानदेवतं पशुना।

पुरोडाशस्येत्येतावति वक्तव्ये पशुग्रहणं यद्देवत्यः पशुस्तद्देवत्यः पुरोडाश इति प्रदर्शनार्थम्। तेन पञ्चमप्रयाजवत्प्रधानदेवतासंस्कारकर्मता दानांशे चाऽऽरादुपकार-

१ ग. ठ. सौर्येप्रा'। २ ग. ठ. 'श्वर्थे स°। ३ क. 'त्युक्तम्। ४ ख. ग. ठ. ण. 'थमात्र'। ५ क. 'शुना प्र°।

कता च । प्रकृतौ व्रीहियवयोर्विकल्पे सति नियमार्थमेतद्व्रीहिमयमिति । तथा च विकृतौ सर्वत्र व्रीहय एव नियता इत्याहुस्तन्नेष्टमाचार्यस्यात्र नियमकरणात् । पशुयागेन समानदैवतमिति सौर्ये सौर्यं प्राजापत्ये प्राजापत्यमन्यत्रापि तथैवेति दर्शितम् । सर्वत्र पशुपुरोडाशे व्रीहिमयत्वं च नियतम् । अयं च प्रधानदेवतासंस्कार इति वक्तुं तथोक्तं यद्देवत्यः पशुस्तद्देवत्यः पुरोडाश इति श्रुतेः ।

**तस्य हविष्कृता वाचं विसृज्य पशुं विशास्ति ।**

तस्य पुरोडाशस्य त्रिष्फलीकरणसंप्रैषेण वाचं विसृज्येत्यनुवाद उत्तरविधित्सया । संज्ञप्तं पशुं विशास्ति । वाचं विसृज्य विशास्तीत्यनेन विकर्तनेऽध्वर्युरेव कर्तेत्युक्तं न शमितेति । तत्राध्वर्योर्गुदं मा निर्व्लैषीरित्यादिप्रैषकर्तृत्वदर्शनात्प्रेष्योऽन्य एव स च नर्त्विक् । शमितरेषा तेऽग्निः प्रज्ञाताऽसदिति विशसने शमिता विकृष्यते । अध्वर्योः प्रयोजकत्वाद्विशसनकर्तृत्वं न विरुध्यते । अध्वर्योरन्य ऋत्विगेवेति कात्यायनः । तत्र पशोर्विशसनं भागकरणं तत्कथमित्याकाङ्क्षिते हृदयमित्यादिक उपयोगपूर्वको निर्देशः ।

**हृदयम् ।**

पद्मकोशसदृशम् ।

**जिह्वा ।**

प्रसिद्धा ।

**वक्षः ।**

क्रोडश्येनाकृति समांसमस्थिकङ्कवदधस्ताद्धृदयस्योपरि ।

**स्तनिम ।**

यकृत्कालजमिति पर्यायः । तत्तु हृदयस्य दक्षिणभागे किंचिच्छ्रुतमिव ।

**मतस्ने ।**

वृक्यौ पार्श्वस्थौ पिण्डावाम्रफलाकृती ।

**पार्श्वे ।**

वङ्क्रिसंहती दक्षिणोत्तरे । अस्थीनि त्रयोदश त्रयोदशैकत्र संहतानि ते पार्श्वे ।

**सव्यं दोः ।**

षकारान्तो नपुंसकलिङ्गो बाहुवचनः । वामबाहुसक्थीति यावत् ।

**दक्षिणा च श्रोणिः ।**

दक्षिणं सक्थि पश्चिमपादस्य दक्षिणभागस्थस्य फलकमिति यावत् ।

---

१ ख. ग. छ. ट. ण. 'ति न व' । २ क. ख. ग. च. छ. ड. ठ. ण. 'णा श्रो' ।

दैवतानि ।

अवदानानि प्रधानदेवतार्थानि कालेऽवदानार्हाणि मांसानि ।

दक्षिणं दोः सव्या च श्रोणिः सौविष्टकृते ।

स्विष्टकृते देवताया मद्दृ(?) अवदाने ।

गुदः साधारणः ।

दैवतसौविष्टकृतेडावदानार्थ उपयड्ढोमार्थश्च । गुदशब्देन पक्कं पुरीषं यस्मिन्स गुदं
त्याकृष्यते तद्गुदं गुदकाण्डमित्युच्यते ।

गुदं मा निर्लेपीः क्लोमानं प्लीहानं पुरीततं
मेदः समवधत्तवा इति संप्रेष्यति ।

क्लोमा नाम गलनाडिका:(का) प्लीहा यकृत्सदृशो वामभागपार्श्वस्थः । एतन्मांसं
कयाऽपि नाड्या न परिगृहीतमसंलग्नमेव तिष्ठति । पुरीततं पुरी हृदयं तयेनाऽऽच्छा-
देतं तत्पुरीततम् । पुरी हृदयं तत्पुरीतता प्रच्छादयतीति श्रुतत्वात् । मेदो नाम बद्धं
क्ययोर्हृदयस्य च वेष्टनकोशः । एतानि गुदं मा निर्लेपीरिति गुदस्याऽऽन्तरप्रदेशं
हिर्मा कार्षीरित्यर्थः ।

शमिता तु—

न गुदं निर्ल्लिखति न वनिष्ठुं निर्भुजति ।

स्थूलशकृदाधार आन्त्रं स्थूलं वनिष्ठुः । तद्विपरीतं बहिर्भागमान्तरं न कुर्यात् ।
तम् ।

अध्युध्निं जाघनीं वनिष्ठुं चान्ववदधाति ।

अध्युध्निरूधस उपरितनं मांसम् । जाघनी जघनप्रदेशे भवा जाघनी पुच्छं च
निष्ठुं तान्प्रत्येकं लक्षयित्वाऽवधानेन स्थापयति ।

यदन्यच्च मेध्यं मन्यते ।

मांसजातमिति शेषस्तदप्यन्ववदधातीत्यनुकृष्यते ।

कुम्भ्यां पशुꣳ समवधाय श्रपयति ।

पशुमांसान्युद्धृतानि तानि सांनाय्यकुम्भीधर्मेण शामित्रेऽग्नौ स्थापितायां पशुकुम्भ्या-
ध्वर्युरवधाय सांनाय्यमन्त्रेण शमित्रा कृत्वा श्रपयति । पाकार्थमग्निमवशिष्येत्युक्त्वा-
च्छामित्रेऽग्नावेव पाकः । शृतꣳ हवीꣳ शमितरिति प्रश्नलिङ्गाच्छमिता पचति । तं
पयतीत्येतावता श्रपयतीत्युपपद्यते ।

शूलेन पार्श्वतो हृदयम् ।

श्रपयतीत्यनुकृष्यते । पूर्ववदेव यथासंभवं कुम्भीधर्मेण शूलेन प्रवृद्धं हृदयं शामि-
ग्निसमीपे श्रपयति ।

**ऊवध्यगोहं पार्थिवं खात्वा तत्र शकृत्संप्रविध्यति ।**

अध्वर्युरेवोवध्यं शकृत्तदूह्यते येनावटेन स गर्त ऊवध्यगोहस्तं पृथिव्यां खात्वा तत्र सर्वं पुरीषं प्रक्षिपति ।

**शृते पशौ पशुपुरोडाशेन प्रचरति ।**

शाखान्तरीयोऽयं विधिर्दर्शितः । वपायागानन्तरं मार्जयित्वा पशुपुरोडाशस्य पात्रसंसादनप्रभृतीनि कर्माणि प्रतिपद्यत इत्युक्तस्ततस्तु हविष्कृता वाचं विसृज्येति शृते पशौ पशुपुरोडाशेन प्रचरतीत्यन्तः । अस्मच्छाखीयस्तु पशुमालभ्य पुरोडाशं निर्वपति समेधमेवैनमालभते वपया प्रचर्य पुरोडाशेन प्रचरतीति श्रूयते तेन विकल्पः । तत्रायं क्रमः—संज्ञप्ते पशौ वाचं विसृज्य पशुपुरोडाशस्य पात्रसंसादनप्रभृतीनि कर्माणि प्रतिपद्य तण्डुलप्रक्षालनान्ते कृते पशुमुपायन्तीत्यादिवपाप्रचारे मार्जनान्ते पशुपुरोडाशस्य कृष्णाजिनादानादिना पशुपुरोडाशप्रचारेण कपालविमोचनान्ते कृते पशुं विशास्तीत्यादिना शृते पशौ जुह्वां पञ्चगृहीतमित्यादि वक्ष्यमाणं पशुतन्त्रमव्यवधानेन करोतीत्यस्मच्छाखाक्रमः ।

प्रकृतमनुसरामि शृते पशौ पशुपुरोडाशेन प्रचरतीत्युक्तं कृष्णाजिनादानादिना हविरासादनान्ते कृते पश्वङ्गैरेव प्रसङ्गात्पशुपुरोडाशोपकारे सति वैशेषिकमेव तन्त्रं दर्शयति—

**जुहूपभृतोरुपस्तीर्यावदायाभिघार्य ।**

जुह्वां हविरवदानेन दैव उपभृति स्विष्टकृदवदानं तत उभयत्र यथाविध्यभिघार्य ।

**इन्द्राग्निभ्यां पुरोडाशस्यानुब्रूहीति संप्रेष्यति ।**

गतम् ।

अत्याक्रम्य—

**आश्राव्य न प्रेष्यति मैत्रावरुणो होतारं चोदयति ।**

कृतव्याख्यानम् ।

वषट्कृते जुहोतीत्यन्ते कृते—

**औपभृतं जुह्वां पर्यस्याग्नयेऽनुब्रूह्यग्नये प्रेष्येति[1] संप्रेष्यति ।**

दक्षिणे स्थित एवौपभृतमवदानं जुह्वां प्रक्षिपत्यग्नय इत्यादि आश्राव्याग्नये प्रेष्येति संप्रेष्यति । वषट्कृते स्विष्टकृद्धर्मेण जुहोति ।

प्रत्याक्रम्येत्येतदन्ते कृते—

---

१ ङ. च. ढ. °ति स्विष्टकृते सं° ।

प्राशित्रमिडा च क्रियेते प्राशितायां मार्जनं पिष्टलेपफलीकरणहोमौ प्रणीतासु मार्जनमुपवेषोदसनं कपालविमोचनं च क्रियन्ते[3] ।

प्राशितायामित्यादिकानि क्रियन्त इति बहुवचनेन संबध्यन्ते । वैशेषिकाङ्गप्रदर्शनं प्रसङ्गसिद्धाङ्गपरिसंख्यार्थं प्रसङ्गेनोपकरिष्यमाणाङ्गपरिसंख्यार्थं च । वैशेषिकस्यापि यजमानभागस्य परिसंख्या ।

तस्मिन्कृते जुह्वां पञ्चगृहीतं गृहीत्वा ।

विमोचनान्ते कृते सांनाय्यवदभिघारणं स्थाल्याज्येनेति पञ्चगृहीतं स्थाल्याज्येन, स्रुवेणाभिघारणनिवृत्तये जुह्वामित्युक्तम् ।

पृषदाज्यस्रुवमादाय[4] ।

पृषदाज्यपूर्णस्रुवस्तथा स्थालीपृषदाज्यं स्रुवेण गृहीत्वा ।

शृत३ हवी३ः शमितरित्यभिक्रम्याभिक्रम्य त्रिः पृच्छति शृतमिति शमिता त्रिः प्रत्याह ।

पञ्चगृहीतं स्रुवं च गृहीत्वा किंचिदभिमुखं गत्वा शृत३ हवी३ः शमितरिति श्रावयन्पृच्छति पुनरभिक्रम्य तथैव पृच्छति तृतीयमप्यभिक्रम्य तथैव प्रतिप्रश्नं च शृतमिति प्रत्याहैवं त्रिः प्रश्नस्त्रिरुत्तरम् ।

उत्तरतः परिक्रम्य शूलाद्धृदयं प्रवृह्य कुम्भ्यामवदधाति ।

परिक्रम्य कुम्भ्या उत्तरतः प्रदक्षिणं गत्वा शूले प्रोतं हृदयं निर्गमय्य हृदयं प्रज्ञातं कुम्भ्यामवधाय ।

सं ते मनसा मन इति पृषदाज्येन हृदयमभिघारयति ।

स्रुवेण गृहीतेन पृषदाज्येन कुम्भ्यामवहितं हृदयं तेनाभिघारयति । स्वाहान्तो मन्त्रः ।

स्वाहोष्मणोऽव्यथिष्या इत्यूष्माणमुद्यन्तमनुमन्त्रयते ।

कुम्भीत उद्यतः । स्पष्टमन्यत् ।

यस्त आत्मा पशुषु प्रविष्ट इत्याज्येन पशुमभिघार्य ।

जुह्वाज्येन पञ्चगृहीतेन पशुं कुम्भीगतम् । मह्यमित्यन्तः । पञ्चगृहीतेनाभिघारणं वक्तुं चोदकप्राप्तस्यानुवादः । मन्त्रप्रदर्शनं सं ते मनसेतिमन्त्रानुवृत्तिनिरासार्थम् ।

येन वपां तेन हृत्वा यत्र वपा तत्र पञ्चहोत्राऽऽसादयति ।

येनाऽऽहवनीयस्य यूपस्य च मध्येन वपा हृता तेनैव हृत्वा बर्हिषि प्लक्षशाखायां

---

१ घ. ज. झ. ञ. ढ. स्विष्टकृत्प्राशि° । २ घ. ञ. झ. ञ. ढ. क्रियन्ते । ३ घ. ङ. ज. झ. ग. ङ. क्रियते । ४ घ. ङ. ज. झ. ञ. ढ. स्रुवं चाऽऽदा° । ५ ग. ढ. ण स्रुचं ।

तस्यामेवाग्निहोत्रेत्यासादयति । प्राकृतमन्त्रानिवृत्तिः । यस्त आत्मेति याजमानम् । इदमिन्द्रियमित्यविकृतं हविषोऽत्राऽऽसादितत्वात् । हविषोऽवदीयमानस्यानुब्रूहीति च्छागस्य हविष इत्यादि गृतᳵ हवीरित्यत्रापि हविष एवावदीयमानत्वं नत्वङ्गाना-मिति न्यायेन साधितं न्यायविद्भिस्त एव द्रष्टव्याः ।

**हृदयशूलं प्रज्ञातं निदधाति ॥ १४ ॥**

**इति सत्याषाढहिरण्यकेशिसूत्रे चतुर्थप्रश्ने चतुर्थः पटलः ॥ ४ ॥**

---

अग्रे प्रतिपत्तिविधानार्थमित्यर्थः ।

**इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोग-वैजयन्त्यां चतुर्थे पशुप्रश्ने चतुर्थः पटलः ॥ ४ ॥**

---

अथ चतुर्थप्रश्ने पञ्चमः पटलः ।

---

यजमानेन व्याख्याते पञ्चहोतरि—

**जुहूपभृतोर्वसाहोमहवन्याᳵ समवत्तधान्या चोपस्तृणीते ।**

जुहूपभृतोर्ध्रुवाज्यमन्ययोः स्थाल्याज्यं समवत्तमिडार्थं तस्य धान्याम् ।

**जुहूपभृतोर्हिरण्यशकलाववधाय मनोतायै हविषोऽवदीयमानस्यानुब्रूहीति संप्रेष्यति ।**

जुहूपभृतोर्हिरण्यशकलाववधाय ततः संप्रेष्यति ।

**प्लक्षशाखायामक्तया धारया दैवतानां द्विर्द्विरवद्यति ।**

यत्प्लक्षशाखोत्तरबर्हिर्भवति समेधस्यैव पशोरवद्यतीतिश्रुतेर्बर्हिष्येव स्तीर्णे स्तीर्णायां प्लक्षशाखायामित्यर्थः । सांनाय्यवदङ्गुष्ठपर्वमात्राण्येव ततः स्थूलानि सौविष्टकृतानि ततोऽपि स्थूलान्यैडानीति स्रुवेणावदाने चोदकप्राप्ते धारयेत्यर्थे सामर्थ्यादित्युक्तं पूर्वमेव प्रज्ञातयाऽक्तया स्वधितेर्धारया दैवतान्यवदानानि पूर्वमेवोक्तानि तेषां द्विर्द्विरेकैकम् । अत्र चोदकप्राप्ते द्विरवदाने सति पुनर्द्विर्द्विरिति विधानं प्रत्येकमङ्गेषु यथा स्यादिति नो चेत्सर्वस्यैव सकृद्द्विरवदानमिति चोदकेन प्राप्नुयादेकादशावदानान्यवद्यतीति श्रुतेरपू-र्वोऽवदानविधिरित्युक्तम् ।

**हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षस इत्येतेषामनुपूर्वमवदाय ।**

श्रुतिपाठेन दर्शितः ।

**यथाकाममुत्तरेषामवद्यति ।**

श्रुतिरेव । स्पष्टार्थम् ।

पुरस्ताच्छ्रोणेर्गुदस्यावद्यत्युपरिष्टाद्वा ।

श्रोण्यवदानाभ्यां पूर्वं पश्चाद्वेति विकल्पेन त(य)थाकाममित्यत्र नियमः । अत्र यद्यपि हविष एकत्वान्मा भेरिति सकृत्प्राप्तं तथाऽप्यवान्तरप्रदेशभेदान्नामभेदाच्च प्रत्येकं मन्त्रो यदवदानानीत्ययमपि हृदयादीनि श्रोण्यन्तान्येकश उक्तानि तेषामविशेषेण द्विर्द्विरवदानम् ।

गुदः साधारण इत्युक्तम् । तत्र विभागप्रकारमाह—

गुदं द्वैधं करोति स्थवीय उपयड्भ्यो निदधाति ।

द्वेधाकृतस्य गुदस्य स्थूलं काण्डमुपयड्ढोमार्थे निदधाति ।

अणीयस्त्रैधं कृत्वा तस्य मध्यमं गुद-
काण्डं द्वैधं विभज्य दैवतेष्ववद्यति ।

द्वेधाकृतस्य गुदकाण्डस्य यदणीयो भागस्तं त्रेधा कृत्वा तस्य मध्यमभागो द्वेधाकृतो द्विरवदानं दैवतेष्ववद्यति स्थापयति । अत्रैवावदानानां मन्त्रप्रत्यभिचारणे, अवद्यतीत्यत्रैव श्रवणाद्गुदं द्वैधं करोतीत्यादिना विभागमात्रमवदेयवद्द्रव्याणां कृतमिति नावदानत्वम् । एवं चैकादशावदानानि द्विरवत्तानि भवन्ति ।

उपभृति महत्त्र्यङ्गयोरवद्यत्यवशिष्टयोश्च गुदकाण्डयोरन्यतरत् ।

महद्गुदकाण्डं त्रेधाविभक्तस्य यौ भागाववशिष्टौ तयोर्मध्ये यन्महत्स्थूलं तत्तथा त्र्यङ्गयोर्दक्षिणबाहुसव्यश्रोण्योस्तयोरेव रूढ्या त्र्यङ्गसंज्ञा गुदस्य च दोष्पूर्वार्धस्य गुदं मध्यतः श्रोणिं जघनार्धस्य ततो देवा अभवन्पराऽसुरा यत्त्र्यङ्गाणा[४] समवद्यतीति श्रुतेस्त्रीण्येवावदानान्युपभृति ।

त्रेधा मेदः कृत्वा यूषेऽवधाय तृतीयेन
जुहूं प्रच्छादयति तृतीयेनोपभृतम्[१] ।

प्रच्छादयतीत्युभयत्र त्रेधाकृतस्य मेदसस्तृतीयेन तृतीयेन यूषे पशुरसे रसो वा एष पशूनां यद्यूरिति श्रुतेः । मेदो व्याख्यातम् । अत्र हि पशुना यजेतैन्द्राग्नः पशुरित्यादिना पशोरेव देवतायै दीयमानत्वेन हविष्ट्वं न प्रत्येकमेकादशावदानानाम् । तेन यथा मध्यात्पूर्वार्धाच्च पुरोडाशावदानमुत्तरार्धात्स्विष्टकृत इति नियमः (?) । पुरोडाशे देवतासंबन्धेन यागद्रव्य एव पृथक्स्थानतया विभाग एव पशावपि स्थानभेदेन दैवतसौविष्टकृतेडावदानानां करणेऽपि सौविष्टकृतादीनां हविःशेषप्रतिपत्तिरूपता[२]नामुपैतीति ज्ञेयम्[३] ।

समवत्तधान्या[४] हृदयं जिह्वां वक्षः स्तनिममतस्ने

१ क. च. ट. 'विष्टेवेन । २ च. °तामु' । ३ क. ग. च. छ. ट. ठ. ण. 'म् । अवत्तत्वान्न । स° । ४ क. ख. ग. घ. ङ. न. छ. ज. झ. ञ. ट. ठ. ण. जिह्वां ।

अवशिष्टं च गुदकाण्डं तृतीयं च मेदसो वनिष्टुꣳ सप्तमं यदि शृतो भवत्यनस्थिभिरिडां वर्धयति ।

यदि वनिष्टुः शृतो भवति तस्य बहुपाकमहत्वाद्यदि पशुना सह न पक्वस्तदा नाव द्यति पक्वश्चेदवद्यति । सप्तत्रानानि षडवदानानि । शृतश्चेद्वनिष्टुस्तं सप्तममवदाय ततो गुदकाण्ड ततो मेद इति क्रमप्रदर्शनार्थं वनिष्टुं सप्तममित्युक्तम् । अनस्थिभिर्मांसैः क्लोमादिभिरिडां वर्धयति पुष्टां करोति नैतान्यवद्यति । वाजपेयेऽनवदानीयानि वाज- सृद्भ्यः प्रयच्छतीत्यादि तत्र तत्रानवदानीयत्वं वक्ष्यति तच्चोपपन्नं भवति । अन्यानि यानि मेध्यानि मांसानि तेषामप्यत्रैव विनियोगोऽन्यथा तेषामुद्धरणमनर्थकं स्यात् । अत्र यजमानभागावदानं दैवतेभ्यो दशभ्य एव गुदस्य विभज्य विनियोगात् । औप- भृतेडानां च पृथक्तया विभागकरणेन प्रतिपादनात्र शेषार्थेभ्यः शेषकार्यं यजमानभाग- लक्षणं तस्मात्प्रधानावदानेभ्य एव । तथाचायं क्रमः—इडायां हृदयादीनां गुदान्ताना- मष्टानामेकैकं समवदायेडायामवदाय ततो हृदयादिभ्यो दशभ्यो यजमानभागस्ततः पुनरैडावदानमष्टभ्यस्ततोऽनस्थिभिरिडां वर्धयतीति ।

शृतमशृतं च पशुꣳ संनिधायैन्द्रः प्राण इति संमृशति ।

शृतमशृतं मन्त्रेण संमृशति । माता पितरो मदन्त्वित्यन्तः ।

वसाहोमहवन्यां वसाहोमं गृह्णाति ।

वसा रसः । वसा चासौ होमश्चेति हूयतेऽसौ होमो ग्रहणम् । वसां गृह्णातीति वक्तव्ये श्रुतिप्रसिद्ध्योक्तं पार्श्वेन वसाहोमं प्रयौतीति श्रवणात् ।

श्रीरसीति स्रवन्तीं धाराꣳ स्वधितिना तिर्यगाच्छिनत्ति ।

वसाहोमग्रहणप्रकार एवोच्यते । श्रीणात्वित्यन्तेन मन्त्रेण स्वधितिना धारां दक्षिणहस्तेन कृतां वामेन विच्छिनत्ति । स्रवन्तीं संतताम् ।

सकृच्चतुरवदानस्य द्विः पञ्चावत्तिनः ।

सकृच्छेदेन द्विरवदानं भवति चतुरवदानवतः । उपस्तरणाभिघारणाभ्यां चतुरवत्तं स्यात्पञ्चावत्तिनस्तु द्विच्छेदेन त्रीण्यवदानानि भवन्तीत्यर्थः ।

आपः समरिणन्निति पार्श्वेन वसाहोमं प्रयौति स्वधि- तिना प्रयौतीत्येकेषां पार्श्वेनापिदधतीत्येकेषाम् ।

प्रयौत्यालोडयति वसाहोमहवनीगतां वसाम् । पार्श्वस्य स्वधितेश्च प्रयवणे विकल्पः । प्रयवणस्यापिधानस्य च विकल्पः । रोहिष्या इत्यन्तो मन्त्रस्त्रिष्वपि ।

अत्रैक ऊष्मणोऽनुमन्त्रणꣳ समामनन्ति ।

कुम्भ्यां यदुक्तं स्वाहोष्मणोऽव्यथिष्या इत्यनुमन्त्रणं तदत्रैकेषां शाखिनाम् ।

---

१ ढ. °निष्टु स° । २ घ. ङ. ज. झ. ञ. ढ. °गाच्छयति ।

**यूषेणोपसिच्योपरिष्टाद्धिरण्यशकलाववधायाभिघार्य ।**

जुह्वाद्यवत्तानि यूषेणोपसिच्य यथेतमुत्तरत आनीय जुहूपभृतोर्हिरण्यशकलाववधाय यथाविधि सर्वाण्यभिघार्य ।

**इन्द्राग्निभ्यां छागस्य हविषोऽनुब्रूहीति संप्रेष्यति ।**

सौर्यप्राजापत्ययोरपि प्रदर्शनार्थं, स्पष्टमन्यत् ।

अत्याक्रम्य—

**आश्राव्य न प्रेष्यति मैत्रावरुणो होतारं चोदयति ।**

कृतव्याख्यानम् ।

**घृतं घृतपावान इत्यर्धर्चे ॥ १५ ॥**

**याज्यायाः प्रतिप्रस्थाता वसाहोमं जुहोति ।**

प्रतिप्रस्थाताऽग्रेणाऽऽहवनीयं गत्वा घृतमिति मन्त्रं याज्यया सहाऽऽरभ्य तस्या अर्धर्चे समाप्तेऽन्तरिक्षाय स्वाहेत्यन्तेन जुहोति । वषट्कृतेऽध्वर्युर्हविर्जुहोति । इन्द्रियावी भूयासमिति जेमानमिति वा सर्वपशुवपानुमन्त्रणम् ।

**वसाहोमोद्रेकेण दिशः प्रति यजति ।**

यजति जुहोति । उद्रेकेण शेषेण होमे कृतधाराया अविच्छेदेन जुहोति अग्निमानपि होमान्न मध्ये विच्छेदं कुर्वन् ।

**दिश इति पुरस्तात्प्रदिश इति दक्षिणत**
**आदिश इति पश्चाद्विदिश इत्युत्तरत उद्दिश**
**इति मध्ये स्वाहेति सर्वत्रानुषजति ।**

सर्वत्रेति स्वाहाऽन्तरिक्षायेत्यत्राप्यन्तेऽनुषङ्गः । दर्विहोमत्वादन्ते प्राप्तेऽपि यन्मध्यमस्वाहाकारस्वीकारो भरद्वाजादीनामन्ते च कर्तव्यः प्रक्षेपानन्तव्यावृत्त्यर्थे । दिश इत्यादावपि प्रतियजतिचोदितत्वेन न दर्विहोमतेत्याशङ्क्य यजतेर्दानमात्रार्थस्यात्राप्रयोगाद्याज्याया अभावान्न वषट्कार इति स्वाहानुषङ्गेणैव प्रदानमत्रापि प्रतियजतिना लक्ष्यते तादृशमेव दिशो जुहोतीति श्रुतेर्दर्विहोमताविधानार्थं च ननु(तु) पुरस्तात्स्वाहाकारो घृतमित्ययं मन्त्रो नापि देवतापदात्पूर्वं स्वाहाकारेण पुरस्तात्स्वाहाकारो भवति त्वेतिपदेन व्यवधानादन्तरिक्षायेति देवतापदान्ये(दस्ये)त्यनेन ज्ञापितमेव विकृतं वप्याहोमे । अनुषङ्गोऽत्र स्वाहाऽन्तरिक्षायेत्यत्रत्यस्य स्वाहाकारस्याथवा स्वाहा दिग्भ्य इत्यस्य पूर्वमप्यनुषङ्गः ।

स्वाहा दिग्भ्य इत्ययं न दर्विहोम इत्याह—

**स्वाहा दिग्भ्य इति प्रदक्षिणमनुपरिषिञ्चति ।**

अनुपरिषिञ्चतीति प्रयोगान्न दर्विहोमता नापि यत्र च स्वाहाकार इत्यनेन मतान्तरविवक्षितत्वात् । कुतः । यद्यवदानस्य तत्रापि दर्विहोमत्वे सति स्वाहा दिग्भ्य

इति प्रदक्षिणमित्येव ब्रूयात्। प्रतियजतीतिदानार्थस्य धातोरप्रयोगान्न स्वाहाकारापेक्षा। ततस्त्वियं शेषप्रतिपत्तिरिति प्रदक्षिणमनुपरिषिञ्चतीति प्रयोगेण दर्शितम्। तस्मान्न पुरस्तात्स्वाहाकारेण दर्विहोमता तेन स्वाहोर्ध्वनभसं मारुतमंत्र न दर्विहोमतेत्यलमति-प्रसङ्गेन।

**नमो दिग्भ्य इति हुत्वोपतिष्ठते।**

हुत्वेति वचनं प्रतिप्रस्थातुरेवोपस्थानार्थम्।

**अत्रैव तिष्ठन्पृषदाज्यस्रुवं जुह्वामानीय वन-स्पतयेऽनुब्रूहि वनस्पतये प्रेष्येति संप्रेष्यति।**

अत्रैव दक्षिणत एवकारो भरद्वाजोक्त उत्तरतोवस्थाननिवृत्त्यर्थः। पृषदाज्येन पूर्णं स्रुवं स्थालीगतेनौपभृतस्यानूयाजार्थत्वात्। वषट्कृते जुहोतीति शेषः। अत्र हविःसामा-न्येनोपांशुयागधर्मसकृदवदानस्विष्टकृद्देवतासंस्काराभ्यां स्विष्टकृद्धर्मेण बाध्यते(?)। कुतः। हविःसामान्यं प्रधानयागे बलवन्न स्विष्टकृत्त्वप्रधाने।

**औपभृतं जुह्वां पर्यस्याग्नये स्विष्टकृतेऽनुब्रूह्यग्नये स्विष्टकृते प्रेष्येति पशुस्विष्टकृति संप्रेष्यति।**

पर्यस्य रेचयित्वा। स्पष्टमन्यत्। वषट्कृते जुहोतीति शेषः। अत्रैव तिष्ठन्नित्य-प्यनुवर्तते।

**अत्रैवैके पशुसंमर्शनं दिशां प्रतीज्यामिति समामनन्ति।**

शृताशृतपशोः। गतार्थम्। यथाप्रकृति याजमानम्।

**मेदोमिश्रमवान्तरेडामवद्यति।**

विशेषाभिधानं मेदोमिश्रमवान्तरेडामिति।

**यं कामयेतापशुः स्यादित्यमेदस्कं तस्मा आदध्याद्यं कामयेत पशुमान्त्स्यादिति मेदस्वत्तस्मा आदध्यात्।**

अमेदस्कावान्तरेडावदाननिन्दया प्रथमोऽर्थवादो द्वितीयो विधिः सत्यां कामनाया-मसत्यामपि मेदोयुक्तैवावान्तरेडेत्यर्थः।

**उपहूतां मैत्रावरुणषष्ठाः प्राश्नन्ति।**

पूर्वपशुपुरोडाशेडां मैत्रावरुणपञ्चमा एव प्राशितवन्तोऽत्र न तथा प्रतिप्रस्थातुर्वपा-श्रपण उपयोगात्पश्विडा तस्यापीति वक्तुमुक्तं मैत्रावरुणषष्ठा इति न यजमानपर्युदा-सार्थमिति।

---

१ क. ख. च. ठ. °त्र द°। २ ग. ठ. ण. °क्तप्रधा°।

किमविशेषेण नेत्याह—

अध्वर्युर्द्वि॰ होत्रे हरति वनिष्ठुमग्नीधे षडवत्तं॰ संपादयति ।

हरन्ती(ती)त्युभयत्र ताभ्यां दत्त्वाऽवशिष्टां प्राश्नन्ति । होता स्वेडाभागेन सह प्राश्नाति वनिष्ठुमध्वर्युः षडवत्तं चतुर्धाकरणवत्संपाद्य प्रयच्छति ।

यथाविधि सर्वैः प्राशितायामिडायां मार्जयन्त इत्याह—

प्राशितायां मार्जयित्वा ।

यजमानस्यापि यथाप्रकृति प्राशनं मार्जनं च ।

अग्नीदौपयजानङ्गारानाहरोपयष्टरुपसीद ब्रह्म-
न्प्रस्थास्यामः समिधमाधायाग्नीत्परिधी॰-
श्चाग्निं च सकृत्सकृत्संमृड्ढीति संप्रेष्यति ।

उपयाजार्थमङ्गारा औपयजा उपयजतीत्युपयष्टा प्रतिप्रस्थाता । अङ्गाराणां समीपे तिष्ठ । स्पष्टमन्यत् ।

शामित्रियादाग्नीध्रोऽङ्गारानाहृत्योत्तरस्यां वेदि-
श्रोण्यां बर्हिर्व्यू(र्व्यु)ह्य न्युप्योपसमादधाति ।

शामित्रियादग्नेर्बर्हिर्व्यू(र्व्यु)ह्य तृणादि तत्र न्युप्योपसमादधाति काष्ठैः प्रज्वाल्य परिस्तृणाति ।

प्रतिप्रस्थातरेतद्गुदकाण्डं तिर्यगसंभिन्दन्नेकादशधा सं-
छिद्य वसाहोमहवन्या हस्तेन वोपयजेति संप्रेष्यति ।

तिर्यगेकादशधा संछिद्यासंभिन्दन्नविदारयन्नपर्यावर्तयंश्च । छेदनं तिर्यगेव नानूची-नम् । एकादशधा छित्त्वा पश्चाद्धोमो न तु प्रत्याहुति च्छेदः ।

पृषदाज्यं जुह्वामानीय पृषदाज्यधानीमुपभृतं
कृत्वा पृषदाज्येनैकादशानूयाजान्यजति ।

पृषदाज्यधानीगतं पृषदाज्यम् । स्पष्टमन्यत् ।

देवेभ्यः प्रेष्येति प्रथममनूयाजं॰
संप्रेष्यति प्रेष्य प्रेष्येत्युत्तरान् ।

सर्वानपि दक्षिणतो गत्वा । स्पष्टम् । अत्र देवेभ्य इति विरूपाणां सरूपाणां चैक-शेषेण बहुवचनं सर्वानूयाजार्थम् ।

एवं च प्रेष्येत्यनेन यजेत्यस्याविशेषेण प्रयाजेष्विवानूयाजेष्वपि बाधे प्राप्ते वचनेन द्वितीयतृतीयानूयाजविकारेषु प्रतिप्रसवमाह—

चतुर्थप्रभृतिषु यजेति मैत्रावरुणेनोच्यमाने
यज यजेत्यध्वर्युराहान्यत्र दशमात् ।

मैत्रावरुणेन होतर्यजेत्युच्यमाने तत्र यजेत्यनेन सहैवाध्वर्युर्यज यजेत्याह दशमं विना चतुर्थप्रभृतिषु सप्तस्वपि दशमस्य प्रथमविकारत्वात्त्रयः प्रथमविकाराः क्रमेण ततो म[1]ध्यमस्य ततो द्वावुत्तमस्याष्टमो मध्यमस्य नवम उत्तमस्य दशमः प्रथमस्योत्तम उत्तमस्येति तथेज्याऽपि ज्ञेया ।

समुद्रं गच्छ स्वाहेति ॥ १६ ॥ एतैः प्रति-
प्रस्थाताऽनूयाजानां हुतं हुतमुपयजति ।

यत्र च स्वाहाकार इति वचनाद्दर्विहोमेऽपीतरधर्मनिवृत्तिः स्वतन्त्रधर्मविधानात् । हुतं हुतमनूयाजानां प्रक्षेपमुप समीपे यजति जुहोतीत्यर्थः । समुद्रं गच्छेत्येतैरेकादश-भिर्मन्त्रैरेकादशोपयजो जुहोति ।

उपयज उपेज्याद्यस्त्वौषधीभ्य
इत्युत्तरतो बर्हिषि लेपं निमार्ष्टि ।

क्रमप्राप्तस्योपयज उपेज्येति वचनं प्रतिप्रस्थातुरेवोपयजावदानलेपप्रतिपत्तिविधा-नार्थं वेद्यां स्तीर्णे बर्हिषीत्युक्तम् ।

मनो मे हार्दि यच्छेति हृदयदेशमभिमृशति ।

स एव । अशीयेत्यन्तः ।

जुह्वा त्रिः स्वरुमङ्क्त्वा द्यां ते धूमो गच्छ-
त्वन्तरिक्षमर्चिः पृथिवीं भस्मना पृणस्व
स्वाहेति जुह्वाऽऽहवनीयेऽध्वर्युः स्वरुं जुहोति ।

जुहोतिचोदितदर्विहोमधर्मनिवृत्त्यर्थंहवनीयजुहूमात्रग्रहणं[2], प्रतिप्रस्थातुरधिकारनि-वृत्त्यर्थमध्वर्युग्रहणम् । स्पष्टम् ।

वाजवतीप्रभृतीनि कर्माणि प्रतिपद्यते ।

प्राकृतपदार्थावसरार्थमिदं, वाजवत्या क्रियमाणं वाजवतीत्येव कर्म तत्प्रभृति । द्वयो-र्जुहूसंज्ञत्वाद्द्वयोश्चोपभृत्संज्ञत्वात्सर्वा व्यूहति । सर्वासु प्रस्तरमनक्ति । तथा चाऽऽह भरद्वाजः–सर्वा जुहूपभृतो व्यूहति सर्वासु प्रस्तरमनक्तीति सर्वाः कस्तम्भ्यां सादयतीति ।

सूक्ता प्रेष्येति सूक्तवाके संप्रेष्यति ।

विकृत्यर्थमिदं सूक्ता ब्रूहीत्यस्य स्थाने प्रकृतिवदन्यच्छंयुवाकान्तम् ।

प्रतिपरेत्य पत्नीः संयाजयति[3] ।

विशेषं वक्तुमनुवादस्तदेवाऽऽह--

---

१ ट. 'ध्यमौ द्वौ मध्यम' । २ ग. ठ. ण. °नीये जु° । ३ ख. ग. घ. ङ. छ. ज. झ. ञ. ट. ण. संयाजयन्ति ।

जाघन्या देवानां पत्नीरग्निं गृहपतिं च यजत्याज्येनेतरौ ।

इतरौ सोमत्वष्टारौ ।

उत्तानायै जाघन्यै देवानां पत्नीभ्योऽ-
वद्यति नीच्यां अग्नये गृहपतये ।

अवद्यतीत्युभयत्र गुदेन लग्नो भाग उपरि क्रियते तदोत्तानं पञ्चम्यर्थे चतुर्थी । स्पष्टम् ।

उत्तानायै जाघन्यै होत्र इडामादधाति
नीच्यां अग्नीधे षडवत्तꣳ संपादयति ।

आज्येडास्थाने षडवत्तं संपादयति । चतुरवदानमुपस्तरणाभिघारणाभ्यां षडवत्तमग्नीधे तथैव चतुरवत्तं होत्र इत्यर्थः ।

प्राशितायां जाघनीशेषं पत्न्यध्वर्यवे ददाति बाहुꣳ शमित्रे ।

एकमेव । स्पष्टम् ।

तꣳ स ब्राह्मणाय ददाति यद्यब्राह्मणो भवति ।

तं बाहुं यदि शमिता ब्राह्मणो न भवति तदा ब्राह्मणाय दद्यादन्यदा स्वयमेवोपभुनक्ति । एतेन शमिता ब्राह्मणोऽन्यो वेति दर्शितं कलौ ब्राह्मणस्य शामित्रप्रतिषेधात् । अन्यस्यैव द्विजस्य तदभाव आर्याधिष्ठितस्य वा तस्यापि पाकसंस्कर्तृत्वं धर्मेषु स्वयमेव वक्ष्यति ।

यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छेति जुह्वाऽऽहवनी-
येऽध्वर्युस्त्रीणि समिष्टयजूꣳषि जुहोति ।

स्वाहान्तास्त्रयोऽपि मन्त्रा एषां तृतीये द्विमध्यमस्वाहाकारेऽपि धाः स्वाहेति दर्विहोमत्वं ज्ञेयम् । ध्रुवानिवृत्त्यर्थं जुहूग्रहणम् । इतरधर्मनिवृत्त्यर्थमितरयोः प्रकृतौ विकल्पनिवृत्त्यर्थं त्रीणीति ।

हृदयशूलेन प्रचरन्ति ।

बहुवचनात्सपत्नीकाः सर्वेऽपि प्रचारार्थं गच्छन्ति ।

तदाह—

असꣳस्पृशन्हृत्वा शुगसि तमभिशोचेति
शुष्कस्य चाऽऽर्द्रस्य च संधावुद्वासयति ।

द्विष्म इत्यन्तः । शुष्कार्द्राद्रिव्यवस्थितायाः संधौ प्रक्षिपति हृदयशूलम् ।

---

१ ग. घ. ङ. ज. झ. म. ठ. ड. ण. °च्याम° । २ ग. घ. ङ. ज. झ. म. ठ. ड. ण. °च्यामी° । ३ क. ख. ग. च. ट. ठ. ण. स्वाहेति । ४ घ. ङ. ज. झ. म. ड. °न च° । ५ क. च. ट. °र्द्राद्रिव्यस्थाता° । ख. °र्द्राद्रिव्यता° । ग. छ. ठ. ण. °र्द्राद्रिव्यस्यता° ।

यत्र चाऽऽर्द्रमनुगतं तदुपोप्तम् ।

यत्राऽऽर्द्रमनुगतं प्राप्तं तदुपोप्तमाच्छादितमुद्वासनयोग्यमित्यर्थः ।

धाम्नो धाम्न इत्युपतिष्ठन्ते ।

नो मुञ्चेत्यन्तः । सर्वेऽप्युपतिष्ठन्ते ।

सुमित्रा न इति मार्जयन्ते ।

द्विष्म इत्यन्तः । तस्मिंश्चात्वाले वेत्यापस्तम्बः ।

एधोऽस्येधिषीमहीत्याहवनीये समिधोऽभ्यादधति ।

अत्र मन्त्रस्यैकत्वादेकामेव समिधमभ्यादधति प्रत्येकं बहुत्वात्सूत्रे बहुवचनं समिधाऽग्निं नमस्यन्त उपायन्तीति श्रुतेरेकैकामेव गृहीत्वाऽऽगत्यैकैकामेवाभ्यादधते ।

अपो अन्वचारिषमित्याहवनीयमुपतिष्ठन्त एवं पत्नी गार्हपत्येऽभ्याधायोपतिष्ठते ।

अत्र पयस्वा१ अग्न आगममिति पुंलिङ्गेन नोहः सौमिकावभृथे हि मन्त्रः पठ्यते विनियुज्यते च साऽवभृथप्रकृतिस्तत्रोहप्रतिषेधाद्विकृतावपि नोह इत्युक्तमेव । स्पष्टम् ।

सर्वपशूनामेष कल्पः ।

सर्वेषां पशुबन्धानां साङ्गो विधिरेष एव नायमतिदेशोऽपि तु सोमाङ्गैः संकीर्णोऽग्नीषोमीयसवनीयानां विधिरिति ततो निष्कृष्टो निरूढेऽतिदेशप्राप्तौ निरूढ एव व्याख्यातः । स सर्वेषां समान औपदेशिकाग्नीषोमीयादीनामितरेषामातिदेशिकः । एवं च निरूढौ सौर्यप्राजापत्यावपि ये वैशेषिका मन्त्राः शाखान्तरीया इन्द्राग्निभ्यां त्वा जुष्टमुपाकरोमीत्यादयो निरूढे श्रूयमाणास्तेऽग्नीषोमीयादौ सौर्यप्राजापत्ययोरपि चातिदेशादूह्याः । तत्राग्नीषोमीयादयोऽपि निरूढस्यांशे विकृतयः । अन्यांशयेन चैते प्रकृतयो निरूढो विकृतिः । उक्तमेतद्दर्शपूर्णमासप्रकृतय इष्टिपशुबन्धास्ते स्वधर्माणः सामान्याद्विकार इति येषां प्रत्यक्षाण्यङ्गानि तेषामन्ये विकारा ये त्वप्रत्यक्षाङ्गा इति ।

पशुः प्रातर्दोहविकारः कालसामान्यात् ।

यद्यपि माधुर्येण साम्यमस्ति तदेव निर्णायकं न्यायमते तथाऽप्यद्रवणसाम्येन सायंदोहविकारत्वमाशङ्क्यमानमधिकेन कालसामान्येन बाध्यते । प्रातःकाले हि प्रातर्दोहस्य पशोश्चोत्पत्ती समाने इति तद्विकारत्वेन दर्शविकृतित्वम् ।

---

१ घ. ङ. ज. झ. ञ. ढ. 'मित्युप' । २ ख. 'प्राप्ते नि' ।

प्रसङ्गेनान्यत्रापि न्यायमतिदिशति—

तथाऽऽमिक्षा ।

तस्यामुभयदोहसंसर्गेऽपि तस्या एकवचनान्नोभयोर्हविष्ट्वं नापि संसृष्टमेकं पयोविकारमात्रदर्शनान्मन्त्रवर्णे च जुषन्तां युज्यं पय इति पयःशब्देनैकत्वेनैव ग्रहणादामिक्षा पयोविकारः । आमिक्षा च प्रातरेव क्रियत इति तस्यामपि कालसाम्यमुक्तम् ।

आग्नेयैन्द्राग्नयोस्तद्विकारेषु चैतदविकृतम् ।

अग्निष्टोमोक्थ्यसंस्थयोरेतौ सवनीयौ पशू तयोरविकृतमन्यूनानतिरिक्तमेतत्तन्त्रं यन्निरूढ उक्तम् । तयोर्या विकृतयस्तेष्व(स्तास्व)पि तथा तयोः प्रत्यक्षधर्मत्वादन्येषां तत्समानां विकारत्वं प्रत्यक्षमनुपदिष्टं पशुधर्माणां धर्मकारिणामङ्गपशुत्वसामान्येन नैतयोर्विकारत्वम् ।

अग्नीषोमीये तद्विकारेषु चाऽऽश्ववालः प्रस्तर ऐक्षवी तिरश्ची कार्ष्मर्यमयाः परिधयोऽधिकाः पौतुदारवेभ्योऽमुष्मा अमुष्य वपाया मेदसः प्रेष्यामुष्मै पुरोडाशस्य प्रेष्यामुष्मा अमुष्य हविषः प्रेष्येति पशोर्दैवते संप्रेष्यति ।

अग्नीषोमीय उपवसथीयः पशुस्तद्विकारेष्वौपवसथ्येषु निरूढादधिकमाश्ववालादिकं तत्तु पूर्वमातिथ्यायामिष्टौ कृतं यदेवाऽऽतिथ्याबर्हिस्तदग्नीषोमीयस्येत्यादिनाऽग्नीषोमीयार्थमेवोक्तमिति तद्विकारेष्वपि तथैव न निरूढे सवनीये तद्विकारेषु च प्रणयने पौतुद्रवाः परिधयो न कार्ष्मर्यमयाणामेवाग्नीषोमीये वचनेन प्राप्तत्वात् । प्रैषविशेषास्तु शाखान्तरेण व्यवस्थापितास्ते निरूढे न सन्तीत्युक्तमत्रैव ते तथैव शाखान्तरात्सवनीयेष्वपि न सन्तीत्येतदविकृतमित्यनेनोक्तम् ।

ऐन्द्रे सारस्वत्यां तद्विकारेषु च दार्शपूर्णमासिकः प्रचरणकल्पः प्रचरणकल्पः ॥ १७ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे चतुर्थप्रश्ने पञ्चमः पटलः ॥ ५ ॥

---

इति हिरण्यकेशिसूत्रे चतुर्थः प्रश्नः ॥ ४ ॥

---

अनयोर्न मैत्रावरुणव्यापार इत्यर्थः । एवं चाग्नीषोमीयस्य चतुर्णां सवनीयानां निरूढस्य च षष्ठस्य सर्वपशुप्रकृतित्वमुक्तं भवति । ननु(नु) मीमांसकैरग्नीषोमीयस्यैव सर्वपशुप्रकृतित्वमुक्तं तत्रैव पशुधर्माणां प्रत्यक्षाम्नानादिति । अस्मच्छाखायां हौत्रं

१ ज. झ. ञ. ठ. 'र्शपौर्णे' ।

पशोस्तु निरूढं प्रकृत्यैवोक्तमञ्जन्ति त्वेति प्रश्नेन तदूहेनान्यपशुषु चोदकेनैव प्राप्नोति। न च तेषु प्रत्यक्षं विधानमस्ति। तस्मात्प्रत्यक्षाङ्गत्वादन्येषु नैमित्तिकका- म्येषु स्वतन्त्रपशुषु निरूढो हौत्रं प्रयच्छत्ते(च्छंस्ते)षां प्रकृतिर्भवत्येव। तथा चाऽऽध्व- र्यवं वैशेषिकं वेदिमानादिकं चौपदेशिकमेव प्राप्यान्येषु प्रयच्छत्तथाऽग्नीषोमीयादि य(?)आध्वर्यवमतिदिष्टं प्राप्य तद्विकृतेऽपि भवति नहि भिक्षुको भिक्षुकाद्याचत इति न्यायात्। एवं च तन्त्रान्तर्गतेषु पशुषु सादृश्यादग्नीषोमीयादय एव प्रकृतिस्तत्रापि व्यवस्थौपवसथ्ये क्रियमाणानामग्नीषोमीय एव सवनेषु क्रियमाणानामाग्नेयादयस्तत्रापि व्यवस्थाऽऽग्नेयैन्द्राग्नयोस्तयोस्तुल्यत्वेऽपि पशुपुरोडाशधर्मभेदाद्व्यवस्था येषां ह्याग्नेय- पुरोडाशविकाराः पशुपुरोडाशास्तेषामाग्नेयः सवनीयः प्रकृतिर्येषां तु द्विदेवत्यानां बहु- देवत्यानां वा पशुपुरोडाशा ऐन्द्राग्नपुरोडाशविकारास्तेषामैन्द्राग्न एव प्रकृतिः। येषा- मनेकदेवतानामग्नीषोमीय एव पुरोडाशः पशुपुरोडाशप्रकृतिस्तेऽप्याग्नेयस्यैव सवनी- यस्य विकारा आग्नेयवत्तेषां कपालधर्मसादृश्यात्। येषामेकदेवतानामैन्द्राग्नपुरोडाश- धर्मकाः पशुपुरोडाशास्तेषामैन्द्राग्नः सवनीयः प्रकृतिर्नाऽऽग्नेयो हविःसामान्यं बलीय इत्युक्तमेव। ये त्वन्ये सरस्वतीदेवताकाः सरस्वद्देवताकास्ते प्रातिपदिकसाम्येन ये च स्त्रीदेवताकास्ते स्त्रीदेवतासाम्येन सरस्वत्या मेष्याः सवनीयाया एव विकारा इति व्यवस्था। सवनीयानां चतुर्णामग्नीषोमीयपशुवदेवोपदिष्टधर्मत्वेन नाग्नीषोमीयवि- कृतित्वं मीमांसकाभिमतम्। कुतः। यतस्तेषां ज्योतिष्टोमसंस्थान्तर्गतानां ज्योतिष्टो- मप्रकरणगतयस्त्वङ्गोपदेशैस्त्याविशिष्टत्वात्। नहि तत्राग्नीषोमीयादीनां देवताविशेषा विहिताः सन्ति नावान्तरप्रकरणेन नियमो भवेत्। किं तु यदग्नीषोमीयं पशुमालभत इत्यर्थवादादाश्यमन्नं दीक्षितस्येति विधेर्हेतुसमर्पणे प्रस्तावकाद्विधिरनुमीयते न तु तद्वि- धिरस्मच्छाखायां साक्षादस्ति। तथाऽऽग्नेयादीनामप्यनुवादादेव विधय उन्नीयन्ते। वाजपेये हि श्रूयते—"आग्नेयं पशुमालभते। अग्निष्टोममेव तेनावरुन्धे। ऐन्द्राग्ने- नोक्थ्यम्। ऐन्द्रेण षोडशिनः स्तोत्रम्। सारस्वत्याऽतिरात्रम्। मारुत्या बृहतः स्तोत्रम्" इत्यर्थवादेन वाजपेयपशुदेवताविधिः परेणाग्निष्टोमादिसंस्थास्वाग्नेयादि- पशुविधयोऽनुमीयन्तेऽतस्तु ते सर्वेऽपि पशवो ह्यविशेषेण ज्योतिष्टोमं प्राप्ता अतस्तेषां सर्वेषामप्यवान्तरप्रकरणं समानमेव। तथा चात्यन्यानगामित्यादिधाम्नो धाम्नो राजन्नित्यन्ता मन्त्राः प्रकरणे पठ्यमाना न कामपि पशुदेवतां विशेषे- णाभिदधते। तथा तद्ब्राह्मणमपि वैष्णव्यर्चा हुत्वा यूपमित्यादि यं द्विष्यात्तं ध्यायेच्छुचैवैनमर्पयतीत्यन्तं यूपादिविधानहृदयशूलोद्वासनान्तं समानमेव न कामपि देवतां विशेषेणोपादत्तेऽतो यावन्तो ज्योतिष्टोमपशवस्तावन्तः सर्वेऽप्यविशेषादवान्तर-

१ क. च. छ. ट. °यादिः य। २ ख. ग. छ. ठ. ण. °योस्तु°। ३ क. च. ट. °शस्य वि°।

प्रकरणिन एवेति सर्वेषामौपदेशिकमेवाऽऽध्वर्यवम्। उपाकरणमन्त्रादयस्तु निरूढाद-तिदिष्टास्तथा प्रैषविशेषा अपि ऐन्द्रे सारस्वत्यां मैत्रावरुणप्रैषाभावश्च शास्त्रान्तरादेव। तथा शास्त्रान्तरवशात्प्रैषविशेषनियमो बर्हिर्विधृतिप्रस्तरकाष्मर्यमयपरिधिनियमोऽपि वचनादेवेत्युक्तम्। तस्मादग्नीषोमीयादयः पश्चापि सोमे तन्त्रान्तर्गतानां व्यवस्थिताः प्रकृतयः। सोमे तन्त्रबहिर्भूतानां तु निरूढ ऐन्द्राग्न एवेति। पश्चापि पशवः प्रत्य-क्षधर्माणो हौत्रेण निरूढस्य विकृतय इतर आध्वर्यवेण वैशेषिकेण च हौत्रमतिदेशा-त्समानमेव प्राप्तमपि शास्त्रान्तरादैन्द्रे सारस्वत्यां च मैत्रावरुणव्यापारप्रतिबन्धेनैव व्यवस्थापितमित्यलमतिप्रसङ्गेन। जैमिनीयैस्तु पञ्चपशुप्रकृतित्वमाशङ्क्य दूषितं न्यायेन तत्त्वस्मच्छाखोपदेशसूचितन्यायव्याख्याने सूत्रतात्पर्ये दर्शितमतोऽस्मत्सूत्रेऽय-मेव प्रकारो ज्ञेयः।

न्यायोपदेशयोः केचिद्विकल्पं ब्रुवते न तत्।
युक्तं न्यायोऽनुमानं तु श्रुतितुल्यं कथं भवेत्॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैजयन्त्यां चतुर्थे पशुप्रश्ने पञ्चमः पटलः॥ ५॥

इति हिरण्यकेशिसूत्रव्याख्यायां चतुर्थः प्रश्नः॥ ४॥

---

अथ पञ्चमप्रश्ने प्रथमः पटलः।

---

यद्यपि राजसूये हि चातुर्मास्यानि पठ्यन्ते तेषां हि दर्शपूर्णमासौ चातुर्मास्यानीति नित्येष्वपि पाठ उपलभ्यते स्मृतावपि चातुर्मास्यानि चैव हीत्यादौ तत्र तेषां राजसूये पठितानामत्र नित्यफलवत्त्वान्नित्यान्यपीत्यर्थः।

अक्षय्यꣳ ह वै सुकृतं चातुर्मास्ययाजिनः।

चातुर्मास्यैर्यजते स तथा तस्य सुकृतमक्षय्यफलत्वादक्षय्यं ह वै शब्दौ श्रुतिगतावेव पठितौ। हशब्दः प्रसिद्धमित्यर्थे। वैशब्दो ह्यर्थः। तस्माच्चातुर्मास्यैरवश्यं यष्टव्यमि-त्यर्थः। न चार्थवादात्फलकल्पनेति वाच्यम्। पक्ष एतेषामभ्यासस्य विधास्यमानत्वात्। न च काम्येष्वभ्यासोऽस्ति। अयं प्रयोगो नित्यानामेव काम्यप्रयोगस्याग्रे स्वयमेव वक्ष्यमाणत्वात्। चतुर्षु चतुर्षु मास्यानीति यागानां गृहमेधीयत्रैयम्बकपरिचर्याभ्यां दर्विहोमाभ्यां सहितानां नामधेयं यजतिचोदितत्वेन यागानां समुदायस्य। तथा चातु-र्मास्यैर्यक्ष्ये तैर्यज्ञनारायणं प्रीणयानीति संकल्पः। अन्वारम्भणीयार्थमृत्विग्वरणम्।

तान्यालभमानः फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा पूर्वस्य पर्वण औपवसथ्येऽहनि पञ्चहोतारं मनसाऽनुद्रुत्य सग्रहं हुत्वाऽन्वारम्भणीयामिष्टिं निर्वपति वैश्वानरं द्वादशकपालं पार्जन्यं चरुम् ।

तानीति बहुवचनं नानापर्वसु क्रियमाणत्वेन फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा पौर्णमास्यामालभमानः । पूर्वस्य पर्वण इत्यन्वयः । पौर्णमासिग्रहणं प्रतिपन्निवृत्त्यर्थं हुत्वा निर्वपतीति समानर्त्विक्त्वख्यापनार्थम् । अग्निगुणको वैश्वानरो द्रष्टव्यः । याज्यापुरोनुवाक्ययोर्विशिष्टाभिधानात् । तस्मादग्नये वैश्वानराय जुष्टमित्यादि पर्जन्यदेवताकं चरुम् । पौर्णमासं तन्त्रं पौर्णमासीसमीपे क्रियमाणत्वात्सद्यस्कालत्वाच्च प्रत्येकमग्निप्रणयनम् । स्पष्टमन्यत् । हिरण्यं वैश्वानरे धेनुं पार्जन्ये । दक्षिणा अङ्गेष्वामपि वचनात् ।

वैश्वदेवेन यक्ष्य इति संकल्प्य—

प्राचीनप्रवणे वैश्वदेवेन यजते ।

प्राचीनप्रवणता नियम्यत उदीचीनप्रवणताप्रागुदक्प्रवणतासमतास्वपि प्राप्तासु । तादृशे देशे । विश्वे देवा देवता यस्याः सा वैश्वदेव्यामिक्षा तस्याः शाखाहरणेन मुखतः प्रवृत्तत्वान्मुख्यत्वं बलीय इति सर्वस्य कर्मसमुदायस्यैतयोपलक्षितस्य नामधेयं वैश्वदेवमिति । सौम्यद्यावापृथिव्ययोर्मारुतामिक्षाभ्यां समत्वादभेदकत्वान्न तन्त्रप्रयोजकत्वमिति मुख्यत्वमेव बलीयः । ब्राह्मणे तु यद्विश्वे देवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वमिति वा निर्वचनम् । समुदायनामधेयस्य मुख्यत्वात्तन्त्रं त्वामावास्यमेव । आमिक्षायाः पयोविकारत्वादित्युक्तमेव ।

उदवसायानुदवसाय वा ।

गृहेभ्योऽन्यत्र गत्वा तेष्वेव वा प्राचीनप्रवणतां संपाद्य यजेत[1] । अन्वारम्भणीया तु प्राकृत एव विहारे । वैश्वदेवार्थमेव प्राचीनप्रवणता तथैव विधानात् ।

अग्नेरावृताऽग्निं प्रणीय ।

नित्यधार्यान्यस्य प्रणयने प्राप्ते तत्र धर्मवत्ता विधीयते । अग्नेरग्निप्रणयनस्याऽऽवृताऽग्निं प्रणीय तत्र पश्चादुक्तेऽग्निप्रणयने प्रणयनस्य धर्मास्तद्वता विधिनेत्यर्थः । गार्हपत्यादग्निप्रणयनं पशुबन्धवदिति वैखानसापस्तम्बोक्तेः । नोद्यतहोम इति च । अत्रैतावान्विशेषः—गार्हपत्येऽग्निप्रणयनानीत्यादि । यत्ते पावकेति च न होमः । पूर्वो यत्सत्र परो मवासीतिलिङ्गविरोधात् ।

---

१ घ. ज. झ. म. यजेत ।

अग्न्यायतन ऊर्णास्तुकां निधायाग्निं प्रतिष्ठाप्य ।

अग्नेरावृता प्रतिष्ठाप्येत्यनुषज्यते । उक्तं वैखानसेन—तद्वदायतने प्रतिष्ठाप्येति । नोत्तरवेदिमुपवपतीति प्रतिषेधाद्यज्ञोत्पत्तौ प्रतिषिद्धे सर्वे प्रतिषिध्येतेत्युक्तत्वात् । उत्तरवेदिप्रतिषेधात्तत्संस्कारार्था व्याघारणादयो गुग्गुलुसुगन्धितेजनपीतुदारुपरिधयो निवर्तन्ते । वचनादूर्णास्तुका विधीयते । नात्र समारोपः प्रवासवत् । स्थानान्तरे गृहेऽपि गन्तुं समारोपः स्यात्कात्यायनोक्तेः । तं मथित्वा तेन परिसंख्यानात् । इद- मेव वक्तुमग्न्यायतन इत्याद्युक्तम् । प्राकृत एवाऽऽयतने मन्त्रेण प्रतिष्ठापनं प्रणीताग्नि- संस्कारकत्वादन्यत्सर्वमितः परं समन्त्रमग्निसंस्कारभूतं कर्तव्यम् । तदुक्तं भारद्वाजेन— यदन्यदुत्तरवेद्या उपवपनात्सर्वं क्रियत इति । अत एव पशुबन्धवदिति नोक्तमुत्तरवेदेर- भावात् । प्रणयनं प्रतिष्ठापनादि समन्त्रं वक्तुमग्नेरावृतेति वचनम् । अतस्तेऽपि प्राचीन- प्रवणता यागाङ्गत्वात्कर्तव्या । नित्यधार्येऽपि प्राचीनप्रवणतां संपाद्याऽऽयतने केवलं तूष्णीं निधानं नान्यत्तदग्निमपि ।

अग्नीनन्वाधायाऽऽमिक्षायै वैश्वदेव्यै सायंदोहाय वत्सानपाकरोति ।

अमावास्यतन्त्रख्यापनार्थं प्रासानुवादः । आमिक्षायै प्रयोजनायेति सायंदोहो यद्यपि न प्रधानभूतं हविरपि तु तत्संस्कारार्थस्तथाऽपि अत्र दोहधर्माः सन्त्येवेत्युक्तम् । लौकिकेन दध्नाऽऽमिक्षापक्षव्यावृत्त्यर्थं बौधायनोक्ततूष्णींसायंदोहपक्षस्य च । विश्वे च ते देवाश्च विश्वे(श्व)देवास्ते देवता यस्या इति तद्धितोत्पत्तिः सा तथा सति कर्मधारये प्रत्ययो ननु पदद्वयादिति वैयाकरणं निर्णयता(?) विश्वेभ्यो देवेभ्यो वत्सानपाकरोतीति युक्तं चैतत् । यदुक्तं वत्सानपाकरोति शाखाहरणादिविधिनेत्यर्थः ।

सप्तदश सामिधेन्यः ।

इध्मे काष्ठविवृद्ध्यर्थमत्र वचनम् ।

प्रसूनं बर्हिस्त्रीन्कलापान्संनह्य[1] एध्यं पुनः संनह्यति ।

प्रसूनं प्रसवयुक्तं पुष्पितमिति यावत् । लूनप्ररूढमिति केचित् । त्रीन्कलापानि- धनान्यपि त्रीण्येव कर्तव्यानि । एकैकस्य वा निधनस्य शुल्बे संनह्यैकधा संनह्यति ।

एवमिध्मम् ।

प्रसूनमित्यप्यतिदिशन्ति केचित् । प्रसूनवृक्षस्योक्तस्येध्ममाहरति । अग्नेविंशति- रेत्यूहः ।

पूर्वोक्तं स्पष्टयति—

१ अ. ट. ड. °न्कपालान्सं° । २ ठ. °न्कपालानि°।

पुनःसंनहने धर्मः ।

मन्त्राद्या धर्मा अङ्गानि पुनःसंनहन एवेत्यर्थः ।

पात्रसꣳसादनकाले यथार्थं पात्राणि प्रयुनक्ति जुहूं द्वे चोपभृतौ पृषदाज्यधानीं द्वितीयां ध्रुवां द्वे आज्यस्थाल्यौ दधिधानीं द्वितीयां पालाशं वाजिनपात्रꣳ स्रुचं चमसं वा ।

सायंदोहस्याऽऽवृता सायंदोहस्तदन्तानि कर्माणि कृत्वा श्वोभूते कर्मणे वामि. त्यादि । ततः पात्रसंसादनकालस्तस्मिन्नागत इत्यर्थः । चमसस्त्रुचोस्तूष्णीमेव संमार्गः । जुहूशब्दप्रयोगाद्वैश्वदेवस्य पौर्णमास्यामेव विधानात् । पूर्वेद्युरन्वाधानादिकमुक्तं भवति । तस्स्पष्टमेवोक्तमापस्तम्बवैखानसाभ्यां सायंदोहं दोहयति सांनाय्यवदिति च श्वोभूत इत्यादि च । स्पष्टमन्यत् । सायमग्निहोत्रं यवाग्वा कुर्वन्ति तदुच्छेषणमातञ्चनार्थमित्या· दिकं सांनाय्यवदेनयाजमाने वक्ष्यते ।

निर्वपणकाल आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुꣳ सावित्रं द्वादशकपालꣳ सारस्वतं चरुं पौष्णं चरुमेतानि पञ्च संचराणि ।

एतानि हवीꣳषि वरुणप्रघाससाकमेधशुनासीरीयपर्वसु संचरन्तीति वाक्याति· देशेन विहितान्येव गच्छन्तितथैतदितिकर्तव्यताकानि । एतद्ब्राह्मणान्येव पञ्च हवीꣳषीति श्रुतेः ।

मारुतꣳ सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालमुत्तरेषु पर्वसु सावित्रमष्टाकपालमेके समामनन्ति ।

आमिक्षां निर्वपेदित्यपि संबध्यते । पयस्यां निर्वपेदिति वचनात् । ननु निर्वापो नास्तीति चेत्सत्यं, यथाऽन्यत्र निर्वपतिना यागोऽवसीयते तथाऽऽमिक्षायागं करोती· त्यर्थः । एवमाग्नेययागमित्याद्यपि ज्ञेयम् । सावित्रं वरुणप्रघासादिषु सर्वेषां हविषामन्ते ।

त्रिष्फलीकृतेषु विभागमन्त्रेण पौष्ण· मपाच्छिद्य सह पुरोडाशैः पिनष्टि ।

पौष्णस्येतिकर्तव्यता शाखान्तरेऽत्र दर्शिता सा चरुत्वस्यापनार्थं पूर्वमुक्ताऽत्र श्रुतिस्था प्रत्यायत इति न पुनरुक्तम् ।

प्रातर्दोहस्याऽऽवृता प्रातर्दोहं दोहयति तस्मे प्रातर्दोहे सायंदोहमानयत्यामिक्षां करोति

१ ट 'इत्याम्नाना' । २ च. ट. 'तिप्राप्ता व्याख्या° ।

**संहृतामन्यस्मिन्पात्र उद्धृत्य वाजिनेनोपसिच्य प्रज्ञातां निधायोत्करे वाजिनशेषं निदधाति॥१॥**

मारुतान्तानि कपालान्युपधाय प्रातर्दोहस्याऽऽवृता वत्सापाकरणादिविधिना प्रातर्दोहं दोहयति तस्मिंस्तप्ते प्रातर्दोहे दुग्धे सायंदोहं दधिकृतमानयति । तेन कर्मणाऽऽमिक्षां करोति । संहृतां घनीभूतामन्यस्मिन्पात्र उद्धृत्य या संहृता साऽऽमिक्षा यद्द्रवं तद्वाजिनमित्युक्तं भवति । तथैवाऽऽपस्तम्बवैखानसभारद्वाजादिभिरुक्तम् । अन्यस्मिन्पात्रे तां कुम्भीत उद्धृत्यान्यस्मिन्वाजिनमित्यर्थादन्यस्मिन्पात्रे वाजिनमिति वैखानसः । द्वयोरिति भारद्वाजापस्तम्बौ । वाजिनैकदेशेनाऽऽमिक्षामुपसिच्य प्रज्ञातां निधाय वाजिनैकदेशमप्युत्करे निदधाति । अत्रैवोद्धरणनिषेचनं भारद्वाजेनोक्तम् । तथा कृत्वैककपालमुपदधाति । अथवोत्करे वाजिनशेषं निदधातीति वचनात् । उद्वासनकाल एवेदमामिक्षां कृत्वैककपालमुपधाय तत उद्वासनकालेऽन्यस्मिन्पात्र इत्यादि । तथैवाऽऽपस्तम्बवैखानसाभ्यामभिधानात् । श्रुतिपाठमनुसृत्योक्तमङ्गजातं क्रमस्तु सामर्थ्येन ज्ञेय इति न दोषः । दृश्यते चान्यत्रापि चषालस्य करणकाल एव यूपाग्रे प्रतिमोचनमप्युक्तम् ।

**संयुतानां पिष्टानां त्रिभागमन्त्रेण पौष्णमपच्छिद्य चरुकल्पेन श्रपयति ।**

कृतव्याख्यानम् । मदन्तीनां कृतकार्यत्वात्पाकार्थमन्यदेवोदकं ग्राह्यम् ।

**उत्तरं परिग्राहं परिगृह्य संप्रैषेण प्रतिपद्यत आज्येन दध्ना चोदेहीति संप्रैषस्यान्तं संनमति ।**

पशौ कृतव्याख्यानम् । अत्रोत्करे वेदिधर्मा इत्युक्तम् ।

**फाल्गुन्यां यथा पशावेवं पृषदाज्यं गृह्णाति ।**

पशुवदिति वक्तव्ये गुरुनिर्देशेनोक्तं यथा पशौ श्रुत्या विहितमेवमेव फाल्गुन्यां विहितं नत्वतिदेश इति ।

**चैत्र्यां तु द्विराज्यस्योपस्तीर्य द्विर्दधि गृहीत्वा सकृदाज्येनाभिघारयति ।**

तत्र संसृष्टं पञ्चगृहीतमुक्तमत्र पुनर्द्विराज्येनोपस्तीर्येत्यादिना दध्न एव हविष्ट्वमाज्यस्योपस्तरणाभिघारणार्थत्वदिति तत्तु पूर्वोक्तेन विरुध्यते पृषदाज्येनानूयाजान्यजतीति श्रुतेरविशिष्टत्वाद्दध्नाऽनूयाजा इत्यनभिधानाच्च । तस्मादुपस्तरणाभिघारणशब्दौ व्याख्येयौ । आज्यस्येति कर्मषष्ठी । तेनाऽऽज्यमुपस्तीर्येत्ययमर्थो भवति पृषदाज्यधान्यामाज्यमुपस्तरणं न संस्कारकं संस्कार्यत्वात्तत्रेत्यर्थाद्द्विर्दधि गृह्णाति तते प्रातर्दोह इतिवदधिकरणस्यापि संस्कारो भवत्याज्यस्य । तथाचोपस्तीर्णमाज्यं द्विर्दधिग्रहणेन

संस्कृत्य तृतीयानिर्दिष्टेनाऽऽज्येनाभिघारणेन संस्कृतस्याऽऽज्यस्यैव संस्कारः । एवं मनसि निधाय श्रुतिरेव पठिताऽऽज्यस्योपस्तीर्येति तथाऽऽज्येनाभिघारयतीति च । ततस्तु ममाभिर्मन्त्रैर्गृह्णाति ।

उद्वासनप्रभृतीनि कर्माणि प्रतिपद्यते ।

मारुतमुद्वास्याऽऽमिक्षामुद्वासयति ।

अन्यस्मिन्पात्र एककपालमुद्वास्य प्रभूतेन सर्पिषाऽऽभ्यानीयाऽऽविष्पृष्ठं करोति ।

अपूर्वत्वाल्लौकिकेनाभिपूर्णे पात्रे यथा पुरोडाश आविर्भूतं प्रकटमग्रं पृष्ठं यस्येति तथा । अलंकरणकाल इत्यापस्तम्बः ।

व्याहृतिभिर्हवी१ष्यासादयति तथा संवत्सरे ।

हवी१षीत्युक्तत्वाद्वाजिनं तूष्णीमेवोत्करे तथा संवत्सरेऽतीते व्याहृतिभिरेव हवींषि चातुर्मास्येष्वासादयेत् । एतदभ्यस्तचातुर्मास्यविषयम् ।

निर्मन्थ्यस्याऽऽवृता निर्मन्थ्येन प्रचरति ।

गतार्थम् ।

वेदं निधाय सामिधेनीभ्यः संप्रेष्यति ।

क्रमानुवाद उत्तरविधित्सया ।

नव प्रयाजान्यजति चतुर्थे समानीयाष्टमे सर्व१ समानयते ।

कृतव्याख्यानं पशौ नवमोऽन्त्यविकारः । समिधो यजेति प्रथमं यज यजेत्युत्तरान् ।

सर्वत्रोपा१शु सावित्रैककपालयोर्देवता यजति ।

अत्रान्यत्र च यत्र यत्रैतौ । स्पष्टमन्यत् ।

कृत्स्नमेककपालमवदायाऽऽशयमनुप-र्यस्यर्जु प्रतिष्ठितमपर्यावर्तयञ्जुहोति ।

आशयेनैवोपस्तरणं सर्वमवदायोपरि पूरितमाज्यं सेचयित्वर्जुमुखं पूर्वदिशि प्रतिष्ठितं प्रक्षेपोत्तरकाले यथा हुत एव तिष्ठेत्तथाऽपर्यावर्तयन्नुत्तानमकुर्वञ्जुहोति । आशयमेव पुरस्तादुपरिष्टाच्च प्रक्षिपति ।

यदि हुतः पर्यावर्तेत वरे दत्ते स्रुचोऽग्रेण कल्पये-त्प्रत्यादाय वा पुनर्जुहुयान्न पाणिनेत्येकेषाम् ।

आध्वर्यवे वरे दत्ते स्रुचोऽग्रेण समं कुर्याद्धस्तेन वाऽवदाय पुनर्जुहुयात्स्रुचा वेत्ये-केषां पुनर्होम आश्रावणादिना ।

---

१ ख. ग. घ. ङ. ज. झ. ञ. ठ. ड. ढ. ण. 'हवींषि' ।

**मधुश्च माधवश्चेति चतुर्भिर्मासनामभिरेककपाल-**
**मभिजुहोति मधवे स्वाहा माधवाय स्वाहेति वा ।**

मन्त्रान्ते स्वाहाकारः । शाखान्तरीयाः स्वाहाकारान्ता एव पठिताः । मासनामभि-रित्यागामिभिस्तेन फल्गुनीपूर्णमासे दीक्षेरन्मुखं वा एतत्संवत्सरस्येति चित्रापूर्णमासे दीक्षेरन्मुखं वा एतत्संवत्सरस्येत्युभयत्र संवत्सरप्रवृत्तिदर्शनान्मध्वादिसंज्ञाः फाल्गुनं चैत्रं वाऽऽरभ्य ज्ञेयाः ।

**पृषदाज्येन नवानूयाजान्यजति ॥ २ ॥**

पशौ कृतव्याख्यानम् । देवान्यजेति प्रथमम् । यज यजेत्युत्तरान् । त्रयस्त्रय एकै-कस्य विकारा इति याजमाने वक्ष्यति । प्रथमाष्टमनवमानां प्राकृतत्वाद्द्वितीयादयः क्रमेण त्रयाणां विकारा द्वौ द्वावेकैकस्य मान्त्रवर्णिक्यो देवताः । देवतापदानां षष्ठ्य-न्तानामन्तेऽहं देवयज्ययेत्यादि यथाप्रकृतिविकारं ज्ञेयम् ।

**संवत्सरीणा॰ स्वस्तिमाशास्ते दिव्यं धामाऽऽशास्त**
**इति सूक्तवाकस्याऽऽशीष्षु होताऽनुवर्तयति ।**

वैशेषिकमिदं दिव्यं धामाऽऽशास्त इत्येतस्मात्पूर्वं संवत्सरीणा॰ स्वस्तिमाशास्त इति होताऽनुवर्तयति दिव्यमित्यनुवृत्तं करोति ।

**प्रहृतेषु परिधिषु सꣳस्रावेणाभिहुत्य वाजिनेन प्रचरति ।**

यत्र परिधिप्रहरणं तत्र संस्रावेणाभिहोम इति वक्तुमुक्तं प्रहृतेष्वित्यादि । तेन प्रहृत्य परिधीञ्जुहोतीति वाजिनब्राह्मणेन न विरोधः । समिद्धोमस्य प्रहरणाङ्गत्वादि-त्यर्थः । वाजिनयागस्यात्र काल इत्यर्थः ।

**वाजिनपात्र उपस्तीर्य बर्हिषि विषिञ्चन्वा-**
**जिनं गृह्णाति पूरयित्वा नाभिघारयति ।**

उत्कर आसादितं तस्मात्पात्रात्स्रुवेण गृह्णाति विषिञ्चन्स्कन्दयन्बर्हिषीति वैखा-नसः । अन्तर्वेदीत्यापस्तम्बः । तेन वाजिनपात्रेऽन्तर्वेदि स्थिते पूरयतीत्यनेनोक्तं नाव-दानधर्म इति पात्रपूरणं यावद्भवति तावद्गृह्णाति । अत्र याजमानं पञ्चहोता ।

**वाजिभ्योऽनुब्रूहि वाजिनो यजेति संप्रेष्यति ।**

यथाक्रमम् ।

**ऊर्ध्वज्ञुरासीनो होताऽनवानं यजति ।**

ऊर्ध्वजानुर्न पातितजानुः । तिष्ठतोर्ध्वज्ञुत्वं मा भूदित्यासीन इत्युक्तम् । सर्वत्र हौत्रकर्मख्यापनं याजुषहौत्राभिप्रायेणाऽऽध्वर्यवकाण्डपठितत्वादत्र व्याख्यानं श्रुतेः कृत-मित्युक्तं न विस्मरणीयम् । अनुच्छ्वसन्यजति याज्यापुरोनुवाक्ययोरर्धर्चे विराममकृत्वेत्यर्थः ।

वषट्कृते विषिच्यमानया जुहोति ।

विषिच्यमानया स्रुचोपलक्षणं चमसस्यापि । चमसेन स्रुचा वा स्रावयञ्जुहोतीति वैखानसः । वाजिभ्य इदम् । वाजिनामहं देवयज्ययेन्द्रियावी भूयासं अमानामिति वा हविर्विकारत्वात् । अनुवषट्कृते तु स्विष्टकृद्याजमानं न भवत्विति त्रयाणां ह वै हविषां स्विष्टकृते न समवद्यन्ति सोमस्य घर्मस्य वाजिनस्येत्यापस्तम्बोक्तश्रुतेः ।

वाजिनस्याग्ने वीहीत्यनुयजति ।

पूर्ववदेव याजमानम् । अग्नय इदम् । वाजिनामहं देव० ।

वाजिनोद्रेकेण दिशः प्रतियजति यथा वसाहोमोद्रेकेण ।

नायमतिदेशः समानश्रुतित्वेन दर्शितमिति गुरुनिर्देशेनोक्तम् ।

समुपहूय सर्वे वाजिनं भक्षयन्त्यन्योन्यस्मिन्नुपहवमि-च्छन्त उपहयस्वेत्यामन्त्रण उपहूत इति प्रतिवचनः ।

आमन्त्रणप्रतिवचनाभ्यामन्योन्यस्मिन्नुपहवमिच्छन्तः कुर्वन्तो वाजिनमुपहूयानु-ज्ञाप्य वाजिनं भक्षयन्तीत्यर्थः । शेषमिति भरद्वाजापस्तम्बौ । तन्नेष्टम् । वाजिनमिति निर्देशादुत्करस्थमेव । मन्त्र इति शेषः । कर्मनामधेयेनेत्यापस्तम्बः । तेन होतरुपहय-स्वेत्येवमन्येषामामन्त्रणं ब्रह्मन्नध्वर्योऽग्नीद्यजमानेत्यादि स्वव्यतिरेकेण ज्ञेयम् । क्रमोऽ-प्ययमेव भारद्वाजेनोक्तः । प्रतिवचनमुपहूत इत्येतावतैव । उपहूतोऽनुज्ञात इत्यर्थः ।

वाजिनां भक्षो अवतु वाजो अस्मान्त्रेतः सिक्तममृतं बलाय । स न इन्द्र इन्द्रियं द्रविणं दधातु मा रिषाम वाजिनं भक्षयन्तस्तस्य ते वाजिन्वाजिभिर्भक्षं कृतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति भक्षयन्ति ।

प्रत्येकं मन्त्रः ।

यजमानः प्रथम उत्तमो वा ।

भक्षयतीति शेषः । प्रथम इत्यत्र तमारभ्योपहवोऽन्येषाम् ।

श्वोभूते पौर्णमासेनेष्ट्वोदवसायानुदवसाय वा ।

प्रतिपदि पौर्णमासेनेष्ट्वा ततो गृहेभ्योऽन्यत्र तत्रैव वा वक्ष्यमाणं कर्तव्यम् ।

प्रसूता देवेन सवित्रा दैव्या आप उन्दन्तु दीर्घायुत्वाय वर्चस इति शिरोऽभ्युनत्ति ।

मन्त्रलिङ्गादद्भिरुन्दन्ति क्लेदयन्तीत्यर्थोऽवगम्यते । तत उदिधातोः अभिकरण-रूपस्यैतद्रूपमभिपूर्वस्याभ्युनत्तीति ।

---

१ घ. ङ. अ. झ. ण. ढ. °मास्येष्ट्वो° ।

ऋतमेव परमेष्ठ्यृतं नात्येति किंचनर्ते समुद्र आहित ऋते भूमिरियꣳ श्रिताऽग्निस्तिग्मेन शोचिषा तप आक्रान्तमुष्णिहा शिरस्तपस्याहितं वैश्वानरस्य तेजसर्तेनास्य निवर्तये सत्येन परिवर्तये तपसाऽस्यानुवर्तये शिवेनास्योपवर्तये शग्मेनास्याभिवर्तय इति त्रेण्या शलल्येक्षुशलाकया वा केशान्विनायन्।

त्रीणि श्वेतानि यस्यां सा तया शलली मृगविशेषो येन बाणैः स्वशरीराच्छूलाकारैः पिच्छैर्विमुक्तैः प्राणिनो विध्यन्ते तच्छूलाकारोऽवयवोऽपि शलली तादृश्येक्षुरवान्तः- शलाकया वा शिरोगतान्केशान्विनायन्विनीतानग्रान्कुर्वन् ।

लोहेन क्षुरेणौदुम्बरेण केशान्निवर्तयति ।

पूर्वोक्तमन्त्रेण निवर्तनलिङ्गेन निवर्तयति तूष्णीं विनायन्निवर्तनं छेदनं कतिपयानामेवाग्रे सर्वमिति विकल्पदर्शनात् । लोहं कालायसं तस्य विकारेण क्षुरेण ताम्रयुक्तेन लोहितायसेन निवर्तयत इति श्रुतेः । लोहितं ताम्रं तेन युक्तमायसमिति श्रुत्यर्थः । तद्वतमिति याजमानम् ।

वपति श्मश्रूणि सर्वं वा वापयते ॥ १ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे पञ्चमप्रश्ने प्रथमः पटलः ॥ १ ॥

---

वपति वापयतीतिश्रुतिद्वयगतोऽनूदितो न भिन्नार्थो नापि परस्मैपदात्मनेपदाभ्यां णिजर्थोऽभिधीयते । शक्तोऽध्वर्युरेवाशक्तो नापितो वपति ।

इति हिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैजयन्त्यां पञ्चमे चातुर्मास्यप्रश्ने प्रथमः पटलः ॥ १ ॥

इति वैश्वदेवपर्व ।

---

अथ पञ्चमप्रश्ने द्वितीयः पटलः ।

---

ततश्चतुर्षु मासेष्वाषाढ्यां श्रावण्यां वा वरुणप्रघासैर्यजते ।

आरम्भानुसारेण व्यवस्थया विकल्पः । चतुर्ष्वेव मासेषु व्यतीतेषु वरुण उत्तरे विहार आमिक्षाया देवता दक्षिणे मरुतस्त एव प्रकृष्टो घासो येषामिति करम्भभाक्त्वेन प्रघासशब्देनोक्ताः । प्रघास्यान्हवामह इति मन्त्रलिङ्गाच्च । ताभ्यां देवताभ्यामुभयविहारगतकर्मसमुदायो लक्षितस्तदेव नामधेयं ज्ञेयम् ।

तेषां वैश्वदेवेन कल्पो व्याख्यातः ।

यथा वैश्वदेवे पूर्वेद्युरन्वाधानादिर्विधिरेवमत्रापि सायंदोहान्त एतद्ब्राह्मणान्येव पञ्च हवींषीति ब्राह्मणेनातिदिष्टो व्याख्यातो वैश्वदेवकर्मणो यः कल्पः स वैश्वदेव एतत्तदतिदेशेनेत्यर्थः । तेषां वरुणप्रघासलक्षणानां कर्मणां पूर्वत्र समुदायमात्रं वाच्यमित्येकवचनमत्रोक्तावयवाः समुदायिनः सप्त बहुवचनान्तदेवतापदलक्षणा इति बहुवचनम् । उदवसायानुदवसायेति पूर्ववद्विकल्पेन ।

द्वावाहवनीयावुभयत्राऽऽवापः कृत्स्नमुत्तरे विहारे तन्त्रं क्रियते तथा दक्षिणे ।

आहवनीय एक एवाऽऽधानेन साधित इति तस्यैव द्विस्थानावस्थित्या द्वित्वमाह । तेनाजस्रे प्रणयनं विभज्य स्थापनम् । उत्तरवेदिस्तत्संस्काराश्च न स्युः । नत्वाऽऽहवनीयवद्वितीय इति वाच्यम् । एकेनैव प्रातिपदिकेनोभयोर्मुख्यत्वावगतेः । प्रणयनकाले प्रणयत इति शेषः । आहवनीयात्तु प्रणयनपक्षे द्वौ भाविसंज्ञयाऽऽहवनीयावमुख्यावेव । अत्र प्रदर्शनं विहारद्वयकरणहेतुत्वख्यापनार्थम् । उभयत्राऽऽवाप उभयोराहवनीययोरावापः प्रधानयागो यस्मिन्कर्मणि तत्तथा तादृशं कृत्स्नं साङ्गमुत्तरे विहारे तन्त्रं कर्म करोतीत्यर्थः । नह्यत्र विहारद्वयमस्ति । त्रेताग्न्यायतनानि शालाविहारः । नह्युभयमुभयत्र साकल्येनास्ति । तस्मान्मुख्यं गार्हपत्यमवलम्ब्यैकविहार एवोत्तरदक्षिणार्धभागाभ्यां विहारद्वयं वाच्यम् । न च गार्हपत्यस्याग्रे कृत एक उत्तरो भवति । कस्मादुत्तर इति ज्ञातुमशक्यत्वाद्दक्षिणविहारस्याप्यपि स्थानानिर्देशात्परस्परापत्तेश्च । तस्माद्विहारभागौ विहारौ तादृशमेव दक्षिणे विहार इत्यत्रापि संबध्यते । यः प्रधानस्यापि सोऽङ्गानां स देशः स कर्तेति द्वयोः प्रधानानां क्रियमाणत्वाद्द्वाभिदेशकर्तृभेदादुभयत्राप्यङ्गानि कर्तव्यानीत्यर्थः । उभयत्र दक्षिण उत्तरे प्रक्रमयेते इति वक्तव्ये तथा दक्षिण इति निर्देशो येनाध्वर्युक्तेनैव प्रैषादिना तन्त्रेण सिद्धिस्तत्रोभयत्र मा भूदिति वक्तुं सादृश्यमतिदिष्टम् ।

अध्वर्युर्गार्हपत्यसंयुक्तानि ।

कर्माणीति शेषः । उभयोरपि विहारयोर्गार्हपत्यस्यैकत्वात्कर्तृभेदेऽपि वचनात्पत्नीसंयाजा अपीत्यर्थः । परार्थान्येकेनेति न्यायात्साधारणानीति वक्ष्यमाणत्वादन्वाधानपरिस्तरणे तु सकृदेव कर्तव्ये ते मुख्यत्वादध्वर्युणेति प्राप्ते सूत्रारम्भसामर्थ्यात्पत्नीसंयाजाः संपत्नीयहोमश्च । तर्ह्यध्वर्युर्गार्हपत्य इत्येवास्तु तन्त्रमित्यनुवर्तनीयमिति चेन्न । कपालोपधानादि सर्वं च प्राप्नुयात्तन्मा भूदिति । तर्हि पत्नीसंयाजसंपत्नीयमेवम(वा)स्तु किमर्थं ज्ञानगौरवमिति चेत्, उच्यते—संयुक्तवचनेन यानि संयुक्तानि तान्यपि जैमिनिन्यायविरोधे सत्यपि वचनस्य बलीयस्त्वात्पत्नीसंयाजाख्यान्यप्यध्वर्युरेव कुर्यादि-

स्युक्तं वचनं वाजसनेयिनामथाध्वर्युरेव प्रतिपरेत्य पत्नीः संयाजयत्युपांशु एव प्रतिप्रस्थातेति । संपत्नीयमपि पत्नीसंयाजग्रहणेन गृह्यते । भरद्वाजोऽपि—अध्वर्युरेव पत्नीर्याजयतीति । न्यायमताश्रयणेनाऽऽपस्तम्बेनोक्तमुभयोः पत्नीसंयाजा इति ।

यानि साधारणानि ।

साधारणान्येककर्तृकाणि साधारणपदार्थस्य संबन्धीनि तानि चाध्वर्युरेव । तानि च परिगणितानि कात्यायनेन—प्रणीतापत्नीसंनहनाग्निमन्थनाश्रुतप्रत्याश्रुतप्रैषयजमानवाचनहोतृषदनवरणप्राशित्राङ्गुलिपर्वाञ्जनावान्तरेडाप्राशनमार्जनान्यवभृथश्च प्रतिप्रस्थातेति । तत्र मन्थनाग्निपराग्निहोमावभृथास्तु वचनादन्ये विभागादिति व्याख्यातमभियुक्तैः ।

तत्रमङ्गानां हौत्रं तदध्वर्युः संप्रेष्यति ।

इष्टोऽधिकः पूर्वस्यापि ग्रहणार्थत्वेनार्थवान्यानि साधारणानि तत्र सकृत्कृतेनोभयपदार्थोपकारस्तन्त्रम् । अङ्गानां होतुः कर्म तन्त्रं सकृदेव विभागात् । अङ्गेति प्रधानहौत्रव्यावृत्त्यर्थं तत्र याज्याद्यन्यत्वादसंभवात्तन्त्रस्य । तदध्वर्युरेव संप्रेष्यति न प्रतिप्रस्थाता । प्रधानं प्रतिप्रस्थाताऽपि । यः प्रैषाहृतसंस्कारस्तस्यैकस्यैव तत्कार्यमप्येकमेवातस्तस्य प्रैषस्य कृतत्वादन्येन कृतस्यापेक्षा । प्रधानानामिश्रत्वोत्पादनार्थं तन्त्रमङ्गानामित्युक्तं तत्र क्रमभावपृथग्देवताप्रकाशपुरोनुवाक्यायाज्ययोः प्रतिप्रस्थातैव ।

एकवदग्निसंयुक्तानि ।

अग्निराहवनीयः । तत्संयुक्तानि वाचकानि एकपदानि प्रयोक्तव्यानीति शेषः । एक एकोऽर्थः प्रतिपाद्यत्वेन विद्यते यस्मिन्कर्मणि तत्तथा, क्रियाविशेषणं नपुंसकलिङ्गं, हौत्रे तन्त्रेण प्रैषो यत्र प्राप्तस्तत्राग्नये प्रणीयमानायानुब्रूहीत्यत्राग्निद्वयविषयत्वाद्द्विवचनाभिधानायाग्निभ्यामिति प्राप्त उक्तमेकवदिति । एक एवाप्यत्रेत्युक्तं तस्य च द्विस्थानावस्थितत्वेऽप्येकत्वमेवेत्यर्थः ।

पर्यायभूतान्यपि तद्वाचकानि सर्वत्रैकत्वयुक्तानि प्रैषाण्याह—

सामिधेनीष्वग्निप्रणयनेऽग्निसंमार्जने च ।

प्रथम उदाहरणे प्रसङ्गाद्धौत्रतन्त्रे चाग्नीत्प्रैषमात्रे तृतीयम् । एकवदिति न्यायसाधारणं प्रणयनोदाहरणस्य प्राथम्येऽपि भरद्वाजोदाहृतस्याग्निभ्यां समिध्यमानाभ्यामनुब्रूहीत्येवमग्निसंमार्जन इत्यस्याऽऽदौ बुद्धिस्थस्य निराकरणतया प्रथममुदाहृतम् । न्यायसूत्रमिदम् । तेन सामिधेनीष्विति वचनात्सामिधेनीविषये सर्वत्र । तत्र नैर्ऋमूहेदिति प्रतिषेधोऽप्यनुगृहीतः । प्र वो वाजा इत्यादावग्निपदं नोह्यं द्विवचनान्तत्वेनेत्यपि । याजमाने च समिद्धो अग्निरित्यादौ चोदाहरणत्वम् । द्वितीयोदाहरणेऽग्नये प्रणीयमानाय

१ ख. ग. ठ. ङ. ण. न चेयम् ।

प्र देवं देव्या इत्यादावित्यपि ज्ञेयम् । नचाग्ने वाजजिदित्यत्रापि प्राप्तिरिति उभयत्र सकृत्कर्तुमशक्यत्वात् । प्रदेशभेदान्मन्त्रावृत्तिश्च ।

उभौ ब्रह्माणमामन्त्रयेते द्विवद्ब्रह्माऽनुजानाति ।

उभावध्वर्युप्रतिप्रस्थातारौ ब्रह्मन्प्रोक्षिष्यामीत्येवंप्रकारेण । अत्रायमाशयः—यद्यपि ब्रह्माऽध्वर्युणाऽऽमन्त्रित उभावपि प्रसवेनानुजानाति तथाऽपि अध्वर्युः कथं भविष्यत्क्रियाकर्तारं प्रत्यज्ञाश्रावणमेकमेव प्रेर्यत्वेनोपस्थापयेत पुरुषैकवचनेन । तत्र प्रोक्षेत्येव प्रसवः स्यादुभयोर्न स्यात् । अथ प्रोक्षिष्याव इत्येवमामन्त्रयेते तथा च स चाहं चेत्यावां प्रोक्षिष्याव इत्येव स्यात्तत्रास्मद्युपपदे समानाधिकरणे स्थानिन्यप्युत्तमपुरुषविधानम् । तत्र द्विवचनेन सर्वादीनां यत्परं तच्छिष्यत इति परांचत्र(राकत्र)त्यक्त्वेन द्वयोरभिधानेऽपि परस्मिन्प्रत्यक्त्वमारोप्योत्तमपुरुषद्विवचनप्रयोगं कुर्यात् । यच्चाऽऽहुरन्योऽपि प्रत्यक्त्वेन वक्तुं न शक्यते तस्मान्मुख्येनैव प्रत्यक्त्वेन स्वं स्वमास्मानमभिदधात्येकवचनेन । ततश्च नोहोऽपि । वैदिकेनैव पदेनाऽऽमन्त्रणमपि सिध्यतीति द्वावपि ब्रह्माणमामन्त्रयेते । द्विवद्ब्रह्माऽनुजानाति । प्रणयतं यज्ञं देवता वर्धयतमेता०थत्तमित्यादिसंनामेनैव युगपत्क्रियेोरुभावप्यनुजानाति । समानन्यायानामुपलक्षणमेतत् । निर्वप्स्यामीति निर्वपनम् । अगतम् ।

यत्राग्नी प्रणेष्यन्तौ भवतस्तस्मिन्देशे समे प्राची वेदी कुरुतो व्यङ्गुलेन त्र्यङ्गुलेन चतुरङ्गुलेन पृथमात्रेण वा श्रोण्यंसेष्वसंभिन्ने भवतः ।

परिभाष्येदानीं वैश्वदेवाद्विशेषमाह गार्हपत्यात्पूर्ववदेवाग्निप्रणयने प्राप्तेऽपवादः प्रणयनकाले यत्र देशेऽष्टादिप्रक्रमेषु मध्ये येन प्रमाणेनाग्नी प्रणेष्याव इत्येवंकृतसंकल्पौ स्यातां तेन मानेन तस्मिन्देशे तं देशमभिव्याप्य वेदी कुरुत इति संबन्धः । नह्येकस्मिन्देशे वेदिद्वयं कर्तुं शक्यम् । तथा प्रणयनं प्राचीनमेवानिर्देशेन प्राप्तं तत्र मुख्यं संभवति द्वयोराहवनीययोरेकत्र तस्मान्मुख्याद्गार्हपत्यात्प्राचीन एकस्मिन्नेव देशे निमित्तौ कृत्वा यथासंभवं वेदी कुरुतः । न चैक एव मुख्योऽन्यस्त्वमुख्य इति । मुख्यगौणप्रदेशयोरेकत्वेन ग्रहीतुमशक्यत्वात् । वैश्वदेवे हि प्रकृतावेदिरायतनं चात्रोत्तरविहार उत्तरवेदिर्दक्षिणे चाऽऽयतनं तदुभयं वेद्योर्मध्य एव प्राप्तमतस्तयोरकरणे तत्र संभवतीति वेदिकरणमादौ प्राप्तम् । तत्र प्रकृतिवदिति वक्तव्ये तस्मिन्निति तद्देशसमीपे कर्तव्ये तत्र दक्षिणोत्तरविहारद्वयव्यवहारसिद्ध्यर्थम् । आहवनीययोरायतनं तु प्रकृतौ यद्यपि पुरस्ताद्वेदेरिष्टं तथाऽप्यत्र पाशुकप्रणयनं प्रणीताग्नेरुत्तरवेद्यामेव प्रतिष्ठापनं प्राप्तं तत्रोत्त-

१ ख. ग. ङ. ण, 'त्तरे त्रि° ।

रस्यां वेद्यामुत्तरवेदिमुपवपतीति श्रुतेर्दक्षिणस्यां पारिसंख्यातोत्तरवेदिस्तदा यज्ञोत्पत्तौ प्रतिषिद्ध इत्युक्तन्यायेन नोत्तरवेदिधर्माणां चित्तादीनां निवृत्तिवद्वेद्याः करणमपि निवर्तते तदर्थमुक्तं समे प्राची, इति । दैर्घ्येण प्राग्भागसमास्या च समे तत्राऽऽयतनं यदि पुरस्तात्क्रियेत तदा गार्हपत्यस्य तावदन्तरालमुत्तराहवनीयस्य ततोऽधिकं दक्षिणाहवनीयस्य स्यादिति मुख्यो दक्षिणोत्तरभावोऽपि न स्याद्द्वयोराहवनीययोस्तस्माद्वेद्यामेवाऽऽयतनमुत्तरवेद्याः पश्चिमतिरश्चीनरेखासमपश्चिमतिरश्चीनरेखमायतनं कुर्यादत एव समानतरालसिद्ध्यर्थं द्वयोर्वेद्योर्गार्हपत्यान्मुख्यप्राक्त्वासंभवात्किंचिद्दक्षिणोत्तरदेशभागाश्रयणेन करणं युक्तमेवं च बाहुसंस्तवोऽप्युपपन्नो भवति । तस्माद्दन्योः प्रणयनमप्यष्टादिप्रक्रमैः किंचिदुभयतस्तिर्यगेव । न च दक्षिणवेदिरायतनात्पश्चादपि कर्तुं शक्यते प्रकृतदेशसिद्ध्यर्थमिति वाच्यम् । पृथमात्राद्वेदी असंभिन्ने भवतस्तस्मात्पृथमात्रं व्यश्सावितिति ब्राह्मणमनुसृत्य श्रोण्योरंसयोश्च व्यङ्गुलेनेत्याद्यन्तरालमुक्तं तत्समा श्रोण्यंसेषु स्यान्नान्यथेति दर्शयितुं तस्मिन्देशे समे प्राची, इति चोक्तम् । व्यङ्गुलादिप्रमाणेन परस्परमसंभिन्ने असंश्लिष्टे कर्तव्ये । पृथस्तु व्याख्यातत्र्ययोरङ्गुलः । श्रोण्यंसाश्लेषेण द्वे पाशुकौ दक्षिणा दार्शिक्युत्तरा पाशुकीति बौधायनवैखानसाद्युक्तमनभिमतमिति दर्शितम् । पूर्वावाहवनीयावित्युक्तं तत्र गार्हपत्यात्प्रणयने तत्र स्थित आहवनीयो द्वेधा कार्यः । आहवनीयात्प्रणयनेऽपि पशुबन्धवदेकस्याऽऽहवनीयकार्यकरस्य प्राप्तौ तस्यैव द्वेधा करणं विधीयते । अस्ति च वरुणप्रघासेषु प्रस्थद्वयं यद्गार्हपत्याद्दाहवनीयाच्च प्रणयनं सूत्रान्तरेषु तथा दर्शनात् । आचार्यस्य तद्द्वयमिष्टं, कृतमिति तु न भूतनिर्देशोऽपि तु वर्तमाननिर्देशः । तेन यत्राग्नी प्रणेष्यन्ताविति वचनात्प्रणयनान्याश्रयत्वेन वेदिकरणमुक्तम् । अग्न्ये प्रणयनाभावाद्वेदी उत्तरवेदिश्च बाधिता एव । पशुबन्धवच्चापूर्वं प्रणयनं विधीयते तदभावे कर्मवैगुण्यं स्यात् । न च द्वाराभावाद्बाधेऽपि न दोष इति अपूर्वं प्रणयनं पशुबन्धवदाहवनीयात्प्राप्तं तत्र न द्वाराभावः । न्यायविशारदा भट्टाचार्या अप्याहुस्तथा वचनमुदाहरन्तः । यदपि गार्हपत्यात्प्रणयनं नाऽऽपस्तम्बेनोक्तं तदनुगृहीतं शबरस्वामिना तदपि शाखान्तरादेव । तस्मादुभयमप्यस्माकमिष्टम् ।

यदध्वर्युः करोति तत्प्रतिप्रस्थाता करोति ॥

अत्र कृतानुकरः प्रतिप्रस्थातेति कात्यायनबौधायनाभ्यामुक्तं तत्क्रमभावित्वे कर्मणामुभौ ब्रह्माणमामन्त्रयेते इत्याद्ययुक्तं स्यादतः कृतानुकरणं प्रतिप्रस्थातुः पूर्वकालकर्तृत्वपरिसंख्यानार्थमुक्तं यदेव कर्माध्वर्युः करोति तदेव प्रतिप्रस्थाताऽपि ननु स्वयं स्वेच्छया पूर्वं वा पश्चाद्वा कुर्यादित्यर्थः । एतस्य बाधो वचनादेव तत्र तत्र वक्ष्यते ।

उत्तरे विहारेऽध्वर्युः कर्माणि करोति दक्षिणे प्रतिप्रस्थाता ॥

नियमस्य पूर्वमनुक्तत्वादत्र नियम्यते । स्पष्टम् ।

दक्षिणस्या वेदेरुत्तरस्याः श्रोणेरुत्तरस्या वेदे- र्दक्षिणमꣳसꣳ स्फ्येनैकस्फ्यामनुसंभिनत्ति ।

दक्षिणविहारवेदेरुत्तरश्रोणिमारभ्योत्तरवेदेर्दक्षिणांसपर्यन्तं स्फ्येन कृतामेकस्फ्यामे- करेखाम् । अनुस्तृतीयार्थे । रेखया वेदिद्वयविश्लेषमध्वर्युरेव करोति । अत्र वेदिकरणं तूष्णीं मानेन संमार्जनान्तमेवोक्तम् । न संमार्जनाद्यपि, समान उत्कर इत्यनन्तरमेवा- भिधास्यमानत्वात् । अतः संमार्जनान्ते कृते स्फ्येनानुसंभिद्य पश्चाद्द्वे कृत्वा वेदी कुरुत इत्यर्थः ।

तदेव दर्शयति—

समान उत्करो[1] ब्रह्मा होताऽऽग्नीध्रश्च ।

चातुर्मास्यानां यज्ञक्रतोः पञ्चर्त्विज इति वचनात्त्रोभयत्र ब्रह्मादयोऽन्येऽन्ये पञ्चम- प्रतिप्रस्थातैव । उत्करस्यावकाशाभावादुत्तरत एवैकः । द्विपदे पारिमिते चेति मानान्त- रेणापि यानि साधारणानीत्युक्तमेवाध्वर्युकृत एवोभयोः ।

अग्रेणोत्तरं विहारं प्रतिप्रस्थातोत्कराय संचर- ति ( * यत्प्रागुत्तरस्मात्परिग्राहात्तत्कृत्वा) ।

स्पष्टम् ।

उत्तरवेद्याः कल्पेनोत्तरस्यामुत्तरवेदिं करोति ।

उत्तरवेद्याः कल्पेन विधिना निरूढ उक्तेनोत्तरविहारवेद्यामेव न दक्षिणविहारवेद्यां करोतीत्यर्थः । तत्रायं प्रयोगः—यजमाने दक्षिणविहारं दक्षिणेन स्थिते सति उभौ स्वीयां स्वीयां वेदिं कुरुतः । वेदेन संमृज्यमानयोर्यजमानः सकृदेव वेदेन वेदिं बृहतीं- मित्यादि करोति संसृष्टद्रव्यस्यैकत्वान्नोहः । प्रदेशभेदे सत्यपि याजमाने वेदिमित्येतां- वतैव निर्देशात् । संसर्गिषु चार्थस्यास्थिरपरिगणत्वादिति मीमांसकाः । तस्माज्जात्यभिप्रा- येणैकत्वोपपत्तौ सत्यां नाऽऽगमप्रत्ययाद्य ऊहेन कार्यः । प्रायोगिकाः कुर्वन्ति च । एवं- मन्यत्रापीमां नराः प्रोक्षणीरासादय गां दोहपवित्रे रज्जुमित्येतस्योच्चारणमात्रेण विम- बाधोभयोः । आग्नीध्रः स्तम्बयजुरुभयमभिगृह्णाति । ऋतमसीति पूर्वपरिग्राहौ । यदुद्धन्तो बृहस्पत इत्यादि याजमानमनूहेन । एवं कृते सत्युत्तरवेद्यामुत्तरवेदिः शम्या- दानादिनोत्तरवेदिधर्मत्वात्ततविमानानिवपनादिसंछादनात्पूर्वं कृत्वा ।

* धनुश्चिह्नान्तर्गतपाठः केवलसूत्रपुस्तकस्थः ।

१ घ. ङ. ज. झ. म. ट. 'रो होता ब्रह्माऽऽग्नी' ।

उभयत्र संभाराः पांशुकमग्निप्रणयनम् ।

दक्षिणायतनेऽपि संभारान्वक्ष्यमाणमुभयत्रेति । उभयत्र पांशुकं प्रणयनमित्यपि संबध्यते । प्रणयनप्रकारस्तु गार्हपत्येऽग्निप्रणयनानीत्यादि विभज्येध्ममुभौ प्रणयतो नोद्यन्होमो नित्यधार्येऽपि चाऽऽहवनीयादेव प्रणयनम् ।

अग्नीनन्वाधाय ।

उभौ गार्हपत्यदक्षिणाग्नी अध्वर्युरेवाविकृतं सर्वं याजमानं च ।

आमिक्षयोर्वत्सानपाकुरुतो मारुत्यै प्रतिप्रस्थाताऽ-
ध्वर्युर्वारुण्यै सायंदोहस्याऽऽहृता दधिनी कुरुतः ।

शाखाहरणादिविधिना मारुत्या यागस्य पूर्वभावित्वात्पूर्वं प्रतिप्रस्थाता वत्सानपाक-रोतीत्युक्तम् । वैश्वदेवेन कल्प इत्युक्तेऽपि पुनः सायंदोहस्येत्यादिपुनर्विधानं सद्यस्का-ऽऽमिक्षेति केषांचित्सूत्रकाराणां मतं तन्मा भूदित्येवमर्थं दधिनी कुरुत इत्युक्तम् । अत्र शुद्धा अपः० शतं मरुद्भ्यः । शतं वरुणायेत्येवमन्यत्र । उपवेषोऽसि । एता आचरन्ति । अप्रस्वस्था० कामधुक्षः० बहु० दुग्धि० सोमेन त्वा० इन्द्रस्य त्वा० । एवमष्टौ मन्त्रास्त-त्तद्विभक्त्यन्ताभ्यां मरुद्वरुणपदाभ्यामूह्याः । यवागूच्छेदणं विभज्याऽऽतञ्चयोपरि-निधानं परिस्तरणानि गार्हपत्यदक्षिणाग्न्योरध्वर्युरेव श्वो भूते कर्मणे वां यज्ञस्येत्यादि-कमुभौ ब्रह्मयजमानासने अध्वर्युरेव दक्षिणेन दक्षिणविहारम् ।

पात्रसंसादनकाले यथार्थं पात्राणि प्रयुङ्क्तः
शमीमय्यः स्रुचो भवन्ति ॥ ४ ॥ हिरण्मय्यो वा ।

यथार्थमौषधसांनाय्यपात्राणीत्यर्थः । शम्या कृष्णस्य रजतस्य सुवर्णस्य वा स्रुवस-हिताः स्रुचः । दक्षिणविहारस्येति भरद्वाजः । उभयत्रेति बौधायनः । अविशेषादुभ-यत्रेत्येव सूत्रार्थः । स्रुचां ग्रहणात्स्रुवस्यापि ग्रहणमुक्तमेव । उत्तरस्मिन्नेवाग्नौ प्रणीता आसादयत इति भरद्वाजः । कात्यायनेन तु साधारणत्वादध्वर्युरेवेत्युक्तम् । तत्र साधारणतापक्ष एवाऽऽश्रयणीयः । प्रणीताप्रणयनमदृष्टार्थतया विभजति तन्त्रमित्यु-क्तम् । अग्निसाध्यं हि यत्र प्रधानं तत्राङ्गानीति नियमान्न तन्त्रता । न चैता अग्नि-साध्या दृष्टार्थतयाऽध्वर्युसंस्कृता उभयत्र विनियोक्ष्यन्ते । अतो ब्रह्मन्नप इत्यध्वर्यु-रेव । ब्रह्माऽप्यविकृतमेवानुजानाति । करत्वेत्यन्तं याजमानमविकृतम् । यथार्थं पात्राणीति वचनादौषधपात्राण्यपि पृथगेव । स्फ्यादीनि प्राकृतेभ्योऽन्यान्येव तत्तद्वृ-क्षजानि ।

१ ख. ग. घ. ट ठ. ड. ण. संभारेषु ।

निर्वपणकालेऽध्वर्युः पञ्च संचराणि
निरुप्यैन्द्राग्नमेकादशकपालं निर्वपति ।

आग्नेयादीनि पूर्वोक्तान्येवात्र संचारितानि निरुप्य वैशेषिकमैन्द्राग्नं निर्वपति ।

मारुत्यै मेष्यै प्रतिप्रस्थाता यवान्निर्वपति ।

मेषीप्रतिकृतये यवानां निर्वापो नियम्यते । मरुद्भ्यो जुष्टमित्यादि स्वशूर्प एव ।

अध्वर्युर्वारुणं मेषं निरुप्य कायमेककपालं निर्वपति ।

यवानेव मेषार्थम् । मेषमेषीप्रकृतिभ्यां यवान्निर्वपतीति भरद्वाजः । अध्वर्युर्वारुणाय मेषाय यवान्निरुप्येति वैखानसः । कायस्तु व्रीहीणामेव । निरुप्य निर्वपतीति पृथगारम्भसामर्थ्यात् । नानाबीजधर्मेणाध्वर्युः ।

मेषप्रतिकृत्योर्यवनियमादन्येषां व्रीहिनियमो मा भूदिति दर्शयति—

सर्वे वा यवा भवन्ति ।

व्रीहिनियमोऽन्येषां नास्ति यथाप्राप्तविकल्प एवेत्यर्थः ।

प्रोक्षण्युद्रेकेण यवान्संयुत्यावहन्ति ।

तेषां शुष्काणामवहननं न भवतीति यस्मिन्कस्मिंश्चिदुदके प्राप्ते प्रोक्षणीशेषेणेति नियमः ।

ऐन्द्राग्नपर्यन्तेषूपहितेषु प्रतिप्रस्थाता दक्षिणार्धे गार्हपत्यस्यैकादश द्वादश वा कपालान्युपदधाति ।

दक्षिणार्धे दक्षिणभाग ऐन्द्राग्नधर्मेण ।

अष्टौ मेषस्योपधायाध्वर्युः कायस्योपदधाति ।

दक्षिणार्धनिवृत्तय उपधायोपदधातीत्युक्तम् ।

प्रातर्दोहस्याऽऽवृता प्रातर्दोहौ दोहयत आमिक्षे कुरुतो यथा पुरस्तात् ।

अतिदेशप्राप्तेऽनेकानि वचनानि प्रापकाणि सूत्रान्तरे सद्यस्कालाऽऽमिक्षा लौकिकेन दध्नेत्याद्युक्तनिरासार्थानि । यथा पुरस्ताद्वैश्वदेव्यामिक्षावत् ।

ऐन्द्राग्नपर्यन्तेष्वधिश्रितेषु मेषप्रतिकृती कुरुतः ।

मेषीसदृशाकृतिं निरुप्तानां यवानां संयुतानां पिष्टानां प्रतिप्रस्थाताऽध्वर्युस्तथैव मेषप्रतिकृतिम् । एकबीजे त्वत्र विभागः ।

मारुतीं मेषीं प्रतिप्रस्थाता करोत्यध्वर्युर्वारुणं मेषम्
स्त्रीव्यञ्जनानि स्त्रियाः करोति पुंव्यञ्जनानि पुंसः ।

एते सूत्रे पूर्वव्याख्यानार्थे । स्त्रीव्यञ्जनानि योनिस्तनाः । पुंव्यञ्जनानि शिश्नवृषणकूर्चाः ।

**एकादशसु द्वादशसु वा कपालेषु प्रतिमेस्थाला मेषीमधिश्र-**
**यत्यष्टसु मेषमभिश्रित्याध्वर्युः कायमेककपालमधिश्रयति ।**

विविच्य विविच्य विधानं तु केचित्कपालोपधानानन्तरं दोहमात्रमाहुरामिक्षाकरणमधिश्रयणानन्तरं केचिदधिश्रयणानन्तरमेव दोहामिक्षा इत्याद्यनेकक्रमदर्शनव्यावृत्यर्थम् ।

**कुम्भीपाक्यौ वा मेषौ भवतः ।**

कुम्भ्योः पाक्यौ पचनीयौ मेषी मेषश्च भवतः । अत्र कपालानां स्थाने कुम्भ्योर्विधानं मा भूदिति कपालोपधानसमये नोक्तं कुम्भ्यौ वोपधत्त इति स्थाल्यां कपालधर्मा इत्युक्तं तदपि मा भूदिति कुम्भीपाक्यावित्युक्तमिति भाति । तत्रावश्यं भवितव्यं धर्मैः प्रदेयद्रव्यत्वेन निर्वापादेः कृतत्वादतोऽन्यस्मिन्द्रव्येण तेनार्थेन संयुज्यमाने धर्मादेश इत्युक्तत्वात् । यथा चरोः प्रसिद्धा स्थाली प्राप्ता तथाऽत्र श्रुत्या कुम्भी प्राप्तेति दर्शयितुमेव श्रुतिरेव दर्शिता । तथा पिष्टपुरस्ताणास्तमाः प्रणीताः प्रकृताः प्रयोजिता अत्र पाकार्थमपि पुनः प्राप्नुवन्तीत्यन्यथाभिरद्भिः श्रपणं चरुवदेवोपधानादिना कर्तव्यं भुनौ कपालैः सह विकल्पानभिधानात्पाकमात्रविधानेन तद्धर्मा उन्नेया इतिप्रदर्शनार्थमेवमुक्तम् ।

**अन्येषां लौकिकानामामपेषाणा-**
**मीषदुपतप्तानां यवानां करम्भ-**
**पात्राणि कुरुतो यजमानः पत्नी च ।**

शमीकरीराणि करम्भस्तदाऽऽधारभूतानि पात्राणि तानि यवानामेवाऽऽस्तम्बभारद्वाजोक्तेः । यवांश्च तूष्णींकृत्य पिष्ट्वा पश्चात्किंचिदुपतप्तानि दक्षिणाग्नौ तथा वाजसनेयिब्राह्मणं तेषां पात्राणि दंपती कुरुतः । लौकिकग्रहणेन सिद्धान्येव ग्राह्याणि ।

**यावन्तो यजमानस्य प्रेष्यामात्याः**
**सस्त्रीकास्तत एकाधिकानि ।**

प्रेष्याश्च तेऽमात्याश्च भृत्यपुत्रपौत्रशिष्यादयः सस्त्रीकाः पुत्रपौत्रा इति भारद्वाजः । तत्संख्यातोऽधिकमेकं येषां तावन्तीत्यर्थः । सर्वथा तदभावे त्रीण्येवोक्तानि कात्यायनेन ।

**उत्तरं परिग्राहं परिगृह्य संप्रैषेण प्रतिपद्यत**
**आज्येन दध्ना चोदेहीति संप्रैषस्यान्तश्च संनमतः ।**

नन यानि साधारणानीत्यनेनाध्वर्युरेव संप्रेष्यतीति वाच्यम् । आत्मैवात्र संस्कार्य इत्युक्तमतो भवति प्रत्येकम् । स्पष्टमन्यत् ।

---

१ ख. ग. ठ. ढ. ण. °म्भ्यौ चोप° । २ ख. ग. ठ. ड. ण. °ना क° । ३ ड. °दुपतप्ता° ।

आषाढ्यां यथा फाल्गुन्यामेवं पृषदाज्यं गृहीतः ।

गतार्थम् ।

श्रावण्यां तु सकृदाज्यस्योपस्तीर्य द्वि-
र्दधि गृहीत्वा सकृदाज्येनाभिघारयतः ।

स्पष्टम् ।

उद्वासनप्रभृतीनि कर्माणि प्रतिपद्यते ।

गतार्थम् ।

ऐन्द्राग्नपर्यन्तेष्वलंकृतेष्वनैडकीभिरूर्णा-
भिर्मेषप्रतिकृती लोमशौ कुरुतस्तास्ता-
स्वविद्यमानासु कुशोर्णानि श्लेषयतः ।

तथा वाजसनेयिब्राह्मणेऽभिहितं च । एककपालं पूरयति ।

मारुत्यां मेषमवदधाति वारुण्यां मेषीम् ॥ ५ ॥

आमिक्षयोर्मध्येऽवधत्तो व्यत्ययेन ।

उत्तरस्यां वेद्यामन्यानि हवींषि सादयति
दक्षिणायां मारुतीं करम्भपात्राणि च ।

सर्वाण्याज्यपृषदाज्यानि दक्षिणविहारोपयुक्तान्यपि हवींष्युत्तरवेद्यामेवाऽऽसादय-
त्यध्वर्युरेवैकवचनादन्यस्यामेकां मारुतीमामिक्षामेव करम्भपात्राणि च प्रतिप्रस्थाता
वाजिनमुत्कर उभावासाद्य ।

आसाद्य मेषप्रतिकृती विपरिहरतो मारु-
त्यां मेषीमवदधाति वारुण्यां मेषम् ।

क्रमप्राप्तेऽपि पुनरासाद्येति वचनं य आसादयति स एव ततो गृहीत्वाऽन्यस्या-
मामिक्षायां व्यत्ययेनावदधाति । स्पष्टमन्यत् ।

तयोः परःशतानि परःसहस्राणि वा शमीपर्ण-
करीराण्युपवपतः करम्भपात्रेषु चाऽऽवपति ।

मेषयोः पुरस्ताद्भक्षार्थमुभौ तान्येव ।

निर्मन्थ्यस्याऽऽवृता निर्मन्थ्येन प्रचरतः ।

पशुबन्धोक्तेन निर्मन्थस्य विधिना निर्मन्थ्येनेति चैकवचनादुभयोरेक एव निर्मन्थ्यः ।
शाखान्तरवचनात्तु साधारणत्वादिति भावः । तदुक्तं कात्यायनेन मन्थनमात्रमध्वर्यो-
रेवेति दर्शितं पश्चाद्द्विभज्योभौ प्रचरतो द्विवचनात्तस्मेऽध्वर्योरेव प्रचार इति भारद्वा-
जेनोक्तं प्रत्युत निर्मन्थ्यौ द्वावित्यापस्तम्बोक्तं च ।

वेदं निधाय सामिधेनीभ्यः संप्रेष्यति ।

अध्वर्युरेवानूहेनेत्युक्तं साधारणत्वात्[1][2][3]प्रैरं चाऽऽग्नीध्रसंप्रैषश्चेत्युक्तम् ।

संमृष्ट उत्तरेऽग्नावसंमृष्टे दक्षिणे प्रतिप्रस्थाता पत्नीं पृच्छति पत्नि कति ते जारा इति सा यावतः प्रब्रूयात्तान्वरुणो गृह्णात्विति निर्दिशति यज्जारꣳ सन्तं न प्रब्रूयात्प्रियं ज्ञातिꣳ रुन्ध्यात् ।

पत्नीसमीपं गत्वा प्रतिप्रस्थाता तां पृच्छति कति ते जारा इति भर्तृव्यतिरिक्तास्तस्यां मैथुनेन संसृष्टास्तान्वरुणो गृह्णात्वित्यध्वर्युरेवाग्रे पुनः प्रतिप्रस्थातृग्रहणात् । जारैकत्वद्वित्वयोस्तं ताविति वक्तुमुक्तं सा यावत इति । सति जारे यदि न कथयेत्तर्हि तस्या प्रियं ज्ञातिं गोत्रजं रुन्ध्याद्व्याध्यादिना वरुणोऽवरोधं कुर्यात् । अविद्यमाने न सन्ति जारा इति प्रब्रूयात्तदा तानिति नास्ति । जारकथने तु तेनैव प्रायश्चित्तमिति केचित् । कर्मान्ते कार्यमित्यन्ये ।

प्रघास्यान्हवामह इति प्रतिप्रस्थाता पत्नीमुदानयति ।

स्पष्टम् । सजोषस इत्यन्तः ।

ऐषीके शूर्पे करम्भपात्राण्युप्तानि पत्नी शीर्षन्नधि निधायान्तरा वेदी गत्वाऽग्रेण दक्षिणमग्निं प्रत्यञ्चाववतिष्ठेते यजमानः पत्नी च ।

उत्तरेण विहारमग्रेणोत्तराहवनीयमन्तरेण च वेदी गत्वा पूर्वमेवासाऽऽदितानि करम्भपात्राण्यैषीके शूर्प उप्तानि तानि सह शूर्पेण शीर्ष्णि स्थापयित्वाऽन्तरा वेदी दक्षिणाहवनीयस्याग्रेण गत्वा दंपती तत्र प्रत्यङ्मुखाववतिष्ठेते ।

मो षू ण इति यजमानः पुरोनुवाक्यामन्वाह यद्ग्राम इत्युभौ संनिगद्य शूर्पेण दक्षिणेऽग्नौ जुहुतः ।

तिष्ठन्नेव पुरोनुवाक्याधर्मेण मो षू ण इति । गीरित्यन्तः । पुरोनुवाक्यामन्वाह तत उभौ दंपती यद्ग्राम इत्यादि स्वाहान्तमुक्त्वाऽन्तेनोभावपि जुहुतः । प्रघास्या मरुतो देवता । स्पष्टमन्यत् ।

अध्वर्युर्वा जुहोत्यन्वारभेते इतरौ ।

मन्त्रावपि पठित्वाऽध्वर्युरेव जुहोति दंपती अन्वारभेते ।

अक्रन्कर्म कर्मकृत इति विपरायन्तौ जपतः ।

सुदानव इत्यन्तं व्यत्ययेन स्वं लोकं यथेतं प्रतिपठन्तौ गच्छतः ।

---

१ ण. °हप्रमरं । २ च. ट. °षरं चाऽऽग्नी° । ३ ठ. ड. °रं त्वाग्नी° । ४ ख. °त्वा तेनो° ।

संमार्ष्टि दक्षिणमग्निम् ।

पूर्वमसंमृष्टमिदानीं संमाष्टर्याग्नीध्रः ।

ऐन्द्राग्नपर्यन्तैः प्रचरिते[१] ।

आघारादितश्रमाज्यभागान्तमुभयोराग्नेयादिकमध्वर्योस्तस्मिन्नैन्द्राग्नपुरोडाशप्रचारान्ते सति, तावत्स्रुक्पाणिरास्ते प्रतिप्रस्थातेति कात्यायनः ।

प्रतिप्रस्थाता मारुत्याः पूर्वेण सहावदानेन कृत्स्नां मेषीमवद्यत्युत्तरेण शमीपर्णकरीराणि ।

पूर्वमुक्तान्येवोत्तरावदानेन सहावदाय प्रचरतीत्यर्थः । स्पष्टमन्यत् ।

अध्वर्युर्वारुण्याः पूर्वेण सहावदानेन कृत्स्नं मेषमवद्यत्युत्तरेण शमीपर्णकरीराणि ।

अवदाय प्रचरतीत्यर्थः । स्पष्टमन्यत् । अत्राऽऽमिक्षयोः सांनाय्यविकारत्वाद्याज्यमानं सांनाय्यवदेव । भाष्यकृता तु वैश्वदेव्यामिक्षाविकारत्वान्मरुतामहं देवयज्यया प्राणैः सायुज्यं गमेयमित्येवं वारुण्यामपीत्युक्तं तद्बहुभाष्यविरोधादुपेक्ष्यम् । नहि दर्शादेवानुमन्त्रणप्राप्तौ विकृतेरनुमन्त्रणं ग्रहीतुं शक्यम् । न च तत्स्थो धर्म आमिक्षाया वैश्वदेव्यास्तत्प्रकरणेऽनधीतत्वाद्विश्वेषां देवानामिति मन्त्रस्य । स हि मन्त्रोऽनारभ्याधीतो यत्र विश्वे देवा देवतास्तत्राऽऽमिक्षायां चरावाज्यहविषि वा प्राप्नुयाल्लिङ्गेन । ततस्तु वैश्वदेवचरौ यदुक्तमग्नीषोमानुमन्त्रणं तदप्ययुक्तम् । आनुमानिकाद्वाक्याल्लिङ्गस्य बलीयस्त्वात् । एवं च वैश्वदेवहविर्मात्रस्य मन्त्रो न वैश्वदेव्यामिक्षाया एव स्वधर्म इति नाऽऽमिक्षान्तरेषु तस्यातिदेशः । किंच भरद्वाजेनोक्तमाग्रयणेष्टावेव वैश्वदेवचरौ विश्वेषां दे० प्राणैरित्यादि, तस्मिन्नेककपाले द्यावापृथिव्योरित्यादि । ततः पुनराहाथो एवात ऊर्ध्वं वैश्वदेव्यपृथिव्यानामनुमन्त्रयेदिति । तथाचैते देवताप्रयुक्ता एव मन्त्रा नान्यदेवताकहविरन्तरं प्राप्नुवन्ति । तस्मात्कस्याप्यनुमन्त्रणं न द्यावापृथिव्यादीत्यपि सिद्धम् । तच्च कस्याहं दे० न्नाद इदमेव । कात्यायनेऽप्येवमेव सूत्रे ।

प्रकृतमनुसरामि—

कायानुब्रूहि कं यजेति ॥ ६ ॥ एककपाले संप्रेष्यति ।

शाखान्तरीया श्रुतिरियं प्रायेण देवतानिर्णय उदाहृताऽन्यथाऽपि निर्वाप एव ब्रूयात् । सर्वनामाऽपि सर्वशब्दो देवतावाच्यस्ति कस्मै स्वाहेत्यादिदर्शनात् । तदर्थं काय जुष्टमित्येव ज्ञेयमिति दर्शितम् । कस्याहं दे०न्नाद इत्येतदनुमन्त्रणम् ।

---

१ ख. ग. ब. ट. ठ. ड. ण. प्रचरितैः ।

नभश्च नभस्यश्चेति चतुर्भिर्मासनामभिरेककपालम-
भिजुहोति नभसे स्वाहा नभस्याय स्वाहेति च।

मासनामभिरित्यनेन सर्वत्राऽऽन्तरालिकपर्वणां मासा एव देवतात्वेन गृह्यन्ते। तेन काम्यं वैश्वदेवमात्रं पर्व यत्र तत्र च न पूर्वोक्ता मासहोमा एवमत्रैककपालेऽपि नेति ज्ञेयम्।

परिवत्सरीणा५ स्वस्तिमाशास्त इति
सूक्तवाकस्याऽऽशीःषु होताऽनुवर्तयति।

कृतव्याख्यानम्।

प्रहृतेषु परिधिषु स५स्रावेणाभिहुत्य वाजिनेन प्रचरतः।

गतार्थम्।

यथा पुरस्तात्।

वाजिनस्य कर्मनामधेयत्वाभावाद्यथेत्युक्तम्। अयमाशयः—एतद्ब्राह्मणान्येव पञ्च हवी५षीति सार्थवादसाङ्गातिदेश इति न्यायमतमिति।

यन्मे रेतः प्रसिच्यते यन्म आजायते पुनः। यद्वा मे प्रतितिष्ठति तेन मा वाजिनं कुरु तेन सुप्रजसं कुरु तस्य ते वाजिन्वाजिभिर्भक्षं कृतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति दक्षिणे विहारे भक्षयन्ति।

सर्वेऽपि वाजिनाश्रावणप्रैषकर्तृत्वादध्वर्योरपि भक्षः।

आ मा विशन्त्विन्दव आगल्गा धमनीनाम्।
रसेन मे रसं पृण तस्य ते वाजिन्वाजिभिर्भक्षं
कृतस्य मधुमत उपहूतस्योपहूतो भक्षयामीत्युत्तरे।

भक्षयन्तीत्यनुवर्तते। नात्र प्रतिप्रस्थाताऽनुपयोगात्।

स५स्थाप्य वारुण्या निष्कासेन तुषैश्चावभृथमव-
यन्ति तस्य सौमिकेनावभृथेन कल्पो व्याख्यातः।

निष्कासः कुम्भीगतः। अत एवोक्तं भरद्वाजेन स्थालीगतं निष्कासं प्रज्ञातं निदधातीति। प्रायणीयस्य निष्कास उदयनीयमिति सूत्रकारोऽपि तथैवातो नावदानशेषो निष्कास इति। एष वै दर्शपूर्णमासयोरवभृथ इत्यादाववभृथशब्दो गौण एवातो मुख्यः सौमिकावभृथ एव तस्यैव स्वधर्मत्वात्तेन व्याख्यातोऽयमवभृथः।

न साम गीयते।

प्रतिषेधादित्यर्थः।

१ घ. ङ. ज. झ. ञ. ढ. °शास्ते दिव्यं धामाऽऽशास्त। २ ग. ठ. ढ. ण. °व्याभिक्षानि°।

तूष्णीमेव परेत्य ।

उदकमिति शेषः ।

वारुणस्य धर्मेण निष्कासं प्रतिपाद्य ।

यत्र वारुण एककपालो विहितस्तस्य स्थाने निष्कासेन तुषैश्चावभृथमवयन्तीति श्रुतेर्वारुणस्य पुरोडाशस्य धर्मेणेत्युक्तमन्यस्मिन्द्रव्ये तेनार्थेनेत्युक्तत्वात् । ननु निष्कासः शेषः स कथं वरुणाय हविष्ट्वेन देय इत्याशङ्क्योक्तं प्रतिपाद्येति । प्रतिपत्तिरपि वचनात्स्विष्टकृद्यागोऽपि भवतीत्याशयः । तथा च यावदुक्तमवभृथे प्रयाजादि तत्स-र्वमपि भवति ।

तुषानृजीषधर्मेण प्रतिपादयति ।

तुषैश्चावभृथमित्युक्तत्वात्तुषानित्युक्तम् । तेन यत्ते ग्राव्णा चिच्छिदुः सोमेति मन्त्रेषु यद्वो मुसलेन चिच्छिदुर्व्रीहयो यथा राजानः । प्रियाण्यङ्गानि०मुसलेन परूꣳषीत्येवमादिकमूहनीयम् ।

अवभृथादुदेत्य वाससी यस्मै कामयेते तस्मै दत्तः ।

परिहिते वाससी । स्पष्टम् ।

श्वो भूते पौर्णमासेनेष्ट्वोदवसायानुदवसाय
वा प्रसूता देवेन सवित्रेत्युन्दति ।

गतार्थम् ।

यद्दूघर्मः पर्यवर्तयदन्तान्पृथिव्या दिवोऽग्निरीशान ओजसा
वरुणो धीतिभिः सहेन्द्रो मरुद्भिः सखिभिः सहाग्निस्ति-
ग्मेन शोचिषेति निवर्तनं वापनं यथा पुरस्तात् ॥ ७ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे पञ्चमप्रश्ने द्वितीयः पटलः ॥ २ ॥

---

अत्रापि संज्ञाया अभावाद्यथेत्युक्तम् ।

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैजयन्त्यां
पञ्चमे वरुणप्रघासप्रश्ने द्वितीयः पटलः ॥ २ ॥

---

अथ पञ्चमप्रश्ने तृतीयः पटलः ।

---

ततश्चतुर्षु मासेषु कार्तिक्यां मार्गशीर्ष्यां वा त्र्यहꣳ साकमेधैर्यजते ।

साकमेधा मेधा यज्ञास्तन्त्रेण क्रियमाणाः साकं सहेत्युक्ताः । समासे साकमित्यस्य

---

१ घ. ङ. ज. झ म. ढ. °षकल्पेन प्र°। २ ग. ङ. च. ज. ञ. ण. ठ. ड. ढ. 'मास्येद्धवो°। च. ट. 'मासेध्द्धवो°। ३ ख. ग. च. ठ. ठ. ड. ण. °सूतेत्यादि ग°। ४ ज. 'न्हन्ति प°।

मन्त्रोपदेशाच्छन्दसः । पञ्चम्यां पौर्णमास्यां क्रियमाणानां महाहविष एव चतुर्षु मासेष्वतीतेषु क्रियमाणत्वात्तस्यैवाङ्गेष्टिभिः सह द्व्यहकालता । साकमेधाः साक५ सूर्येणेत्यादिना विहिताः । अतः साकमेधप्रधानान्यङ्गैः सह द्व्यहसाध्यानीत्यर्थः । ततश्चतुर्दश्यां सूर्योदयात्प्रागुपक्रमः ।

> अग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति साक५ सूर्येणोद्यता साक५ रश्मिभिः प्रचरन्तीत्येकेषां मरुद्भ्यः सांतपनेभ्यो मध्यंदिने चरुं न बर्हिरनुप्रहरतीत्येकेषामपराह्णे गृहमेधीयाय वत्सानपाकरोति यावन्तो यजमानस्यायजुष्केण वत्सानपाकरोतीत्येकेषाम् ।

उद्यतोदयमागच्छता निर्वापोऽथवा प्रधानप्रचारः । उद्यद्भिः प्रथमरश्मिभिरिति यावत् । यावन्तो यजमानस्य वत्सास्तान्सर्वानपि पुंस्त्वमविवक्षितमेकशेषात्सिद्धमिष्टेः । अपराह्णे स्पष्टं गृहमेधीयकर्मणे चरवे वा गृहमेधिनो देवता यस्य तत्तथा । यद्यपि विशिष्टा देवता तथाऽपि विशेष्येणैव नामता वैमृधवत् । अतो न देवतायै पयसे वत्सापाकरणं किंतु चरुश्रपणार्थं यत्र क्रियते तत्र लौकिकवत्सापाकरणमित्युक्तम् । अयजुष्केण वत्सानपाकरोतीत्येकेषाम् । इषे त्वेत्यादि यजुर्यत्र न क्रियते कर्मणि तादृशेन तूष्णीकेन कर्मणा वत्सापाकरणमात्रं दृष्टार्थमेव कर्तव्यम् । तत्र न शाखा नित्या पूर्ववत्किंतु सांनाय्ययजुर्भिर्विना तूष्णीं शाखामाहृत्य तूष्णीमपाकरोति । एतस्माज्ज्ञापकात्केचिदाहुः पक्षे मन्त्रैरिति तच्च दर्विहोमत्वाद्यावदुक्तमेव नहि लिङ्गनातिदेशानुमानं दर्विहोमेऽस्ति ।

> सायं५ हुतेऽग्निहोत्रे गृहमेधीयस्य तन्त्रं प्रक्रमयति ।

स्पष्टम् ।

> तत्र यावत्क्रियते तद्व्याख्यास्यामः ।

तस्य दर्विहोमत्वस्य न्यायशास्त्रे निर्णीतत्वान्नातिदेशेनाङ्गप्राप्तिरतोऽन्यशाखोपदेशतो यानि प्राप्तानि तानि व्याख्यायन्ते । उक्तं चैतदर्थं दार्शपौर्णमासिकानि प्रधानान्युत्तरस्यां ततो चोद्यन्तेऽन्यत्र सोमाद्धर्माद्दर्विहोमेभ्य इति, तानि स्वधर्माणीति च । तस्मान्नातिदेशोऽपि तु यावदुक्तस्वधर्माण्येव ग्राह्याणि ।

> अग्नीनन्वाधाय वेदं कृत्वाऽग्नीन्परिस्तीर्य पाणी प्रक्षाल्योलपराजी५ स्तीर्त्वा यथार्थं पात्राणि प्रयुनक्ति ।

औषधपात्राणि ।

पवित्रेण दोहपक्षे चरुश्रपणकुम्भीमपि दोहपात्रं वा कपालस्थान आह—

कुम्भीं तिस्रश्च पात्रीः ।

पाकार्थं कुम्भीमुद्धरणपात्रीः । अत्रेध्माबर्हिःपरिसंख्यया प्रणीतानां च न प्रणीताः प्रणयतीति भरद्वाजः । ब्राह्मं वरणं च । अत्र स्तीर्त्वेत्यन्तमुपदेशेनान्यत्सामर्थ्येनेति ज्ञेयम् ।

निर्वपणकाले मरुद्भ्यो गृहमेधिभ्यः प्रभू-
तान्व्रीहीन्निर्वपति यावत्पयो मन्यते ।

पयोनुसारेण व्रीहीणां निर्वापः । चतुरो मुष्टीन्निरुप्य प्रभूतानन्वावपतीति भरद्वाजा- पस्तम्बौ । चतुर्थ्यन्तदेवतापदेन मन्त्रोऽप्यनुज्ञातो देवस्य त्वेति ।

पवित्रेण गां दोहयति ।

वत्सापाकरणार्थमानीतेन शाखापवित्रेणेतरधर्मनिवृत्तिश्च परिसंख्यानात् । तथाचैत- दुक्त्वाऽऽपस्तम्बः पक्षान्तरमाह सांनाय्यवदिति । स पक्षोऽस्मादस्ति । वत्सापाकरण- ममन्त्रममन्त्रो दोहः । पवित्रेण कुम्भ्यामन्तर्गार्हपत्येऽधिश्रितायामित्यर्थः ।

न तण्डुलानुत्पुनाति यजुरुत्पूतेनैव पयसा श्रपयतीत्येकेषाम् ।

चरुधर्मत्वेन प्राप्तत्वात्प्रतिषेधो नोत्पुनातीति । तूष्णीं शाखाहरणपक्षे तु पवित्रेणे- त्ययं विधिरेकेषां शाखिनां यदा न शाखाहरणं तदा यजुरुत्पूतेनेति विधिरेकेषाम् । एवकारः प्रणीतानिवृत्त्यर्थः । पवित्रेण दोहनिवृत्त्यर्थत्वेऽत्र पयः श्रपणार्थं श्रूयते तथाऽपि प्रतिषेधान्न पयः प्रणयतीत्यर्थः । यजुषा देवो वः सवितेत्यनेनोत्पूतेन । अत्र हि श्रूयते सर्वासां दुग्धे सायं चरुमिति । तत्र दुग्धस्य श्रपणार्थत्वेन श्रूयमाणत्वात्प्र- प्रदेयद्रव्यतेति लौकिकं वत्सापाकरणं लौकिको दोहः । तत्र प्रणीताप्रतिषेधाय यजुरु- त्पूतेनेति पक्षो न्यायसिद्धः । शाखान्तरे तु शाखया वत्सानपाकृत्य पवित्रेण संदोह्य तं चरुं श्रपयतीति । तथा तमेव प्रकृत्य श्रूयते तस्य द्वय्यावृदिति द्विःप्रकारा क्रिया सांनाय्यवदौषधवदिति श्रुतेरर्थः । तत्रास्यापूर्वकर्मत्वाद्यावदुक्तमेव ग्राह्यम् । औषध- धर्मास्तु युक्ता एव दर्शिताः । सांनाय्यधर्मास्तु वचनात्पक्षे यावदुक्ता एव ग्राह्या नतु तेषां मन्त्रा अपि । मन्त्रा ह्यतिदेशान्न भवन्ति । दोहविकारत्वाभावात् । तस्माद्दोहोऽप्य- मन्त्र एव । यदपि श्रूयते यजुषा वत्सानपाकरोतीति तदपि प्राप्तये नतु प्राप्तनिषेधेन तस्य यजुषोऽतिदेशोपदेशाभ्यामप्राप्ते, नचात्र वाचनिकोऽतिदेशोऽस्ति । अतिदेशवत्तं सामानाधिकरण्येनेति श्रुतिः सायमग्निहोत्रमिति संज्ञा तथैतद्ब्राह्मणानीति वाक्यम् । नचैतन्नित्यवत्कर्तव्यमिति विधिरस्तु किंतु क्रियानौषधधर्मः क्रियाऽश्रुतधर्मोऽत्र दृश्यत

१ ख. ग. च. ट. ठ. ड. ण. °म् । म° । २ च. ट °म् । तुषध° । ३ च. ट. °क्षेण प° ४ च. ट. °म्यम् । ५ च ट. तु प्राप्तः किं° ।

इत्यर्थः। सादृश्येन वत्सापाकरणादिना तु दर्विहोमत्वात्स्वधर्मस्यातिदेशो निराकृतः स्तेनैव। अत्रायं प्रयोगक्रमः—यजमान वाचं यच्छेत्युक्त्वा वाग्यतः पात्राणीत्यादि। ततो यथार्थनिर्वापादि त्रिष्फलीकृत्य प्रक्षालनं निनीय ध्रुवाऽसीति स्थालीमुपधायाधिश्रयण-काले तु न तण्डुलानुत्पुनाति स्थाल्यां शाखापवित्रवत्यां तूष्णीं दोहयित्वाऽनुत्पूतानेव तण्डुलानोप्य श्रपयति। श्रपणपक्षे तु न शाखाहरणं न शाखापवित्रकरणमुपधाय स्थालीं लौकिकेन कर्मणा गां दुग्ध्वा तत्पयो दर्भपवित्राभ्यां यजुषोत्पूय तत्स्थाल्यां निक्षिप्यानुत्पूतानेव तण्डुलानोप्य श्रपयति। आपस्तम्बस्यैव समन्त्रदोहपक्षस्तृतीय उक्तो नान्यैर्भरद्वाजादिसूत्रकारैर्नाप्यस्मदाचार्येण प्रथमं शाखाहरणादिपक्ष एव सर्वं समन्त्रं केचिदाहुस्तच्चिन्त्यम्।

दक्षिणाग्नौ प्रतिवेशमोदनं पचति।

पत्न्ये स्त्रीकुमारेभ्यश्च प्रतिवेशमोदनं पचतीत्युक्तं वैखानसेन प्रतिवेशमोदनं दक्षि-णाग्नौ लौकिकेन कर्मणा पचति।

स्फ्यमादाय स्तीर्णाया वेदेर्लोमभ्योऽधिस्तम्बयजुर्हरति।

सांतपनेष्टौ न बर्हिरनुप्रहरतीत्युक्तमतस्तस्मिन्स्तीर्ण एव बर्हिषि लोमभ्योऽवयवे-भ्योऽधि उपरि स्तम्बयजुर्हरति।

उत्तरं परिग्राहं परिगृह्य संप्रैषेण प्रतिपद्यते।

स्तम्बयजुर्हरणेन वेदिकरणमुक्तम्। स्पष्टं, गतम्।

यदन्यदिध्माबर्हिषः पत्नीसंनहनाच्च तत्संप्रेष्यति।

न पत्नीꣳ संनह्यति न सामिधेनीरन्वाहेति वचनाद्बर्हिषः स्तीर्णत्वादिध्मस्याभावा-दित्यर्थः।

यत्प्रागाज्यग्रहणात्तत्कृत्वा ध्रुवायामेव गृह्णाति।

न प्रयाजा इज्यन्ते नानूयाजा नाऽऽघाराविति वचनाद्ध्रुवायामेवेत्युक्तम्।

प्रोक्षणीरभिमन्त्र्य ब्रह्माणमामन्त्र्य वेदिं
प्रोक्ष्य प्रोक्षणावशेषं निनीय पवित्रे
अपिसृज्य ध्रुवाꣳ स्रुवं च सादयति।

दर्विहोमत्वादपूर्वकर्मान्तरविधानार्थमेवमुक्तं वेद्यामेवाऽऽस्तीर्णायामेव प्रोक्षण्यव-शेषमित्यादि।

एषाऽसददिति मन्त्रꣳ संनमति।

एता असदन्निति मन्त्रम्।

१ ख. ग. घ. च. ट. गा।

विष्णुरसि वैष्णवं धाम प्राजापत्यमित्याज्यमभिमन्त्रयते ।

विष्णूनित्यस्य संनामः ।

यद्यानीकवतस्य बर्हिस्तत्सांतपनीयस्य
तद्गृहमेधीयस्य तत्स्तीर्णमेवेत्येकेषाम् ।

सांतपनेऽपि पूर्वमेव बर्हिरानीकवतस्यापि न बर्हिरनुप्रहरेदित्यर्थः । प्रस्तरप्रहरणं तूभयपक्षेऽप्यस्ति ।

उद्वासनप्रभृतीनि कर्माणि प्रतिपद्यते ।

स्पष्टम् ।

शृतस्य हविषः शरमुद्धृत्य प्रज्ञातं निधाय ।

गृहमेधीयस्योपरि स्थितस्य हविषः सफेनं मण्डं शरम् । गतम् ।

पात्रीषूपस्तीर्य त्रीनोदनानुद्धरति ।

आसादितासु पात्रीषूपस्तीर्य तास्वेव त्रिसंख्याकान्कुम्भीत उद्धरति ।

निष्कासितां कुम्भीं निदधाति ।

अन्तर्बहुतरौदनशेषलिप्तां स्थापयति ।

अनिमृष्टं दर्व्युदायुवनमवधाय ।

दर्वी ययौदन उद्भ्रियते सा प्रसिद्धा । तस्या योऽग्रिमभागो विस्तीर्णः स उदा॰ युवनं पच्यमान ओदनो येन दर्वीप्रदेशेनाधस्ताद्भिद्यमान ऊर्ध्वमा समन्ताच्च यूयते मिश्रः क्रियते तद्दर्व्युदायुवनं तदप्यनिमृष्टं बहुतरलेपयुक्तमनिष्कासितलेपं निधाय तस्यां कुम्भ्यामेव ।

अभिघार्योत्पूयालंकृत्यौदनानासादयति ।

वेद्याम् ।

ओढासु देवतास्वग्निमुपवाज्याऽऽज्यभागाभ्यां प्रचर्य ।

सामिधेनीनां प्रवराघारप्रयाजानां निवृत्तिः । देवतावाहनानन्तरमग्नीदग्नीं त्रिः संमृड्ढीत्युक्त्वोपवाज्याऽऽज्यभागाभ्यामेव प्रचरेत् ।

जुहामुपस्तीर्य सर्वेभ्य ओदनेभ्यः समव॰
दायाभिघार्य मरुद्भ्यो गृहमेधिभ्योऽनु॰
ब्रूहि मरुतो गृहमेधिनो यजेति संप्रेष्यति ।

सर्वेभ्यस्त्रिभ्य ओदनेभ्यः सकृत्सकृदेवावदायाभिघार्य वषट्कृते जुहोतीति शेषः ।

---

१ ख. ङ. च. छ. ज. °वतस्य । २ ख. ग. घ. ट. ठ. ड. ण. °र्वेभ्यः ।

[illegible]स्माश्चिमिश्रा च क्रियन्ते माशिताया ममा-
त्येभ्य ओदनानुपहरन्ति ये हविर्भोजना भवन्ति ।

[illegible]नाममात्येभ्यो ददाति ये हविर्भोजना हविर्भोजनार्हा अनुपनीतस्त्री-
व्यतिरिक्ता इत्यर्थः ।

प्रतिवेशपक्वस्य पत्न्यश्नाति ।

पत्नीकुमारा इति वैखानसः ।

इडान्तो गृहमेधीयः संतिष्ठते ।

पूर्णादर्विहोमस्तु नैतस्याङ्गमपि तु कौण्डिनेष्टेः । कौण्डिनस्य तन्त्रं प्रक्रमयति पुरा
प्रातरग्निहोत्रात्पूर्णदर्व्येण प्रचरतीति भरद्वाजोक्तेनैतत्तन्त्र इति संतिष्ठत इत्युक्तम् ।

आञ्जतेऽभ्यञ्जतेऽनु वत्सान्वासयन्ति ।

अञ्जनं चक्षुषोः सर्वेषाममात्यानां दंपत्योर्ऋत्विजां च । ततोऽभ्यञ्जनं तनुच्यते
[illegible]गोभिर्मातृभिर्वत्सानां संसृष्टतया वास एतानि कर्तव्यानि ।

प्रतिवेशाश्च पचन्ते ।

अन्यानपि ।

गाश्च घ्नते ।

व्यञ्जनाय पचन्ति ।

सुहिता एताꣳ रात्रिं वसन्ति प्रतीता अनवर्तिमुखिनः ।

सुहितास्तृप्ताः । प्रतीताः प्रणयिनः । न विद्यतेऽवर्तिः खिन्नता यत्र तन्मुखमन-
वर्तिमुखम् । तदस्ति येषां ते तथा । अखिन्नमुखा हृष्टा इति यावत् ।

पराचीनरात्रेऽभिवान्यवत्साया अग्निहोत्र्याश्च वत्सौ बध्नाति ।

अभिवान्यो वत्सो यस्या या मृतवत्साऽन्येन वत्सेनाधःप्रस्नुता सा तथा तयोर्व-
त्सयोर्बन्धनं इष्टार्थं वत्ससङ्गे मन्थार्थमग्निहोत्रार्थं च दोहौ न स्तः । पराचीनोऽपरो
भागो रात्र्याः पराचीनरात्रम् ।

पुरा प्रातरग्निहोत्रात्पूर्णदर्व्येण प्रचरन्ति ।

पूर्णा दर्वीत्यनेन मन्त्रेण क्रियमाणो होमः पूर्णादर्विहोमः ।

[illegible]पस्तीर्य शरनिष्कासस्य दर्वीं पूर-
यित्वा निमृष्टं दर्व्युदासुवनमवदायाभिघार्य ।

[illegible]स्थालीगतस्य मिश्रस्य तेन दर्वीं पूरयित्वा निमृष्टं निमृज्य
[illegible]दर्व्यामिवावदायाभिघार्य दर्वीम् ।

---

१ [illegible] क. घ. क्रियते । २ ख. ङ. °त्रास्तीर्णेद° । ३ च. ङ. °रूणेद° ।
[illegible] । ५ ग. ठ. क. ण. प्रचरति । ६ ग. ख. ङ. °ङ्काहेन द° ।

इन्द्राय हरीणां स्वस्तिमाशास्ते दिव्यं धामाऽऽशास्त इति सूक्तवाकस्याऽऽशीःषु होताऽनुवर्तयति।

गतार्थम्।

ऐन्द्राग्नतुषैरवभृथमवयन्ति गमनसंयुक्तं तुषप्रतिपादनं च क्रियते॥ १०॥

इति सत्याषाढहिरण्यकेशिसूत्रे पञ्चमप्रश्ने तृतीयः पटलः॥ ३॥

---

अत्रावभृथशब्दो गौणः पूर्ववद्धर्मानभिधानादतः परिसंख्येतरकर्मणामिति दर्शयितुमुक्तं गमनसंयुक्तं यावत्तावदेव कृत्वाऽवभृथं गत्वा तुषांस्तूष्णीमेव प्रतिपादयतीत्यर्थः।

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैजयन्त्यां पञ्चमप्रश्ने साकमेधस्तृतीयः पटलः॥ ३॥

---

अथ पञ्चमप्रश्ने चतुर्थः पटलः।

---

तदानीमेव महापितृयज्ञेन यजते।

पिण्डपितृयज्ञान्महापितृदेवताको यज्ञस्तेन साकमेधैः सहैतस्य त्रैयम्बकस्य च समानप्रधानता। साकमेधान्पितृयज्ञं त्र्यम्बकानिति पृथङ्निर्देशात्।

दक्षिणतःपुरस्ताद्दक्षिणाग्नेर्यजमानमात्रीं चतुरश्रां वेदिं करोति।

दक्षिणाग्नेर्दक्षिणतःपुरस्तादिति विदिक्षाग्नेयकोणाभिमुखां चतुरश्रां न दीर्घां प्राकृतवेदिमानेन।

तस्याः प्रतिदिशꣳ स्रक्तयो भवन्ति।

तस्या वेदेः स्रक्तयः कोणा दिक्षु भवन्ति। तत्रैवमूह्यं दक्षिणाग्निमध्ये शङ्कुं निधाय चतुरश्रं कृत्वा मध्ये शङ्कौ पृष्ठ्यायाः पाशं निधाय तां रज्जुं चतुरश्राग्नेयकोणेन नीत्वा वितत्य ततो दक्षिणाग्न्यायतनश्रमणरेखारज्जुसंयोगे शङ्कुं निहत्य तत्र यजमानमात्र्या रज्ज्वा उभयतःपाशायाः पाशं निधाय द्वितीयपाशं वितत्य पृष्ठ्यां विदिक्शङ्कौ निदधाति सा प्राची। पृष्ठ्यायामेतया चतुरश्रं यजमानमात्रं वितत्य समानस्रक्तां कुर्यात्। सा च विदिक्षु संनता दिक्स्रक्तिः पितृमेधीयवेदिः।

अवान्तरदेशाननुमध्यानि।

विदिक्षु अनुमध्यानि संनतानि मध्यानि मध्यभागाश्चतुरश्राया भवन्ति। विदिक्षु

आग्नेय्याद्या एव कर्माणि तु स्वभावतः सिद्धा एव प्रागादिदिशो भवन्तीति ज्ञेयम्। दक्षिणस्रक्तिं दक्षिणेन ब्रह्मयजमानस्थान उत्करस्तूत्तरस्रक्तिप्राचीनस्रक्तिमध्यदेश एव। तृतीयभागे द्विपदेन पश्चिमस्रक्तिसमीप उत्तरतो होतुः स्थानं तदनुरूपतया यजमान-होतृषदनानि भवन्ति।

**सर्वत्र देवप्रवादमन्त्रं देवपितृवत्संनमति।**

सर्वेषु सर्वग्रहणमापस्तम्बमतव्युदासार्थं तदग्रे वक्ष्यते। देवान्प्रकृष्टतया प्रयोगतया प्रधानकर्मसमवेततयेति यावत्। तथा यो वदति मन्त्रः स देवप्रवादः। एकवचनं जातिख्यापनार्थं, तं मन्त्रं, देवपितृवत्, देवाः पितरश्च प्रतिपाद्यत्वेन विद्यन्ते यस्मिन्न-भिधानकर्मणि तद्वत्त्वं संनमति तथोहति क्रियाविशेषणं नपुंसकम्। अथवा देवपितृप्र-वादं मन्त्रवत्संनमति उभयपदयुक्तान्करोति।

विकृतस्य प्राकृतानन्तरं समावेशं दर्शयन्नुदाहरति—

**यथा पृथिवि देवपितृयजनि देवानां पितृणां परिषूतमसि देवपितृबर्हिर्मा त्वाऽन्वङ्मा तिर्य-क्पर्माणे वां देवेभ्यः पितृभ्यः शकेयमिति।**

संनामेन देवपदस्य त्यागो मा भूदिति द्वयवन्मन्त्राः पठिताः। अत्र हि श्रूयते-उभये हि देवाश्च पितरश्चेज्यन्त इति। तत्र सोमाय पितृमते पुरोडाशं षट्कपालं निर्वपतीति सोमो देव इज्यते स पितृणां राजेति पितृत्वम्। पितृभ्यो बर्हिषद्भ्यो०मासा वै पितरो बर्हिषद इति मासाभिमानिनां देवानां तथात्वम्। एवमुत्तरत्रापि तेषामपि पितृत्वं श्रूयते—ये वै यज्वानस्ते पितरोऽग्निष्वात्ता इति। सर्वेषां देवत्वं पितृत्वमस्तीति देवाश्चेति भवति बहुवचनेन निर्देशस्तस्माद्द्वयोरपि पदयोर्ग्रहणमिति भावः। अत्र प्रथमं देवस्य त्वेति मन्त्रमुपेक्षितवान्। तत्रायमभिप्रायः—इज्यमानदेववाचिनो देवपदात्पितृपद-मूहनीयमुक्तं श्रुतेरेवं स्वयमप्युक्तवान्यथार्थमूह इति। तत्तु पितृणामिज्यमानानामेव चात्र प्राप्तिस्त इज्यमाना एव देवा यत्र मन्त्रे प्रतिपाद्या देवपदेन तत्रैव पितृपदमूह-नीयं देवस्य त्वेति मन्त्रे देवपदं नेज्यमानदेवप्रकाशकमपि तु द्योतनात्मकस्यासमवेतस्य सवितृ ततो नोहः। उपसर्जने देवपदे नोह इत्यापस्तम्बः। ये के च देवसंयुक्ता मन्त्रा देवेभ्यः पितृभ्य इति तान्संनमति। यथा भवति पृथिवि देवपितृयजनीत्यविकारो वा परवाक्यश्रवणादिति देवपित्रे(त्रि)ष्ट्यामिति पृथिवि देवपितृयजनीत्युक्तं समवेतदेवप्र-काशकत्वं यथा देवेभ्य इत्यत्र तथाऽत्रापीति भावः। बर्हिराहरणे प्रथममुदाहरणमनुप-सर्जनं देवानां प्रतिपादकं द्वितीयमुपसर्जनं देवानां ततस्तु मध्येऽन्वाधानमन्त्राणामूहो

नोक्तः। तत्र विहव्यानामसमवेतार्थप्रकाशकत्वान्न लिङ्गानुरोधो नानाकर्मसु विनियोगस्तु श्रुत्या, उपस्थानेऽग्निहोत्रे कश्चिदन्यवयवैनैव। तस्मान्नाऽऽसां दर्शपूर्णमासदेवताप्रतिपादकत्वमतो नोहः। अग्निं गृह्णामीत्यादीनां च देवतापदेषु नोहस्तस्य हविर्भागिदेवपितृसाधारणत्वात्। देवपदं हि प्राकृतजातिवाचि न देवतापदं तस्य संप्रदानवाचित्वात्। तथा च यो वै देवताः पूर्वः परिगृह्णातीत्युक्त्वैतद्वै देवानामित्यादिना देवपितृमनुष्याणामुपसंहारेणाग्निं गृह्णाति। स्व एवाऽऽयतने देवताः परिगृह्णातीति सर्वे देवमनुष्यपितरो देवतापदेन गृहीताः। सूत्रकारोऽपि देवप्रवादामित्येवाऽऽह देवशब्देनैव प्रवदन्तीत्यर्थख्यापनाय। तान्देवान्पितॄनिति भवत्येवाग्रे च वक्ष्यते देवेभ्यः पितृभ्यो जुष्टमिहेति। देवानां पि०देवपितृबर्हिरित्युक्त एव। देवपितृबर्हिः शतवल्शमिति देवपितृंगममसि। तत्रापि देवान्यजेत्यत्र न भवति। यत्र प्रधानाङ्गदेवतासाधारण्येन प्रधानपरतया वा देवशब्दः स एवोह्यो नत्वन्य इत्याद्यूह्यम्। प्रयोगे स्पष्टं भवेत्। वेदे देव वेदेत्यविकृतं देवेभ्यो वेदेति च नोह्यं भूतार्थस्तुत्या प्रवृत्तत्वात्। वेदोऽसि वित्तिरसि विदेयेत्याहेत्यत्र देवजातेर्वित्तवेदयितृत्वेन भूतार्थो गृहीतोऽत्राप्यभव इति भूतप्रत्ययात्। यो वो देवाः पितरश्चरतीति त्रिविधानि कर्माणि प्रधानहविर्मात्रसंस्कारकाणि। यथा साङ्गनिर्वापप्रोक्षणावहननादिकान्यासादनान्तानि ततस्तान्येवंजातीयकानि ज्ञेयानि कानिचित्प्रधानस्येत्यङ्गभूतान्यदृष्टार्थानि आद्यानि, द्वितीयान्यङ्गद्रव्यसंस्काररूपाणि। यथाऽऽज्यग्रहणं जुहूपभृतोः। तृतीयानि अङ्गप्रधानार्थद्रव्यसंस्कारकाणि। यथाऽन्वाधानबर्हिःपाणिप्रक्षालनवेदिकरणाज्यनिर्वापादीनि। तत्रादृष्टार्थेषु नोहस्तथा च समवेतप्रकाशकेषु यथा देवान्यजेति तथा देवस्य त्वेत्यादि। इतरेषु समवेतदेवतावाचकपदेषूहः कार्यः। अत्र केचिदाहुः-प्रधानद्रव्यसंस्कारेषु देवपदस्थाने पितृपदमिति, तेषामभिप्रायः—सोमादयः पितृरूपा एव। यदपि श्रुतौ-उभये हि देवाश्च पितरश्चेज्यन्त इति तदङ्गप्रधानाभिप्रायमिति तदनिमन्दम्। सोमादीनामेकैकस्यैवोभयात्मकत्वमाह श्रुतिः। कुतः, दक्षिणतः प्राचीनावीती निर्वपतीति तथोत्तरत एवोपवीय निर्वपेदिति विकल्पेनोभयधर्मदर्शनात्। संवत्सरो वै सोमः पितृमानित्यादिना च प्रधानदेवतानामेव द्विरूपतोच्यतेऽतस्त्वं देवानामित्यादावपि सत्येव देवपदे पितृपदमपि द्वितीयमावपनीयमिति संक्षेपः।

अत्राऽऽदौ वेदं कृत्वा वेदिमेव करोतीत्याह—

**उद्धननान्तं कृत्वा सर्वतः परिश्रित्योत्तरा२ स्रक्तिं द्वारं कृत्वा।**

उद्धननान्तैव वेदिरखाता भवतीति श्रुतेः। इमां नरा इत्यादि न लुप्यते। अदृष्टार्थ-

१ ङ. °स्मासासां। २ च. ट. °षु स्ववत्सदसोमे पि°।

स्यादत्र प्रैषस्य । ऋतमसीति पूर्वपरिग्रहः । सर्वासु दिक्षु कटादिना परिश्रयणं वेदेरे-वाऽऽवरणम् । उत्तरां स्रक्तिं द्वारं कृत्वा ।

**दक्षिणाग्नेरङ्गारानाहृत्य मध्ये वेदेर्न्युप्योपसमादधाति ।**

मध्यतोऽग्निराधीयत इति श्रुतेः ।

**एषोऽत्राऽऽहवनीयः ।**

गतम् ।

**आहवनीयं गार्हपत्यं दक्षिणाग्निं चान्वाधाय ।**

अमुमेवाऽऽहवनीयं प्राकृते प्रणीतेऽपि नान्वाधानमिति वक्तुमुक्तः क्रमः । नो चेदग्नी-नन्वाधायेति ब्रूयात्ततः सर्वेषामन्वाधानं प्राप्नुयात्तदनङ्गे प्राकृत आहवनीये मा भूदिति त्रयाणामेव ग्रहणम् । देवान्पितॄन्परिगृह्णामीति माहापितृयज्ञं ह्विः ।

**इध्माबर्हिराहरति द्राघीयः प्राक्-तारसमूलं बर्हिर्दात्युपमूललूनं वा ।**

इध्माबर्हिः प्राकृताद्दीर्घम् । वर्षीयानिध्म इध्माद्भवतीति श्रुतेः । बर्हिस्तु सह मूलै-रुत्पाटितं मूलसमीपे छिन्नं वा पूर्वत्र न च्छेदनं तन्मन्त्रश्च ।

**द्वौ परिधी सर्वान्त्वोपसंनह्यति ।**

इध्मे द्वौ क्षीत्वा संनह्यति । यदा द्वौ तदा विंशतिभिरत्यूहः । न चेत्र । समानासु सामिधेनीषु सैन्त्व(नीय)सौ यथाप्रकृतीत्युक्तत्वात् ।

**पात्रसंस्सादनकाले यथार्थं पात्राणि प्रयुनक्ति ।**

गतम् ।

**सोमाय पितृमते षट्कपालानि पितृभ्यो बर्हिषद्भ्यो धानार्थं कपालमृं ।**

स्थूलमित्यर्थः ।

**पितृभ्योऽग्निष्वात्तेभ्यो मन्थार्थं वारणं पात्रं[१] शरावं वा ।**

वरणवृक्षस्य पात्रं मृन्मयं शरावम् ।

**निर्वपणकालेऽध्वर्युर्दक्षिणतः शक-टमारुह्य प्राचीनावीती यवान्निर्वपति ।**

अध्वर्युरेव प्राचीनावीती, अग्रे सर्वेषां प्राचीनावीतित्वविधानात् ।

---

१ ख 'त्रीय तेनापि । २ घ. ङ. ज. झ. ञ. ढ. 'यः प्रछ' । ३ ख. ट. सन्नाशी । ४ ख.

उत्तरतो वा यज्ञोपवीती।

उत्तरतः शकटमारुह्य यज्ञोपवीती निर्वपति।

सोमाय पितृमते पुरोडाशꣳ षट्कपालं निर्वपत्याज्यं वा।

आज्यं तु यागकाल एव नत्विदानीम्। आज्येन यजतीत्यर्थः।

पितृभ्यो बर्हिषद्भ्यो धानाः पितृभ्योऽग्नि-
ष्वात्तेभ्यो मन्थं यमाय मन्थमित्येकेषाम्।

मन्थस्य विकल्पेन देवताद्वयम्।

प्रोक्षण्युद्रेकेण यवान्संयुत्यावहन्ति।

गतम्।

त्रिष्फलीकृतेषु त्रिभागमन्त्रेण षट्कपालमपच्छिद्य पिनष्टि।

तमेव पिनष्टि।

उपधानकाले—

दक्षिणार्धे गार्हपत्यस्य षट्कपालान्युपधाय प्रथमेन
कपालमन्त्रे[1]ण दक्षिणाग्नौ भर्जनार्थं कपालमुपदधाति।

यवानां भर्जनयोग्यं कपालं, प्रथमग्रहण*मूहप्रतिषेधार्थम्।

षट्कपालमधिश्रित्याधिश्रयणमन्त्रेणो[3]प्य धाना भर्जयति।

धानार्थान्यवान्।

अनुपदह्यमानाः परिशेरते॥ ११॥

धानाः कपालस्था एव यथा न दग्धा भवन्ति तथा करोतीत्यर्थः।

अखाता वेदिर्भवत्युत्तरं परिग्राहं परिगृह्य।

गतम्।

संप्रैषेण प्रतिपद्यते यदन्यत्पत्नीसंनहनाच्चरसंप्रैष्यति।

गतम्।

न पत्नीꣳ संनह्यति नान्वास्ते गृहेष्वेवाऽऽसीनाऽऽज्यमवेक्षते।

स्पष्टम्।

यस्मादाज्यग्रहणाच्चत्कृत्वा प्रतिहृत्य गार्हपत्य आज्यानि गृह्णाति।

आज्यानि गार्हपत्यं प्रत्यानीय गृह्णाति। पुनरानीय ग्रहणम्।

---

* ग. च. ट. ठ. पुस्तकटिप्पण्यां 'णमन्यप्र' इति पाठः।

---

१ ठ. ड. 'ण धाना'। ड. 'ण धानार्थ' इ'। २ ख. ट. ण. 'ग्नौ धाना'। ३ ख. ग. ठ. ट. प. 'श्रण धा'।

सर्वाणि चतुर्गृहीतानि द्विर्वोपभृति ।

अपबर्हिषः प्रयाजानूयाजा अतश्चतुर्गृहीतानि द्विर्वोपभृति गृह्णाति ।

प्रोक्षणीरभिमन्त्र्य ब्रह्माणमामन्त्र्येध्मं वेदिं बर्हिश्च प्रोक्ष-
ण्यवशेषं निनीय पवित्रे अपिसृज्याग्रेषु बर्हिर्गृहीत्वा ।

इदमेव विधातुं पूर्वोक्तः ।

त्रिः प्रसव्यमग्निं धून्वन्पर्येत्यौर्ध्वैः प्रस्त-
रस्तं धारयमाणस्त्रिरधून्वन्प्रतिपर्येति ।

सर्वं बर्हिर्गृहीत्वा विधून्वन्किरन्स्तृणान्निति यावत् । अप्रदक्षिणमग्निं परितो गच्छति । और्ध्वो यो भागो मुष्टिना यावान्गृहीतस्तावन्तं परिशेषयेत्तमेव प्रस्तरं धारयमाणस्तथैव प्रदक्षिणमस्तृणन्नेवं प्रतिपर्येति । इदमेव वेदिस्तरणं स्तरणमन्त्रः सकृत्स प्रस्तरो भवति प्रकृतबाधेन ।

द्वौ परिधी सर्वान्वा परिदधाति ।

गतार्थम् ।

प्रतिषिद्धे विधृती तूष्णीं प्रस्तरं न्यस्य-
त्युद्वासनप्रभृतीनि कर्माणि प्रतिपद्यते ।

प्रस्तरस्थाने विना विधृती तूष्णीं तूष्णीमेव न्यस्येदिति श्रुतेस्तं मुष्टिं प्रस्तरत्वेन न्यस्यति ।

यत्प्रागलंकरणात्तत्कृत्वा ।

गतम् ।

विभागमन्त्रेण धाना विभज्य पिष्टानामावृताऽर्धान्सक्तून्कृत्वा ।

कपालस्था धाना भृष्टास्तण्डुलास्तासामर्धस्तदर्धो भागो(?)यथाभागं व्यावर्तेथामिति विभज्य सक्तून्पिष्टानि करोति । पिष्टानामावृताऽधिवपनादिविधिना । पिष्टानामावृतेति वचनं न्यायोपलक्षणार्थं व्यत्ययेन क्रियमाणयोः पाकपेषणयोः प्राकृतधर्मलाभार्थं वार्ति-ककृता साधितम् ।

अभिवान्यवत्साये दुग्धे वारणे पात्रेऽधशरावे वेक्षु-
शलाकया दक्षिणासीनोऽनारभमाणस्त्रिः प्रसव्यं
मन्थमुपमन्थति शलाकास्तम्बं मन्थं करोति ।

सक्तूनभिवान्यवत्साया दुग्धे वारणपात्रस्थिते त्रिरप्रदक्षिणमुपमन्थति दक्षिणामुख आसीनो मन्थमनारभमाणः साक्षादस्पृशन्मन्थति । कथं तर्हि मन्थति तत्राऽऽहेक्षुश-

१ घ. च. ट. 'ताऽर्धाः सक्तू' ।

लाकया रज्जुकृतयाऽन्येन शलाकासमुदायेन मन्थरूपेण वारणे पात्रे शरावस्य विकल्पः मूत्रविशेषस्तच्छरावमर्धपूरितं दुग्धेन तत्र मन्थति पूर्ववदन्यत् ।

दक्षिणाग्रेरेकोल्मुकं धृपायत्पराचीनमपरेण गार्हपत्यमत्याहृत्या-
ग्रेणाऽऽहवनीयं पर्याहृत्य दक्षिणेनाऽऽहवनीयमन्तर्वेदि निदधाति

पराचीनं प्रत्यगानीय पश्चाद्गार्हपत्यमनिक्रम्योत्तरतो विहारस्याऽऽनीय प्रकृताहवनीयस्याग्रेण परितो नीत्वा दक्षिणाहवनीयस्याप्यग्रेण नीत्वा तस्यैव दक्षिणत उल्मुकं निदधाति ।

अलंकृत्यैकैकश आज्यानि हवींषि चाऽऽसादयति ।

एकैकमेवाऽऽज्यमेकैकमेव हविश्च गृहीत्वा दक्षिणाहवनीयस्य पश्चाद्भागे स्तीर्णे बर्हिष्येकैकमेवाऽऽसादयति यथाप्रकृति ।

दक्षिणत आञ्जनमभ्यञ्जनं कशिपूप-
बर्हणमुदकुम्भं च प्रतिष्ठापयति ।

हविषो दक्षिणभागे कज्जलमञ्जनं मस्तु तैलं वाऽभ्यञ्जनं कशिपु तूलिकोपबर्हणं शिरउपधानमुदकपूर्णं कुम्भं च स्थापयति ।

यज्ञोपवीतं कुरुते यदि प्राचीनावीती भवति ।

हविर्निर्वपणकाले यदि यज्ञोपवीत्येनर्हि तदस्त्येव । यदि तत्र प्राचीनावीतं स्यात्तदेतावत्कालं तथैवेदानीं यज्ञोपवीतं कुर्यात् ।

अग्नये देवेभ्यः पितृभ्यः समिध्यमानायानुब्रूहीति संप्रेष्यति ।

वाचनिकोऽयं प्रैषो न तूहेन तस्योहस्याप्राप्तेः ।

उशन्तस्त्वा हवामह इत्येताꣳ सामिधेनीं त्रिरन्वाह ।

एकामन्वाह त्रिरन्वाहेति याजुषहौत्रमिदमाध्वर्यवकाण्डपठितं व्याख्यातम् । अत्र याजुषे हौत्रे तु मध्ये पूर्वयाऽर्धर्चसंतानो न ताप्युत्तरया । वक्ष्यति स्वयमेव–ऋगर्धर्चेति । ये हि ऋषिदृष्टे ऋचौ तयोर्देव(?)संतानेनानुवचनमन्यथा नास्तीति ।

त्रैधमिध्मं प्रतिविभज्य सर्वमादधाति ।

पञ्च पञ्चैकैकस्मिन्प्रणव एकैकामन्ते सर्वास्वादधाति ।

ओहासु देवतास्वभिमुखवाज्य स्रुवाघारमाघार्याग्नी-
त्परिधींश्चाग्निं च त्रिस्त्रिः संमृड्ढीति संप्रेष्यति ।

यदि द्वौ परिधी यदि त्रयो यथाप्रकृति प्रैषः । स च प्रथमाघारानन्तरमेव तावदन्यथाऽन्यत्प्रकृतम् ।

१ ग. ण. °म प्राक् । २ ख. ग. ङ. ण. °ति । °र्दिति ।

**संमृष्टे प्रवरं प्रवृणीते ॥ १२ ॥ सीद होतरित्येतावान्प्रवरः ।**

ब्रह्मणा प्रसूत आश्राव्याऽऽह सीद होतरिति तथैव भारद्वाजापस्तम्बोक्तस्तदिदं वक्तुमेतावानेवेत्युक्तम् । स्पष्टमन्यत् ।

स्रुच्यमाघार्य—

**अपबर्हिषः प्रयाजान्यजति नोपभृतꣳ समानयते ।**

गतार्थम् ।

**जीवातुमन्तावाज्यभागौ[1] ।**

गुणविशिष्टावाज्यभागौ ।

**ताभ्यां प्रचर्य ।**

गतम् ।

**विस्रस्य यज्ञोपवीतानि प्राचीनावीतानि कुर्वते ।**

संयजमाना ऋत्विजो यज्ञोपवीतग्रन्थीन्विस्रस्य शिथिलान्कृत्वा प्राचीनावीतानि सर्वेऽपि कुर्वते ।

**आज्यानि हवीꣳषि च विपरिहरन्ति ।**

व्युत्क्रमेण स्थापयन्ति ।

**विपरिक्रामन्त्यृत्विजः ।**

व्युत्क्रमेण तिष्ठन्ति ।

**दक्षिणतो जुह्वामु(उ)पभृतꣳ सादयति ।**

जुहूर्यथास्थान[2]गतं(ता) । तस्या दक्षिणभाग उपभृतम् ।

**दक्षिणत[3] उपभृतं ध्रुवाम् ।**

तदुत्तरतः स्रुवेण सहितां स्थालीम् । गतम् ।

**दक्षिणतः पुरोडाशं धानाः सादयति दक्षिणं धानाभ्यो मन्थम् ।**

गतम् ।

**होताऽध्वर्युराग्नीध्रश्च दक्षिणा विपरिक्रामन्ति ।**

उत्तरस्रक्तौ स्थिता दक्षिणस्रक्तिमागत्य तिष्ठन्ति ।

**उत्तरतो ब्रह्मा यजमानश्च ।**

दक्षिणस्रक्तौ स्थितावुत्तरस्रक्तौ तिष्ठतः । आहवनीयाभिमुखाः सर्वेऽपि ।

**समानत्र जुहूः षट्कपालश्च ।**

एतयोर्न व्यत्ययोऽपि तु समानत्र पूर्वस्थान एव तिष्ठतः ।

---

१ घ. ङ. ञ. झ. म. ढ. जीववन्तौ । २ ख. ग. ठ. ङ. ण. °स्थाने । ग° । ३ क. ज. झ. म. °क्षिणामुपभृति ध्रु° । ठ. ङ °क्षिणा उ° ।

**ब्रह्मयजमानावित्येकेषाम् ।**

अनयोः पूर्वं व्युत्क्रमणमुक्तं तत्र विकल्पः । पूर्वत्रैव तिष्ठत एकेषाम् ।

**सर्वेभ्यो हविर्भ्यः समवदायैकैकां देवतां यजति ।**

सर्वेभ्यस्त्रिभ्यः सकृत्सकृदवद्यतीत्यापस्तम्बभरद्वाजोक्तेः । एकैकामेव देवतां यजति । तदेवाऽऽह—

**जुह्वामुपस्तीर्य पुरोडाशादवदाय धानानामुपसंगृह्णीतेऽथ मन्थस्य ।**

अवदानं सकृदेव । उपसंग्रहणं संस्कारार्थं वचनात् । अन्यथाऽन्यस्यै निर्वापोऽन्यस्या अपि दानं कथं स्यात् । अत उक्तमुपसंगृह्णीत इति ।

**द्विरभिघारयति चतुरवदानस्य त्रिः पञ्चावत्तिनः ।**

चतुरवदानस्य यजमानस्य वचनादत्र पञ्चत्तं द्विरभिघारणेनान्यस्य त्रिरभिघारणेन +समावत्तम् ।

**सोमाय पितृमतेऽनु स्वधेति संप्रेष्यति द्वे पुरोनुवाक्ये अन्वाहैकैकां याज्यां समणवे स्याताम् ।**

द्वे पुरोनुवाक्ये प्रणवान्ते स्याताम् । ब्रूहि, श्रावय, श्रौषट्, ये यजामहे, वौषट्, एतेषामपवादत्वेनान्ये स्वधेति पञ्चानां स्थाने विधीयते वषट्कारस्थाने स्वधा नम इति ।

**परिधीꣳस्पर्शयेत्युच्यमाने दक्षिणमुत्तरं परिधिं मध्यममुपसमस्यति ।**

सह निदधाति । हौत्रं त्वया हि नः पितरः सोमपूर्व इति याज्यायां वन्वन्नवातः परिधीꣳरपोर्णुवति पदत्रये श्रूयमाणे ।

**उदङ्ङतिक्रम्याऽऽस्वधेत्याश्रावयति ।**

दक्षिणतः स्थित उदक्रुत्क्रमागत्याऽऽस्वधेत्याश्रावयति, दक्षिणामुख इत्येव । तथैव सूत्रान्तरेष्वपि ।

**अस्तु स्वधेति प्रत्याश्रावयति सोमं पितृमन्तꣳ स्वधेति संप्रेष्यति ये स्वधामह इत्यागूर्भवति स्वधा नम इति वषट्करोति ।**

प्लुतस्तु यथाप्रकृति विकारेष्वपि ज्ञेयः । वृत्रहा भूयासम् । एवं पितरो बर्हिषदः पितरोऽग्निष्वात्ताश्चाग्नीषोमीयविकारौ विशेषणेन ऽयधिकाक्षरत्वात् । गतार्थमन्यत् ।

---

+ अत्राश्रावत्तमित्यपेक्षितं न वेति विचारणीयम् ।

---

१ घ. ङ. ज. झ. म. ढ. 'मानौ वेत्ये° । २ ख. ग. घ. च. ज. झ. ञ. ट. ढ. ण. °म उप° ।

एतेनैव कल्पेनोत्तराभ्यां प्रचरति ।

धानामन्थाभ्यां हविर्भ्याम् । एतेनेति चतुरवत्तिनः पञ्चावत्तिनश्चोक्तावदानकल्पेनेत्येतावदतिदिश्यतेऽन्यत्स्वयमेव दर्शयति ।

दक्षिणाऽतिक्रम्य जुह्व मुपस्तीर्य धानानामवदाय पुरोडाशादुपसंगृह्णीतेऽथ मन्थस्य पितृभ्यो बर्हिषद्भ्योऽनुस्वधेति संप्रेष्यत्युदङ्ङतिक्रम्याऽऽस्वधेत्याश्रावयत्यस्तु स्वधेति प्रत्याश्रावयति पितॄन्बर्हिषदः स्वधेति संप्रेष्यति ये स्वधामह इत्यागूर्भवति स्वधा नम इति वषट्करोति दक्षिणाऽतिक्रम्य जुह्वामुपस्तीर्य मन्थादवदाय पुरोडाशादुपसंगृह्णीतेऽथ धानानां पितृभ्योऽग्निष्वात्तेभ्योऽनुस्वधेति संप्रेष्यत्युदङ्ङतिक्रम्याऽऽस्वधेत्याश्रावयत्यस्तु स्वधेति प्रत्याश्रावयति पितॄनग्निष्वात्तान्स्वधेति संप्रेष्यति ये स्वधामह इत्यागूर्भवति स्वधा नम इति वषट्करोत्येतेनैव कल्पेनाग्निं कव्यवाहनꣳ स्विष्टकृतं यजति दक्षिणाऽतिक्रम्य जुह्वामुपस्तीर्य पुरोडाशादवदाय धानानामुपसंगृह्णीतेऽथ मन्थस्याग्नये कव्यवाहनाय स्विष्टकृतेऽनुस्वधेति संप्रेष्यत्युदङ्ङतिक्रम्याऽऽस्वधेत्याश्रावयत्यस्तु स्वधेति प्रत्याश्रावयत्यग्निं कव्यवाहनꣳ स्विष्टकृतꣳ स्वधेति संप्रेष्यति ये स्वधामह इत्यागूर्भवति स्वधा नम इति वषट्करोति॥ १३ ॥

अत्राऽऽवृत्तिमध्ये सूत्रान्तरदृष्टवैकल्पिकपक्षनिरासार्थमित्येवं ज्ञेयम् ।

मन्थमेके स्विष्टकृतꣳ समामनन्ति ।

मन्थं स्विष्टकृतमेव निरूप्य नैव देवता पितॄणामग्निष्वात्तानां विकल्पेन यमस्तु विकल्पेन पूर्वं दर्शित एव । एवं च देवतात्रयं मन्थस्य विकल्पेन[3] ज्ञेयम् । अत एवाऽऽहाऽऽपस्तम्बः—यथाप्रमाम्नातमग्नये कव्यवाहनाय यमाय वा मन्थमिति । तथाच स्विष्टकृद्यागाय पुनरपि तमेवाग्निं स्विष्टकृतं तु यजत्येव स्विष्टकृल्लक्षणप्रतिपत्ते स्थाने तस्याविधानात्तल्लोपो मा भूदित्यस्त्येव स्विष्टकृत् ।

न प्राशित्रमवद्यति ।

प्रतिषेधात् ।

---

१ घ. ङ. ज. म. ढ. °ल्पेन यथादेवतमुत° । २ घ. ङ. ज. झ. ञ. ढ. °के सौविष्ट° ।
३ ख. °न तथाच निर्णा । एव ज्ञे° । च. ट. °न निर्णा । एव ज्ञे° ।

एवमेवेडामवद्यति ।

सर्वेभ्यो हविःशेषेभ्यश्चतुरवत्तिनः पञ्चावत्तिन उक्तावदानधर्मेण ।

मन्थमिडामवद्यति मन्थादिडामवद्यतीत्येकेषाम् ।

सर्वं मन्थमिडामेवावद्यति नान्यत् । मन्थादेव वेति विकल्पौ ।

मन्थमवघ्राणार्थं परिशिष्य ।

सर्वहविःशेषात्सकाशान्मन्थावशेषं पृथक्कृत्यावघ्रातुं प्रज्ञातं निदध्यात् ।

इडायां[1] हविःशेषान्संश्लिष्य ।

ये हविःशेषा अवदानातिरिक्तास्तानपीडायामेवावधाय मर्दनेनैकीकृत्य ।

एतत्ते ततेति तिसृषु स्रक्तिषु त्रीन्पिण्डान्निदधाति ।

एतत्ते तत ये च त्वामन्विति । एतत्ते पितामह ये च त्वामन्विति । एतत्ते प्रपितामह ये च त्वामन्विति । अत्रैतत्ते ततासावित्यापस्तम्ब आचार्योऽपि पिण्डपितृयज्ञे तथैवोक्तवानिति चात्रासाविति नोक्तः । ततस्तु पिण्डपितृयज्ञवदेव मन्त्रा ज्ञेया इति केचित् ।

पिण्डस्थानान्याह—

पूर्वार्ध्यायां दक्षिणार्ध्यायां पश्चार्ध्यायाम् ।

पूर्वो भागस्तत्र भवा पूर्वार्ध्या । तस्यां स्रक्तौ [illegible] क्रमेण त्रीन्पिण्डान्निदधाति । आध्वर्यवमेवेदम् ।

लेपमुत्तरस्यां निमार्ष्टि ।

उत्तरस्यां स्रक्तौ हस्तं लिप्तं निमार्ष्टि ।

अत्र पितरो यथाभागं मन्दध्वमित्युक्त्वोदञ्चो निष्क्रामन्ति ।

दक्षिणतो विद्यमानाः सर्वे सयजमाना ऋत्विजः । यदि ब्रह्मा यजमानश्चोत्तरौ स्यातां तदाऽन्ये ।

तत आहवनीयमुपायन्ति ।

सयजमाना ऋत्विज आहवनीयं दक्षिणं समीपमागच्छन्ति । तत उत्तरतः ।

सुसंदृशं त्वा वयमित्याहवनीयमुपतिष्ठन्ते ।

हरी इत्यन्तेन ।

आतमितोस्तिष्ठन्ति ।

श्वासं निरुध्य यावत्स्तुतिः स्यात्तावत्तिष्ठन्ति ।

अक्षन्नमीमदन्त हीति गार्हपत्यमुपतिष्ठन्ते ।

हरी इत्यन्तेन ।

---

१ ख. ग. ह. ठ. ड. ण. °न्संश्लिष्य । २ ख. ग. ठ. ड. ण. प्रति पचमे ।

अक्षन्पितरोऽमीमदन्त पितर इति प्रतिपद्यन्ते ।

उत्तरत आगच्छन्ति मदन्तीत्यन्तेन ।

मन्थꣳ होताऽवजिघ्रति ।

हविःशेषात्पृथक्कृतं मन्थावदानं होताऽवजिघ्रति ।

अथाध्वर्युरथ ब्रह्माऽथाऽऽग्नीध्रोऽथ यजमानः ।

तमेव मन्थभागमेतेऽपि क्रमेणावजिघ्रन्ति ।

मन्थꣳ होताऽवघ्रायान्तर्वेदि निनयतीत्येकेषाम् ।

नान्येऽवजिघ्रन्ति ।

उदकुम्भमादायाया विष्ठा जनयन्कर्व-
राणीति त्रिः प्रदक्षिणं परिषिञ्चन्पर्येति ।

वेदिपरितः । स्पष्टम् ।

निधाय कुम्भं त्रिरपरिषिञ्चन्प्रतिपर्येति ।

गतार्थम् ।

अत्राञ्जनाभ्यञ्जने वासोदानं नमस्कारानुत्थापनीयं प्रवाहणीꣳ
सꣳसाधनीं मनस्वतीं पङ्क्तिप्राजापत्याश्च समामनन्ति ।

असाववनेनिङ्क्ष्वेति, असावभ्यङ्क्ष्वेति, एतानि व इति, नमो वः पितर इति, उत्ति-ष्ठत पितरः प्रेतपूर्वे इति, परेत पितर इति, यन्तु पितर इति, मनो न्वाहुवामह इति, अक्षन्नमीमदन्तेति, प्रजापत इति, एतैर्यथाविहितं कार्यमित्याह ।

यथा पिण्डपितृयज्ञे ।

गतम् ।

व्यवच्छादयन्ति परिश्रितम् ।

आवरणं निष्काशयन्ति ।

संप्रसारयन्ति परिधीन् ।

यथास्थानं कुर्वन्ति ।

विस्रस्य प्राचीनावीतानि ।

अनुवादोऽयम् ।

विधत्ते—

यज्ञोपवीतानि कुर्वत आज्यानि[१] हवीꣳषि च विपरिहरन्ति
विपरिक्रामन्त्यृत्विजोऽपबर्हिषावनूयाजौ यजति देवौ

---

१ घ. ङ. ज. ञ. म. ढ. °नि वि° ।

यज यजेति पूर्वमनूयाजं संप्रेष्यति यजेत्युत्तरं सूक्तवाकं प्रति होता निवीतं कुरुते न पत्नीः संयाजयन्ति न समिष्टयजुर्जुहोति सर्वमन्यत्क्रियते ॥ १४ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे पञ्चमप्रश्ने चतुर्थः पटलः ॥ ४ ॥

निगदव्याख्यातानि । सर्वपिष्टलेपफलीकरणहोमः सारस्वतहोमादि सर्वप्रायश्चित्तान्तं सर्वं करोति ।

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैजयन्त्यां पञ्चमप्रश्ने महापितृयज्ञश्चतुर्थः पटलः ॥ ४ ॥

अथ पञ्चमप्रश्ने पञ्चमः पटलः ।

रौद्रांस्त्र्यम्बकान्प्रतिपूरुषमेककपालान्निर्वपति ।

रुद्रा देवता निर्वापे त एव त्र्यम्बकनामानः ।

यावन्तो यजमानस्यामात्याः सस्त्रीकास्तत एकाधिकान् ।

गतार्थम् ।

तूष्णीमुपचरिता भवन्ति ।

दर्विहोमत्वान्मन्त्रातिदेशतोऽङ्गप्राप्तिरिति तूष्णीमित्युक्तम् । निर्वापमात्रे मन्त्रोऽन्यत्तूष्णीं सर्वमपि ।

दक्षिणार्धे गार्हपत्यस्य श्रप्यन्ते ।

पुरोडाशा इति शेषः ।

तानभिघार्यानभिघार्य वा ।

तुल्यश्रुतित्वाद्विकल्पः ।

मूते मूतयोर्मूतेषु कोशापिधाने वोद्वास्य ।

मूतं धान्याधानेन बन्धनार्थं तृणमयं व्याख्यातं, तेषां संख्याविकल्पः । कोशः करण्डः पेटा वा तस्यापिधानं पटलकम् । एतेषु कुत्रचिदुद्वास्य पुरोडाशान् ।

दक्षिणाग्नेरेकोल्मुकं धूपायत्पराचीनमपरेण गार्हपत्यमत्याहृत्याग्रतो हरन्ति ।

धूपायद्धूमायत्पराचीनमवाङ्मुखं गच्छतां बहिर्ऋत्विजां सपत्नीकसामात्ययजमानानामग्रे हरन्त्युल्मुकम् । स्पष्टम् ।

१ ख. ग. ठ. ड. ण. °नस्य प्रेष्यामा° । २ ठ. ड. °नवमेत्वा° । ३ ख. ग. च. ठ. ण. पेटा ।

यावन्तो गृह्याः स्म इति गार्हपत्यमुप*तिष्ठते ।

अध्वर्युरेव । द्वितीयाय तस्य इत्यन्तो मन्त्रः ।

उत्तरपूर्वमवान्तरदेशं गच्छन्ति ।

विहाराद्बहिरुत्तरपूर्वमीशान्यभागं गच्छन्ति सर्वेऽपि । ततस्तु यत्र चतुष्पथस्तत्र गच्छन्ति ।

आखुस्ते रुद्र पशुरिति व्रजन्नेवाऽऽखूत्कर एकं पुरोडाशमुपवपति ।

तं जुषस्वेत्यन्तो मन्त्रः । आखूनोत्कीर्णमृदि निदधाति गच्छन्नेव । तथा चतुष्पथं गच्छेद्यथा मध्य आखूत्करो भवति ।

चतुष्पथ एकोल्मुकमुपसमाधाय संपरिस्तीर्य ।

वर्त्मसंयोगश्चतुष्पथः । स्पष्टम् ।

मध्यमेन पलाशपर्णेनान्तिमेन वा सर्वेभ्यः पुरोडाशेभ्यः

समवदायाभिघार्यैष ते रुद्र भाग इति जुहोति ।

सर्वेभ्यः पुरोडाशेभ्यः सकृत्सकृत्समवदाय पलाशपत्रेण जुहोत्युल्मुके । तं जुषस्वेत्यन्तः ।

भेषजं गव इति द्वाभ्यामुपतिष्ठन्ते ।

सर्वे तमग्निमुपतिष्ठन्ते व्यवसाययादित्यन्तेन ।

प्रतिपूरुषं पुरोडाशानादाय ।

प्रतिमनुष्यम् ।

त्र्यम्बकं यजामह इति त्रिः प्रदक्षिणं चतुष्पथं परियन्ति ।

प्रत्येकं प्रतिप्रदक्षिणं मन्त्रावृत्तिः ।

सामान्यमुक्त्वा विशेषमाह—

तानूर्ध्वानुद्रस्य भगवः स्थ भगस्य वो लिप्सी-

येति प्रतिगृह्य परीत्य यजमानाय समावपन्ति ।

प्रथमं तूष्णीमादाय पुरोडाशं तत ऊर्ध्वमाकाश उद्रस्य पश्चाद्भगवः स्थेति मन्त्रेण भूमौ पतन्तं पुरोडाशं प्रतिगृह्य त्र्यम्बकमित्यनेन परीत्य प्रदक्षिणीकृत्य चतुष्पथम् । ततो यजमानस्याञ्जलौ निक्षिप्य पुनरादायोर्ध्वमुद्रस्य प्रतिगृह्य परीत्य यजमानाञ्जलौ निधाय । तथैव तृतीयपर्यायेऽपि ।

* सूत्रपुस्तकेषु 'उपतिष्ठन्ते' इति वर्तते ।

१ ख. ग. ठ. ढ. °न्ति । आ° । २ घ. ङ. ज. झ. ञ. ढ. °डाशानाम्° । ३ घ. ङ. ज. झ. ञ. °नान्तने° । ४ ख. ग. च. ठ. ङ. ण. °भ्यः स° । ५ घ. ज. झ. ञ. ङ. पर्येति । ६ ग. ङ. ञ. ज झ ञ ढ ण °त्य परीत्य न° ।

**यदि यजमानस्य[२] दुहिता पतिकामा स्यात्सा विपरीयात्।**

सा वक्ष्यमाणमन्त्रे विशेषः। (?)

तं मन्त्रमाह—

**त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मा पतेरिति परिक्रम्य जपति[३] ॥ १९ ॥ पूर्वयोः परिक्रमणयोर्यजमानाय समावपन्त्युत्तमे पतिकामायै।**

पूर्वो मन्त्रः परिक्रमणे। एवं परिक्रमणजपे यजमानाय समावपन्ति उत्तमे पतिकामायामावपन्ति। तृतीये पर्याये पतिकामायै पूर्वयोः पर्याययोर्यजमानाय न तृतीये।

**तस्यामविद्यमानायां[४] सर्वत्र यजमानाय।**

तस्यामकामायां सर्वत्र तृतीयेऽपि पर्याये।

**तान्मूत उपनह्य परोगव्यूतिं गत्वा वृक्ष आसजति।**

गव्यूतिः क्रोशद्वयं ततोऽपि परं गत्वा वृक्षे मूतेन सह पुरोडाशशेषान्बध्नन्ति। परोगोष्ठ आसजन्तीति भरद्वाजः।

**एष ते रुद्र भागस्तं जुषस्व तेनावसेन परो मूजवतोऽतीह्यवततधन्वा पिनाकहस्तः कृत्तिवासोमिति त्रिरवताम्यन्ति।**

प्रणवान्तं मन्त्रमुक्त्वाऽनुच्छ्वसन्तो यावन्निरोधं तिष्ठन्ति। त्रिवारमेतमेवाऽऽवृत्तिः।

**अपः परिषिच्याप्रतीक्षमायन्ति।**

मूतेऽपः परिषिञ्चन्ति। अप्रतीक्षमायन्ति। आसञ्जितं मूतमनवलोकयन्त आवर्तन्ते।

**परोगोष्ठे मार्जयन्ते।**

गोष्ठो गवां विश्रामस्थानम्। तस्य परतो मार्जयन्ते। सुमित्रा न इत्येतेनेति भरद्वाजः।

**एधोऽस्येधिषीमहीत्याहवनीये समिधोऽभ्यादधाति।**

एकवचनादध्वर्युर्यजमानो वा।

**अपो अन्वचारिषमित्युपतिष्ठन्ते।**

सर्वेऽपि।

**एवं पत्नी गार्हपत्येऽभ्याधायोपतिष्ठते।**

गतम्।

---

१ ख. °मन्त्राविं°। २ च. ट. °त्रेण वि°। ३ ख. ग. घ. ङ. च. ट. ठ. ण. °नादितो मुक्षी°। ४ [illegible] ञ. झ. ञ. ड. पतिकामा। ५ ख. ग. च. ट. ठ. ड. ण. °रि। [illegible] च. ट. °मजयन्ति।

प्रत्येत्याऽऽदित्यं घृते चरुं निर्वपति ।

तस्याग्न्याधेयिकवत्कल्प इति भरद्वाजः । तत्राऽऽदित्यमेव चरुमित्युक्तम् । अतोऽदितिर्देवता । तथा सप्तदश सामिधेन्यः । इडाभागः सर्वोऽपि ब्रह्मण एव । चतुर्धाकरणेष्विदं ब्रह्मण इत्येव । सर्वेऽपि भागा ब्रह्मण एवेति पूर्ववदित्यापस्तम्बः । प्रत्येत्येतिवचनात्त्र्यम्बकाङ्गमिष्टिरियम् । संतिष्ठन्ते त्र्यम्बकाः ।

श्वोभूते पौर्णमासेनेष्ट्वोदवसायानुदवसाय
वा प्रसूता देवेन सवित्रेत्युन्दन्ति । यो
अस्याः पृथिव्यास्त्वचि निवर्तयत्योषधी-
रधिरोहाम ओजसा वरुणो धीतिभिः
सहेन्द्रो मरुद्भिः सखिभिः सहाग्निस्तिग्मेन
शोचिषेति निवर्तनं वापनं यथा पुरस्तात् ॥ १६ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे पञ्चमप्रश्ने पञ्चमः पटलः ॥ ५ ॥

---

गतार्थम् ।

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैजयन्त्यां पञ्चमप्रश्ने त्र्यम्बकः पञ्चमः पटलः ॥ ५ ॥

---

अथ पञ्चमप्रश्ने षष्ठ. पटलः ।

---

ततो द्व्यहे त्र्यहे चतुरहेऽर्धमासे मास ऋतौ
चतुर्षु वा मासेषु शुनासीरीयेण यजते तस्य
वैश्वदेवेन कल्पो व्याख्यातः पञ्च संचराणि
निरुप्यैन्द्राग्नं द्वादशकपालं निर्वपति वैश्वदेवं
चरुमिन्द्राय शुनासीराय पुरोडाशं द्वादशक-
पालं वायव्यं पयः सौर्यमेककपालं वायव्या-
यवागूः प्रतिधुग्वैन्द्राय शुनासीराय पुरो-
डाशं द्वादशकपालमुत्तममेके समामनन्ति ।

द्व्यहाद्यतीते पर्वणि प्रयोगो वचनाच्छुनासीरोपलक्षितत्वाच्छुनासीरीयं कर्म, उत्तरवेदेरभावाद्वैश्वदेवेनेत्युक्तम् । गतार्थम् । वायव्यपयसः स्थाने वायव्या यवागूः प्रति-

---

१ ख. ग. घ. ङ. च. ज. ञ. ट. ठ. ड. ढ °मास्येष्ट्वो° ।

भुग्वा पयोर्थे पूर्वेद्युः शाखाहरणादि सायं वत्सानपाकरोति उपवेषं शाखापवित्रं च । प्रातर्दोहस्याऽऽवृता काले प्रातर्दोहं दोहयति । तथैवोक्तमापस्तम्बभरद्वाजाभ्याम् । सांनाय्यवदनुमन्त्रणमेककपालस्याऽऽग्नेयवत् । यवागूश्चरुकल्पेन । प्रतिधुग्धारोष्णं पयः। तत्रैव रूढिर्लिङ्गं च । गौर्वा प्रतिधुक्तस्यै शृतमिति प्रसिद्धिः । तस्यामेव शृतं पक्कमित्यर्थः श्रुतेः । प्रतिधुषा प्रातःसवने, एतदस्मै शृतं कुरुतेति लिङ्गम् । तथा भरद्वाजोऽपि प्रतिधुगिति दुग्धमात्रवाद इति । यावागूर्वा प्रतिधुग्वा तदपि वायव्यमेव तस्यापि दोहधर्मेण दुग्ध्वा न संक्षालनम् । आमावैवावदाय याग इति सर्वं कात्यायनेन पूर्वपक्षसिद्धान्ताभ्यां साधितं ज्ञेयम् । तथा सौर्यस्योत्तमस्थान इन्द्रायेत्याद्युक्तः पुरोडाशः शाखान्तरीयः । एवं च सर्वेष्वपि पक्षेषु दश हवींषि ।

**सꣳसर्पोऽस्यꣳहस्पत्याय त्वेत्युत्तमेन मासनाम्नैककपालमभिजुहोति ।**

एकमेव नामेष्टमापस्तम्बस्यापि तथैव ।

**अनुवत्सरीणाꣳ स्वस्तिमाशास्ते दिव्यं धामाऽऽशास्त इति सूक्तवाकस्याऽऽशीष्षु होताऽनुवर्तयति वत्सरीणामिति वा ।**

गतार्थम् ।

**अपरपक्षे समस्यन्स्वकाले पौर्णमास्ये(सेने)ष्ट्वान्ववसायानुदवसाय वा प्रसूता देवेन सवित्रेत्युन्दन्त्येकं मासमुदसृजत्परमेष्ठी प्रजाभ्यस्तेनाऽऽभ्यो मह आवहदमृतं मर्त्याभ्यः प्रजामनु प्रजायसे तदु ते मर्त्यामृतं येन मासा अर्धमासा ऋतवः परिवत्सरा येन ते ते प्रजापत ईजानस्य न्यवर्तयन्तेनाहमस्य ब्रह्मणा निवर्तयामि जीवसेऽग्निस्तिग्मेन शोचिषेति निवर्तनं वापनं यथा पुरस्तात् ॥१७॥**

अपरपक्षे कृष्णपक्षे शुनासीरीयहवींषि समस्येत्यर्थेनेत्स्वकाल आमावास्येन हविषेष्ट्वा स्वकाले पौर्णमासेनेष्ट्वा तत उदवसायेत्यादिविधिः । कृतं व्याख्यानम् ।

**संतिष्ठन्ते चातुर्मास्यानि ।**

शुनासीरीयान्तैव संस्था चातुर्मास्यानां सोमादेरङ्गत्वात् ।

**नैनमनीजानꣳ सोमेन फाल्गुनी प्राप्नुयात् ।**

एनं यजमानं सोमेनानीजानं फाल्गुनी पौर्णमासी न प्राप्नुयात् । फाल्गुन्यां पौर्णमास्यां सोमेनावश्यमेष्टव्यमित्यर्थः । चतुर्षु वा मासेषु शुनासीरीयेण यजत इत्ययं पक्षो यदा पुनःप्रयोगं चिकीर्षति तदैव संभवति नान्यदा तत्रापि फाल्गुन्याः पूर्वेद्यु-

१ ठ. ड. ण. °त्यर्थश्रु° । २ घ. ङ. ज. ञ. °ति सर्वं ।

चतुर्दश्यामेव शुनासीरीयेण यजेत ततः फाल्गुन्यां पुनःप्रयोगश्चातुर्मास्यानां चैत्र्यां प्रथमोपक्रमे तस्या अपि फाल्गुनीत्युपलक्षणं सर्वमेतत्कात्यायनेन स्पष्टीकृतम् । सोमोऽग्निष्टोमः ।

**सोमाभावे पशुना ।**

अशक्तौ पशुना निरूढकल्पेनानन्तरे पर्वणि ।

**पश्वभावे पुनःप्रयोगश्चातुर्मास्यानाम् ।**

इष्टिरप्युक्ता कात्यायनबौधायनाश्वलायनैः । तदकरणे पुनःप्रयोगः । तान्यकृत्वैव पुनःप्रयोगोऽभ्यास इत्यर्थः । ततोऽपि सोमेन पशुना वा समाप्तिः । इष्टिराग्नेयी कात्यायनीयानाम् । अन्यैः सवनेष्टिरित्युक्तम् । आग्नेयोऽष्टाकपाल ऐन्द्राग्न एकादशकपालो वैश्वदेवो द्वादशकपालो वैश्वदेवश्चरुर्वा समानतन्त्रा भिन्नतन्त्रा वैका ।

नित्यानि चातुर्मास्यानि उक्त्वाऽन्यान्याह—

**वैश्वदेवेन पशुकामो यजेत यस्मिन्नस्य वसन्ते भूयिष्ठं पयः स्यात् ।**

यस्मिन्वसन्ते यजमानस्य गोषु विपुलं दुग्धं भवति तत्रोपक्रमः ।

**वैश्वदेवेन पशुकामो यजेत यावत्सहस्रं पशून्प्राप्नुयात् ।**

सहस्रपशुप्राप्तिपर्यन्तं वैश्वदेवपर्वणि वैश्वदेवेनैव पर्वणाऽभ्यासः ।

**प्राप्ते सहस्रे स्वस्थानैरितरैर्यजते ।**

वरुणप्रघासकाल आगते वरुणप्रघासैरेवमितरैः सोमः पशुर्वाऽन्ते ।

**शुनासीरीयेण यजेत ग्रामकामः प्रजाकामः पशुकामो वृष्टिकामोऽन्नाद्यकामो वा वर्ष्यमुदकमन्ववसाय तत उदकार्थान्कुर्वाणः ।**

वर्षासु भवं वर्ष्यमुदकं यत्रास्ति तत्र गत्वा यजेत तस्मादेवोदकादुदकप्रयोजनम् ।

**पञ्चसंवत्सराणि व्याख्यास्यामस्तत्र पञ्चहोता वैश्वानरपार्जन्यौ च फाल्गुन्यां प्रयुज्य द्वावृतू संवत्सराविष्ट्वा तृतीयस्य मासं न यजेत चैत्र्यां तु प्रयुज्य त्रीनृतून्संवत्सरानिष्ट्वा चतुर्थस्य मासं न यजेतैवं विहितं व्यवराध्यं व्यवराध्यं वाऽभ्यस्येदभ्यस्येत् ॥ १८ ॥**

**इति सत्याषाढहिरण्यकेशिसूत्रे पञ्चमप्रश्ने षष्ठः पटलः ॥ ६ ॥**

---

**इति हिरण्यकेशिसूत्रे पञ्चमः प्रश्नः ॥ ५ ॥**

---

पञ्चसंवत्सराणि पञ्च संवत्सराः कालो येषां चातुर्मास्यानाम् । अयं प्रयोगो नित्यानां काम्यानां च फलभूयस्त्वकामनया स्यात् । तत्रमेकारम्भत्वात् । प्रथम एव प्रयोगे पञ्चहोत्रादि । यदा फाल्गुन्यामुपक्रमस्तदा चाऽऽवृत्त्या द्वावृतू संवत्सराविष्ट्वा

चातुर्मास्यानां द्विरावृत्तिः सर्वेषां भवति संवत्सरद्वयेन पुनश्च वैश्वदेवपर्वमात्रं चातुर्मास्यमध्ये भवति । तत ऊर्ध्वमाषाढमासो भवति तस्मिन्प्राप्ते वरुणप्रघासैर्न यष्टव्यं तं मासमतिक्रम्य श्रावण्यां वरुणप्रघासैर्यष्टव्यं चैत्र्यामुपक्रमे तु संवत्सरत्रयमभ्यस्य पुनश्चैत्र्यां वैश्वदेवेनेष्ट्वा श्रावण्यां वरुणप्रघासैरेवं चैत्रमारभ्यर्तुत्रयं भाद्रपदे भवति ततो मासमतिक्रम्य कार्तिके साकमेधैर्यजेत् । अनेन प्रकारेण पञ्च संवत्सरान्यजति । ततोऽपि फलभूम्नो द्विस्त्रिर्वा पञ्चसंवत्सराणि चातुर्मास्यानि यजेत । तथा च पञ्च दश पञ्चदश वा त्रयः प्रयोगा विकल्पेन भवन्ति । अभ्यासः प्रश्नसमाप्त्यर्थः ।

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवै-
जयन्त्यां पञ्चमप्रश्ने शुनासीरीयः षष्ठः पटलः ॥ ६ ॥

---

इति हिरण्यकेशिसूत्रव्याख्यायां महादेवकृतयां प्रयोगवैजयन्त्यां
पञ्चमश्चातुर्मास्यप्रश्नः ।

---

अथ षष्ठः प्रश्नः ।

---

( तत्र प्रथमः पटलः । )

---

ऋग्वेदाद्युपदिष्टेषु साङ्गकर्मसु कर्तृता ।
होत्रादेः परिभाष्याथाध्वर्योर्याजुषकर्मसु ॥ १ ॥
निरूपिता ब्रह्मणोऽपि हविर्यज्ञेषु तेषु तु ।
प्रधानकर्तृदंपत्योः फलप्राप्तिं निवारयन् ॥ २ ॥
संकल्पादेव कर्तृत्वमनयोर्मुख्यमादिशन् ।
फलं च सर्वकर्मस्वत्रैवान्यच्च प्रसङ्गतः ॥ ३ ॥
किंचिदुक्त्वा हविर्यज्ञयाजमानं सविस्तरम् ।
होत्रादिवेदसंज्ञाभिर्विहितेष्वपि कर्मसु ॥ ४ ॥
होत्रादिकर्तृनियमापवादेन निरूप्यते ।
लिङ्गाद्वाक्याद्विशेषाभिधानाच्छ्रुत्या च बाधने ॥ ५ ॥
सन्ति सामान्यसंज्ञायाः षष्ठे प्रश्ने प्रतिज्ञया ।
अत्रैतानिककर्माणि सब्रह्माण्यपि चार्त्विजाम् ॥ ६ ॥
साध्यानि तेषु चोत्सर्गात्कर्तृगामि फलं स्थितम् ।
न्यायवैदग्ध्यविज्ञेयं याजमानमितीरितुम् ॥ ७ ॥

प्रतिज्ञाकरणं तावदादौ सर्वस्य तन्यते ।
हविर्यज्ञे दर्शपूर्णमासादौ तन्निरूप्यते ॥ ८ ॥

**याजमानं व्याख्यास्यामः ।**

यद्यपि यज देवपूजासंगतिकरणदानेष्विति धात्वनुशासनसूत्रेण यजेर्धातोः पूजाद्यर्थस्य लटः शतृशानचाविति सूत्रेण लडादेशशानच्प्रत्ययान्तस्य व्युत्पत्त्या यजमानशब्देन देवपूजादिकर्मणः कर्ताऽऽत्मनेपदार्थाच्च फलभोक्ता प्रतीयते तथाऽपि याग(यो)रूढ्या चार्त्विक्साध्ये कर्मणि फलभोक्ता यः स एव प्रतीयते । पूर्तेषु यजत्यर्थेष्वपि यजमान-शब्दप्रयोगात् । देवपूजाकर्तर्यदर्शनाच्च । तस्माद्दक्षिणार्थे प्रवृत्तार्त्विक्कर्तृके कर्मणि यः फलभोक्ता स एव यजमानशब्दवाच्यः । नच कर्ममात्रफलभोक्तरि दृश्यते प्रयोग उपनयनादिषु सामयाचारिकेष्वपि च फलभोक्तरि प्रयोगाभावात् । तयोः फलभोक्त्रोः कर्म तद्याजमानम् । पत्न्या अपि फलं भोक्तृत्वस्याऽऽधानप्रश्ने निरूपितत्वात् । यद्यपि तत्तद्वेदविहितानि वैतानिकानि होतृवेदादिसंज्ञाभिर्होत्रादिनियतकर्तृकाण्येवेति स्था-पितं तथाऽपि विशेषप्रमाणैस्तद्बाधेन दंपत्योरपि क्वचित्कर्तृत्वं प्राप्तं तन्निरूप्यत इत्यर्थः ।

तत्र फलप्रापकं यजमानमात्रानुष्ठेयं प्रमाणमाह—

**समस्ते क्रतावर्थं श्रूयमाणं यजमानः कामयते ।**

समस्ते नियतेऽनियते च साङ्गे क्रतौ क्रतुशब्दपुरस्कारेणार्त्विग्विधिभिर्विहितार्त्विक्क-र्तृके कर्मणि । दर्शपूर्णमासयोश्चत्वार ऋत्विज इत्यादिनाऽग्निहोत्रस्य यज्ञक्रतोरेवमन्तेन दर्शपूर्णमासचातुर्मास्यपश्वग्निहोत्राणामक्रतुरूपाणामपि क्रतुशब्देन गौणेनाप्युपात्ताना-मिह ग्रहणं, ज्योतिष्टोमस्य तु मुख्यत्वेनोपात्तस्य यागविशेष एव सपशुके सोमाख्ये क्रतुशब्दो याज्ञिकप्रसिद्ध्या रूढो वेदे च वाजपेये सर्वे यज्ञक्रतवोऽवरुध्यन्त इत्यादौ ततोऽन्यत्र पञ्चमहायज्ञेषु यज्ञसत्रशब्दवद्गौणः । प्रकृते मुख्यमात्रग्रहणे हविर्यज्ञयाज-मानकर्मविधानं विरुध्येत तस्माद्गौणमुख्यानां ग्रहणम् । यज्ञं व्याख्यास्याम इत्यत्र विधिल-क्षणानि कर्माणि कर्मभिर्निःश्रेयसमित्यादौ च प्रयुक्तयज्ञशब्दकर्मशब्दावपहाय क्रतुशब्दं प्रयुञ्जानेनाऽऽचार्येणार्त्विक्साध्यान्येव कर्माणि क्रतुशब्देन गृहीतानीति गम्यते । अर्थं ममेदं भूयादित्यर्थ्यते तदर्थं फलमिति यावत् । क्रतौ प्रयोजनतया साध्यत्वेन प्रयोजकोऽर्थः । तं क्रतौ साध्यं विधिश्रुत्येष्टसाधनयोग्यपरया नियतेषु निःश्रेयसलिङ्गसहकृतया विश्व-जिदादौ स्वर्गं रात्रिसत्रादौ प्रतिष्ठादिकं कामादिपदवद्वाक्यसहकृतया च वायव्यꣳ श्वेतमालभेत भूतिकाम इत्यादौ भूत्यादिकमर्थत्वेनाऽऽवेदितं यजमानः कामयते । नच वर्तमानापदेशादनुवादः कामस्येति वाच्यम् । निष्प्रयोजनत्वादानर्थक्यमेव स्यात् । तस्मा-त्कामयेतेति विधौ प्रयोगोऽप्राप्तत्वात् । नच फलकामनायां विधिरस्ति । कामनेच्छा

सा वस्तुसौन्दर्यज्ञानादेव जायते नतु विधिना । विधिर्हि न फले प्रवर्तकः । अत एव फलांशे भावनायास्तु प्रत्ययो न विधायक इत्युक्तं तस्मात्फलसाधने विधिरिति वाच्यम् । तत्र वाचिको यः कामाभिनयोऽप्राप्तः स एव कामयतो विहितोऽतो यजमान एवे-त्ययं नियमोऽपि युज्यते । नानावेदगतं फलं तथाऽपि नर्त्विग्भिः संकल्पनीयं समा-ख्याया बाधात् । अत एव यो यक्ष्य इत्युक्त्वेत्यत्राऽऽत्मनेपदं श्रूयते । उक्त्वेत्यनेन संकल्पस्य वाचिकत्वमुक्तं तदेव प्रथमं यजमानकर्म श्रुत्यैवोक्तं पुरुषरूपप्राप्तं तेन यज्ञे प्रवर्तमानत्वेन यजमानो नत्वनारब्धयज्ञो यजमानः स्यात्किंतु यक्ष्यमाणः । अतोऽनेन यज्ञेन यक्ष्य इति कृतवाचिकसंकल्पोऽङ्गप्राप्तमानो येन क्रतुना यक्ष्य इति कृतसं-कल्पः । तत्र श्रूयमाणं फलमपि कामविषयत्वेनानुवदेदमुककाम इति तद्वाक्यशेषत्वेना-न्यथा सिध्यतः फलस्यानन्वये संकल्पवाक्यमसमर्थं स्यात् । यागेन भावयिष्य इत्युक्ते किमित्याकाङ्क्षा जायते तत्पूरणायामुककाम इति वक्तव्यमित्यर्थः । अत एवान्यफ-लकर्मणि चार्त्विक्कर्तृत्वविधानार्थं यजतीति परस्मैपदनिर्देशो नहि प्रयत्नपरिस्पन्दाश्रयत्व-मात्रेण मुख्यं कर्तृत्वं संभवति । स्वतन्त्रः कर्तेति पाणिनिस्मरणात्स्वातन्त्र्यं भोक्तुरेव मुख्यं तत्प्रेरितेषु तु स्वातन्त्र्यं गौणं विवक्षितं दर्शयितुं यजतीति परस्मैपदप्रयोगः । सूत्रकृताऽप्यृग्वेदेन होता करोतीत्यादौ परस्मैपदप्रयोगेणान्यप्रेरितत्वं दर्शितं, नहि परार्थफले कर्मणि परेणाप्रवर्तितः प्रवर्तते । ननु स कथं फलभोक्ता स्यात्प्रधानकर्मणोऽ-कर्ता यतो नच वैदिके कर्मणि स्वातन्त्र्यमात्रेण कर्तृता । तथा च जैमिनिः पूर्वपक्ष-सिद्धान्तावाह,शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वादिति सूत्रेण । सर्वं कर्म फलभोक्त्रैव कर्तव्यमिति प्रा(त्यभिधा)य राद्धान्तितम्—उत्सर्गे वा प्रधानं स्यादिति । सर्वस्य साङ्गस्य कर्मणो हि ऋत्विक्साध्यत्वेऽपि यागमात्रप्रधानं तत्पत्न्या कर्तव्यमेतावता तत्फलप्राप्तिः । अत एव कात्यायनः—प्रधानस्वामी फलभागादिति । तेनापि द्रव्यदे-वतात्यागो याग इत्युक्तम् । तस्मात्प्रधानमात्रकर्तृत्वेन कर्मफलं तस्येति युक्तम् । भव-त्पक्षे तु त्यागप्रधानता प्रथमपटले निराकृता । प्रधानं यागो होतृकर्तृको होमोऽ-ध्वर्युकर्तृक इति होतृकर्तृक इति स्थितं स्वातन्त्र्यमात्रेण कर्तुः कर्मफलं स्यादिति चेत् । उच्यते—यः प्रधानस्य कर्ता सोऽङ्गानामिति परिभाषितत्वाद्यागस्य प्रधा-नस्य यजमानकर्तृकत्वे तु यजमानकर्तृकत्वमङ्गानामपि स्यादिति समाख्याभिर्न-र्त्विक्कर्तृताऽपि स्यात् । अतो न प्रधानकर्ता यजमान इष्टः सूत्रकृता । तस्माद-न्यतोऽप्रवृत्तः फलार्थं संकल्पेन प्रवृत्त एव स्वतन्त्रः कर्ताऽन्यो नेति सूत्रतात्पर्यम् । नचान्येन कृतस्यान्यः फलभोक्ताऽतिप्रसङ्गापत्तेरिति वाच्यम् । यथा यजमानेन त्यागे कृते प्रधाने यजमानपत्न्या अपि फलम् । तत्केन हेतुना संकल्पेनेति वाच्यम् । तत्राऽऽपस्तम्बसमाधिरिति समः समाधिविधिः । यथाऽङ्गेषु कर्तुरन्यस्मिन्नपि यज-मानेऽपूर्वमुत्पद्यते तद्वत्प्रधानं पूर्वमपि संकल्पकर्तर्येव स्यात्तत्फलं चेति नातिप्रसङ्गः ।

यथा लोके राजादिः संकल्पमात्रेण राज्यं भुङ्क्ते प्रेरितै राज्यग्रहणाय प्रधानादिभिः कृत-ग्रहणमपि विहितेष्वपि देवताप्रतिष्ठादिपूर्तेषु प्रतिष्ठाप्रधानेषु त्यागासंभवाद्रुद्रमपादावपि तथात्वात्संकल्पमात्रेणर्त्विक्कृतस्य प्रधानकर्मणो यजमान एवापूर्वमेव तस्य फलं च भवतीति न किंचिदनुपपन्नम्। एवं वा सूत्रयोजना—समस्ते साङ्गे कर्मकर्तौ यो यक्ष्य इत्यनुवादेन वचनाभिनयेन चोत्रीतेन यक्ष्य इति संकल्पे यद्यपि फलं तथाऽपि विधि-वाक्ये क्रतौ श्रूयमाणं यजमान एव कामयतेऽनेन यक्ष्य इति वाक्य इदमनेन फलं कामय इति वाक्यशेषेण कामयते। तस्माद्यज्ञारम्भ एवानेन कर्मणा यक्ष्ये यावज्जीवमित्यादि यथासंभवमुक्त्वाऽनेन निःश्रेयसं कामय इत्यादि तत्तत्कामनानुसारेण वदेत्। यथोक्त-मापस्तम्बेनापि क्रत्वादौ क्रतुकामं कामयेत यज्ञाङ्गादौ यज्ञाङ्गकाममिति। समस्ते साङ्गेऽपि क्रतौ साध्यत्वेनेष्टं श्रावयेदित्युक्तं तथा यज्ञारम्भे प्रधानफलमङ्गारम्भे चाङ्गफल-मित्युक्तं भवति।

ननु नियतेष्वङ्गेषु विधिश्रुतिमात्रेण न फलं निःश्रेयसं कल्प्यं नापि रात्रिसत्रन्याये-नाऽऽर्थवादिकम्। नापि विश्वजिन्न्यायेन स्वर्गफलम्। किंतु नियताङ्गानि प्रधानेन स्वफलसिद्ध्यर्थं कथंभावाकाङ्क्षिगृहीतानि न पृथक्फलाकाङ्क्षाणि तथाऽपि श्रुत्या कामपदवत्याऽनन्यार्थया च यत्रापि फलमङ्गेष्वनङ्गेषु चास्ति तत्रापि कामना क्वचिदृत्विङ्निष्ठाऽपि श्रूयते तत्र किमृत्विजां फलमथवा यजमानस्यैव। यजमानफलेऽपि संकल्पोऽत्रर्त्विजां यजमानस्येति निर्णयार्थमाह—

**तथा नित्येषु यज्ञाङ्गेषु यानि तु कामयतिः श्रावयति[1]।**

तुशब्देनोत्सर्गबाधो न सर्वत्राङ्गेष्वर्थवादैः फलकल्पना। नाप्यङ्गेषु फलश्रुतिरर्थवाद एवेति। किंतु नित्येषु फलनिरपेक्षया विधिश्रुत्या फलवत्प्रधानाङ्गेषु तथा निय-तेषु फलाभावेऽपि नियमेनानुष्ठेयेषु यज्ञाङ्गेषु यज्ञफलवत्तया फलवत्सु। ननु किमर्थं नित्येष्विति यज्ञाङ्गेषु हि नियमेनानुष्ठानं तद्यज्ञाङ्गग्रहणेनैव सिद्ध-मिति चेत्। न। वैकल्पिकं यत्राङ्गमस्ति तथाऽतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णातीति पाक्षिके षोडशियागे फलार्थतयैव प्रवृत्तिर्नान्यथा यज्ञस्य तेन विना ह्यवैगुण्यात्। तस्माद्वैगुण्यपरिहारार्थमनुष्ठीयमानं नित्यमित्यर्थः। तेष्वप्यन्य-तःसिद्धस्य स्थानेष्वपि यानि चार्थरूपाणि स(पू)र्वसूत्रेऽर्थमिति पदं व्युत्पन्नमर्थ्यत इति फलमुक्तं तत्र नपुंसकनिर्देशेन जातिवाचिनोपदिष्टस्यात्र(त्र) व्यक्तिवाचकेन बहुवच-नान्तेन नपुंसकलिङ्गेन परामर्शो यानीति। यान्यर्थ्यमानानि पुरुषेण नित्याङ्गसाध्यानि कामयतिर्धातुः श्रावयति अभिधयैव बोधयति तान्येवाङ्गफलानि नान्यानि तान्येव यजमान एव कामयते सर्वानुषङ्गः। अयमभिप्रायः—यज्ञाङ्गेष्वपि श्रुत्याऽनन्यपरया

---

१ ख. च. ट. ठ. 'त्ति यथा°।

बोधितानि फलान्येव न सा श्रुतिरर्थवाद एवानङ्गेष्वपि च किं वक्तव्यं यानि फलं विना नानुष्ठेयानि तत्रार्थवाद एवाननुष्ठानलक्षणमप्रामाण्यं स्याद्विधेः । तस्मादुभयत्रापि नार्थवादता किंतु फलार्थतैव । अत्र कामयतिरू(रु)पलक्षणमिच्छाविषयत्वं(त्वे)नार्थप्रतिपादकानां शब्दानाम् । बुभूष[ति] तितीर्षत्यनयोः साक्षादेकार्थकत्वात् । इतरार्थसंप्रत्ययस्यापि समानार्थत्वात् । अभिचरन्नामयाव्यादिशब्दानामनिष्टार्थानामपि विधिषु न श्रुत्यावेदितार्थस्यापूर्वस्येष्टस्य साध्यस्याऽऽवेदकानामिच्छाविषयत्वं विना साध्यत्वासंभवादवश्यमर्थाक्षिप्तेच्छाविषयत्वमपि बोधयतामुपलक्षणम् । तान्यङ्गानङ्गफलानि यजनस्य कर्मणां स्वतन्त्रकर्तुरेव । तथाऽप्यध्वर्य्वादिकामना श्रूयते तथाऽपि नाध्वर्य्वादयः स्वार्थतया साधयितुमीशते शास्त्रफलं च कर्मणां स्वतन्त्रकर्तुरेवेति न्यायात् । नह्यनेन प्रवर्तितस्य कर्मणः फलमन्यस्य स्यात् । यदप्यन्यस्य प्रपाप्रवर्तनादिषु कर्मसु तृप्तिफलमन्येष्वप्यास्ति तथाऽपि न तद्विधिफलम् । किंतु तदानुषङ्गिकं विधिफलं कर्तुरेवेति न व्यभिचारः । तथा च यान्कामयेत यजमानानिति तथा यं कामयेत सर्वमायुरियादिति यजमानकाम्यमेव फलं नाध्वर्युकाममनिच्छतो यजमानस्य फलं स्यात् । एवमृत्विजामपि क्वचित्स्वकामनाविषयत्वेन स्वफलता दृश्यते । तत्रापि यदि यजमान एवानेन कर्मणा म ऋत्विजां फलं भूयादिति कामयते तदैव नान्यदा । तदेतत्सर्वं यानीत्यनेन दर्शितम् । तथा यं कामयेत प्रमायुकः स्यादित्यादेरपि न फलपरता मानत्वाभावात् । अध्वर्युणाऽनिष्टं काम्यमानमपि न यजमानप्रयुक्तेन कर्मणा भवतीत्युक्तम् । यथा यजमानायानिष्टं कामयते तादृगेवेति । तथा न कार्यमित्यर्थवादः । यत्र तु कामनासमानार्थपदैरबोधितं तत्काम्यमानमपि नाङ्गफलमित्यपि कामयतिरित्यनेनोक्तम् । श्रावयतीत्यनेन कामादिपदबोधितमपि यद्यभिधया न प्रतिपाद्यते किंत्वनूद्यतेऽभिधायाः पदान्तरेण प्रतिबन्धात् तत्रापि न फलताऽपि त्वर्थवाद एव । यथा त्रिष्टुभा परिदध्यादिन्द्रियं वै त्रिष्टुगिन्द्रियकामः खलु वै राजन्यो यजत इति तथा जगत्येत्यपि । अत्र खलुवैपदानां हेतुत्वे नाभिधाप्रतिबन्धादनुवादेनार्थवादतैव । यदि कामयेत ब्रह्मवर्चसमस्त्विति गायत्रिय परिदध्यादिति फलपरतैवात्र नार्थवादता । अत्र फलवन्त्यङ्गानि क्रियाजातिद्रव्यगुणाः क्रिया तावत्—आधानेऽग्नये भगिनेऽष्टाकपालेष्टिः । सा नित्या च काम्या च । तथ राका सिनीवाली पत्नीसंयाजभागौ । जातिर्यावत्पालाशं ब्रह्मवर्चसकामस्य यूपं कुर्यात् द्रव्यमपि—द्रव्यमग्निहोत्रहोमे पयः । गुणः—यूपे त्रिरत्निपञ्चारत्नित्वं च । एषां संयोगपृथक्त्वन्यायेन यागाङ्गता । तथाऽनङ्गान्यपि क्रत्वाश्रितानि चतुर्था कुहूयागपत्नीसंयाजेषु । जातिः—यदि कामयेत ब्रह्मवर्चसमस्त्विति गायत्रिया परिदध्यादिति परिधानी[या]यां गायत्रीत्वम् । द्रव्यम्—कांस्यमृन्मये प्रणयनाश्रिते । गुणः–

---

१ ब. ट. तयाऽपि ।

आघार उच्चनीचते। एतेषां क्रत्वङ्गत्वावेदकं प्रमाणं नास्ति। यदि प्रकरणेनाङ्गत्वं तदा वाक्यभेदः स्यात्सकृच्छ्रुतस्य वाक्यस्य।

उदाहरति—

**यथाऽऽघारस्योर्ध्वतायां नीचैस्तायां च।**

ऊर्ध्वमाघारयेत्स्वर्गकामस्य न्यञ्चं वृष्टिकामस्येति यथा यजमान एव कामयते तथा यान्कामयेत यजमानान्समावत्येनानिति व्याहृतिविधाने स्थानविशेषलक्षणो गुणो यजमानफलार्थं विधीयमानो यजमानेनैव कामयितव्यः संकल्पेनेत्यर्थः।

एतत्सूत्रे नियमविधानेन फलितां परिसंख्यां दर्शयति—

**अर्थवादा इतरे।**

आघारस्येत्यनुकर्षः। आघारगतगुणविध्यर्थवादा इतरेऽनन्यथासिद्ध्या श्रुत्यैवाऽऽवेदितार्थप्रापका विध्युद्देशान्तर्गतास्तेऽतोऽन्ये वाक्यशेषा विध्युद्देशानन्तर्गताः सन्तः पृथगपि वाक्यार्थं प्रतिपादयन्तो वाक्यैकवाक्यतां गच्छन्तोऽर्थवादाः स्तावका न फलप्रापका इत्यर्थः। ब्रह्ममीमांसकानामिव वाक्यैकवाक्यताऽर्थवादानामिष्टा सूत्रकृतामवान्तरवाक्यार्थेऽपि प्रामाण्यस्वीकारात्तत्तु(त्तु)जैमिनीयानामिव पदैकवाक्यता।

यथा संततमाघारयतीत्यत्र प्राणानामन्नाद्यस्य संतत्या इत्येवमादयोऽर्थवादा आघारयोस्तथाऽन्येष्वपि नियतेषु यज्ञाङ्गेषु प्रकारान्तरसिद्धा अर्थवादा एवेत्याह—

**तथाऽन्येषु[१] यज्ञाङ्गेषु पुरीषवतीं करोति प्रजयैवैनं पशुभिः पुरीषवन्तं करोति यद्यूपं मिनोति सुवर्गस्य लोकस्य प्रज्ञात्या इषे त्वोर्जे त्वेति शाखामाच्छिनत्तीषमेवोर्जं यजमाने दधातीति।**

शाखान्तरीयं वाक्यम्। इतीति नानाप्रकाराणामर्थवादानां पूर्वदर्शितानां ग्रहणार्थम्।

**द्रव्यप्रकल्पनं यजमानस्य दक्षिणादानं ब्रह्मचर्यं जपाश्च।**

यज्ञाङ्गाङ्गभूतं द्रव्यं सिद्धं जात्यादिना पश्चादङ्गत्वेन तत्तद्वेदविहितमपि नर्त्विग्भिः संकल्प्यं तत्। नहि तत्र तत्र वेदे संपादनं विधीयतेऽपि तु सिद्धस्याङ्गताऽतो द्रव्यप्रकल्पनं पूर्वमर्थसिद्धं तत्तु स्वार्थसिद्ध्यर्थं यजमान एव कुर्यात्। नहि त ऋत्विजो दक्षिणालोभेन प्रवृत्ताः स्वयं व्ययं कर्तुं प्रभवन्ति। अत आज्यव्रीहिपशुतण्डुलगोजाश्वादीनां संपादनं याजमानं यजमानः स्वद्रव्यव्ययेन साक्षाद्वाऽन्येन वा संपादयेत्। अत्र यजमानग्रहणं पुनः संकल्पे प्रवर्तमानस्य द्रव्यप्रकल्पकत्वं मा भूत्किंतु संकल्पात्पूर्वमेव वक्ष्यमाणस्येति। यजमानपदं द्रव्यप्रकल्पनपदेन न संबद्धमिति पुनराग्निमैरेव संबन्धो

---

१ घ. ङ. ज. °था नियेषु।

यथा स्यादिति सप्रयोजनं दक्षिणादित्रयेण संबध्यत उत्तरत्रानुवर्तते च । दक्षिणादानं स्वत्वत्यागरूपं नास्वामिनः संभवति । सामर्थ्यमपि श्रुत्या बाध्यतेऽनड्वान्होत्रा देय इत्यादिना । अष्टाङ्गमैथुनत्यागो ब्रह्मचर्यं तद्यजमानसंस्कार एव समाख्यायाः सामर्थ्येन बाधात् । ऋत्विजां हि ब्रह्मचर्याभावेऽपि कर्तृत्वसंभवात् । तस्माद्दीक्षासंस्कारवत्स्वामिनः संस्कार इति भवत्यदृष्टार्थः संस्कारो यजमानस्यैव । अत एव लिङ्गेन समाख्याबाधे सति योऽस्याग्नीनाधास्यमानो भवति स एतां रात्रिं ब्रह्मचर्यं चरतीत्यध्वर्योर्ब्रह्मचर्यविधानम् । यत्र कुत्रापि वेदे पठितानां मन्त्राणां जपं पत्न्या अपि । वक्ष्यति च धर्मेषु नहि प्रवसति यजमाने पत्न्या नैमित्तिकेषु दानेषु स्तेयमुपदिशन्तीति तस्या अपि स्वाम्यमस्त्येवेति प्रवसति यजमाने दक्षिणादानं पत्न्याऽपि कार्यं वरो देयः । छिन्दत्प्राणि दद्यादित्यादिना विहितं स्कन्नादिनिमित्तं दानमपि दक्षिणाशब्देन प्रदेयमात्रग्रहणात् ।

जपानां विधिमर्थसिद्धं दर्शयति—

प्रत्यगाशिषो मन्त्रानकर्मकरणाञ्जपति ।

यजमान इत्यनुवर्तते । मन्त्रप्रयोक्तुरात्मानं प्रतिपाद्यत्वमागच्छन्तीति प्रतीच इष्टप्रार्थनास्ताः प्रतिपाद्यत्वेन येषां मन्त्राणां ते तथा प्रत्यक्षं मह्यं स्यादित्यात्मगामित्वम् । आशिष इष्टप्राप्तिप्रार्थनारूपार्थवादा उपलक्षणम् । तान्मन्त्रान्यजमानो जपति । यजमान एव जपत्येवेति चोभयं नियम्यते । तेन जपस्तथाचादृष्टार्थं चातुस्वर्यं पाणिनिस्मृतिन्यायेन सिद्धमसिद्धमितीत्यविहितानां जपार्थतया विधिर्जपतीत्येव कल्प्यो यजमानकर्तृकः साक्षादित्यर्थः फलति । प्रत्यक्षजपविधिविहितानां विनियोगं जपतीति चेत्यनेन वक्ष्यत्यतो ज्ञायतेऽत्र विधिः कल्प्य इति । अयमाशयः—अध्ययनविधिनोत्पादितानां मन्त्राणां स्वार्थावबोधद्वारा फलवत्कर्मसाधनानां यज्ञकर्मार्था मन्त्रा इति परिभाषासूत्रेण सर्वमन्त्राणां यज्ञानुष्ठानार्थत्वमुक्तम् । तत्र येषां विनियोजको विधिर्नास्ति ते केन प्रमाणेन यज्ञकर्मार्थाः स्युः । अतस्त्वध्ययनविधिनैव ते सामान्येन विनियुक्ता एव । तेषां विशेषविध्याकाङ्क्षिणां प्रत्यगाशीस्त्वलक्षणलिङ्गेन स्वरूपानुपमर्दको जप एव विधेयत्वेन साध्यो धात्वर्थो नान्यो योग्यः स्यात् । ननु शेषस्य विनिधानमित्यादिसूत्रैरविनियुक्ता सा विनियोगलिङ्गेन वदता दशतयी सामर्थ्यातिरिक्तानामपि मन्त्राणां तूष्णीकेषु प्राकृतेषु यजुरिति सूत्रेण विनियुक्तत्वान्नैतेभ्योऽन्ये मन्त्राः सन्ति । येषां जपे विनियोगः कल्प्य इत्युच्यते । अत्राऽऽहाकर्मकरणानिति । कर्म बाह्या चेष्टा तस्यां करणत्वेन प्रतीतास्ते कर्मकरणास्ते हि तूष्णीकक्रियासु प्राकृतासु

---

१ क. ग. ण. ल्या न बा ।

विहितास्त्वेव प्रत्यगाशिषोऽपि मन्त्रसाकाङ्क्षासु लिङ्गेन तत्र क्रियाप्रतिपादनत्वलक्षणेन गच्छन्त्येव । प्रत्यगाशीर्लिङ्गं च विधिकल्पकमभिभूय श्रुतिविधेयक्रियामेव क्रियाप्रतिपादनलिङ्गेनाप्यकल्पनालाभाच्च न संनाधेन गच्छन्ति । ये त्वकर्मकरणास्तेषां तूष्णीकाः क्रियाः प्रति गमने सामर्थ्यं नास्ति । यद्यपि तद्भावाकाङ्क्षाः .थाऽपि ते न केवलप्रत्यगाशीःपराः क्रियाया अप्रतिपादकाः कथं क्रियामभिवया प्राप्नुवन्ति । नचात्र ब्राह्मणविहितत्वमस्ति येन यथोपदिष्टं ब्राह्मणवन्त इति सूत्रेण लक्षणयाऽपि क्रियाप्रतिपादकाः स्युः । तस्मात्तेषामध्ययनविधिबलेन स्वसाध्यजपविधिकल्पकत्वमेव युक्तम् । नह्यनुच्चारितस्य कर्माङ्गत्वमध्ययनविधिनाऽऽवेदितुं किंतूच्चारणेनोत्पन्नस्याभिव्यक्तस्यैव वा, इदानीं दृष्टे चासंभवति तदुच्चारणेन विधेयेन साक्षादपूर्वमेव वाच्यं संस्कार्यार्थस्याप्रतीतेः । नच मन्त्रं जपतीत्यस्ति द्वितीयानिर्दिष्टं संस्कार्यमिति वाच्यम् । मन्त्रस्यान्यत्र विनियुक्तविनियोक्ष्यमाणत्वाभावाद्द्वितीयया नेप्सिततमत्वं किंतु कारकत्वमात्रमवगम्यते ह्यकर्तरि चेति पाणिनिस्मृतेः । तस्मान्न द्रव्यमात्रे चादृष्टमाधेयशब्दापरपर्यायं जनयत्तद्द्वाराऽपूर्वोत्पादकं किंतु साक्षात्फलभोक्तरि स्वामिन्येवौत्सर्गिकं मन्त्रोच्चारणक्रिययाऽपूर्वं जन्यते । वैधकर्मणां फलाशासनं मुख्यं फलं स्वामिन्येव स एव मह्यमिष्टमिदं भूयादिति कामयितुं योग्यो नर्त्विक् । तस्यान्यफलशासने यद्यपि यां कांचनाऽऽशिषमृत्विगाशास्ते तां यजमानस्येति तथाऽपि यजमानफलशासने मन्त्रवाच्ये मह्यमिदं भूयादिति गौणमेव । नचाभिधाबाधेऽन्यद्विनियोजकं प्रमाणमस्ति । समाख्यायास्तु लिङ्गेन बाधान्मुख्यवृत्त्या भोक्तैवोच्चारणे कर्ता यजमानो यागेन फलं साधयितुं प्रवृत्तः फलापूर्वाश्रयत्वयोग्यमात्मानं दीक्षयेव करोत्यपूर्वेण संस्कृतम् । एवं च दीक्षणीयेष्टिवदेव जपस्याऽऽरादुपकारकत्वेऽपि यजमानसंस्कारकत्वमुपपद्यते । स्वसंस्कारव्यतिरिक्ते कर्मणि प्रतिनिधिः प्रवसतो यजमानस्यर्त्विग्वक्ष्यते । जपस्य संस्कारकत्वान्न तत्र प्रतिनिधिरिति स्वस्यैव प्रवसतो जपो वक्ष्यते । तदेवं जपस्याऽऽरादुपकारकत्वे संपादित एवोपपद्यत इति युक्तमुत्पश्यामः । तस्मादृग्वेदादिसमाख्याप्राप्तार्त्विज्यबाधेन यत्र यत्र मन्त्रपाठस्तत्र तत्र कर्मसमीपे जपः कार्यः । द्रव्यप्रकाशनेन प्रत्यगाशीःप्रार्थनं यत्र मन्त्रेषु स्यात्तत्र तत्र तत्तद्द्रव्यजन्यं क्रिययोपलक्षिते काले कर्तव्यस्तत्तत्कर्माङ्गतया । तत्र पाठादुत्कर्षोऽपि मन्त्रेऽवान्तरलिङ्गेनानुज्ञातः पाठात्तस्य प्रबलत्वात् । ये च क्रियाकरणद्वारा प्रत्यगाशीःपरास्तत्र क्रियां विनाऽऽशीःप्राप्त्यभावात्क्रियालिङ्गमेव प्रबलं तेन तूष्णीकेषु प्राकृतेषु तत्तदार्त्विककर्मसु प्रत्यक्त्वमारोप्य गौण्याऽपि वृत्त्या प्रवर्तन्ते । ये प्रत्यगाशिषः श्रुत्या क्रियायां विनियुक्तास्तेषां लिङ्गं श्रुत्या सुतरां बाधितमिति गौण्या वृत्त्या क्रियापरत्वम् । तथाचाजपन्यङ्क्षसामस्विति

पाणिनिना वक्ष्यमाणन्यायमूलमाश्रित्योक्तमैकश्रुत्यमपि बाधितमिति जपे चातुः स्वर्यमपि सिद्धमस्याध्वर्युपाठेन।

एवं च परिभाषिते यजमानकर्तृके जपे सति परिभाषितन्यायेन शब्दान्तरैर्बोधितकर्मभेदेष्वपि तत्तद्विधिविहितेष्वपि केषुचिज्जपधर्मं यजमानकर्तृकत्वं चातिदिशति—

तथोपदिश्यमानानुपतिष्ठतेऽनुमन्त्रयतेऽभिमन्त्रयतेऽभिमृशति जपतीति च।

जपतीति चेत्यन्तेन विधिजातेनोपदिश्यमानानपि प्रत्यगाशिषो मन्त्रांस्तत्तदुपदिष्टविशेषेण विशिष्टकर्मान्तरविनियुक्तानपि तथा जपति यजमान एव। न तु तां क्रियां साधनतया तत्तद्भेदविहितया तृतीयया श्रुत्या भासमानानाप्यृत्विग्जपं प्रयुङ्क्ते(?)। अत्र चातुःस्वर्यमाशीःपरत्वेन यजमानकर्तृकत्वं चातिदिश्यते जपे विहिते यजमानकर्तृत्वमित्यर्थः। अयं भावः—यद्यपि चोपतिष्ठत इत्यादिना कर्मभेदोऽस्ति जपे तु प्रयोगभेदस्तथाऽपि न तेन तत्कर्मसाधनतया प्रतीयमाना मन्त्राः प्रत्यगाशीःपरत्वं जहति। क्रियामंशभूतां प्रति तृतीयया न साधनत्वमुच्यते किंतु प्रत्यगाशीःशासनं प्रत्येव प्राधान्यादंशात्तद्द्वारा तेषामङ्गत्वात्। उपतिष्ठत इत्यादिना विशिष्टाभिधानेऽपि विशेषणांशानां क्रियारूपाणामपि मन्त्रोच्चारणेन सहभाविनामयोग्यत्वान्न मन्त्रसाध्यत्वम्। नहि हस्ताञ्जलिकरणमुपस्थानेऽनुसंधानमनुमन्त्रणेऽभिमुखीयाचनमभिमन्त्रणे हस्तेन स्पर्शनमभिमर्शने मन्त्रान्ते च क्रियते किंतु पूर्वमारब्धं सहमन्त्रोच्चारणेऽनुवर्तते तत्कथं मन्त्रसाध्यं स्यात्। मन्त्रैरप्रतिपाद्यत्वाच्च। नहि ताः क्रिया मन्त्रवर्णेषु दृश्यन्ते। तस्मान्मन्त्रप्रतिपाद्याशीःप्रतिपादनसाधनत्वेनैव तृतीयोपपद्यते। अर्थस्तुतिरवान्तरवाक्यार्थोऽर्थं स्तुत्वाऽऽशिषामाशासनं महावाक्यार्थः। तदेव विधेयं मन्त्रप्रतिपाद्यत्वेन। स्तुतिस्तदङ्गमिति न तेन विरुध्यते तेन चात्र तेषां संस्कार्यत्वेन द्वितीयेति वाच्यम्। उपस्थाने तावद्वाय्वाद्यर्थानां द्वितीयानिर्दिष्टानामर्थः कर्मासमवेतत्वात्। अग्न्यादीनां कर्मसमवेतानामपि न संस्कार्यत्वं वैरूप्यापत्तेः। किंच तेभ्यः फलाशासनप्राप्तये तेषामर्थानामुपस्थानं स्तुतिरेव स्तुतिविषयत्वेन द्वितीया निर्दिष्टा। अपि च स्तुतिर्हि गुणकीर्तनं गुणिकीर्तनस्तोत्रशस्त्रवत्। उपस्थाने स्तुतित्वं स्पष्टमेव दृश्यते तेऽग्निमस्तुवन्स एभ्यः स्तुतो रात्रियाः साऽग्निमस्तौत्स एनः स्तुत इत्यादौ चाप्युपस्थानस्य स्तुतिरूपत्वेन स्तुतत्वात्। एतेष्वेवार्थवादेषु स्तुत्या फलप्राप्तिमपि दर्शयति पशुभिरार्जन्त देवाः पशुभिरस्मा कामाः अकुर्वतेति। स एनः स्तुतः सुवर्गं लोकमगमयदिति। किंचाऽऽहिताग्नेराशीर्यदाग्निमुपतिष्ठत इत्यत्रापि चाऽऽशीःपरमेवोपस्थानम्। तत्रार्थस्तुतिरङ्गं नतु द्वितीयया गुणी प्रतिपाद्यभूतेन संस्कार्यं तत्प्रतिपाद्यं च गुणाश्रयत्वेन नतु प्राधान्येन। एवमनुमन्त्रणादिष्वपि स्तुत्यत्वेन द्वितीया ननु संस्कार्यत्वेनेप्सिततमत्वात्। किंत्वकथितं चेति विषयत्वेन

साधनत्वमात्रमाह । किंचानुमन्त्रणे हुतं द्रव्यं द्वितीयानिर्दिष्टं स्तुतिस्तु तद्देवतानामाशीरर्था दृश्यते तेभ्य एव फलशासनात्—अग्नेरहं देवयज्यययाऽन्नादो भूयासमित्याहाग्निर्वै देवानामन्नादस्तेनैवान्नाद्यमात्मन्धत्त इति ब्राह्मणे च । यद्यप्यन्नादौ द्रव्यस्य संस्कार्य[त्व]मपि संभाव्यते तथाऽपि न तन्मन्त्रप्रकाश्यत्वेनापि अपूर्वक्रियामंशभूतां प्रत्येव स्यान्नतु मन्त्रप्रतिपादनं प्रत्यपि । आशीःपरत्वभङ्गात् । तद्भङ्गेनैवार्थस्य संस्कार्यत्वोपपत्तेः । नतु प्राधान्येन । अत एव प्रवसतो याजमाने जपवद्देवोपस्थानादीनामपि स्वसंस्कारकर्मत्वेन तन्मन्त्राः स्वयमेव जपतीति वक्ष्यति । संस्कार्यं यदि द्रव्यं स्यात्तदा परार्थानामध्वर्युकर्तृ[क]त्वेन प्रतिनिधिः स्यात् । नह्येतान्याराद्रुपकारकाण्येवोपस्थानादीनि सन्ति न क्रियापराणि स्तुतिवज्जपरूपाण्येव । ननु कथमत्र विशिष्टो जपो विधेय उपतिष्ठत इत्यादिषु जपत्वाप्रतीतेः । प्रतीतौ च न तृतीयानिर्दिष्टमन्त्रसंबन्धः स्यात् । उच्यते—उपान्मन्त्रकरण इति पाणिनिसूत्रेणोपतिष्ठत इत्यात्मनेपदं विहितं मन्त्रसाध्यं करणं यस्य तत्कर्म मन्त्रकरणम् । उपपूर्वकस्तिष्ठतिः परिधानवाची मन्त्रोच्चारणं विधेयम् । अर्थप्रतिपादनं तु सामर्थ्यात् । अथवाऽर्थप्रतिपादनं विधेयमुच्चारणं तु सामर्थ्यादिति न्यायादन्यतरस्यैकस्य विधायकत्वे प्राप्ते जप एव सूत्रकारेण विधीयते । प्राथम्यात्पुरुषयत्नसाक्षात्साध्यत्वाच्च । प्रतिपादनं न साक्षात्पुरुषव्यापारेण शब्दव्यापारत्वात्सत्येवोच्चारणे साक्षात्पुरुषप्रयत्नसाध्ये विधिगोचरे सति पश्चात्प्रतिपादनपरम्परया पुरुषजन्यमर्थात् । अत एव सूत्रकृता संबन्धार्थमेव मन्त्राणामुपदिश्यमानानां द्वितीयया निर्देशः कृतः । तत्र मन्त्रेणोपतिष्ठत इत्यत्र तृतीयाऽर्थप्राप्तप्रतिपादनसाधनतानुवादिकेति मत्वा मन्त्रामन्त्रस्य विषयत्वेन साधनत्वं विना याऽऽक्षिप्ता द्वितीयोपदेशे दर्शितोपरि(?) निति । अकथितं चेति सूत्रेणैव विहिताऽपि । तथा चाप(?)उत्थायाञ्जलिपुटं कृत्वा मन्त्रं जपन्मन्त्रोऽङ्गवाचका(?) स्तुवन्नात्र प्रतिपादयेदिति । मन्त्रेणानुमन्त्रयत इत्यत्रापि द्रव्यमनुसंधाय मन्त्रं जपन्मन्त्रेण द्रव्यदेवताः स्तुवन्नित्यादि समानम् । मन्त्रयतिधातुः स्वाभिप्रायाविष्करणप्रतिपादकवचने प्रसिद्ध उपसर्गभेदाद्विशिष्ट वर्तते । अभिमन्त्रयतेऽत्रापि अभिमुखो भूत्वा द्रव्यं पश्यन्मन्त्रं जपन्मन्त्रेण द्रव्यमेव स्तुवन्नित्यादि समानम् । अभिमृशतीत्यत्रापि द्रव्यं स्पृशन्मन्त्रमुच्चारयन्मन्त्रार्थं मन्त्रेण स्तुवन्नित्यादि समानम् । सर्वत्र प्रत्यगाशीरर्थो मुख्ययैव वृत्त्या यजमानस्य जपतेरुपतिष्ठत इत्यादीनां च जपवाचकत्वेऽपि शब्दान्तरैरर्थभेदात्कर्मभेदो ज्ञेयः । यथा धात्वनुशासनसूत्रेषु यज दाने हु दाने डुदाञ्दान इत्यादिना समानार्थत्वविधानेऽपि रूढ्याऽर्थभेदादपर्यायत्वेन शब्दान्तरैः कर्मभेद एवमत्रापि । तत्र यजत्यादिषु कृतमेव व्याख्यानं प्रथमे परिभाषापटले । तद्वदत्रैवोपतिष्ठत इत्यादीनामपीति युक्ततरं सूत्रम् । जपोऽपि श्रुत्यैवेति सर्वमवदातम् । चकार इतिकरणस्य प्रत्येकसंबन्धार्थः ।

यावदुक्तं कर्माणि करोति ।

यजमान एव । उपस्थानादिजपानामङ्गभूतानि कर्माण्यपि यावदुक्तमनतिक्रम्य करोति । प्रत्यगाशीर्मन्त्रैरुत्सर्गेण जपस्तैः कर्माणि यावद्विहितान्येव करोति यजमानो नतु यत्र यत्रापि । तथा प्रणीताप्रणयनादीनां याजमाने श्रुतत्वाद्यजमानकर्तृ[क]त्वे प्राप्ते पुनरधीतेन सूत्रं योज्यम् । अस्माभिर्यावत्कर्तव्यं यजमानस्योच्यते तावदेव तेन कार्यं न यजमानकाण्डविहितं सर्वम् । अयमभिप्रायः—प्रणीताप्रणयनादिकमाध्वर्यवेऽपि विधीयते नचोभाभ्यामेकं कर्म कर्तुं शक्यमतोऽध्वर्युणा कृते यजमानकृतमिव भवतीति न याजमानबाधोऽत्यन्तं भवति, यजमानेन कृते तु नाध्वर्युणा कृतमिति सर्वथाऽऽध्वर्यवबाधः स्यात् । प्रणीतादिप्रणयने प्रणीतादिप्रकाशकमन्त्राणां जपेऽपि याजमानत्वोपपत्तिः । आज्यावेक्षणादिसंस्काराणामुभयकर्तृ[क]त्वं विधानात्सिध्यतीति । ननु तर्हि यथा भारद्वाजेनोक्तं यत्र क्व चोपतिष्ठतेऽनुमन्त्रयत इति चोदयेद्यजमान एव तत्कुर्यादिति यथोक्तमेवं वक्तव्यं जपतीत्यध्याहारेण किमर्थमुक्तमिति चेत् । उच्यते—एवमुच्यमाने करणमन्त्रतैव स्यात् । अस्तु का हानिरिति चेत् । न । आध्वर्यवमेव तदा स्यात् । ननु वचनाद्याजमानं भवेत् । न । तस्य न्यायमूलत्वात्न्यायासंभवे याजमानं न स्यात् । न्यायश्च फलमात्राशासनपरत्वे हि फलापूर्वाधानसामर्थ्यं जपापूर्वेण यजमाने भवति दीक्षणीये वा यदि करणमन्त्रः स्यात्तदा न तथा । ततस्तु स्यादार्त्विज्यमपि । किंच प्रवसति यजमानेऽध्वर्योरेव स्यात्परार्थेषु तस्य प्रतिनिधित्वाङ्गीकारात् । स्वसंस्कारत्वे तु न प्रतिनिधिरिति याजमानमेव । तत्राङ्गमात्रलोपेऽनाज्ञातजपादिविष्णुस्मरणादिना समाधिर्भवेत् । प्रधानं च जपस्तु प्रवसताऽपि कार्यः । उपस्थानादौ तु मानसी क्रियाऽङ्गं सा यजमानेनैव कर्तुं शक्येति युक्तमुत्पश्यामः । जपत्वेन विधाने चाध्ययनस्वरधर्मताऽपि साध्यते । तथाच पाणिनिनैकश्रुतिदूरात्संबुद्धौ यज्ञकर्मण्यजपन्यूङ्खसामस्विति स्मरणात् । सूत्रकारेण तु न्यायादेव साधितमध्ययनस्वरधर्मत्वम् । कथम् । अधीतिपठत्योरिव जपतेरुच्चारणप्राधान्यात् । यादृशमध्ययन उच्चारणं तादृगेव जपतिनाऽभिहितम् । करणमन्त्रत्वे तु यावताऽर्थस्मृतिर्जायते तावानेव करणत्वेनापेक्षितो विहित एकश्रुत्या चार्थप्रत्यायनान्नाङ्गं स्वराः । यद्यपि बहुव्रीहौ प्रकृत्या पूर्वपदमित्यादिषु स्वरस्याप्यर्थज्ञानेऽङ्गतोक्ता साऽपि पाठावसरेऽर्थनिर्णयार्थमुपायोऽपि नाङ्गमतस्तत्रैव निश्चितार्थेन मन्त्रेण क्रिया साध्या । अत एवोक्तं यज्ञकर्मणीति । शस्त्रेषु करणमन्त्रत्वाभावेऽप्यैकश्रुत्यं वचनात् । शंसतीति विधेर्देवतागुणप्रकाशकत्वमात्रेण पर्यवसानम् । उक्तं चाकरणमन्त्रत्वम् । अपि वा स्तौतिशंसती

---

१ च. ट. 'वमेव व' ।

प्रधानकर्मणी स्यातामिति प्रधानकर्मता प्रकाशनमात्रप्राधान्यान्नोच्चारणप्राधान्यात् । शस्त्रेषूच्चारणमङ्गमेव करणमन्त्रेष्विव । स्तोत्रेषु साम्ना स्तुवीतेति गीतिषु सामाख्येति जैमिनिनोक्तत्वाद्गानं च स्वरसाध्यमेवेति साम्ना गीत्या संस्कृताभिर्ऋग्भिर्दैवतागुणान्प्रकाशयेदिति स्तौतेः पर्यवसानात्करणमन्त्रेषु मन्त्रसाध्यक्रियया स्तोत्रशस्त्रयोरर्थप्रकाशनेन जपे तूच्चारणेनापूर्वोत्पत्तिरिति विधिसामर्थ्येन प्रकृतिश्रुत्याऽनुगृहीतेनावगम्यत इति चतुरश्रम् । सर्वत्रोपस्थानादिषु जपत्वे सत्यपि चासाधारण्येन व्यपदेशा भवन्तीति न्यायान्नागृहीतविशेषेण विशेष्ये बुद्धिरिति चोपसर्गविशिष्टैर्धातुभिर्विशिष्टमेव वाच्यमिति विशिष्टानामेव व्यपदेश उपस्थानमनुमन्त्रणमभिमन्त्रणमभिमर्शनमिति केवलेऽपूर्वोत्पादके मन्त्रोच्चारणे तु जप इति व्यपदेशो धारणार्थेऽध्ययनमिति द्वयविलक्षणे च मन्त्रपाठ इत्युच्चारणप्रधानता तु सर्वत्र न व्यभिचरतीति युक्ततरं सूत्रमिति ।

यावदुक्तं पत्न्याः कर्माणि ब्रह्मचर्यं जपाश्च ।

दंपत्योरविशेषेण प्राप्तानि यजमानकर्माणि पत्न्या नियम्यन्ते । कुतः । यदि याजमानं कर्म सर्वं तस्या अपि स्यात्तदा पत्न्यवेक्षत इत्यनर्थकं स्यादतो ज्ञायते यावदुक्तमेव तया कार्यम् । अत्र यावदुक्तमेव कर्माणीति नियमो नतु यावदुक्तं कर्माण्येवेति न ब्रह्मचर्यजपपरिसंख्येति वक्तुमुक्तं ब्रह्मचर्यं जपाश्चेति । ब्रह्मचर्यं तद्यजमानस्य ब्रह्मचर्येणार्थात्तस्या अपि सिद्धमेव तथाऽपि मनोविकारमपि निरुध्या(न्ध्या)दिति वक्तुं पुनर्वचनम् । पत्नीप्रत्यगाशिषां मन्त्राणां याजमाने च न विनियोग इति तेषां लिङ्गेन जपार्थोऽयमारम्भः । जपशब्देनोपस्थानादिकमपि स्वस्याः प्रत्यगाशिषां नियम्यते ।

दर्शपूर्णमासयोर्याजमानं व्याख्यास्यामः ।

दर्शपूर्णमासादय एव हविर्यज्ञा उक्तास्तेष्वेव याजमानं व्याचिख्यासितम् । तथाऽपि पूर्वतनं याजमानं सर्वकर्मसाधारणमिति वक्तुं दर्शपूर्णमासयोरित्युक्तम् । पूर्वतनं प्रसङ्गेन सर्वार्थमित्यर्थः । दर्शपूर्णमासयोर्व्याख्यास्याम इत्येतावता सिद्धे याजमानग्रहणं दर्शपूर्णमासशब्देन कालग्रहणं मा भूदिति । तेन वपनं विधीयमानं न कालमात्रे विधीयतेऽपि तु यजमानस्य संकल्पस्य सर्वाङ्गपूर्वभावित्वेनाभिधानाद्यष्टुं प्रवृत्तस्यैव तदङ्गतया कार्यं नतु दैवात्कर्तुमशक्तेन दर्शपूर्णमासौ विच्छिन्नौ(!) नष्टाग्निनाऽपि वा कार्यम् । उत्तरसूत्रे यजमानग्रहणं पत्न्या व्युदासार्थम् ।

पर्वणि यजमानः केशश्मश्रूणि वापयते ।

प्रथम एव पर्वणि यथा स्यादित्येवमर्थं पुनः पर्वणीति चैकवचनं च प्रथमपर्वसंस्कृत उभयत्राधिकारीत्युभयप्रयोगसाध्यत्वादपूर्वस्य । अत एव वैखानसः—पूर्वस्मिन्पर्वणि

पौर्णमासेन यक्ष्य इत्युक्त्वा केशश्मश्रूणि वापयित्वोपवसति। दर्शेन यक्ष्य इत्युक्त्वो-पवसतीति। संकल्पानन्तरं पौर्णमास्यामेव वपनमिष्टं तदङ्गत्वेन। केचित्तु यावत्पर्यन्तं* प्रयोगसमाप्तिस्तावद्वपनस्य काल इति ज्ञापयितुं पर्वग्रहणमित्याहुः। केशाञ्छिरोगता-न्मुखगतानि श्मश्रूणि नापितेन वापयते। अत्र केशशब्दप्राथम्यमजन्तत्वेन न तु क्रमार्थम्। क्रमस्तु श्मश्रूण्यग्रे वापयतेऽथोपपक्षावथ केशानथ नखानि सव्यस्य हस्तस्य कनिष्ठादि ततो दक्षस्यैवं पादयोः।

पौर्णमास्यां प्रातराशे जायापती सर्पिर्मिश्रमश्नीतः।

पूर्वसूत्रे व्युदस्ता पत्नी पुनर्गृहीता। प्रातराशः प्रातर्भोजनं, प्रथमभोजने रूढोऽयं शब्दः प्रातराश इति न तु प्रातरेवेति। तेनाध्वर्यवे य उदित आदित्ये गार्हपत्याद्दाह-वनीयमित्यादिनोक्तोऽन्वाधानस्य प्रातःकालो न बाधितः प्रातरन्वाधानस्येष्टत्वात्। कालस्त्वनियतः। सत्यां क्षुधि भोजननियमः। तत्र सर्पिर्मिश्रता कर्माङ्गत्वेन नियम्यते, भोजनं चेच्छात एव, तत्रासत्यां क्षुधि कालबाधेऽपि सर्पिर्मिश्रत्वं न बाध्यते वचनादु-भयोरपि नियमः।

तत्रैच्छिकेऽदनीये प्राप्ते परिसंचष्टे—

यदन्यन्मांसान्माषेभ्यश्च।

उभयोः परिसंख्यानादनिषिद्धं भोक्तव्यम्।

न सुहितौ स्याताम्।

नातितृप्तौ भवतः।

प्राग्वत्सापाकरणादमावास्यायां कामं सुहितौ स्याताम्।

पूर्णमासे भोजनकालानियमोऽत्र नियमः।

पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं तु साग्निकः॥
पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः॥ इति।

क्रमेण ततो भोजनं वत्सापाकरणं व्रतं च। अत्रापि सर्पिर्मिश्रताऽनुवर्तते यद-न्यदिति च। अत्र पिण्डपितृयज्ञमासिककर्तुरपराह्णे भोजनानन्तरं वत्सापाकरणं कात्यायनोक्तम्। अत्रापि पूर्ववदेव। सर्पिषोऽभावे दध्ना पयसा वेत्यापस्तम्ब-वैखानसौ।

अग्निं गृह्णामि सुरथमित्यन्वाधीयमानेषु जपति।

यथालिङ्गं देवतारूपेष्वग्निष्विति शेषः। अहिर्बुध्नियो नियच्छात्वित्यन्तान्यथालि-ङ्गमन्वाधाने विहितांस्तथैव जपति तीर्थेन प्रविश्याग्रेणाऽऽहवनीयं गतः स्वायतन उपविष्टः।

* अत्र पर्यन्तशब्दोऽधिकः।

इदमहमग्निज्येष्ठेभ्यो वसुभ्यो यज्ञं प्रब्रवीमीदमह-
मिन्द्रज्येष्ठेभ्यो रुद्रेभ्यो यज्ञं प्रब्रवीमीदमहं वरु-
णज्येष्ठेभ्य आदित्येभ्यो यज्ञं प्रब्रवीमीत्यन्वाहितेषु ।

जपतीत्यनुषङ्गः ।

बर्हिषा पूर्णमासे व्रतमुपैति वत्सैरमावास्यायाम् ।

बर्हिषा तदाहरणेन सह वत्सापाकरणेन सहेति ज्ञेयम् ।

अशनमग्न्यन्वाधानं व्रतोपायन-
मित्येवमनुपूर्वाण्येके समामनन्ति ।

पौर्णमास्यामनियतकालं प्राप्तं भोजनम् । तत्रेदमुच्यते सत्यां क्षुधि काले भोजनं ततोऽन्वाधानं न प्रातरेव । ततो व्रतं व्यवधानेनैव बर्हिषा पूर्णमासे व्रतमुपैतीत्युक्तम् । तस्य विकल्पनमग्न्यन्वाधानमनन्तरमेव व्रतोपायनमेकेषामित्यर्थः । ततस्तु श्वोभूते बर्हिराहरणपक्षेऽयमेव क्रमः ।

अग्न्यन्वाधानमशनं व्रतोपायनमित्येके ।

अनुपूर्वाण्येवेत्यर्थः । असंनयतोऽप्येवमेव ।

प्रणीतासु प्रणीयमानास्वासन्नेषु
हविःषु चैतौ साधारणौ कालौ ।

पर्वद्वयेऽप्येतयोः कालयोर्व्रतोपायनं विकल्पत इत्यर्थः । अत्र साधारणग्रहणात्पूर्वयोः पक्षयोर्व्यवस्थितो विकल्पः क्रमेण पर्वद्वय इति गम्यते ।

व्रतोपायनमेव दर्शयति—

विद्युदसीत्यप उपस्पृश्य ।

अत्राग्निहोत्रोक्तेन मयि श्रद्धेत्यन्तेन ।

अपरेणाऽऽहवनीयं दक्षिणाऽतिक्रम्य
पयस्वतीरोषधय इत्यप आचामति ।

सश्लक्ष्मेत्यन्तः । आचामति प्राश्नाति । ततो बहिःशुद्ध्यर्थमाचमनम् ।

देवा देवेषु पराक्रमध्वं प्रथमा द्वितीयेषु द्विती-
यास्तृतीयेषु त्रिरेकादशा इह माऽवत । इद९
शकेयं यदिदं करोम्यात्मा करोत्यात्मन इदं
करिष्ये भेषजमिदं मे विश्वभेषजा । अश्वि-
ना प्रावतं युवमिति देवता उपतिष्ठते ।

त्रयस्त्रिंशद्देवता उपतिष्ठते दक्षिणातिक्रान्त एव ।

समुद्रं मनसा ध्यायन्सम्राडसि व्रतपा असि व्रतानां व्रतपतिरसि व्रतमारभे तत्ते प्रब्रवीमि तच्छकेयं तेन शकेयं तेन राध्यासमित्यादित्यमुपतिष्ठते ।

समुद्रध्यानं कुर्यादित्येव । तदुक्तं सूत्रान्तरे व्रतमुपैष्यन्समुद्रं मनसा ध्यायतीति सम्राडसि०दित्यमुपतिष्ठते ।

अग्ने व्रतपते व्रतं चरिष्यामीति ब्राह्मणोऽग्निमुपतिष्ठते ।

राध्यतामित्यन्तः ।

वायो व्रतपत इति वायुमादित्य व्रतपत इत्यादित्यं व्रतानां व्रतपत इति व्रतपतिम् ।

अग्निर्वै देवानां व्रतपतिरिति श्रुतेरग्निमुपतिष्ठते । व्रतं चरिष्यामीति त्रिष्वप्यनुषङ्गः ।

एते साधारणा ऋतेऽग्नेः ।

अग्नेरुपस्थानमन्त्रं विनाऽन्ये मन्त्राः क्षत्रियवैश्ययोर्ब्राह्मणस्यापीत्यर्थः ।

यद्यस्तमितः स्यादाहवनीयमेवाऽऽदित्योपस्थानेनोपतिष्ठते ।

विकृत्यनुष्ठानेन दैवान्मानुषाद्वा व्रतोपायनं सूर्यास्तमये स्यात्तदाऽऽदित्योपस्थानं (न)मन्त्रेणाऽऽहवनीयमेवोपतिष्ठेत तत्राऽऽदित्यस्य प्रविष्टत्वात् ।

पर्वणि यजमानः स्वयमग्निहोत्रं जुहोति ॥ १ ॥

स्वयमेवेति यजमानः प्रारब्धप्रयोग एव पर्वणि अधिकृताधिकारोऽयं पर्वणीति पुनर्वचनात्सायं प्रातश्च नियमः । पर्वणीति ग्रहणमग्निहोत्रस्य प्रासस्यैव पर्वणि नियमार्थं नतु दर्शपूर्णमासाङ्गतया याजमानं विधीयत इति दर्शयितुम् ।

यवाग्वाऽमावास्यायां[१] संनयन् ।

स्वयं यजमान इत्यनुवर्तते । द्रव्यं वैकल्पिकं नियम्यते यवाग्वेवेति । संनयन्नित्येवं वक्तव्येऽमावास्याग्रहणं प्रतिपदि संज्ञातः प्रातर्मा भूत्तत्र नित्येनैव द्रव्येण भरद्वाज आहास्याममावास्यायां रात्रिं कुमारा न पयः पिबन्ति यवाग्वाऽस्यैतां रात्रिमग्निहोत्रं हुत्वेति । अत्र कुमाराणां पयःप्रतिषेधः सांनाय्ये सर्वगवां दोहविधिनिमित्तः । अतः संनयत एव रात्रावमावास्यायां रात्रिं कुमारा न पयः पिबन्ति यवाग्वाऽस्यैतां होमः । तत्रापि पर्वणि स्वयमेवातस्तु यवागूहोमो नासंनयतः । तदाह कात्यायनः—यवाग्वाऽग्निहोत्रहोमः संनयतस्तां रात्रिमिति । ननु पौर्णमास्यां संनयतो यवाग्वा न रात्रौ होमः स्यादिति चेन्न । गवां सांनाय्यार्थदोहाद्यत्र यवाग्वाऽग्निहोत्रमिति नियमः । नच प्रातरपि स्यादिति । रात्रिं न पयः पिबन्तीति प्रातरग्निहोत्रीं विनाऽन्यासां दोहः ।

---

१ घ. ट. °यां यवाग्वा हो° । २ च. ट. ठ. °यमित्येवा° ।

तस्या उच्छेषणमातञ्चनार्थं निदधाति ।

तस्या यवाग्वा ययाऽग्निहोत्रं यस्याश्चतुरुन्नयनेनाग्निहोत्रं हुतं तस्या उच्छेषणमग्निहोत्रहवणीगतं भक्षणलोपेनाऽऽतञ्चनार्थमिति प्रयोजनकथनेनेदमुक्तं नोच्छेषणप्रतिपत्तिरियं तेनोच्छेषणनाशे प्रतिनिधिनाऽऽतञ्चनमित्युक्तमेव । नचाऽऽतञ्चनार्थं यवाग्वा होमः पुनर्युक्त आतञ्चनार्थं जुहुयादित्यविधानात् । स च स्वविधिप्राप्त एव संनयति यजमानेऽमावास्यायां यवाग्वा नियम्यतेऽत एव तस्या उच्छेषणमनुनिष्पन्नमेवाऽऽतञ्चनार्थमित्युक्तम् । तेन यदुक्तं बौधायनेनोच्छेषणार्थं पुनर्होम इति तत्प्रत्युक्तं न्यायशास्त्रविरोधात् ।

नानृतं वदति न मा९समश्नाति न स्त्रियमुपैति *नैता९ रात्रिमश्नाति ।

अनृतवदनस्य प्रतिषेधे सत्येवान्वाहिताग्नेः पुनर्वचनं कर्माङ्गत्वख्यापनार्थम् । तेन प्रमादादनृतवदने तदैव प्रायश्चित्तं कृत्वाऽग्रिमं कर्म कर्तव्यमिति दर्शितम् । न मांसमित्यपि भोजनव्यतिरेकेणापि प्रतिषिध्यते पूर्वं तु प्रातराशे व्यञ्जनत्वेन प्राप्तस्य प्रतिषेधः । अयं तु पुनरन्योऽपि प्राप्तस्य फलादेरिव । अथवा मासिकादिकर्तुः श्राद्धाङ्गशेषभक्षणं प्राप्तं तत्रापि मांसव्यतिरिक्तमेव शेषं भक्षयेदिति निषेधसिद्धिः ।

आरण्यस्य सायमश्नाति ।

सायं यदश्नाति तदाऽऽरण्यस्याश्नाति । ग्राम्यपरिसंख्यार्थमिदम् । क्रमप्राप्तेऽपि सायंभोजने सायंग्रहणं द्वितीयभोजनस्योपलक्षणार्थं तेनैते त्रयो विकल्पा आरण्याशनमब्भक्षणमनशनं चेति द्वितीयभोजन एव । दैवात्प्रातराशे सायमुत्कृष्टेऽपि नैते विकल्पा भवन्ति किंतु प्रातराशः पूर्ववदेव भवतीति प्रयोजनम् ।

आमार्गादा मधुन आप्राशातिकादित्येकेषाम् ।

मृगमांसं मधु वर्जयित्वाऽन्यदारण्यस्याश्नाति । आङ्वधौ । एकेषां प्राशातिकं च वर्जयित्वाऽन्यदारण्यकम् । प्राशातिकं धान्यमपामार्गबीजसदृशमिति भाष्यकारमतिः । कोशीधान्यमित्यन्ये ।

आरण्यायोपवसन्नपोऽश्नीयान्न वा किंचन ।

आरण्यायाऽऽरण्यमुपवसन्नर्ज[य]न्नपस्ता अपि नाश्नीयादिति तृतीयः पक्षः ।

उभावग्नी उपस्तृणते देवता उपवसन्तु मे । अहं ग्राम्यानुपवसामि मह्यं गोपतये पशूनिति परिस्तीर्यमाणेषु जपति ।

परिस्तीर्यमाणेष्वग्निषु सकृन्मन्त्रः । उपस्तीर्यः पूर्वश्चेति ब्राह्मणे द्वयोर्ग्रहणं क्रमार्थं प्राधान्यात् ।

---

* नैता९ रात्रिमश्नातीति पाठः केवलसूत्रपुस्तकेष्वेव ।

आहवनीयागारे गार्हपत्यागारे वा संविशति ।

अगारमपवरकस्तत्र विश्रामति शेत इत्यर्थः ।

अमावास्यायां रात्रिं जागर्ति ।

स्पष्टम् ।

अपि वा यथा शक्नुयात्तथा कुर्यात् ।

स्पष्टम् ।

उपरि त्वेव न शयीत ।

उपरि खट्वादौ ।

कामं वोपरि शयीत ।

अत्रापि पूर्वेण विकल्पः ।

व्रतचारी त्वेव स्यात् ।

तस्यैतद्व्रतं नानृतं वदेन्न माꣳसमश्नीयान्न स्त्रियमुपेयादिति व्रतानि चरेत् ।

श्वोभूते ।

गतम् ।

भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं
त्वा वृणीमह इति ब्रह्मिष्ठं ब्रह्माणं वृत्वा ।

उत्कर इति सूत्रान्तरे । ब्रह्म वेदस्तन्निष्ठं तदध्यापनार्थविचारपरं च ।

अपरेणाऽऽहवनीयं दक्षिणाऽति-
क्रम्यापरेण ब्रह्मसदनमुपविशति ।

स्वसदने । गतार्थम् । आहवनीयाभिमुख इति भरद्वाजादयः । अत्राऽऽसीन एव कर्माणि करोति ।

आसꣳस्थानादन्वास्ते ।

विहारान्न गच्छतीत्यर्थः । संस्थाजपपर्यन्तम् । आपस्तम्बादिभिरित ऊर्ध्वमयमेव संचर इति लौकिके संचारेऽग्रेणाऽऽहवनीयम् ।

यजमान वाचं यच्छेत्युच्यमाने
वाचं यच्छत्या हविष्कृतः ।

त्रिष्फलीप्रैषे वाचं विसृजते ! व्याख्यातमेतदाध्वर्यवे ।

भूश्च कश्च वाक्चक्वर्च गौश्च वट्च खं च धूश्च नूश्च
पूश्चैकाक्षराः पूर्दशमा विराजो या इदं विश्वं
भुवनं व्यानशुस्ता नो देवीस्तरसा संविदानाः
स्वस्ति यज्ञं नयत प्रजानतीरिति प्रणीताः

प्रणीयमाना अनुमन्त्रयते ब्रह्मपूताः स्थ को वो युनक्ति स वो युनक्त्विति साद्यमानाः ।

स्पष्टम् ।

कस्त्वा युनक्ति स त्वा युनक्त्विति यज्ञं युनक्ति ।

एतद्व्याचष्टे—

सर्वमनुवीक्षते ।

सर्वं विहारमित्यापस्तम्बादयः ।

यजमान हविर्निर्वप्स्यामीत्युच्यमान ३ॐ निर्वपेति प्रत्याहाग्निꣳ होतारमिह तꣳ हुव इति हविर्निरुप्यमाणमनुमन्त्रयते निरुप्तं निर्वपणार्थं वा पात्रम् ॥ २ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे षष्ठे प्रश्ने प्रथमः पटलः ॥ १ ॥

---

निरुप्यमाणमेकैकमन्यत्सकृत् । अत्र प्रणवस्त्रिमात्रः । ओमभ्यादाने इति पाणिनिना प्लुतविधानात् ।

इति हिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैजयन्त्यां षष्ठे याजमानप्रश्ने प्रथमः पटलः ॥ १ ॥

---

अथ षष्ठे प्रश्ने द्वितीयः पटलः ।

---

इदं तस्मै हर्म्यं करोमि यो वो देवाश्चरति ब्रह्मचर्यम् । मेधावी दिक्षु मनसा तपस्व्यन्तर्दूतश्चरति मानुषीष्विति वेदिदेशमभिमृशति ।

वेदिस्थलं हस्तेन स्पृशञ्जपति । एवं यत्राभिमृशतीति तत्र सर्वत्र ज्ञेयम् । इत ऊर्ध्वं द्वितीयया कर्मनिर्देशेऽभिमन्त्रयत इत्यनुकर्षणीयं व्यवहितमपि । कुतः । योग्यत्वात् । इदं तस्मा इति प्रत्यक्षेण पुरोऽवस्थितं निर्दिशत्यत्रैवाभिमृशतीत्युक्तं चतुःशिखण्डेत्यादौ न तथा निर्देशोऽस्ति तस्मान्नाभिमृशतीत्यध्याहारः । भरद्वाजादय एषु विनियोगमभिमन्त्रयत इत्येव पठन्ति । अनुमन्त्रयत इति तु प्रायेणाग्नौ प्रक्षिप्त एव प्रयुज्यते तस्मात्प्रकृतमभिमन्त्रयत इत्येवानुषञ्जनीयम् । परिस्तीर्यमाणेष्वित्यत्र नानुषञ्जनीयम् । सप्तम्या निर्दिष्टे तु जपतीत्येव ।

---

१ क. ख. ग. च. ढ. ठ. ण. °मभिम°।

चतुःशिखण्डा युवतिः सुपेशा घृतप्रतीका भुवनस्य मध्ये। मर्मृज्यमाना महते सौभगाय मह्यं धुक्ष्व यजमानाय कामान्। वेदेन वेदिं बृहतीमविन्दन्सा पृथिव्यां प्रथतां पार्थिवानि। तस्यां बर्हिः प्रथताꣳ साध्वन्तरहिꣳस्रा णः पृथिवी देव्यस्तु। वेदेन वेदिमिति वेदेन वेदिꣳ संमृज्यमानाम्।

अभिमन्त्रयते। वेदेनेति पठितो मन्त्र आध्वर्यवे।

यो मा हृदा मनसा यश्च वाचा यो ब्रह्मणा कर्मणा द्वेष्टि देवाः। यः श्रुतेन हृदयेनेषणता च तस्येन्द्रवज्रेण शिरश्छिनद्मीति स्तम्बयजुर्ह्रियमाणम्।

अभिमन्त्रयते।

यदुद्धन्तो जिहिꣳसिम पृथिवीमोषधीरपः। अध्वर्यवस्फ्यकृतस्फ्येनान्तरिक्षं मोरुपाव तस्मात्। यदुद्धन्तो जिहिꣳसिम जीवमस्या वेदिं चकृमा मनसा देवयन्तः। मा तेन हेड उपगाम भूम्याः शिवा नो विश्वैर्भुवनेभिरस्त्विति स्फ्येनोत्तमां त्वचमुद्धन्यमानाम्।

अभिमन्त्रयते।

बृहस्पते परिगृहाण वेदिमिति परिग्राहयोः।

जपति। ब्रह्मत्वे पठितो देव्यस्त्वित्यन्त एव योग्यत्वात्।

भूमिर्भूत्वा महिमानं पुपोष ततो देवी वर्धयते पयाꣳसि। यज्ञिया यज्ञं वि च यन्ति शं चौषधीराप इह शक्करीश्चेति कृताम्।

अभिमन्त्रयते। कृतां वेदिम्।

ईडेऽन्यक्रतूरहमपो देवीरुपब्रुवे दिवा नक्तं च सस्रुषीरपस्वरीरिति प्रोक्षणीरासाद्यमानाः।

अभिमन्त्रयते।

आज्यमसीत्याज्यमवेक्षते यथाऽध्वर्युरङ्गिराज्यमाज्येनापः सम्यक्पुनीत सवितुः पवित्रैः। ता देवीः शक्करीः शाक्करेणेमं यज्ञमवत संविदाना इत्याज्यमपश्चोत्पूयमानाः।

सकृदेव। अध्वर्योरन्यमन्त्रास्त्रय आदितोऽधिका विहिताः। ततस्तूभयोः समाना एवातो याजमाने पञ्चानामित्यावर्तते। अन्यथाऽन्तिमावृत्तौ विसंवादमुभयोः स्यात्। विशेषु चतुर्थस्य काम्ये सप्तदश कामयित्वेति ज्ञेयम्।

पञ्चानां त्वा वातानामित्येतैराज्यानि गृह्यमाणान्यभिश्रेम बर्हिरन्तः पृथिव्या॰ सᳬरोहयन्त ओषधीर्विवृक्णाः। यासां मूलमुद्वधीः स्फ्येन शिवा नस्ताः सुहवा भवन्त्वित्यन्तर्वेदि बर्हिरासाद्यमानम् ॥ १ ॥ सुमनसो यजमानाय सन्त्वोषधीराप इह शक्वरीश्च। वृष्टिद्यावापर्जन्य एना विरोहयतु हिरण्यवर्णाः शतवल्शा अदब्धा इति बर्हिः प्रोक्ष्यमाणमूर्णा मृदु प्रथमानᳬ स्योनं देवेभ्यो जुष्टᳬ सदनाय बर्हिः। सुवर्गे लोके यजमानᳬ हि धेहि मां नाकस्य पृष्ठे परमे व्योमन्निति बर्हिः स्तीर्यमाणम्।

प्रतिधातु मन्त्रावृत्तिः।

चतुःशिखण्डा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते। सा स्तीर्यमाणा महते सौभगाय सा मे धुक्ष्व यजमानाय कामानिति बर्हिषा वेदिᳬ स्तीर्यमाणाम्।

वेदिं मध्यमेन धातुना।

शिवा च मे शग्मा चैधि स्योना च मे सुषदा चैध्यूर्जस्वती च मे पयस्वती चैधि सूपचरणा च मे स्वधिचरणा चैधीषमूर्जं मे पिन्वस्व ब्रह्मतेजो मे पिन्वस्व क्षत्रमोजो मे पिन्वस्व विशं पुष्टिं मे पिन्वस्वाऽऽयुरन्नाद्यं मे पिन्वस्व प्रजां पशून्मे पिन्वस्वेति स्तीर्णाम्।

अभिमन्त्रयते। वेदिं पूर्वेष्वनुषङ्गः। परेष्वभिमन्त्रयत इत्येव।

अस्मिन्यज्ञ उपभूय इन्नु मे विक्षोभाय परिधीन्दधामि। धर्ता धरुणो धरीयानग्निर्द्वेषाᳬसि निरितो नुदाता इति परिधीन्परिधीयमानान्।

परिधीन्दधामीति बहुवचनेन संसृष्टद्रव्यत्वाच्च सकृदेव सर्वानुमन्त्रणम्। तथैवोक्तं भरद्वाजेन सर्वानिति। वैखानसेनाऽऽवृत्तिरुक्ता यं(?)न्यायेन। अतः सूत्रकृता प्रथमत एव विनियोगमभिधाय ततो ध्रुवोऽसीत्युक्तं, तस्मात्प्रत्येकमावृत्तिर्बहुवचनमितरापेक्षं प्रत्येकमेव परिधीयमानत्वात्।

ध्रुवोऽसि ध्रुवोऽहᳬ सजातेषु भूयासमिति च।

प्रतिमन्त्रमेकैकम्। तथैवोक्तमापस्तम्बभरद्वाजाभ्याम्।

युनज्मि त्वा यन्मे अग्न इति द्वाभ्यामाग्निं परिधीयमानम्।

तृतीयपरिधेः पूर्वमेव सूर्यस्त्वेत्यनेनापि परिधानस्यैव करिष्यमाणत्वात्तस्माद्वा पूर्वं युक्तम्।

---

१ क. ग. च. ट. ठ. ण. त्वा ब्रह्मणा य॰।

तेजिष्ठा ते तपना या च रोचना प्रत्योषन्तीस्त-
नुवो यास्ते अग्ने ताभिर्वर्माण्यभितो व्ययस्व मा
त्वा दभन्यातुधानाः पिशाचा इति परिधितम् ।

परिहितमिति वा पाठः । परिहितं व्याकरणसिद्धम् । परिधितं छान्दसम् ।

विच्छिनद्मि विधृतीभ्याꣳ सपत्नान्जातान्भ्रातृव्यान्ये च जनिष्यमाणाः । विशो यन्त्राभ्यां विधमाम्येनानहꣳ स्वानामुत्तमोऽसानि देवाः । विशो यन्त्रे नुदमाने अरातिं विश्वं पाप्मानममतिं दुर्मरायुम् । सीदन्ती देवी सुकृतस्य लोके धृती स्थो विधृती स्वधृती प्राणान्मयि धारयतं प्रजां मयि धारयतं पशून्मयि धारयतमिति विधृती साद्यमाने ॥ ४ ॥ अयं प्रस्तर उभयस्य धर्ता धर्ता प्रयाजानामुतानूयाजानाम् । स दाधार समिधो विश्वरूपास्तस्मिन्स्रुचो अध्यासादयामीति विधृत्योः प्रस्तरꣳसाद्यमानम् ।

इत ऊर्ध्वं स्थालीमित्यन्तं साद्यमानां साद्यमानमिति यथायोगं ज्ञेयम् ।

आरोह पथो जुहु देवयानान्यत्रर्षयः प्रथमजा ये पुराणाः । हिरण्यपक्षाजिरासंभृताङ्गो वहासि मा सुकृतां यत्र लोकाः । जुहूरसि घृताची गायत्रियाम्नी कविभिर्जुषाणा । अव्यथमाना यज्ञमनुयच्छस्व सुनीती यज्ञं नयास्युपदेवानाग्नेयेन शर्मणा दैव्येनेति जुहूमवाहं बाध उपभृता सपत्नाञ्जातान्भ्रातृव्यान्ये च जनिष्यमाणाः । दोहै यज्ञꣳ सुदुघामिव धेनुमहमुत्तरो भूयासमधरे मत्सपत्नाः । सुभृदस्युपभृद्घृताची त्रैष्टुभेन छन्दसा विश्ववेदः । अव्यथमाना यज्ञमनुयच्छस्व सुनीती यज्ञं नयास्युपदेवानैन्द्रेण शर्मणा दैव्येनेत्युपभृतं यो मा वाचा मनसा दुर्मरायुर्हृदाऽरातीयादभिदासदग्ने । इदमस्य चित्तमधरं ध्रुवाया अहमुत्तरो भूयासमधरे मत्सपत्नाः । ध्रुवाऽसि धरणी धनस्य पूर्णा जागतेन छन्दसा विश्ववेदः । अव्यथमाना यज्ञमनुयच्छस्व सुनीती यज्ञं नयास्युपदेवान्वैश्वदेवेन शर्मणा दैव्येनेति ध्रुवाꣳ स्योनो मे सीद सुषदः पृथिव्यां प्रथयि प्रजया पशुभिः सुवर्गे लोके दिवि सीद पृथिव्यामन्तरिक्षेऽहमुत्तरो भूयासमधरे मत्सपत्नाः । अयꣳ स्रुवो अभिजिहर्ति होमाञ्छतक्षरश्छन्दसाऽऽनुष्टुभेन । सर्वा यज्ञस्य समनक्तु विष्ठा बार्हस्पत्येन शर्मणा दैव्येनेति स्रुवमियꣳ

स्थाली घृतस्य पूर्णा छिन्नपयाः शतधार उत्सः । मारुतेन शर्मणा दैव्येनेत्याज्यस्थालीम् ॥ ५ ॥ यज्ञोऽसि सर्वतः श्रितः सर्वतो मां भूतं भविष्यच्छ्रयतां शतं मे सन्त्वाशिषः सहस्रं मे सन्तु सूनृता इरावतीः पशुमतीरित्याग्नेयं प्रजापतिरसि सर्वतः श्रितः सर्वतो मां भूतं भविष्यच्छ्रयतां शतं मे सन्त्वाशिषः सहस्रं मे सन्तु सूनृता इरावतीः पशुमतीरित्यग्नीषोमीयं यो नः कनीय इह कामयाता अस्मिन्यज्ञे यजमानाय मह्यम् । अप तमिन्द्राग्नी भुवनां नुदेतां तामहं प्रजां वीरवतीं विदेयेत्यैन्द्राग्नम् ।

आसन्नमिति त्रिषु ज्ञेयम् । सांनाय्य आसाद्यमान इति विशेषस्य वक्ष्यमाणत्वात् ।

यस्त आत्मा पशुषु प्रविष्ट इति सांनाय्य आसाद्यमाने ।

जपति ।

इदमिन्द्रियममृतं वीर्यमनेनेन्द्राय पशवोऽचिकित्सन् । तेन देवा अवतोपमामिहेषमूर्जं यशः सह ओजः सनेयं शृतं मयि श्रयतामिति शृतं यत्पृथिवीमचरत्तत्प्रविष्टं येनासिञ्चद्बलमिन्द्रे प्रजापतिः । इदं तच्छुक्रं मधु वाजिनीवद्येनोपरिष्टादधिनोन्महेन्द्रं दधि मां धिनोत्विति दधि ।

एतदन्तमाभिमन्त्रयते ।

अयं यज्ञः समसदद्धविष्मानृचा साम्ना यजुषा देवताभिः । तेन लोकान्सूर्यवतो जयेमेन्द्रस्य सख्यममृतत्वमश्यामिति संसन्नान्यभिमृशति ॥ ६ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे षष्ठप्रश्ने द्वितीयः पटलः ॥ २ ॥

---

संसन्नानीति बहुवचनेन सर्वाणि गृह्यन्ते । तथैवोक्तमापस्तम्बभरद्वाजाभ्यामपि सर्वाणि हवींषीति । प्रधानाङ्गार्थानि गृह्यन्ते । संसन्नानीति समुपसर्गस्य ग्रहणं श्रुत्यनुविधानेन । ननु संसादयतीति विधिना कानिचित्सादितानि सन्ति किंतु सादयत्यासादयतीति । अथवा समुदायापन्नानि सन्ति सन्नानीति सामान्यमुभयेष्वप्यस्तीति युक्तम् । तथाचाऽऽज्यसमुदाय एक इतरसमुदाय एक इति प्रत्येकं मन्त्रावृत्तिः । अभिमृशति सकृत्ततस्तथैवान्यं संसन्नानीतिप्रयोगसामर्थ्यात् ।

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैजयन्त्यां षष्ठे याजमानप्रश्ने द्वितीयः पटलः ॥ २ ॥

---

अथ षष्ठप्रश्ने तृतीयः पटलः ।

---

विहृव्यस्याष्टाभिः पौर्णमास्याꣳ हवीꣳ-
ष्यासन्नान्यभिमृशति चतुर्होत्रा च ।

ममाग्ने वर्च इत्यनुवाकस्याऽऽदितोऽष्टाभिर्ऋग्भिर्मा नो रीरिषो मा परादा इत्य-
न्ताभिः ।*

( + पञ्चहोत्रैवामावास्यायामङ्गिरसो माऽस्य यज्ञस्य
प्रातरनुवाकैरवन्त्वित्यनूच्यमानासु सामिधेनीषु जपति
दशहोतारं पुरस्तात्सामिधेनीनामुपरिष्टाद्वा व्याचक्षीत
समिद्धो अग्निराहुतः स्वाहाकृतः पिपर्तु नः । स्वगादे-
वेभ्य इदं नम इति समिद्धमग्निमुच्छुष्मो अग्न इति च
मनोऽसि प्राजापत्यमिति स्रुवाघारमनुमन्त्रयते वागसीति
स्रुच्यं देवाः पितरो देवा योऽहमस्मि स सन्यजे
यस्यास्मि न तमन्तरेमि स्वं म इष्टꣳ स्वं दत्तꣳ स्वं पूर्तꣳ
स्वꣳ श्रान्तꣳ स्वꣳ हुतं तस्य मेऽग्निरुपद्रष्टा वायुरुपश्रो-
ताऽऽदित्योऽनुख्याता द्यौः पिता पृथिवी माता प्रजा-
पतिर्बन्धुर्य एवास्मि स सन्यजे यस्यास्मि न तमन्तरे-
मीति होतृप्रवरेऽध्वर्युप्रवरे च जपति मां देवेष्वाश्राव-
याऽऽयुषे वर्चस इत्यध्वर्युप्रवरे वैशेषिकं चतुर्होतारं पुर-
स्तात्प्रयाजानामुपरिष्टाद्वा व्याचक्षीत वसन्तमृतूनां प्रीणा-
मीत्येतैः प्रयाजानाꣳ हुतꣳ हुतमनुमन्त्रयतेऽग्निश्चक्षुष्माꣳ-
स्तस्याहं देवयज्यया चक्षुष्मान्भूयासमित्याग्नेयस्याऽऽ-
ज्यभागस्य सोमश्चक्षुष्माꣳस्तस्याहं देवयज्यया चक्षु-
ष्मान्भूयासमिति सौम्यस्याग्नीषोमयोरहमिति समस्ता-
नुमन्त्रणमेके समामनन्ति पञ्चहोतारं पुरस्ताद्धवि-
षामवदानानामुपरिष्टाद्वा व्याचक्षीताग्नेरहं देवयज्ययाऽ-
न्नादो भूयासमित्याग्नेयस्य दब्धिरसीत्युपाꣳशुयाजस्या-
ग्नीषोमयोरहमित्यग्नीषोमीयस्येन्द्राग्नियोरहमित्यैन्द्राग्नस्ये-
न्द्रस्याहमित्यैन्द्रस्य महेन्द्रस्याहमिति माहेन्द्रस्याग्नेः

---

* अत्र सर्वटिकापुस्तकेषु अत्रत्यमेकं पत्रं त्रुटितमित्येवोपलब्धम् । + धनुश्चिह्नान्तर्गतं टीकापु-
स्तकेषु नास्ति ।

स्विष्टकृतोऽहमिति स्विष्टकृतोऽग्निर्मा दुरिष्टात्पात्विति च सुरूपवर्षवर्ण एहीतीडामाह्रियमाणां प्रतीक्षते ॥ ७ ॥

इड एह्यदित एहि भूयस्येहि श्रेयस्येहि वसीयस्येहि चित्त एहि दधिष एहीत्युपाꣳशूपह्वते सप्त देवगवीर्जगति चिदसि मनासि वस्वी रन्ती रमतिः सूनरी सूनृतेत्युच्चैरुपह्वते सप्त मनुष्यगवीर्जगति विश्वा त्वं भूताऽनुप्राणिहि विश्वा त्वा भूताऽनुप्राणन्तु भूरस्यायुरसीष्टिरसि सुरूपवर्षवर्ण एहीमान्भद्रान्दुर्याꣳ अभ्येहि मामनुव्रतान्यु शीर्षाणि मृड्ढ्वꣳ सा नः प्रियासु प्रतूर्त्तिः प्रिया नः सुहृम्नः प्रियवती मघोनी जुष्ट एहि रन्त एहि रमत एहि सूनृत एहि सुहवाम एहि सह रायस्पोषेण देवीर्देवैरभि मा निवर्तध्वꣳ स्योना स्योनेन घृतेन मा समुक्षत नम एतदुपदं भिषगृषिर्ब्रह्मा यददौ समुद्रादुदश्चन्नित्र सुचावागग्रे विप्रस्य तिष्ठति शृङ्गेभिर्दशभिर्दिशन्नित्युच्चैरुपह्वते वायविडा ते मातेति होतारमीक्षमाणो वायुं मनसा ध्यायेदुपहूतोऽयं यजमान इत्युच्यमान उपहूतः पशुमानसानीति जपत्यस्मास्विन्द्र इन्द्रियं दधात्विति चेडाया अहं देवयज्यया पुष्टिमान्पशुमान्भूयासमिडे भागं जुषस्व नो जिन्व गा जिन्वार्वतस्तस्यास्ते भक्षिवाणः स्याम सर्वात्मानः सर्वगणाः । इडा धेनुः सहवत्सा न आगादूर्जं दुहाना पयसा प्रपीना । सा नो अन्नेन हविषोत गोभिरिडा जिन्वतां पयसाऽभ्यस्मानित्युपहूतामिडां व्याख्याता मार्जनी । )

मनो ज्योतिरिति मार्जनमन्त्रः ।

अग्न पिन्वस्व ददतो मे मा क्षायि कुर्वतो मे मोपदसदिशां क्लृप्तिरसि दिशो मे कल्पन्तां कल्पन्तां मे दिशो दैवीश्च मानुषीश्चाहोरात्रे मे कल्पेतामर्धमासा मे कल्पन्तां मासा मे कल्पन्तामृतवो मे कल्पन्ताꣳ संवत्सरो मे कल्पतां क्लृप्तिरसि कल्पतां म आशानां त्वाऽऽशापालेभ्यश्चतुर्भ्यो अमृतेभ्य इदं भूतस्याध्यक्षेभ्यो विधेम हविषा वयमिति प्रतिदिशं व्यूहति भजतां भागी भागं मा भागोभक्तनिरभागं भजा-

मोऽपस्पिन्वौषधीर्जिन्व द्विपात्पाहि चतुष्पादव दिवो वृष्टि-
मेरय ब्राह्मणानामिद१ हविः सोम्यानां१ सोमपीथिनां
निर्भक्तो ब्राह्मणो नेहाब्राह्मणस्यास्तीति च ॥ ८ ॥

अत्रापि जपति व्यू(व्यु)ह्येति ज्ञेयम् । अथवा विभज्योहति अभिमृश्य जपति । अन्यथा प्रत्येकं मन्त्रयोर्विनियोगः कथं स्यान्नहि व्यूढस्य पुनर्व्यूहनम् । अतः प्रत्येकं मन्त्रसाध्यं जपादृष्टं नान्यत् । एवं पूर्वमपीति चेति सर्वत्र तेन न सर्वैरेतदन्तैश्चतुर्धा-करणानि पूर्वादिदिक्क्रमेण प्रतिदिशं सारयति । किं तु व्यू (व्यु)ह्य स्पृशन्सकृन्मन्त्रं जपतीत्यर्थः ।

इदं ब्रह्मण इद१ होतुरिदमध्वर्योरिदमग्नीध इति चतुर्धा व्यादिशति ।

चतुर्धाकरणानि पूर्वादिदिक्कृतानि व्यूढान्यभिमृश्य व्यादिशतीति श्रुतेः । अध्व-र्युणा चतुर्धाकृतानि यजमानेन व्यूढानि स एवाभिमृश्याभिमर्शनपूर्वकं मन्त्राञ्जपन्वे-(पित्वे)त्यर्थः । हस्तेनाभिमृश्याऽऽदिशति निर्दिशति तत्तदृत्विक्संबन्धित्वेन निवेद-यति । ततस्तु संबन्धज्ञानजन्येन दृष्टेनैव प्रयोजनेन ज्ञानविषयाणां चतुर्धाकरणानां दृष्टः संस्कारो नह्यनिर्दिष्टानि तत्तत्तदृत्विक्संबन्धेनाज्ञा[ता]नि तैरादातुं शक्यानि ।

आग्नीध्रप्रथमान्व्यादेशानेके समामनन्ति ।

आग्नीध्रः प्रथमो येषु व्यादेशेषु ते तथा । इदमग्नीध इदं ब्रह्मण इति क्रमेणेत्यर्थः ।

इय१ स्थाल्यमृतस्य पूर्णा सहस्रधार उत्सो अक्षी-
यमाणः । स दाधार पृथिवीमन्तरिक्षं दिवं च
तेनौदनेनातितराणि मृत्युमित्यन्तर्वेद्यन्वाहार्यमा-
सन्नमभिमृशति प्रजापतेर्भागोऽसीति च ।

प्रथमे विकृतिषु यथार्थमूहो द्वितीये तु नोहः प्रजापतिभागमात्रत्वेन सर्वत्राभिधानं-संभवात् ।

दक्षिणसद्भ्य उपहर्तवा इत्युच्यमाने दक्षिणत एतेत्यृत्विजः संप्रेष्यति ।

अध्वर्युणोच्यमाने । ऋत्विग्ग्रहणान्न शमितुः प्रेषणं दक्षिणाभागश्च ।

ब्राह्मणा अयं व ओदन इति दक्षिणतः परिक्रा-
न्तेभ्यस्तं चतुर्धा व्युद्धृत्यै ददाति । एषा ते
अग्ने समित्तया वर्धस्व चाऽऽ च प्यायस्व । वर्धिषी-
महि च वयमा च प्यासिषीमहि । यं ते अग्न आव-

१ च. सादय॰ । २ क. ग. च. ठ. ण. ॰णेन द॰ । ३ क. ख. ग. घ. ट. ड. ण. ॰स्व पात्रेषु द॰ ।

श्चाम्यहं वाक्षिपितश्चरन् । प्रजां च तस्य मूलं च
नीचैर्देवा निवृश्चत । अग्ने यो नो भिदा सति
समानो यश्च निष्ट्यः । इध्मस्येव प्रक्षायतो मा त-
स्योच्छेषि किंचन । यो मां द्वेष्टि जातवेदो यं चाहं
द्वेष्मि यश्च माम् । सर्वा५स्तानग्ने संदह या५श्चाहं
द्वेष्मि ये च मामित्यनूयाजसमिधमाधीयमानाम् ।

अभिमन्त्रयत इति शेषः ।

वेदिर्बर्हिः शृत५ हविरिध्मः परिधयः स्रुचः । आज्यं
यज्ञ ऋचो यजुर्याज्याश्च वषट्काराः सं मे सन्न-
तयो नमन्तामिध्मसंनहने हुत इतीध्मसंनहने हुते ।

जपति ।

अङ्गिरसो माऽस्य यज्ञस्य प्रातरनुवाकैरह्नौषुरित्यनूयाजेषु जपति
सप्तहोतारं पुरस्तादनूयाजानामुपरिष्टाद्वा व्याचक्षीत बर्हिषोऽहं
देवयज्यया प्रजावान्भूयासमित्येतैरनूयाजाना५ हुत५ हुतमनु-
मन्त्रयते वाजस्य मा प्रसवेनेति द्वाभ्या५स्रुचौ व्यूह्यमाने ॥ ९ ॥

अभिमन्त्रयते ।

वसून्देवान्यज्ञेनापिप्रेय५ रुद्रान्देवान्यज्ञेनापिप्रेयमादित्यान्देवान्य-
ज्ञेनापिप्रेयमिति परिधीनज्यमानान्समङ्क्तां बर्हिर्हविषा घृतेन
समादित्यैर्वसुभिः सं मरुद्भिः । समिन्द्रेण विश्वेभिर्देवेभिरङ्क्तां
दिव्यं नभो गच्छतु यत्स्वाहेति स्रुक्षु प्रस्तरमज्यमानमपिप्रे-
व्यज्ञो यज्ञमयाड्देवा५ अरंकृतः सोमः । तं मित्रो वरुणो
अर्यमा रायस्पोषा यजमानं विशन्त्विति प्रस्तरस्य तृणमपात्तम् ।

अभिमन्त्रयते ।

अग्नेरहमुज्जितिमनूज्जेषमितिसूक्तवाकेन[1] होता[2] यां यां
दे[3]वतामभिव्याहरति तां तां यजमानोऽनुमन्त्रयते ।

तां तां यजमानः सन्ननुमन्त्रयते । तथाच यावत्य इष्टा देवतास्ताः सर्वा अपि
शाखान्तरीयपाठेनानुमन्त्रयते । तथाचाऽऽह भाष्यकारः—अग्नेरहमिति । यथालिङ्गं
देवता अनुमन्त्रयत इति लाघवेन वक्तव्ये यां यां देवतामभिव्याहरति तां तामिति

---

१ क. ख. ग. च. ट. ठ. ण. °ति यां । २ ङ. ढ. °के हो° । ३ क. ख. ग. घ. ट. ठ. ण. °वतां होताऽभि° ।

वचनं यस्या यस्या अस्ति होतुरभिव्याहरणं तस्यास्तस्या अनुमन्त्रणं यथा स्यादिति । तेनोपांशुयाजस्याऽऽज्यपानां चासत्यपि तैत्तिरीयकपाठे कार्यमनुमन्त्रणम् । पाठः शाखान्तरीयोऽनुमेयः । केचिदुपांशुयाजाज्यपानां तद्विकाराणां सवनदेवतानां च न कुर्वन्ति पाठाभावात् । तेषामाचार्यप्रयत्नानर्थक्यं स्यात् । ऐन्द्राग्नस्य निर्वापवदग्नीषोमीयस्य परिदानवत्तेषां शाखान्तरे पाठसद्भाव इति भगवतः सत्याषाढस्याभिप्रायः ।

यर्हि होता यजमानस्य नाम गृह्णीयात्तर्हि ब्रूयादेमा अग्मन्नाशिषो दोहकामा इति ।

यर्हि यदा तर्हि तदा ब्रह्मवर्चसं म आगम्यादित्यन्तः ।

सा मे सत्याऽऽशीर्देवेषु भूयान्मन्यान्मन्यतमाज्जुष्टाज्जुष्टतमा[१]दरेऽहता मनसा तच्छकेयं यज्ञो दिवꣳ रोहतु यज्ञो दिवं गच्छतु यो देवयानः पन्थास्तेन यज्ञो देवाꣳ अप्येत्वित्याशीःषु जपति ।

आशीःषु होत्राऽऽयुराशास्त इत्यादिषूच्यमानासु जपति ।

अदो म आगम्यादिति यत्कामयते तस्य नाम गृह्णाति ।

स्वर्गो माऽऽगम्यादित्यादिना यत्कामयते तस्य कामो यज्ञो माऽऽगम्याद्विष्णुभक्तिर्माऽऽगम्याद्ब्रह्मज्ञानं माऽऽगम्यादिति यद्रोचते तस्य नामानेन प्रकारेण गृह्णीयात् ।

रोहितेन त्वाऽग्निर्देवतां गमयत्वित्येतैः प्रस्तरमवसृष्टम् ।

आहवनीयेऽवसृष्टमनुमन्त्रयते त्रिभिः । इतः परमपि द्वितीयानिर्दिष्टं यदग्नौ प्रक्षिप्तं तर्हि तत्रानुमन्त्रयत इत्यनुषञ्जनीयमन्यत्र द्वितीयान्तेऽभिमन्त्रयत इति तथैव भरद्वाजोपदेशात् ।

दिवः खीलोऽवततः पृथिव्या अध्युत्थितः । तेनासहस्रकाण्डेन द्विषन्तं तापयामसि द्विषन्नस्ताप्यतां बहुमानागास्तप्योषधय इति प्रस्तरस्य तृणमनुप्रहृतम् ।

आहवनीये ।

विष्णोः शंयोरहमिति शंयुवाके ।

जपति । गमेयमित्यन्तः ।

वि ते मुञ्चामि रशना इति द्वाभ्यामग्निं परिधिषु प्रह्रियमाणेषु ।

आहवनीयमभिमन्त्रयते ।

इष्टो यज्ञो भृगुभिर्द्रविणोदा यतिभिराशीर्दा[२] वसुभिराशीर्वाꣳ[३] अथर्वभिः । तस्य मेष्टस्य वीतस्य द्रविणमागम्याद्वसुर्यज्ञो[४] वसुमा-

---

१ ख. च. ट. ठ. °सं माऽऽग° । २ क. ख. ग. ङ. च. ट. ठ. °ष्टाजुष्ट° । ३ क. ग. ङ. छ. ञ. ठ. ढ. ण. °मारे° । ४ क. ग. च. ट. ठ. ण. °दो माऽऽग° ।

न्यज्ञस्तस्य मा यज्ञस्य वसोर्वसुमतो वस्विहाऽऽगच्छत्वदो म आगच्छत्विति सश्स्नात्रभागान्यत्कामयते तस्य नाम गृह्णाति ।

संस्नावाननुमन्त्रयते । अन्यत्पूर्ववत् ।

वेदोऽसि वित्तिरसीतिवेदमन्तर्वेद्यासन्नमभिमृशति ।

आसन्नं कृत्वाऽभिमृशति ।

विदेयेत्यस्य पुरस्तादुपरिष्टाद्वा यत्र भ्रातृव्यस्याभिध्यायेत्तस्य नाम गृह्णीयात्तदेवास्य सर्वं वृङ्क्ते इति विज्ञायते ॥ १० ॥

इति सत्याषाढहिरण्यकेशिसूत्रे षष्ठे याजमानप्रश्ने तृतीयः पटलः ॥ ३ ॥

---

विदेयेति पदस्य पूर्वं पश्चाद्वा भ्रातृव्यस्य यद्यदभिध्यायेन्ममास्त्विति तस्य नाम गृह्णीयात्तात्मनो व्यावृत्तिं विदेयेति ज्ञेयम् । अर्थवादोऽन्यो विश्वासार्थः ।

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैजयन्त्यां षष्ठे याजमानप्रश्ने तृतीयः पटलः ॥ ३ ॥

---

अथ षष्ठप्रश्ने चतुर्थः पटलः ।

---

पत्नीसंयाजेषु सोमस्याहं देवयज्यया सुरेता रेतो धिषीयेति सोमस्य[1] त्वष्टुरहं देवयज्यया पशूनाꣳ रूपं पुषेयमिति त्वष्टुर्देवानां पत्नीनामहं देवयज्यया प्रजनिषीय प्रजया च पशुभिश्चेति देवपत्नी राकाया अहं देवयज्यया प्रजावान्भूयासमिति राकां सिनीवाल्या अहं देवयज्यया पशुमान्भूयासमिति सिनीवालीं कुह्वा अहं देवयज्यया पुष्टिमान्भूयासमिति कुहूमग्निर्गृहपतिर्यज्ञस्य प्रतिष्ठा तस्याहं देवयज्यया प्रतिष्ठावान्भूयासमित्यग्निं गृहपतिं देवानां पत्नीरग्निर्गृहपतिरिति समस्तानुमन्त्रणमेके समामनन्ति ।

यद्यत्र चत्वार एव पत्नीसंयाजास्तदा समस्तानुमन्त्रणम् । सौम्य(सोम)स्य त्वष्टुरित्युपयत्र हुतमिति ज्ञेयम् । अन्यत्र यद्यपि देवतास्तथाऽपि हुतमिति ।

---

१ क. ख. ग. च. ट. ठ. ण. सौम्यस्य ।

इडाऽस्मानुवस्तान्घृतेन यस्याः पदे पुनते
देवयन्तः । वैश्वानरी शक्करी वावृधा-
नोपयज्ञमस्थित वैश्वदेवीत्याऽप्येडाम् ।

अभिमन्त्रयते ।

या सरस्वती यशोभगीना तस्यै ते
स्वाहेति फलीकरणहोमे हूयमाने
मुखं विमृष्टे । या सरस्वती वेशभगीना
तस्यै ते स्वाहेति हुते मुखं विमृष्टे ।

हस्तेनानुलोमं मार्ष्टि । अग्नयेऽदब्धायवेऽशीततनव इदम् । विश्वेभ्यो देवेभ्य इदम् ।

वेदोऽसि वित्तिरसीति वेदꣳ होत्रा पत्न्यै प्रदीयमानम् ।

अभिमन्त्रयते होत्रा पत्न्यै प्रदीयमानम् । सनेयमित्यन्तः ।

वेदोऽसि वेदसे त्वा वेदो मे विन्देति वा ।

पूर्वस्य विकल्पार्थः ।

घृतवन्तं कुलायिनमिति वेदमुपस्थेऽस्यमानम् ।

पत्न्या उपस्थे क्षिप्यमाणं वेदमभिमन्त्रयते । वाजिनमित्यन्तः ।

वेदोऽसि वेदो म आहर तृप्तस्त्वं
तृप्तोऽहं प्रजया पशुभिर्भूयासमिति वा ।

गतम् ।

त्वया वेदिं विविदुः पृथिवीं त्वया यज्ञो जायते
विश्वदानिः । अच्छिद्रं यज्ञमन्वेषि विद्वान्त्वया
होता संतनोत्यर्धमासानिति वेदꣳ स्तीर्यमाणम् ।

होत्रा गार्हपत्यात् ।

अग्नेऽदब्धायो इति समिष्टयजुः ।

अनुमन्त्रयते । स्वाहान्तो मन्त्रः सकृदेव । समिष्टयजुर्नानात्वेऽप्यन्ते । वातायेदम् ।
अत्र नानादेवता पदानि श्रूयन्ते तथाऽप्युक्तमाध्वर्यवे तज्ज्ञेयम् ।

दिवः खीलोऽवततः पृथिव्या अध्युत्थितः तेना-
सहस्रकाण्डेन द्विषन्तꣳ शोचयामासि द्विषन्मे बहु
शोचत्वोषधे मो अहꣳ शुचमिति बर्हिरनुप्रहृतम् ।

अनुमन्त्रयते ।

---

१ घ. ङ. ढ. °प्रहृरियमाणम् ।

सं यज्ञपतिराशिषेति ॥ ११ ॥ यजमानभागं
प्राश्नाति शृतस्य दध्नश्च ब्राह्मणोऽश्नाति न
वैश्यराजन्याविदꣳ हविः प्रजननं मे अस्त्विति
शृतस्य दधिक्राव्णो अकारिषमिति दध्नः ।

स्पष्टम् ।

अन्तर्वेदि प्रणीतासु मार्जयते ।

उत्तरार्थमिदम् ।

अध्वर्युश्चास्मै संततां धारा स्रावयति सद-
सि सन्मे भूया इत्यानीयमानासु जपति ।

प्रणीतासु स्राव्यमाणास्वध्वर्युणा ।

प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तामिति
प्रतिदिशं व्युत्सिञ्चति समुद्रं वः प्रहिणोम्य-
क्षिताः स्वां योनिमपिगच्छत । अच्छिद्रः प्रजया
भूयासं मा परासेचिमत्पय इति शेषं निनयति ।

प्रणीताशेषं वेद्याम् ।

यदप्सु ते सरस्वति गोष्वश्वेषु यन्मधु । तेन मे
वाजिनीवति मुखमङ्ग्धि सरस्वतीति मुखं विमृष्टे ।

हस्तेन ।

अत्र यजमानभागप्राशनमेके समामनन्ति ।

स्पष्टमन्यत् ।

अत एवोपोत्थाय विष्णोः क्रमोऽसीति
चतुरो विष्णुक्रमान्क्रामति दक्षिणेन प्रक्रम्य
सव्येनानुप्रक्रामति न सव्येन दक्षिण-
मतिक्रामति नाऽऽहवनीयमतिक्रामत्युत्तर-
मुत्तरं ज्यायाꣳसं तिष्ठꣳश्चतुर्थं जपति ।

अतो यजमानायतनादेवोत्थाय नान्यत्र स्थितः । दक्षिणपादेनाग्रे प्रक्रम्य सव्येन तदनूत्तरमुत्तरं प्रक्रमणं ज्यायो दीर्घं त्रीण्येव चतुर्थे प्रक्रमणं नास्ति तृतीये प्रक्रमणे तिष्ठंश्चतुर्थं विष्णोः क्रमोऽसि शत्रूयत इति जपति ।

उद्यन्नद्य मित्रमहः सपत्नान्मे अनीनशः । दिवै-
नान्विद्युता जहि निम्रोचन्नधरान्कृधि । उद्यन्नद्य

विनो भज पिता पुत्रेभ्यो यथा । दीर्घायुत्वस्य हेशिषे तस्य नो देहि सूर्य । उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम् । हृद्रोगं मम सूर्य हरिमाणं च नाशय । शुकेषु मे हरिमाणꣳ रोपणाकासु दध्मसि । अथो हारिद्रवेषु मे हरिमाणं निदध्मसि । उदगादयमादित्यो विश्वेन सहसा सह । द्विषन्तं मम रन्धयन्मो अहं द्विषतो रधम् । यो नः शपादशपतो यश्च नः शपतः शपात् । उषाश्च तस्मै निम्रुक्च सर्वपापꣳ समूहताम् । यो नः सपत्नो यो रणो मर्तो भिदासति देवाः । इध्मस्येव प्रक्षायतो मा तस्योच्छेषि किंचनेति ॥१२॥ आदित्यमुपतिष्ठतेऽगन्म सुवः सुवरगन्मेति च ।

धेहीत्यन्तः ।

इदमहममुं भ्रातृव्यमाभ्यो दिग्भ्योऽस्यै दिव इति यं द्वेष्टि तस्य वधं मनसा ध्यायति ।

द्विष्म इत्यन्तः ।

यद्यभिचरेदिदमहममुष्याऽऽमुष्यायणस्य प्राणं निवेष्टयामीति दक्षिणपादस्य पार्ष्ण्या निवेष्टयति ।

अमुष्येति षष्ठ्यन्तं नाम शत्रोर्गृह्णाति । अमुष्यायणस्येति यस्यापत्यं तस्य तद्धितान्तम् । अयज्ञसंयुक्तमिदं न यज्ञाङ्गम् ।

ऐन्द्रीमावृतमन्वावर्त इति प्रदक्षिणमावर्तते पुण्या भवन्तु या लक्ष्मीः पराभवन्तु याः पापीरिति दक्षिणमꣳसमभिपर्यावर्तते ।

दक्षिणस्कन्धमभिलक्षीकृत्याऽऽवर्तते ।

तेजोऽसीत्याहवनीयमुपपर्यावर्तते ।

प्रसव्यमाहवनीयमुपाभिपर्यावर्तते ।

समहं प्रजयेत्युपतिष्ठते ।

आहवनीयम् । पोष इत्यन्तः ।

समिद्धो अग्न इत्युपसमिन्धे ।

दीद्यासमित्यन्तः ।

वसुमान्यज्ञ इत्युपतिष्ठते ।

भूयासमित्यन्तः ।

अग्ने वह्ने स्वदितुं नस्तनये पितुं पच । विभुः शं तोकाय तनुवे स्योन इति दक्षिणाग्निमुपतिष्ठतेऽग्न आयूꣳष्यग्ने पवस्वेत्याग्निपावमानीभ्यां गार्हपत्यमुपतिष्ठतेऽग्ने गृहपत इति च तामाशिषमाशासे तन्तवे ज्योतिष्मतीमित्यजातपुत्रो ब्रूयात् ।

ब्रूयादुच्चैरविद्यमानपुत्रः ।

तामाशिषमाशासेऽमुष्मै ज्योतिष्मतीमिति जातपुत्रः ।

विद्यमानपुत्रः ।

बहुपुत्रः सर्वेषां पुत्राणां नामान्यनुद्रुत्य ज्योतिष्मतीमित्यन्ततो वदति ।

तामाशिषमाशासेऽमुष्मा अमुकशर्मणेऽमुकशर्मणे ज्योतिष्मतीमिति ।

ज्योतिषे तन्तवे त्वाऽसावनु मा ज्योतिषा तन्वित्यन्तराऽग्नी निषीदति ।

ज्योतिषे तन्तवे त्वेत्युक्त्वा नाम गृह्णाति ज्येष्ठस्य संबुद्ध्याऽमुकशर्मन्निति ।

वेदतृणान्युपस्थ आधाय ये देवा यज्ञहन इत्यन्तर्वेद्यासीनोऽतीमोक्षाञ्जपति[1] ।

अतिमोक्षमन्त्रान् । उपस्थो दक्षिणं जानु सव्ये कृत्वा पादयोः पार्ष्ण्यौ व्यत्यासेन सक्थ्नोः समीपे नयेदेष उपस्थो गोमुखासनमिति प्रसिद्धं योगशास्त्रे ।

कस्त्वा युनक्ति स त्वा विमुञ्चत्विति यज्ञं विमुञ्चति सर्वमनुवीक्षतेऽग्ने व्रतपते व्रतमचारिषमित्येतैर्व्रतं विसृजते यज्ञो बभूव स आबभूवेति यज्ञस्य पुनरालम्भं जपति गोमाꣳ अग्नेऽविमाꣳ अश्वी यज्ञ इति प्राङुत्क्रम्य जपति ॥ १३ ॥

प्राचीं दिशमुत्क्रम्य ।

यज्ञ शं च ते यज्ञ नमो नमश्च ते यज्ञ शिवेन मे संतिष्ठस्व स्योनेन मे संतिष्ठस्व सुभूतेन मे संतिष्ठस्व ब्रह्मवर्चसेन मे संतिष्ठस्व यज्ञस्यर्धिमनु संतिष्ठस्वोप ते यज्ञ नम उप ते नम उप ते नम इति जपति ।

---

१ क. ख. ग. ङ. च. ट. ठ. ण. °नोऽतिमो° ।

स्पष्टम् ।

**तृप्तिरसि तृप्त मे पाप्मानमृतात्सत्यमुपागामप्सु श्रद्धेत्यप उपस्पृश्य यथेतं प्रतिनिष्क्रामति ।**

स्पष्टम् ।

**ब्राह्मणांस्तर्पयितवा इति संप्रेष्यति ।**

बहुवचनादधिकांस्तर्पयति भक्ष्यभोज्यादिपरिवेषणेन । अष्टौ दश वेति वैखानसः । तथा पशौ शतमिति । तर्पयतेति प्रैषोऽध्वर्युं प्रत्यन्यं पाकसंस्कर्तारं वा प्रति । आत्मानं प्रत्येवेति राद्धान्तः ।

**एवं विहितं प्रवसतोऽपि याजमानम् ।**

प्रवासगतस्यापि याजमानं भवत्येव ।

**यस्यामस्य दिश्यग्नयो भवन्ति तां दिशमभिमुखो मन्त्राञ्जपति ।**[1]

याजमानमन्त्रान् । स्पष्टम् ।

**अध्वर्युः कर्माणि करोति ।**

यद्यपि न यजमानस्य प्रतिनिधिस्तथाऽपि परार्थे ह्यस्त्येव प्रतिनिधिरतो यान्यन्यार्थानि तानि समन्त्राण्येव कुर्यादध्वर्युः । स्वामित्वप्रयुक्तसंस्कारेषु न प्रतिनिधिरित्येवमुपपादितम् । कर्तृत्वे त्वस्त्येव प्रतिनिधिरिति भावः ।

**अन्यान्यभिमर्शनात् ।**

अभिमर्शनं वेदेर्हविषां च तद्भिन्नाऽन्यानि, दर्शितमभिमर्शनं जपाङ्गमिति । यद्ययं करणमन्त्रः स्यात्तदाऽध्वर्योरेव समन्त्रं कर्म स्यात् । न मन्त्रो जपपूर्वभाव्यङ्गम् । अत एवाभिमृश्य जपतीत्येतद्बलेन व्याख्यातम् । जपस्य वेदिसंस्कारत्वात्तस्मादभिमर्शनस्याङ्गत्वं संस्कारकं जपं प्रत्येव संस्कारस्य यजमानार्थत्वान्नाभिमर्शनं परार्थं किं तु जपस्य पूर्वभाव्यङ्गं तदर्थं सदपि यजमानसंस्कार एव ।

तस्याङ्गभूतस्य लोपेऽपि प्रधानार्थान्मन्त्राञ्जपेदेवेत्याह—

**यजमानो मन्त्राञ्जपत्यन्यान्व्यादेशनात् ।**

व्यादेशनं चतुर्धाकरणानामिदं ब्रह्मण इत्यादि । तदभिमृश्यैवेदमित्यादिकमित्युक्तमेव । तत्राभिमर्शनसद्भावेऽपि तस्य व्यादेशनाङ्गता व्यादेशनं च परार्थमतोऽभिमर्शनमपि कृत्वाऽध्वर्युरेवेदमित्यादिशति करणमन्त्रत्वाभावेऽपि करणमन्त्रवदेव द्रव्यसंस्कारमन्त्राणामपि परार्थत्वादध्वर्युप्रतिनिधित्वमस्त्येव । तेन तान्न यजमानो जपतीत्यर्थः । ब्रध्न पिन्वस्वेत्यादिजपोऽपि व्यादेशनाङ्गं ब्राह्मणानामिदं हविरितिलिङ्गात् । ततस्तु व्यादेशनशब्देन तदङ्गमन्त्रजपो लक्ष्यते । सोऽप्यध्वर्युणैव कार्य इत्येवं नाऽऽशङ्कनीयं जपस्य साक्षाद्यजमानसंस्कारत्वात्तेनैव कार्यः । ओं निर्वपेत्यस्य स्थानेऽग्ने हविर्नि-

---

१ क. ख. ग. च. ट. ठ. ण. यस्यां दिश्यस्याग्न° ।

र्वप्स्यामीत्युक्तमेव । युष्मदर्थं प्रत्यादेशो दक्षिणत एतेति ब्राह्मणा अयं व ओदन इति चाध्वर्युरेव भूपते भुवनपत इति ब्रह्मवरणमध्वर्युणा समन्त्रं कार्यं न तत्र जप इत्यर्थः । ओं निर्वपेत्यपि । आदेशनमन्त्रादन्यान्मन्त्रानित्यर्थः । स्पष्टीकृतं भाष्यकृता—अध्वर्युणा कर्तव्यानि । तानि वक्ष्यामः । ब्रह्मवरणम् । अग्ने हविः । इदं ब्रह्मण इति व्यादेशनम् । दक्षिणत एत ब्राह्मणा अयं व ओदन इति दानमन्त्रः । ब्राह्मणाश्स्तर्पयितवा इति प्रैषश्च । आत्मानं प्रत्यपि परार्थत्वात् । अथामन्त्रकाण्यध्वर्युकर्तव्यानि । प्रस्तरधारणम् । इडारम्भः । इडाप्राशनम् । प्रतिदिशं व्यूहनं च । प्रणीतासु मार्जनं समिन्धनं च । अथ प्रवसता यजमानेन सर्वे मन्त्रा जपितव्याः प्रयोगक्रमेण । अध्वर्युकृतानि याजमानानि वर्जयित्वा । यथा ब्रह्मवरणम् । ओं निर्वपेत्यादि । अध्वर्युवर्ज्यानि । यजमान वाचं यच्छ । यजमान हविर्निर्वप्स्यामि । वर्षतु ते पर्जन्य इत्येतानि । एतयोरपि यजमानं स्मृत्वा जप इत्येव न्याय्यम्[1] । अन्या- न्व्यादेशनादित्यभिधानात्प्रतिदिशं व्यूहनमध्वर्युः । जपो याजमानं अग्नेति व्यादेशनं समन्त्रमेवेदं ब्रह्मण इत्यादिकमध्वर्योः । अन्यथा सूत्रविरोधः स्यात् ।

एवं विहितमिष्टिपशुबन्धानां याजमानम् ।

एवं विकृतेष्टिषु निरूढादिपशुबन्धेषु चेदमेव वैशेषिकं तत्र तत्रैवोक्तम् ।

यथाविकारमनुमन्त्रणाः ।

अग्नेरहं देवयज्ययेति यद्यपि देवतामात्रं श्रूयते तथाऽपि तस्य हुतस्यानुमन्त्रणमित्युक्तमेव । हविष एव विकारेणानुमन्त्रणमन्त्रा ज्ञेया नतु द्विदेवतस्य द्विदेवत एकदेवतस्यैकदेवत्य इति, इन्द्रस्य चेन्द्रियावीति किंतु हविःसामान्यात् । अनुमन्त्रणमन्त्रो यस्य हविषो विकारस्तस्य तस्य तेनाविकृतेनोहितेन वा ।

अपवादमाह—

इन्द्रस्य वैमृधस्याहं देवयज्ययाऽसपत्नो भूयास॰ सरस्वत्या अहं देवयज्यया वाचमन्नाद्यं पुषेयं पूष्णोऽहं देवयज्यया पुष्टिमान्पशुमान्भूयासमदित्या अहं देवयज्यया प्रजनिषीय प्रजया च पशुभिश्च द्यावापृथिव्योरहं देवयज्ययोभयोर्लोकयोर्ऋध्यासं भूमानं प्रतिष्ठां गमेयमर्यम्णोऽहं देवयज्यया स्वर्गं लोकं पुषेयं विश्वेषां देवानामहं देवयज्यया प्राणैः सायुज्यं गमेयमिन्द्रस्येन्द्रियावतोऽहं देवयज्ययेन्द्रियावी

[1] च. 'कृतीष्टि' ।

पशुमान्भूयासमिन्द्रस्य त्रातुरहं देवयज्यया त्रातो
भूयासमिति प्रत्यक्षाम्नाता अनुमन्त्रणाः ॥ १४ ॥
इति हिरण्यकेशिसूत्रे षष्ठे याजमानप्रश्ने चतुर्थः पटलः ॥ ४ ॥

---

एतेषु हविःषु प्रकृतितोऽतिदेशेन प्राप्ता अनुमन्त्रणमन्त्रास्तेषामनारभ्य प्रत्यक्षवचनैः प्राप्तैर्बाधः । एते मन्त्रा लिङ्गेन यत्र यत्र यस्य प्रतिपाद्या देवता तत्र हविषि पुरोडाशे चरावामिक्षायां वा प्राप्नुवन्ति । न तु विकारेष्वन्यदेवताकेषु तेषु दर्शपूर्णमासाभ्यामेवातिदेशात् । निरूपितमेतत् ।

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैजयन्त्यां षष्ठे याजमानप्रश्ने चतुर्थः पटलः ॥ ४ ॥

---

अथ षष्ठप्रश्ने पञ्चमः पटलः ।

---

अग्न्याधेयस्य याजमानं व्याख्यास्यामः ।

स्पष्टम् ।

पुरस्ताद्ब्राह्मौदनिकात्केशश्मश्रूणि वापयते नखानि निकृन्तते दतो धावते स्नात्यहतं वासः परिधत्ते ।

प्रथमब्रह्मौदनात्पूर्वं स्पष्टमन्यत् ।

ब्रह्मौदनं प्राशितवद्भ्यो वरं ददाति ।

वरोऽनाढ्यस्य गुञ्जाद्वयं सुवर्णमृत्विग्भ्यः ।

आहितासु समित्सु मिथुनावसिक्तरेतसौ ददाति ।

अभ्यज्याऽऽहितासु तेभ्य एव स्त्रीपुंसौ पूर्वमसिक्तमगतं रेतो ययोस्तादृशौ गावौ ददाति ।

न प्रयाति न प्रवसति ।

सगृहो न प्रयाति विना गृहेण प्रवासस्तमपि न करोति ।

नास्याग्निं गृहाद्धरन्ति ।

अस्य यजमानस्य गृहादन्ये नाग्निं नयन्ति ।

अन्यतश्च नाऽऽहरन्ति ।

तदीया अन्यतोऽपि नाऽऽनयन्ति । लौकिकाग्निप्रतिषेधोऽन्यस्य तु हरणं न प्राप्तमेव ।

शिल्पैरेताꣳ रात्रिं जागर्ति ।

एतां रात्रिं यस्यामश्वोदिते सूर्य आहवनीयमाधास्यन्भवति । शिल्पैर्वीणावेणुमृदङ्गादिभिर्निद्रामतिवाहयति ।

शल्कैरग्निमिन्धान उभौ लोकौ सनेम-
हम्। उभयोर्लोकयोर्ऋद्ध्वाऽतिमृत्युं तरा-
म्यहमिति शल्कैस्ता१ रात्रिमग्निमिन्धे ।

ब्राह्मौदनिकमग्निं शल्कैः काष्ठतक्षणैर्दीप्तं करोति। सकृन्मन्त्रस्तूष्णीमनन्तरं, रात्रि-मिति काळाध्वनोरत्यन्तसंयोग इति वचनात्संततम् ।

मही विश्पत्नी सदने ऋतस्यार्वाची एतं धरुणे रयी-णाम् । अन्तर्वत्नी जन्यं जातवेदसमध्वराणां जन-यथः पुरोगामीत्यरणी प्रदीयमाने प्रतीक्षत आरोहतं दशत१ शक्करीर्ममर्तेनाग्न आयुषा वर्चसा सह । ज्योग्जीवन्त उत्तरामुत्तरा१ समां दर्शमहं पूर्णमासं यज्ञं यथा यजा इति प्रतिगृह्णात्यृत्वियवती स्थो अग्निरेतसौ गर्भं धाथां ते वामहं ददे तत्सत्यं यद्वीरं बिभृथो वीरं जनयिष्यथः । ते मत्प्रातः प्रजन-यिष्येथे ते मा प्रजाते प्रजनयिष्यथः ।प्रजया पशुभि-र्ब्रह्मवर्चसेन सुवर्गे लोक इति प्रतिगृह्याभिमन्त्रयते ।

सकृदेव पूर्वे मन्त्राः ।

आत्मन्नग्निं गृह्णीते यथाऽध्वर्युरिदमहमनृतात्सत्य-मुपैमि सत्यान्मानुषमुपैमि मानुषाद्दैव्यमुपैमि दैवीं वाचं यच्छामीति वाचं यच्छति प्रजापतेस्त्वा प्राणेनाभि प्राणिमि पूष्णः पोषेण मह्यम् । दीर्घा-युत्वाय शतशारदाय शत१ शरद्भ्य आयुषे वर्चसे जीवात्वै पुण्यायेति जातमभिप्राणित्यहं त्वदस्मि मदसि त्वमेतन्ममासि योनिस्तव योनिरस्मि । ममैव सन्वह हव्यान्यग्ने पुत्रः पित्रे लोककृज्जात-वेद इति जातमभिमन्त्र्य वरं ददाति ।

जातमग्निमभि उपरि नासया श्वासं मुञ्चति ।

वाचं विसृजतेऽत्र क्षौमे वाससी परिदधाते यजमानः पत्नी च ।

परिदधाते इति द्विवचनेन याजमाने दंपत्योरेव ग्रहणे पुनर्निर्देशो यजमानद्वित्व-शङ्कानिवृत्त्यर्थः ।

ते अपवृत्तेऽग्न्याधेयेऽध्वर्यवे दत्तो याभ्यां याभ्यां व्याहृतिभिर्वा येन येन यथर्ष्याधानेन याभ्यां

याभ्याᳲ सार्पराज्ञीभ्यां येन येन च घर्मशिरसा दधाति सर्वत्र तेन तेनोपतिष्ठते ॥ १९ ॥

स्पष्टम् ।

सुगार्हपत्यो विदहन्नरातीरुषसः श्रेयसीः श्रेयसीर्दधत् । अग्ने सपत्नाᳲ अपबाधमानो रायस्पोषमिषमूर्जमस्मासु धेहीत्याहितं गार्हपत्यमुपतिष्ठत इमा उ मामुपतिष्ठन्तु राय आभिः प्रजाभिरिह संवसेय । इहो इडा तिष्ठतु विश्वरूपी मध्ये वसोर्दीदिहि जातवेद इति मध्यदेशे ह्रियमाणमभिमन्त्रयते समयार्धे वरं ददात्यानशे व्यानशे सर्वमायुर्व्यानश इत्याहितमाहवनीयमुपतिष्ठते।

समयार्धेऽर्धोदिते सूर्ये वरं ददाति ।

ये ते अग्ने शिवे तनुवौ विराट्च स्वराट्च ते मा विशतां ते मा जिन्वतां ये ते अग्ने शिवे तनुवौ सम्राट्चाभिभूश्च ते मा विशतां ते मा जिन्वतां ये ते अग्ने शिवे तनुवौ विभूश्च परिभूश्च ते मा विशतां ते मा जिन्वतां ये ते अग्ने शिवे तनुवौ प्रभ्वी च प्रभूतिश्च ते मा विशतां ते मा जिन्वतां यास्ते अग्ने शिवास्तनुवस्ताभिस्त्वा दध इति शिवाभिस्तनूभिराहितमाहवनीयमुपतिष्ठते स्निक्च स्नीहितिश्च स्निहितिश्च सदाम्नी चामतिश्चानाहुतिश्च निर्ऋतिरेतास्ते अग्ने घोरास्तनुवोऽमर्त्या मर्त्यस्तान्गच्छन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति पुरस्तात्पूर्णाहुतेर्घोराभिरुपतिष्ठते पूर्णाहुतौ वरं ददात्युपरिष्टात्पूर्णाहुतेः शिवाभिरुपस्थाय ।

ये ते अग्ने शिवे तनुवावित्याद्युक्ताभिः पुनः ।

विराजक्रमैरुपतिष्ठतेऽथर्वपितुं मे गोपायास्मं प्राणेन संमितम् । त्वया गुप्ता इषमूर्जं मदन्तः शतं जीवेम शरदः सवीरा इति दक्षिणाग्निं नर्य प्रजां मे गोपाय मूलं लोकस्य संततिम् । आत्मनो

हृदयाभिर्मितां तां ते परिददाम्यहमिति गार्ह-
पत्य१ शश्स्य पशून्मे गोपाय विश्वरूपं धनं वसु ।
गृहाणां पुष्टिमानन्दं ता१स्ते परिददाम्यहमित्याह-
वनीय१ समथसभां मे गोपायेन्द्रियं भूतिवर्धनम् ।
विश्वजनस्य छायां तां ते परिद्दाम्यहमिति स मथ
सभां मे गोपाय ये च सभ्याः सभासदः । तानि-
न्द्रियावतः कुरु सर्वमायुरुपासतामिति सभ्यमहे
बुध्निय मन्त्रं मे गोपाय श्रियं च यशसा सह । अहये
बुध्नियाय मन्त्रं श्रियै यशः परिददाम्यहमित्याव-
सथ्यं पञ्चधाऽग्नीन्व्यक्रामद्विराट्सृष्टा प्रजापतेः ।
ऊर्ध्वारोहद्रोहिणी योनिरग्नेः प्रतिष्ठितिरिति सर्वान् ।

अग्नीन्सकृत् । स्वशाखाविराजक्रमाणामेतैर्विकल्पः ।

यत्रास्मै ॥ १६ ॥ शतमक्षान्प्रयच्छति तेषु कृतं
विजित्य सभासद्भ्यः प्रयच्छति ते यज्जयन्ति
तदुभयमन्न१ सं१स्कृत्य ब्राह्मणान्भोजयति ।

व्याख्यातमेतदाधान एव ।

आग्नेयस्य दक्षिणाकालेऽजं पूर्णपात्रमुपबर्हण१
सार्वसूत्रमश्व१ रथं वासः पङ्क्ता द्वादश चतुर्वि१-
शतिरपरिमिता वर्धमाना ददाति तासां धेनुरन-
ड्वान्मिथुनौ चाऽऽदिष्टरूपाण्यजं पूर्णपात्रमुपबर्हणं
चाग्नीधे ददात्यश्वं ब्रह्मणे धेनु१ होत्रे गार्हप-
त्यदेशेऽनड्वाहमाहवनीयदेशेऽध्वर्यवे शेषः साधा-
रणस्त्रि१शन्माने पूर्वयोः पवमानेहविषोर्हिरण्ये द-
क्षिणां ददाति चत्वारि१शन्मानमुत्तमे धेनुमादित्ये।

व्याख्यातमेतदाधनान्त एव ।

आधानप्रभृति यावज्जीवं नानृतं वदेत् ।

अत्र भाष्यकारः शब्दानृतमर्थानृतं च शब्दानृते सारस्वतीष्टिर्भगवता पतञ्जलि-
नोक्ता । अर्थानृते व्रातपत्येव । आचमनव्याहृतिजपविष्णुस्मरणानि सर्वत्र समुच्ची-
यन्ते च ।

---

१ घ. ङ. ञ. °नगोर्हि° ।

नास्य ब्राह्मणोऽनाश्वान्गृहे वसेत् ।

अकृतभोजनो ब्राह्मणोऽस्याऽऽहिताग्नेर्गृहे न वसेदिति यथा स्यात्तथाऽऽहिताग्निः कुर्यात्तस्यैव व्रतं यावज्जीवमित्यनुवर्तते न ब्राह्मणस्य । तस्माद्वसत्यर्थं ब्राह्मण आगते तस्य सत्यां भोजनेच्छायामन्नं दद्यादेव तदभावेऽन्यत्क्षुन्निवारकं दद्यात्तदसंभवे तु भाष्यकारेणोक्तं व्याहृतिजपो ब्राह्मणभोजनं चेति वाधूल इति ।

सूर्योढमतिथिं वसत्यै नापरुन्ध्यात् ।

अस्तमितसूर्यमतिथिं पूर्वं यस्य स्थितिर्नास्ति सोऽतिथिः । कश्चनापि यदि वासार्थं प्राप्तोऽस्यापरोधं निवारणं न कार्यं निवासार्थं स्थलं यथायोग्यं दातव्यमेवेत्यर्थः । अत्रापि वाधूलोक्तमेवाकरणे प्रायश्चित्तम् ।

न नक्तमन्यत्रान्नाद्दद्यात् ।

अन्नादन्यन्नक्तं रात्रौ न दद्यात् । हिरण्यधान्यादि गवादि च न रात्रौ दद्यात्परस्वत्वापादनं न कुर्यात् । ग्रहोपरागादौ पुण्यकाले रात्रौ संकल्प्य श्वोभूते पात्रसात्कुर्यादिति गम्यते । केचित्तु दानमात्रस्यापि प्रतिषेधं व्याचक्षते । अत्राग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेद्य आहिताग्निः सन्नव्रत्यमिव चरेदेतदेव प्रायश्चित्तमुक्तमापदि स्वाहुतिरिति ।

अन्नं रात्रौ देयमित्युक्तं तत्राप्याह—

अन्नं ददन्नक्तमदयीत ।

दीयमानमप्यन्नं नक्तं गृह एवादयीत भोजयेत् । न बहिर्नेतुं दद्यात् । अदयीतेति पाठोऽनेकसूत्रगतो व्याख्यातो मया भाष्यकृता तु न दयीतेति पाठो व्याकृतः । दय दाने परस्वत्वापादनं दानं तेन लक्षितं गृहाद्बहिर्नयनं तन्न कुर्यादित्यभिप्रायेण व्याख्यातं स एवार्थो यस्त्वदयीतेति पाठोक्तः ।

नर्बीषपक्वस्याश्नीयात् ।

गर्तादौ स्थापितं फलादिकमुपरिष्टाद्व्यवधानेनाग्निना पक्वं यत्तदर्बीषपक्वं तन्नाश्नीयादित्येके व्याचक्षते । निरुक्ताभिप्रायेणान्ये व्याचक्षते । निरुक्ते हि पृथिवीवचनो निरुक्त ऋब्बीषशब्दः षकारोपधोऽयं तैत्तिरीयसूत्रकारैः पठ्यते । कात्यायनेन तु सकारोपधस्तत्रोभयोरपि पृथिव्येव वाच्या तया पक्वस्तद्गतेनाग्निनोष्मणेति यावत्तथा च योऽयमृबीसः पृथिव्यामग्निरिति, भाष्यकारेण तु पाठ ऋजीषपक्वस्येत्युपलभ्यो व्याख्यात ऋजीषमुद्धृतसारं तक्रपिण्यादि तन्नाश्नीयादिति । ऋबीषमित्ययं पाठस्तैत्तिरीयकसूत्रेषु सर्वत्रास्मत्सूत्रे च दृश्यते युक्तश्च । नहि किंचिदृजीषेण पच्यते तेनापि कर्मधारय ऋजीषशब्दात्पक्वशब्दस्य पूर्वनिपातः स्यात्तस्मादर्बीषमित्येवायं पाठश्च ।

या अन्तर्नाव्या आपस्तासां नाश्नीयात् ।

नावि नौकायामन्तर्भवाः स्थापिता वा पतिता वा छिद्रैः प्रविष्टा वा तासां प्राशनं न कुर्यात् । पात्रान्तरव्यवधानस्थितानां न दोषः । आपस्तम्बोऽन्तर्नाव्यपां नाश्नीयादित्याह । नावि स्थित्वेति चार्थः संभवति । अतो नाव्यानामपां नाश्नीयादन्तश्चापां नाश्नीयादर्थान्नाव्यन्तरपि किमप्युदकं न प्राश्नीयादित्यर्थः ।

रजतꣳ हिरण्यं बर्हिषि न दद्यात् ।

यत्र हिरण्यं देयत्वेनोक्तं गवादिप्रत्याम्नायत्वेन वा प्राप्तं तत्र रजतं न देयं किंतु सुवर्णाद्येवेत्यर्थः । बर्हिषि यज्ञे श्रौते कर्मणीति यावत् ।

छिन्नं दारु नाभ्यादध्यादभ्यादध्याद्वा ।

अग्नाविति शेषः । छिन्नमुदकेन । अभ्यादध्याच्च तदन्यस्यालाभ इति व्याख्येयमन्यथा सूत्रद्वयमनर्थकमेव स्यात् ।

स्वकृत इरिणे प्रदरे वा नावस्येत् ।

स्वभावोखरे देशे नावस्येदवसानमवस्थानं न कुर्यात् । प्रदरो भूमिगर्तस्तत्रापि ।

हिंकृत्य वाग्यतः स्त्रियं संभवेत् ।

हिमिति कृत्वा पश्चात्स्त्रियं गच्छेत् ।

व्याहरेद्वा ।

न व्याहरेद्वेत्यर्थः ।

नैतस्मिन्संवत्सरे पशुनाऽनिष्ट्वाऽनादिष्टो माꣳसं भक्षयेत् ।

रागतः प्राप्ते मांसभक्षणे निरूढेनाङ्गपशुना वाऽनिष्ट्वा नैतस्मिन्संवत्सरे मांसं भक्षयेत् । आदिष्टो भक्षयेदपि ।

यदि भक्षयेन्मनसाऽग्निभ्यः प्रहिणोमि भक्षं मम वाचा तं सह भक्षयन्तु । अप्रमाद्यन्नप्रमत्तश्चरामि शिवेन मनसा सह भक्षयतेत्युक्त्वाऽऽदिष्टो भक्षयति ।

ब्राह्मणैरादिष्टो भक्षयेदनिष्ट्वाऽपि पशुना ।

द्वादशरात्रमजस्रेष्वग्निष्वाज्येन स्वयमग्निहोत्रं जुहोति ।

रात्रिशब्दोऽहोरात्रे प्रयुज्यते । अत्राऽऽरम्भविधिस्त्वाध्वर्यव एवोक्तस्तथा कृत्वाऽऽरम्भप्रभृति द्वादशरात्रं सायंप्रातश्चतुर्विंशतिहोमानाज्येन स्वयमग्निहोत्रं जुहोति । अजस्रता तु विधेया द्वादश दिनानि ।

व्रतमाह—

अहतं वासो वस्ते ।

द्वादशरात्रमहतमप्रच्छिन्नाग्रमरजकधौतमहतम् ।

काममन्यो जुहुयात् ।

स्वयमित्यस्य विकल्पः ।

व्रतचारी त्वेव स्यात् ।

न मांसमश्नीयान्न स्त्रियमुपेयादित्यर्थः ।

स्वयं त्रयोदशीं जुहोति ।

स्वयमेवेत्यर्थः । त्रयोदशीं रात्रिं पयसेति यावत् ।

यां प्रथमा[1]मग्निहोत्राय दुहन्ति साऽग्निहोत्रस्य दक्षिणा ।

त्रयोदश्यामाग्निहोत्राय यां गां दुहन्ति तां गां दद्यात् । पूर्वं यद्यन्यो जुहुयात्तस्मै । अथवाऽऽरम्भेऽग्निहोत्रस्य वाऽध्वर्युस्तस्मै । भाष्ये तु आधानादूर्ध्वं द्वादशाहमाश्वपदिकधारणमिति बौधायनाश्वलायनयोरिष्टम् । द्वादशाहमाश्वपदिकमाग्निं धारयेदिति श्रुतेः । केचित्पवमानेष्टेः परं द्वादशाहमिति व्याचक्षते तदन्तत्वादग्निसिद्धेः । शाट्यायनके द्वादशाहधारणं स्वयंहोमाज्यहोमाश्च श्रुता इति सत्याषाढेनाऽऽचार्येण होमः प्रधानमेवोपदिष्टम् । अतोऽग्निहोत्रोपक्रमात्परमिति । मध्येऽन्वारम्भणीयाप्राप्तौ तेष्वेवाग्निषु[2] कार्या पौर्णमासी च । केचित्तु यत्र द्वादशाहावकाशस्तत्र धारणमेव । यत्राल्पोऽवकाशो नक्षत्राधानादौ तत्राऽऽरम्भणीयायां न धारणम् । पौर्णमास्याधानेऽवकाशाभावान्न धारणमिति वर्णयन्ति । तदयुक्तम् । संकोचे कारणाभावात् । स्यादेतत् । सेष्टपवृज्येति वचनं संकोचकमिति । न तस्य सांवत्सरादिकल्पव्यावृत्तिपरत्वात् । सोमाधानेनाजस्रा इति भारद्वाजः । अस्माकमजस्रधारणस्य होमप्रधानत्वादुदवसानीयायां तदूर्ध्वं द्वादशाहधारणम् । आश्वपदिक एव होमा इतरेषामजस्रत्वादजस्र इति वक्तव्ये बहुवचननिर्देशस्य प्रयोजनं पद्‌होमसमारोपणनिषेधो होमप्रधानत्वादेव । द्वितीयाधाने नाजस्रादिधर्माः । प्रोषिते यजमाने सर्वप्रायश्चित्तं कृत्वाऽजस्रेष्वेवाऽऽज्यहोमः कर्तव्यः । द्वादशाहात्परं प्रणयनं च । केचित्प्रत्यागते व्रातभू[3]तिं चेच्छन्ति । तेषां तदहः प्रायश्चित्तं त्रयोदश्यां प्रातर्हुत्वाऽग्नित्यागः । अहा० स्ते । काम० होति । अत्राप्यजस्रत्वमाज्यहोमश्च । यां प्र० क्षिणा । अध्वर्यवे देया प्रथममिति वचनात् । प्रथमहोमः पयसा । ततः परमाज्येन । अथवा द्वादशाहादूर्ध्वं यः सायंहोमः स पयसा प्राथम्यस्यापेक्षितत्वात् । मिथु०दाति । अग्निहोत्रदर्शपूर्णमासयोर्यथाकालप्रारम्भे पवमानेष्टि-

---

१ क. ग. च. ट. ढ. माग्नि° । २ च. °नेषु ना° । ३ ख. ठ. °भूतं चे° ।

रिति वाधूलः । अनन्तरे मुख्यकाल एवाऽऽरम्भः । उभा०दक्षिणा । परिवा०ब्राह्मणम् । अनड्वान्दक्षिणेति श्रुत्यन्तरमिति भाष्यग्रन्थः ।

मिथुनौ गावावन्वारम्भणीयायां ददात्युभयीः पुनराधेय अग्न्याधेयिकीर्दत्त्वा पौनराधेयिकीर्ददाति पुनर्निष्कृतो रथः पुनरुत्स्यूतं वासः पुनरुत्सृष्टोऽनड्वाञ्शतमानं च हिरण्यं पुनराधेयस्य दक्षिणाऽपि वा पौनराधेयिकीरेव दद्यादिति पैङ्ग्यब्राह्मणम् ॥ १७ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे षष्ठप्रश्ने पञ्चमः पटलः ॥ ५ ॥

---

पुनरित्यादि बौधायनेन व्याख्यातम् । पुनर्निष्कृतो रथो दक्षिणेति पुनःसंस्कृत एषां भवति पुनरुत्स्यूतं वासः पुनःसंस्कृतमेव तत् । पुनरुत्सृष्टोऽनड्वानित्यवशीर्ण एवैष उक्तो भवति । अत्राऽऽहानुग्रहमापस्तम्बः-यदीतराणि न विद्येरन्नप्यनड्वाहमेव प्रदद्यादनड्वुहि ह वा एते कामा अतश्च भूयांस इति पैङ्गायनिब्राह्मणमितीति ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैजयन्त्यां षष्ठे याजमानप्रश्ने पञ्चमः पटलः ॥ ५ ॥

---

अथ षष्ठप्रश्ने षष्ठः पटलः ।

---

अग्न्याधेयः समाप्तः ।

अग्निहोत्रस्य याजमानं व्याख्यास्यामः स्वयमिध्ममाहरन् ।

अन्येनाऽऽहृतमपि विहारं प्रत्यानयति स्वयमेव ।

विश्वदानीमाभरन्तोऽनातुरेण मनसा । अग्ने मा ते प्रतिवेशा रिषामेति विहारमभ्येति ।

स्पष्टम् ।

यदग्ने यानि कानि चेति प्रतिमन्त्रमाहवनीये वर्षिष्ठमिध्ममादधाति ।

आहवनीये वर्षिष्ठमन्येषु ततोऽल्पीयांसमल्पीयांसमिध्ममादधाति प्रत्यृचमेकैकस्मिन् ।

उद्धरेत्युद्ध्रियमाणमभिमन्त्रयते[3] ।

स्वयंहोमेऽनुमन्त्रणमन्यं प्रति प्रैषः प्रेषित उद्धरतीत्याध्वर्यव उक्तत्वात् । अत्रोद्धर-

---

१ घ. एष । २ क. ख. ग. ङ. झ. ञ. ट. ट. 'छमा' । ३ क. ख. ग. ट. ठ. ण. °मनुम° ।

णानन्तरमिध्माधाने वक्तव्ये द्वादशरात्रमजस्रेष्वग्निहोत्रं जुहोतीति विधानमेव पूर्वमुक्तं [तेन] त्रयोदशीमारभ्योद्धृत्य आधानमिध्माधानमर्थात्सिध्यतीति दर्शितम् ।

उद्धरणप्रभृति नाश्नीयादाहोमाद्विद्युदसीत्यप उपस्पृश्यापरेणाऽऽहवनीयं दक्षिणाऽतिक्रम्य दक्षिणत उपविशति पत्नी पत्न्या लोक इडाऽसि व्रतभृदहं नावुभयोर्व्रतं चरिष्याम्यादित्य व्रतभृदहं नावुभयोर्व्रतं चरिष्यामि सुरूपेऽहं नावुभयोर्व्रतं चरिष्यामीड एहि मयि श्रयस्वेति यदग्निहोत्र्या व्रतं तदात्मन्कुरुते ।

अग्निहोत्र्यां गवि व्रतं तृणपर्णादि भु(उ)क्तं तदात्मनि भावयेत् ।

श्रद्ध एहि सत्येन त्वाऽऽह्वयामीत्याहूयमानामिषमासि तस्यास्तेऽग्निर्वत्सः सा मे स्वर्गं च लोकमुभयं च धुक्ष्वेति दुह्यमानामोमुन्नेष्याम्युन्नयामीति वोच्यमाने हविर्देवानामसि मृत्योर्मेऽभय१ स्वस्ति मेऽस्त्वभयं मे अस्त्वित्युपांशूक्त्वोमुन्नयेत्युच्चैः प्रत्याहोन्नीयमाने तिष्ठति न चंक्रम्यते वाचं यच्छत्याहोमादुन्नीत उपविशति ।

अग्नय इ० ओषधीभ्य इ० प्रजापतय इ० प्रातः सूर्यायेदं० ।

उत्तरामाहुतिमुपोत्थाय कत्रातिर्यङ्ङिव ।

ईषत्प्राङ्मुख आहवनीयाभिमुखश्चेषत्कत्रातिर्यङ्ङिव ।

आहवनीयमुपतिष्ठते सर्वैरुपस्थानैः ।

यावन्त्युपस्थानानि वैकल्पिकानि तैः सर्वैरनादेश आहवनीयमेव । उत्तरामाहुतिमित्यविशेषविधानादुभयकालमप्यनादेशे ।

उपप्रयन्तो अध्वरमिति षड्भिस्तासामग्नीषोमीयया पूर्वपक्ष उपतिष्ठेतैन्द्राग्न्याऽपरपक्षे ।

तासां मध्येऽयं ते योनिरित्येतस्याः पूर्वमग्नीषोमीया यथापाठमैन्द्राग्न्या ।

अग्नीषोमाविम२ सुम इत्यग्नीषोमीयोभा वामिन्द्राग्नी इत्यैन्द्राग्नी तयोः ।

तयोर्मध्ये पूर्वमुक्तयोरग्नीषोमीययैन्द्राग्न्येति अयं ते योनिरिति षष्ठोपस्थायेत्यर्थः ।

---

१ ख च. झ. ञ. ठ. ड. पत्ना। २ क. ग. ङ. च. झ. ञ. ट. ठ. ड. 'ति चोच्य' ।

परस्ताद्विहव्यस्याऽऽदितश्चतसृभिरुपतिष्ठते ।

ममाग्न इत्येताभिरभिवोचता म इत्यन्ताभिः ।

तासामुपरिष्टादग्न आयूꣳषि पवस इति षड्भिराग्निपावमानीभिः ।

आहवनीयमेव । एताभिरेव पुनः संवत्सरे ।

संवत्सरे गार्हपत्यमुपतिष्ठत आयुर्दा अग्नेऽस्यायुर्मे देहीति चतुर्भिराहवनीयं चित्रावसो स्वस्ति ते पारमशीयेति द्विरावर्तयत्यसौ स्वस्ति तेऽस्त्वसौ स्वस्ति तेऽस्त्विति सर्वेषां पुत्राणां नामानि गृह्णाति द्विर्द्विरेकैकस्य ।

यज्ञशर्मन्स्वस्ति तेऽस्तु द्विः ।

अग्नेः समिदस्यभिशस्त्या मा पाहि सोमस्य समिदसि परस्या म एहि यमस्य समिदसि मृत्योर्मा पाहीत्येतैस्तिस्रः समिध आदध्यादिन्धानास्त्वा शतꣳ हिमा इति चतुर्थीम् ।

प्रत्यग्नि ।

वयꣳ सोम व्रते तव मनस्तनूषु बिभ्रतः । प्रजावन्तो अशीमहीति मुखं विमृष्टे सं त्वमग्ने सूर्यस्य वर्चसा गथा इति च ।

पुनः ।

संपश्यामि प्रजा अहमिति ॥ १८ ॥ मनुष्यानुपतिष्ठतेऽम्भस्थाम्भो वो भक्षीयेति पशून्रेवती रमध्वमित्यन्तराऽग्नी तिष्ठञ्जपति सꣳहिताऽसि विश्वरूपीरिति गामालभते वत्सं वोप त्वाऽग्ने दिवे दिव इति षड्भिर्गायत्रीभिर्द्विपदाभिर्गार्हपत्यमुपतिष्ठत ऊर्जा वः पश्याम्यूर्जा मा पश्यतेति गोष्ठं भुवनमसि सहस्रपोषं पुषिसहस्रपोषस्येशिषे तस्यास्ते भूयिष्ठभाजो भूयास्मेति पुनरेव गामालभते वत्सं वा महित्रीणामवोऽस्तु द्युक्षं मित्रस्यार्यम्णः[२] दुराधर्षं वरुणस्य । नहि तेषाममा चन नाध्वसु वारणेषु । ईशे रिपुरघशꣳसः । ते हि पुत्रासो अदितेः शर्म यच्छन्त्यजस्रम् । प्रदाशुषे वार्याणीति माहित्रेण तृचेनोपतिष्ठते

१ च. इत्यादिभि° । २ घ. ङ. ट. ड. °णोऽवा । ई° ।

तत्सवितुर्वरेण्यमिति सावित्र्या सोमानꣳ स्वरणमित्येषा सोमानꣳ स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजः । यो रेवान्यो अमीवहा वसुवित्पुष्टिवर्धनः । स नः सिषक्तु यस्तुरः । मा नः शꣳसो अररुषो धूर्तिः प्रणङ्मर्त्यस्य । रक्षा णो ब्रह्मणस्पत इति ब्राह्मणस्पत्याभिरुपतिष्ठते कदाचन स्तरीरसि कदाचन प्रयुच्छसीति द्वे परि त्वाऽग्ने पुरं वयमित्येषा परि ते दूढभो रथोऽस्माꣳ अश्नोतु विश्वतः । येन रक्षसि दाशुष इति पर्यावर्त्यान्तत उपतिष्ठते ।

पर्यावर्त्य परि त्वाऽग्न इति पूर्वपठितया विपरीत इत्यस्या अनन्तरमुपतिष्ठेत तथा शाखान्तरे पाठात् ।

यथादर्शिते पाठेऽपि प्रमाणमाह—

दूढभवतीमुत्तमामेके समामनन्ति निबृदोऽसि न्यहं तं मृधासं योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति पुरस्तात्प्रपदेनावगृह्णीयाद्यदि श्रेयसा स्पर्धेत प्रभूरसि प्राहं तमभिभूयासं योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति दक्षिणतः पदोऽवगृह्णीयाद्यदि सदृशेन स्पर्धेताभिभूरस्यभ्यहं तमभिभूयासं योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति पश्चात्पाष्र्ण्याऽवगृह्णीयाद्यदि पापीयसा स्पर्धेत ॥ १९ ॥ पूषा मा पशुपाः पातु पूषा मा पथिपाः पातु पूषा माऽधिपाः पातु पूषा माऽधिपतिः पात्विति जपित्वा प्राची दिगग्निर्देवता यो मैतस्यै दिशो भिदासादग्निꣳ स ऋच्छत्वग्निर्मे तस्यै दिशो गोपायतु दक्षिणा दिगिन्द्रो देवता यो मैतस्यै दिशो भिदासादिन्द्रꣳ स ऋच्छत्विन्द्रो मे तस्यै दिशो गोपायतु प्रतीची दिङ्मरुतो देवता यो मैतस्यै दिशो भिदासान्मरुतः स ऋच्छतु मरुतो मे तस्यै दिशो गोपायन्तु उदीची दिङ्मित्रावरुणौ देवता यो मैतस्यै दिशो भिदासान्मित्रावरुणौ स ऋच्छतु मित्रावरुणौ मे तस्यै दिशो गोपायेताम् । ऊर्ध्वा दिग्बृहस्पतिर्देवता यो मैतस्यै दिशो भिदासाद्बृहस्पतिꣳ स ऋच्छतु बृहस्पतिर्मे तस्यै दिशो गोपायतु । इयं दिगदितिर्देवता यो मैतस्यै दिशो भिदासाददितिꣳ स ऋच्छत्वदितिर्मे तस्यै दिशो गोपाय-

त्विति दिश उपस्थाय धर्मो मा धर्मिणः पातु विधर्मो मा विधर्मिणः पात्वायुश्च मायुश्च चक्षुश्च विचक्षुश्च प्राणश्चापानश्च माश्वावाश्वोरुग उरुगोऽर्कस्य ते वयं वाचा संभक्तेन गमेम ह्यच्छिन्नो दैव्यस्तन्तुर्मा मनुष्यश्छेदि दिव्याद्धाम्नो मा छित्सि मामायुषा ज्योतिषे तन्तवे त्वाऽसावनु मा ज्योतिषा तन्विल्यन्तराऽग्नी तिष्ठन्नपत्यग्न आयुःष्यग्ने पवस्वेत्याग्निपावमानीभ्यां गार्हपत्यमुपतिष्ठतेऽग्ने गृहपत इति च तामाशिषमाशासे तन्तवे ज्योतिष्मतीमित्यजातपुत्रो ब्रूयात्तामाशिषमाशासेऽमुष्मै ज्योतिष्मतीमिति जातपुत्रो बहुपुत्रः सर्वेषां पुत्राणां नामान्यनुद्रुत्य ज्योतिष्मतीमित्यन्ततो वदति सायꣳसायमुपतिष्ठते॥२०॥

उत्थाय। उत्तरस्या आहुत्याः समीपेऽनन्तरमेवोत्थाय स्वयं होमे प्राक्प्राशनात्। उपप्रयन्त इति षड्चस्तैत्तिरीयके समाम्नाताः। पैङ्गके तासां याऽग्नीषोमीया तां पञ्चमीं कृत्वा षड्भिः पूर्वपक्ष उपतिष्ठते। ऐन्द्राग्नीं पञ्चमीं कृत्वा यथापाठं षड्भिरपरपक्षे यं त इत्यस्याः पुरस्ताद्विहव्यस्य ममाग्न इत्यादिसश्चतसृभिरुपतिष्ठते। तासां विहव्यानामुपरिष्टादग्न आयूꣳषि पवस इति षड्भिः प्रथमे गार्हपत्यमुपस्थाय संवत्सरे संवत्सरे ताभिरुपतिष्ठते नान्तराले। केचिदाहुः षड्भिरुत्तराभिरितिश्रुतेर्नित्यत्वाद्द्वादशभिरुपस्थानं नित्यं संवत्सरान्त आवृत्तिरिति, तत्र युक्तं ग्राह्यम्। संवत्सर आग्निपावमानीभिरुपस्थानस्य नियतत्वात्तस्य च पूर्वाभिः संबन्धात्संवत्सरे संवत्सरे नियतं महोपस्थानं सर्वस्मिन्पक्षे कार्यम्। तत आयुर्दा वर्चोदास्तनूपा अग्न इति चतुर्भिराहवनीयमुपतिष्ठते। चतुर्थे मन्त्रे च यच्चित्रावसो स्वस्ति ते पारमशीयेति तद्द्विरावर्तयति। तदनन्तरं देवदत्तशर्मन्स्वस्ति तेऽस्तु यज्ञदत्तशर्मन् स्वस्ति तेऽस्तु इति द्विर्द्विरेकैकस्य नाम गृह्णाति। अग्नेः सोमस्य यमस्येन्धाना इति सर्वेष्वग्निषु समिध आधायोपतिष्ठते। अम्भस्थेति मनुष्यान्पशूनपि। रेवतीरिति गार्हपत्याहवनीययोर्मध्ये तिष्ठन्जपति। सꣳहिताऽसीति गामग्निहोत्रीमालभते वत्सं वा यस्याः पयसा होमः। इदमूप त्वेति तिस्रो गायत्र्योऽग्ने त्वं न इति तिस्रो द्विपदः। ताभिः षड्भिर्गार्हपत्यमुपतिष्ठते। ऊर्जा व इति गोष्ठगतान्पशूनुपतिष्ठते। भुवनमसीति पूर्ववत्। महित्रीणामवो अस्त्विति तृचेनाऽऽहवनीयमुपतिष्ठते। तत्सवितुर्वरेण्यं सोमानं येोरवान्यो मा नः शंस इति सावित्रिया ब्राह्मणस्पत्याभिश्चाऽऽहवनीयमेवोपतिष्ठते। कदाचन स्तरीरसि कदाचन प्रयुच्छसि परि त्वाऽग्ने परि ते दूढभ इत्येतेनानुक्रमेणाऽऽहवनीयमेवोपस्थायात्रैव तिष्ठन्पूषा मेति जपित्वा प्राची दिगिति यथालिङ्गं दिश उपस्थायान्तराऽग्नी तिष्ठन्धर्मो मेति जपति। अत्र ज्येष्ठस्य नामग्रहणम्। अग्न

आयुष्ठ्यग्ने पवस्वाग्ने गृहपत इति तिसृभिर्गार्हपत्यमुपतिष्ठते तामाशिषममुष्मै बहुपुत्रस्तामाशिषमाशासे देवदत्तशर्मणे ब्रह्मदत्तशर्मणे यज्ञदत्तशर्मणे ज्योतिष्मतीमिति। उपप्रयन्त इत्येवमादिना ज्योतिष्मतीमित्यन्तेनोभयकालं प्राप्ते विकल्पः। सायं सायमुपतिष्ठत इति अत्र सायं सायमिति सूत्रेण सायं सायमेवेत्यवधारणं सायमेवोपस्थानं न प्रातरित्युक्तम्। अत्र वाशब्दाभावः श्रुत्यनुविधानात्। अग्निहोत्रं जुहोतीत्यविशेषेणोपस्थानं विधाय पुनर्नक्तमुपतिष्ठते न प्रातरिति विहितप्रतिषिद्धत्वाद्विकल्पः। एवं सूत्रेऽप्युभयत्र प्राप्तः पुनः सायमिति ग्रहणात्सायमेव न प्रातरित्यर्थात्सिध्यतीति सायं नियतं प्रातर्विकल्पः।

अत्रैवोपस्थानं प्रातरत्राप्युपस्थानान्याह विकल्पेन—

अपि वा दिवैतत्।

वक्ष्यमाणेषूपस्थानेषु दिवा विकल्पोऽपि वेत्यनेनोक्तः।

भूर्भुवः सुवः सुप्रजाः प्रजया भूयासꣳ सुवीरो वीरैः सुवर्चा वर्चसा सुपोषः पोषैरिति वा काममैन्द्रो वित्तादिति वा श्रद्धा मेमा व्यगादिति वा भर्तुं वः शकेयमिति वा।

स्पष्टम्।

तत्सर्वं कृताकृतम्।

कालद्वयोपस्थानं कर्तव्यं न कर्तव्यं वेत्यर्थः। तथा च श्रुतिरुपस्थेयोऽग्निरित्युपक्रम्य तस्मान्नोपस्थेय इत्युक्त्वाऽपि वदति तस्मादुपस्थेय इति विहितप्रतिषिद्धत्वादुपस्थाने विकल्पः। उपस्थानपक्षेऽपि महोपस्थानेन नक्तं भूरित्यादिचतुर्णामेकेन दिवोपस्थानं न वा दिवेति नक्तमुपतिष्ठते न प्रातरहरुपतिष्ठत[3] इति श्रुतयः प्रमाणम्।

चतुर्भिः सह विकल्पान्तरमाह—

प्रातरवनेकेन प्रातरुपस्थेयः।

प्रातरवनेक इति कर्मनामधेयं तद्गतैरेव मन्त्रैरुपस्थेयः। आहवनीयोऽनादेशे।

तत्राधिश्रित उन्नीयमाने वा।

अग्निहोत्रहविष्यधिश्रिते वोन्नीयमाने वाऽग्रे वक्ष्यमाणं कार्यमित्यर्थः।

विहव्यस्याऽऽदितश्चतसृभिरुपस्थाय।

ममाग्ने वर्च इत्यादिभिराहवनीयमुपस्थाय।

अपां पत इति त्रीनुदकाञ्जलीनिनयति प्रतिषिक्ता अरातय इति त्रिः परिषिञ्चति कालाय वां जैत्रि-

१ ब. °शिषं भूयात्। तामा° सेऽमु°। २ घ. ढ. वा यदेवै°। ३ च. °हरहव°।

याय वामिति पाणी प्रक्षालयत इदमहं दुरन्न्यां निःप्लाव-
यामीत्यप आचम्य निष्ठीवति भ्रातृव्याणा सपत्नाना-
मिति पुनरेव पाणी प्रक्षालयत इन्द्रियवतीमद्याहं वाच-
मुद्यासमिति यथारूपं[1] प्राणायतनानि संमृश्योत्तरेणानुवा-
केनोपतिष्ठते तत्रार्वाग्वसोः स्वस्ति ते पारमशीयेति त्रिरा-
वर्तयत्यसौ स्वस्ति तेऽस्त्वसौ स्वस्ति तेऽस्त्विति सर्वेषां
पुत्राणां नामानि गृह्णाति त्रिरेकैकस्य[3] पुरस्तादग्नीषोमीयो-[4]
द्विहव्यस्योत्तराभिश्चतसृभिरुपस्थायानुवाकशेषेणोपतिष्ठते ।

प्रत्यञ्जलि मन्त्रावृत्तिः प्रतिप्रतिषेकं पुरस्ताद्देवीः षडुर्वीरिति चतसृभिः। स्पष्टमन्यत्। शाखान्तरीयमन्त्राणां पाठस्त्वापस्तम्बेन दर्शितः—अपां पते येषां भागः सतं एकस्त्री-नुदकाञ्जलीन्निनयति। प्रतिषिक्ता अरातयः प्रतिषिक्ता अरातय इति त्रिर्भूमौ परिषिच्य काव्याय वां जैत्रियाय वामौद्भेत्रियाय वामन्नाद्याय वामवनेनिजे सुकृताय वामिति पाणी प्रक्षालयते । इदमहं दुरन्न्यां निःप्लावयामीत्याचम्य निष्ठिवने मन्त्रः। भ्रातृव्या-णा सपत्नानामहं भूयासमुत्तमः । अपां मेत्रादिवोदकमिति हस्तौ प्रक्षाल्य । अग्नि-मस्तु नाऽस्मत्सूत्रकृता विनियुक्तः । आपस्तम्बेन च विनियुक्तः श्रियं धातर्मयि धेहि श्रियो माऽधिपतिं कुरु। विशाभीशानो मघवेन्द्रो मा यशसा नयेदिति जपित्वाऽभय-व्युष्टा देवं[7] ब्रूतावीडुच्छपथजम्मनीम्न आपो मञ्ममिवि प्राणिजन्नस्मन्तु(?)शपथा२ अधी-त्याचम्येति मन्त्रद्वयमधिकमापस्तम्बीयम् । इन्द्रियावतीमद्याहं वाचमुद्यासं वाचं दीर्घप्रा-णोच्छिन्नोऽदब्धो गोपाः सक्नासापुटे अजस्रं दैव्यं ज्योतिः सौपर्णं चक्षुः, चक्षुषी सुश्रुतौ[8] कर्णौ देवश्रुतौ कर्णौ केशा बर्हिः शिखाप्रस्तरे शिखां यथास्थानं कल्पयन्स इदयादौ मा मा हासिष्टेति सर्वाण्यङ्गानि । एवं यथालिङ्गमङ्गानि संमृश्य, इत ऊर्ध्वं सर्वाग्न्युप-स्थानं तन्नास्मत्सूत्रकृतोक्तम्। वर्चोऽसि वर्चो मयि धेह्यायुष्कृतायुपत्नीस्वधा वो गोप्रि-योगेस्थ गोपायत मा रक्षतमात्मसदौ मेस्थामोनः कश्चित्प्रघान्मा प्रमेष्मह्युपप्रत्नमुप भूर्भुवः सुवरायुर्मे यच्छेति सर्वानुपस्थायेत्यापस्तम्बीयम् । उत्तरेणानुवाकेनाऽऽहवनीय-मुपतिष्ठते । उपप्रयन्त इत्यनुवाकेन तच्छाखायामुत्तरो भवति तस्मिन्ननुवाके चित्रावसो

---

१ क. ख. ग. ट. ठ. ण. यथायतनं । २ घ. ङ. च. ढ. 'भूयास उत्त' । ३ झ. म. ढ. त्रिस्त्रिरे' । ४ ङ. ढ. °ग्नीयया विह° । ५ घ. 'या विह° । ६ च.ट. °वजूता । ७ च. 'मिव प्रा° । ८ च. सुश्रुतौ ।

मस्तीत्यस्मात्पूर्वः पुत्राणां नामान्येकैकं त्रिरावर्तयेत्पूर्ववत्। तत्रापि विशे विश इत्यस्मादनन्तरं पूर्वपक्षेऽग्नीषोमाविमश्सुम इत्यपरपक्ष उभा वामिन्द्राग्नी इत्युपस्थायायं ते योनिरिति अनुवाकशेषेणोपतिष्ठते। वर्माजठरान्नादमोमघास्मिञ्जने भूयासमन्नादः स योऽस्मान्द्वेष्टि कवी मातरिश्वा मापशुमन्तामामद्य।

तस्मात्पुरा प्रातरग्निहोत्रे नोपावरोहेदित्येकेषाम्।

अग्निहोत्रेऽपराग्नेः पुरतो नोत्सर्पेदित्येकेषां शाखिनां मते नोपस्थेय इत्यर्थः। केचिद्याजमानं सर्वमपि निवर्तत इति व्याचक्षते।

अग्नेस्तृणान्यपचिनोति तेजस्वी ब्रह्म-
वर्चसी भवतीति विज्ञायते ॥ २१ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे षष्ठप्रश्ने षष्ठः पटलः ॥ ६ ॥

---

अग्नेराहवनीयात्तृणानि परिस्तरणानि निर्गमय्य स्थापयतीत्यर्थः। विज्ञायते श्रुतौ।

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैजयन्त्यां षष्ठे याजमानप्रश्ने षष्ठः पटलः ॥ ६ ॥

---

अथ षष्ठप्रश्ने सप्तमः पटलः।

---

ऋते गृहस्य प्रवासं व्याख्यास्यामः।

विनाऽग्निभिर्भार्यया च प्रवासम्।

अग्नीन्समाधेहीति संप्रेष्यति प्रवत्स्यन्भास्वत उपतिष्ठते मम नाम प्रथमं जातवेद इति चतसृभिराहवनीयं पशून्मे शस्यं पाहि तान्मे गोपायास्माकं पुनरागमादित्याहवनीयमुपस्थायाभिप्राण्याग्ने सहस्राक्षेत्युपतिष्ठते प्रजां मे नर्य पाहि तां मे गोपायास्माकं पुनरागमादिति गार्हपत्यमुपस्थायाभिप्राण्याग्ने गृहपत इत्युपतिष्ठतेऽन्नं मे बुध्न्य पाहि तन्मे गोपायास्माकं पुनरागमादिति दक्षिणाग्निमुपस्थायाभिप्राण्याग्ने वह्न इत्युपस्थाय विराजक्रमैरुपतिष्ठते यथा पुरस्तादिमान्मे मित्रावरुणा गृहान्गोपायतं युवम्। अवि-

---

१ च. 'शेषः। वि॰। २ च. 'मादद्या'। ३ क. ग. च. ट. ठ. ण. ॰स्मि जने। ४ टीकापुस्तकेषु ॰स्य पशून्मे पा॰ इति पाठः। ५ च. ढ. 'रुणौ गृ॰।

नष्टानविहृतान्पुषैनानभिरक्षत्वस्माकं पुनरागमादित्यग्न्त·
राऽग्नी तिष्ठञ्जपति मा प्रगाम पथो वयं मा यज्ञादिन्द्र
सोमिनः । मां तस्थुर्नो अरातयः । उदस्मा॰ उत्तराग्र-
याग्ने घृतेनाऽऽहुत । रायस्पोषेण स॰सृज प्रजया च
बहूनकृधीति प्रक्रामति सकाशेऽग्नीनां वाचं यच्छत्य·
सकाशे विसृजते व्रतकालेषु व्रतं चरति ।

उद्धरणप्रभृति नाश्नीयादाहोमादित्यादिव्रतं विद्युदसीत्याद्यैपि यजमानसंस्कारो
जपश्चेडाऽसीति हविर्देवानामिति चोपस्थानानि च दर्शपूर्णमासवत्सर्वं ज्ञेयम् । उप·
स्थाने समिदाधानमध्वर्युरेव । गवालम्भस्तु लुप्यते परार्थत्वात् । विहाराभिमुखो मन्त्रा·
ञ्जपतीति सूत्रान्तरम् । तथाऽऽह भरद्वाजः—एवं विहितमेवास्य प्रवसतोऽप्युपस्थाने
परिसंमृश्य कर्माणि चाध्वर्युस्तानि कुर्याद्यजमानो मन्त्राञ्जपेदिति ।

ऋतुं प्रत्युपतिष्ठते ।

प्रवासविलम्बे प्रत्यृतु प्रवासोपस्थानं कुर्यान्मासद्वये मासद्वय इत्यर्थः ।

यद्यनुपस्थिताग्निरापद्यते प्रवासः ।

दैवान्मानुषाद्वाऽग्नीननुपस्थाय प्रवसति तदाऽग्रे वक्ष्यमाणमुपस्थानम् ।

इहैव सं तत्र सतो वो अग्नयः प्राणेन वाचा
मनसा बिभर्मि । तिरो मा सन्तमायुर्मा प्रहा-
सीज्ज्योतिषा वो वैश्वानरेणोपतिष्ठ इत्युपतिष्ठते ।

यत्र तिष्ठति तत्रैव विहाराभिमुखः । सकृदेव प्रत्येत्याभयंकरेणोपस्थानम् ।

प्रोष्य ।

प्रवासादागत्य ।

समिधो धारयन्विश्वदानीमाभरन्तोऽनातुरेण मनसा ।
अग्ने मा ते प्रतिवेशा रिषामेति विहारमभ्येत्य सकाशेऽ·
ग्नीनां वाचं यच्छति सकाशे विसृजतेऽग्नीन्समाधेहीति
संप्रेष्यति ॥ २२ ॥ ज्वलत उपतिष्ठते नमस्ते अस्तु
मीढुषे नमस्त उपसद्वने । अग्ने शुम्भस्व तन्वा सं मा रय्या
स॰सृजेत्युपसमिन्धेऽग्नेः समिदस्यभिशस्त्या मा पाहीत्येतै·
स्त्रिभिस्तिस्रः समिध आदध्यादिन्धानास्त्वा शत॰ हिमा
इति चतुर्थी मनो ज्योतिर्जुषतामित्यध्वर्युराहुतिं जुहोति
यदि दशमीमतिप्रवसति मम नाम तव च जातवेद
इति चतसृभिराहवनीयं पशून्मे शंस्याजुगुपस्तान्मे

पुनर्देहीत्याहवनीयमुपस्थायाभ्यपान्याग्ने सहस्राक्षेत्युपतिष्ठते प्रजां मे नर्याजुगुपस्तां मे पुनर्देहीति गार्हपत्यमुपस्थायाभ्यपान्याग्ने गृहपत इत्युपतिष्ठतेऽन्नं मे बुध्न्याजुगुपस्तन्मे पुनर्देहीति दक्षिणाग्निमुपस्थायाभ्यपान्याग्ने वह्न इत्युपस्थाय विराजक्रमैरुपतिष्ठते यथा पुरस्तादिमान्मे मित्रावरुणा[1] गृहानजुगुपतं युवम् । अविनष्टानविहृतान्पूषैनानभ्यराक्षीदास्माकं पुनरागमादित्यन्तराऽग्नी तिष्ठन्नपति गोपायाजुगुप इति सर्वत्रानुषजति गोपायेति[2] वा ।

स्पष्टम् ।

अथैकेषां विज्ञायते कः श्रेयाꣳसं विपुलं बोधयिष्यतीत्यप्रादुष्कृतानामेवोपस्थानꣳ स्यादभयंकराभयं मे कुरु स्वस्ति मेऽस्तु प्रवत्स्यामीति प्रवत्स्यन्नभयंकराभयं मेऽकार्षीः स्वस्ति मेऽस्तु प्रावात्स्यमिति प्रोष्य ॥ २३ ॥ गृहा मा बिभीत मा वेपीढ्वमूर्जं बिभ्रत एमसि । ऊर्जं बिभ्रद्वसुवनिः सुमेधा गृहानेमि मनसा मोदमानः । येषामभ्येति प्रवसन्येषु सौमनसो बभुः । गृहानुपह्वयामहे ते नो जानन्तु जानतः । उपहूता इह गाव उपहूता अजावयः । अथो अन्नस्य कीलाल उपहूतो गृहेषु नः । उपहूता भूरिसखाः सखायः स्वादु संमुदः । अरिष्टाः सर्वपूरुषा गृहा नः सन्तु सर्वदा । ऊर्जस्वन्तः पयस्वन्त इरावन्तो ह सामुदः । अनश्या अतृष्या गृहा मास्मद्बिभीतनेति गृहानभ्येति क्षेमाय वः शान्त्यै प्रपद्ये शिवꣳ शग्मꣳ शंयोः शंयोरिति प्रविशति न तदहरागतः कलहं करोति गृहानहꣳ सुमनसः प्रपद्ये वीरघ्नो वीरवतमः[3] सुशेवान् । इरां वहन्तः सुमनस्यमानास्तेष्वहꣳ सुमनाः संविशामीति संविशति विश्वा उत त्वया वयं धारा उदन्या इव । अतिगाहेमहि द्विष इति भार्याꣳ समीक्षते ॥ २४ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे षष्ठप्रश्ने सप्तमः पटलः ॥ ७ ॥

---

१ ङ. म. ड. °रुणौ गृ° । २ च. ड. °पायस्विति । ३ क. ग. ङ. ट. ण. वीरवतः ।

अप्रादुष्कृतोपस्थानपक्षेऽथैकेषामित्यादिनोक्तमेवानुपस्थिताग्नेः प्रवसत आगतस्योपस्थानं प्रोष्येत्यादि तु समानं प्रवासादागतस्य । संविशतीति धर्ममात्रम् । स्पष्टमन्यत् । मनस्वती तु होतव्याऽध्वर्युणा याजमानकाण्डे पठिता । सा च प्रादुष्कृतोपस्थानान्तर्गतेति नाभयंकरोपस्थानेनापोहेत्युपस्थान इत्याह भाष्यकृत् । अन्ये तु होमार्थमुद्धृते मनस्वतीमिच्छन्ति तथाऽजस्रेऽप्याहवनीये । ऋतत्रतिप्रवासे व्रातपती व्रातभृती वा । संवत्सरातिप्रवासे पवित्रेष्टिराश्वलायनभरद्वाजाभ्यामुक्ता । वैश्वानरी बौधायनेन मनस्वत्या समुच्चयः । सर्वत्राग्नीन्विहाय दंपत्योरुभयोः प्रवासे त्वाधानं स्मर्यते—

विहायाग्नीन्सभार्यश्चेत्सीमामुल्लङ्घ्य गच्छति ।
होमकालात्यये तस्य पुनराधानमिष्यते ॥ इति ।

बहुभार्यस्यैकस्या अपि संनिधौ न दोषः ।

तथा—असमक्षं हि दंपत्योर्होतव्यं नर्त्विगादिना ।
द्वयोरप्यसमक्षं चेद्भवेद्धुतमनर्थकम् ॥ इति ।

प्रवसति यजमाने भार्यायां रजस्वलायां तु तामपरुध्य होतव्यमिति भाष्यकृत् । तथेष्टिस्तु शुद्धायामित्याह । अन्ये तु तामपरुध्यैवेष्टिमिच्छन्ति । नित्येष्टेः करणमुक्तं स्मृतिभिरिति तामपरुध्यैवेष्टव्यमिति त्वाहुः । अत्र भाष्यकृतोक्तं तथा संध्ययोर्नदीतरणे सीमालङ्घने वाऽऽधानं तथा समारोप्याग्नीन्प्रयाणे सीमानत्यतिक्रमे पत्न्यरणी[2] अन्वारभते । आपत्काले तु समस्यापि होम उक्तो भरद्वाजेन । पर्वणि सायं सायं यावन्तः सायं होमा आगामिचतुर्दशीसायंहोममभिव्याप्य तावन्ति चतुरुन्नीयैकस्यामेव समिधि तन्त्रेण होमः । प्रातरपि पुनस्तावन्ति चतुरुन्नीय शेषं पूर्ववत् । अत्यापदि सायं वा प्रातर्वोभयहोमान्परिगणय्योन्नयाम्युन्नेष्यामीत्युभयं प्रत्येकं चतुरुन्नीय प्रातश्चेत्प्रथमां सौरीं द्वितीयामाग्नेयीं सायं चेद्विपरीतं हुत्वा शेषं तन्त्रेण सौर्यमाग्नेय[१] हविरिति संनमति विपरीतं वा हुत्वा शेषं समाप्य प्रयाति पर्वणः प्रातर्मथित्वा प्रातःसायंहोमौ, इष्टिः पशुश्च यदि पर्वणि न मन्थेत्तत ऊर्ध्वं तन्तुमतीष्टिर्होमातिक्रमप्रायश्चित्तं च द्वितीयपर्वपर्यन्तं तत्राप्यशक्ये मन्थने चाऽऽधानमेव ।

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैजयन्त्यां षष्ठे याजमानप्रश्ने प्रवासाख्यः सप्तमः पटलः ॥ ७ ॥

---

अथ षष्ठप्रश्नेऽष्टमः पटलः ।

---

**आग्रयणेष्टौ वत्सं प्रथमजं ददाति नानातन्त्रे श्यामाके बभ्रुं पिङ्गलं मधुपर्के मधुमन्थं दधिमन्थं क्षीरौदनस्य वा**

१ च. 'नापीहे' । २ क. ख. ग. ठ. ठ. ण. 'जेनाप' ।

पात्रं क्षौमं वासो वर्षाधृतं भद्रान्नः श्रेयः समनैष्ट देवा इति व्रीहीणां प्राश्नात्यग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः । शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिरिति श्यामाकानामेतमु त्यं मधुना संयुतं यवं सरस्वत्या अधिमनाऽवचर्कृषुः । इन्द्र आसीत्सीरपतिः शतक्रतुः कीनाशा आसन्मरुतः सुदानव इति यवानाम् ।

प्राश्नातीति संबन्धः । प्रथमजो वत्सः संवत्सरमध्ये प्रथमतः संवत्सरप्र ष्टकातः फाल्गुनीतश्चैत्रीतो वा समानतन्त्र एकैव सा दक्षिणा । बभ्रुः कपिलः पिङ्गाक्ष एवं द्विरूपो गौः । दधि मधु घृतमापः सक्तवो वा मधुपर्कः । मधुना युक्त मधुमन्थः । दध्ना युक्ता दधिमन्थः । क्षीरयुक्तस्यौदनस्य पूर्णपात्रं क्षौमं वर्षाकाले धृतम् । स्पष्टमन्यत् ।

यथाविकारं पशावेकादश प्रयाजाननुमन्त्रयते ।

यो यस्य प्रयाजस्य विकारः स तस्यानुमन्त्रणेन ।

तदेव स्पष्टयन्नाह—

चतुरश्चतुर्भिरादितश्चतुर्थस्यानुमन्त्रणेन
दुरःप्रभृतीश्चतुर उत्तमेनेतरान् ।

संख्यायुक्तेषु प्रयाजादिषु विकृतौ यत्राधिकसंख्याऽभ्यासेन पूरणीया तत्र पञ्चमयोर्मध्ये विकाराः श्रूयन्तेऽतस्ते चतुर्थपञ्चमयोरेव विकाराः सांनिध्यादित्य णेदमुक्तं चतुरश्चतुर्भिरादितो यथाप्रकृति चत्वारश्चतुर्थस्य विकारा नवमाद्यास्र मस्य देवता याज्योक्ता अग्निपदान्ताः ।

स्वर्विदसि स्वर्वित्त्वा स्वरिहि स्वर्मह्यं स्वः पशुभ्यो लोकविदसि लोकं वित्त्वा लोकमिहि लोकं मह्यं लोकं पशुभ्यो गातुविदसि गातुं वित्त्वा गातुमिहि गातुं मह्यं गातुं पशुभ्यो नाथविदसि नाथं वित्त्वा नाथमिहि नाथं मह्यं नाथं पशुभ्यो न वा उवेतन्म्रियस आशानां त्वा विश्वा आशा इति पशौ संज्ञप्यमाने जपति हुतायां वपायां परं ददाति तिस्रो वा दक्षिणा नयेत् ।

वरं धेनुम् । याः काश्चित्तिस्रो वा गाः । वरे न दक्षिणाधर्म इति केचित् । त्राप्यस्त्येव दक्षिणाधर्म इति सर्वमतं, नयेद्दद्यात् ।

यथाविकारं पशावेकादशानूयाजाननुमन्त्रयते
श्रीश्च्हीनेकैकेन प्रथमेन दशममुत्तमेनोत्तमम् ।

प्रथमः प्राकृतः स्पष्टः । तस्यैवाभ्यासो दशमः । स्विष्टकृत्तु प्राकृतवदेव

प्रतीयतेऽतो नियतौ द्वौ । ततो नवावशिष्यन्ते । तत्र तेषु त्रयस्त्रयः प्राकृतप्रथमानुमन्त्रणेन प्रथमस्य प्राकृतत्वात्तत्समीपस्थौ द्वौ वैकृतौ प्रथमस्य विकारौ । तथाच त्रीन्प्रथमान्प्रथमानुमन्त्रणेनानुमन्त्रयते । ततोऽवशिष्टानां क्रमेण विनियोगे प्राप्तेऽष्टमस्य स्वष्टस्य नराशंसस्य स्विष्टकृद्विकारत्वं वक्तुमयुक्तं क्रमस्य लिङ्गेन बाधात्ततो नराशंसात्पूर्वं वैकृताश्चतुर्थप्रभृतिचत्वारः क्रमेण द्वौ नराशंसस्य द्वावन्यौ स्विष्टकृतः । एवं च नराशंसेन सह त्रीन्द्वितीयेनानुमन्त्रणेन नवमः पारिशेष्यान्नराशंसानन्तरत्वाच्च स्विष्टकृतो विकारः । एवं च षष्ठसप्तमनवमांस्त्रींस्तृतीयेनानुमन्त्रणेन तथा त्रींस्त्रीनेकैकेनेत्युपपन्नं यथाविकारमेकादशानुयाजानिति स्थितेऽपि पुनः प्रथमेन दशममित्युदाहरणत्वेन प्रदर्शितम् । तेन च प्रथमाष्टमयोरपि निर्णयः सिद्धः । ततस्तु सप्तानामवशिष्टानां पूर्वोक्तक्रमानन्तर्यन्यायेन यथाविकारं विनियोग इत्यर्थः ।

शृङ्गाणीवेच्छृङ्गिणाᳲ संददृश्रिरे चषालवन्तः स्वरवः पृथिव्याम् । ते देवासः स्वरवस्तस्थिवाᳲसो नमः सखिभ्यः सन्नान्माऽवगातेति ॥ २५ ॥ हुतᳲ स्वरुमुपतिष्ठत आश्रासानः सुवीर्यमिति संᳲस्थिते यूपम् ।

उपतिष्ठते ।

चातुर्मास्येष्वनड्वाहमनड्वाहौ वा हिरण्यं वैश्वानरे ददाति धेनुं पार्जन्ये यथाविकारं नव प्रयाजाननुमन्त्रयते चतुरश्चतुर्भिरादितश्चतुर्थस्यानुमन्त्रणेन दुरःप्रभृतीᳲश्चतुर उत्तमेनोत्तमं वत्सं प्रथमजं वैश्वदेवे ददाति यथाविकारं नवानूयाजाननुमन्त्रयते त्रीᳲस्त्रीनेकैकेन ।

कृतवत्य स्नानमाध्वर्यवे ।

तदृतं तत्सत्यं तद्व्रतं तच्छकेयं तेन शकेयं तेन राध्यासमिति सर्वत्र केशेषूप्यमानेषु जपति चतुरो मासाञ्चानृतं वदति न माᳲसमश्नाति न स्त्रियमुपैति नोपर्यास्ते जुगुप्सेतानृतात्पाङ्शेते न मध्वश्नाति नाञ्जीत नाभ्यञ्जीततौ जायापुत्रयात्सर्वेषां चातुर्मास्यानामेतान्यन्तरालव्रतानि भवन्ति धेनुं वरुणप्रघासेषु ददात्यृषभं साक-

१ च. ड. ग. मांसं ।

स१ साकमेधेषु यस्य रवते जुहोति तमेव पौर्णा-
दर्व्येऽश्व२ श्वेतमादित्ये गां वा श्वेतं३ षड्गवं
द्वादशगवं वा सीरमुष्ट्रौ(ौ) वोष्टारं वाऽन्यतर३
शुनासीरीयेऽश्व१ श्वेत२ सौर्ये गां वा श्वेतं
तदभावेऽगौः श्वेतः स्याच्छ्वेतः स्यात् ॥ २६ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे षष्ठप्रश्नेऽष्टमः पटलः ॥ ८ ॥

---

इति हिरण्यकेशिसूत्रे षष्ठः प्रश्नः ॥ ६ ॥

---

नोपरि मञ्चकादावास्ते । प्राचीनशिराः शेते । प्रवयसं वृद्धम् । यस्य शब्दे पू-
दर्व्येण जुहोति तमेव वृषभं तस्य दक्षिणां ददाति अध्वर्यवे । षड्
गोभिर्युक्तो हलो द्वादशभिर्वा । उष्टारो(रौ)वोष्टारा(?)महान्बलीवर्दः । तत्र
श्वेतस्य गोरभावे त्वगौरन्यः श्वेतोऽजो मेषो वा । गोरजस्य मेषस्य च परस्परप्रति-
निधित्वं विध्यपराधप्रश्ने च वक्ष्यते । अभ्यासः प्रश्नसमाप्त्यर्थः ।

इति हिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैज-
यन्त्यां षष्ठे याजमानप्रश्न आग्रयणपशुचातुर्मास्ययाज-
मानमष्टमः पटलः ॥ ८ ॥

---

इति हिरण्यकेशिसूत्रव्याख्यायां षष्ठः प्रश्नः ॥ ६ ॥

---

समाप्तेयं महादेवकृतप्रयोगवैजयन्तीव्याख्या ।




---

१ ख. ग. ङ. श्वेताश्व । २ क. ण. 'ष्टारौ' । ३ ख. ग. ङ. श्वेतं । ४ क. च. -कार्यौ° ।

